# श्रीमहाभारतम्।

## वनपर्व्व।

### अथारण्यकपर्व।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥

जनमेजय उवाच। एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः। धार्त्तराष्ट्रैः सहामात्यैर्न्निकृत्या द्विजसत्तम॥ १॥ श्राविताः परुषा वाचः सृजद्भिर्वैरमुत्तमम्। किमकुर्वत कौरव्या मम पूर्वपितामहाः॥ २॥ कथञ्चैश्वर्य्यविभ्रष्टाः सहसा दुःखमीयुषः। वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः॥ ३॥ के वै तानन्ववर्त्तन्त प्राप्तान् व्यसनमुत्तमम्। किमाचाराः किमाहाराः क्क च वासो महात्मनाम्॥ ४॥ कथञ्च द्वादश समा वने तेषां महामुने। व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामरिघातिनाम्॥ ५॥ कथञ्च राजपुत्री सा प्रवरा सर्व्वयोषिताम्। पतिव्रता महाभागा सततं सत्यवादिनी॥ ६॥ वनवासमदुःखार्हा दारुणं प्रत्यपद्यत। एतदाचक्ष्व मे सर्वं विस्तरेण तपोधन॥ ७॥ श्रोतुमिच्छामि चरितं भूरिद्रविणतेजसाम्। कथ्यमानं त्वया विप्र परं कौतूहलं हि मे॥ ८

वैशम्पायन उवाच। एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः। धार्त्तराष्ट्रैः सहामात्यैर्न्निर्ययुर्गजसाह्वयात्॥ ९॥

वर्द्धमानपुरद्वारादभिनिष्क्रम्य पाण्डवाः। उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया ॥१०॥ इन्द्रसेनादयश्चैव भृत्याः परि चतुर्द्दश। रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः ॥ ११ ॥ गतानेतान् विदित्वा तु पौराः शोकाभिपीड़िताः। गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान्। ऊचुर्विगतसन्त्रासाः समागम्य परस्परम् ॥१२॥

पौरा ऊचुः। नेदमस्ति कुलं सर्वं न वयं न च नो गृहाः। यत्र दुर्य्योधनः पापः सौवलेयेन पालितः। कर्णदुःशासनाभ्याञ्च राज्यमेतच्चिकीर्षति ॥ १३ ॥ न तत् कुलं न चाचारो न धर्मोऽर्थः कुतः सुखम्। यत्र पापसहायोऽयं पापो राज्यच्चिकीर्षति ॥१४॥ दुर्य्योधनो गुरुद्वेषी त्यक्ताचारसुहृज्जनः। अर्थलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः ॥ १५ ॥ नेयमस्ति मही कृत्स्ना यत्र दुर्य्योधनो नृपः। साधु गच्छामहे सर्वे यत्र गच्छन्ति पाण्डवाः ॥ १६ ॥ सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः। ह्रीमन्तः कीर्त्तिमन्तश्च धर्माचारपरायणाः ॥ १७ ॥

वैशम्पायन उवाच। एवमुक्त्वानुजग्मुस्ते पाण्डवांस्तान् समेत्य च। ऊचुः प्राञ्जलयः सर्वे कौन्तेयान्माद्रिनन्दनान् ॥ १८ ॥ क्व गमिष्यथ भद्रं वस्त्यक्त्वास्मान् दुःखभागिनः। वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ॥ १९ ॥ अधर्मेण जितान् श्रुत्वा युष्मान्त्यक्तघृणैः परैः। उद्विग्नाः स्मो भृशं सर्वे नास्मान् हातुमिहार्हथ ॥ २० ॥ भक्तानुरक्तान् सुहृदः सदा प्रियहिते रतान्। कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः ॥ २१ ॥ श्रूयताञ्चाभिधास्यामो गुणदोषान्नरर्षभाः। शुभाशुभाधिवासेन संसर्गः कुरुते यथा ॥ २२ ॥ वस्त्रमापस्तिलान् भूमिं गन्धो वासयते यथा। पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ २३ ॥ मोहजालस्य योनिर्हि मूढैरेव समागमः। अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥ २४ ॥ तस्मात् प्राज्ञैश्च वृद्धैश्च सुखभावैस्तपस्विभिः।

सद्भिश्च सह संसर्गः कार्य्यः शमपरायणैः ॥ २५ ॥ येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च । तान् सेवेत्तैः समास्या हि शास्त्रेभ्यो हि गरीयसी ॥ २६ ॥ निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु । पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् ॥ २७ ॥ असतां दर्शनात् स्पर्शात् सञ्जल्पाच्च सहासनात् । धर्माचाराः प्रहीयन्ते सिद्ध्यन्ति च न मानवाः ॥ २८ ॥ बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् । मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥२९॥ अनीचैर्न्नाप्यविषयैर्न्नाधर्म्मिष्ठैर्विशेषतः । ये गुणाः कीर्त्तिता लोके धर्मकामार्थसम्भवाः । लोकाचारेषु सम्भूता वेदोक्ताः शिष्टसम्मताः ॥ ३० ॥ ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः । इच्छामो गुणवन्मध्ये वस्तुं श्रेयोऽभिकाङ्क्षिणः ॥ ३१ ॥

युधिष्ठिर उवाच । धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः । असतोऽपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ॥ ३२ ॥ तदहं भ्रातृसहितः सर्वान् विज्ञापयामि वः । नान्यथा तद्धि कर्त्तव्यमस्मत्स्नेहानुकम्पया ॥ ३३ ॥ भीष्मः पितामहो राजा विदुरो जननी च मे । सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये ॥ ३४ ॥ ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः । युष्माभिः सहिताः सर्व्वे शोकसन्तापविह्वलाः ॥ ३५ ॥ निवर्त्ततागता दूरं समागमनशापिताः । स्वजने न्यासभूते मे कार्य्या स्नेहान्विता मतिः ॥३६॥ एतद्धि मम कार्य्याणां परमं हृदि संस्थितम् । कृता तेन तु तुष्टिर्मे सत्कारश्च भविष्यति ॥ ३७ ॥

वैशम्पायन उवाच । तथानुमन्त्रितास्तेन धर्मराजेन ताः प्रजाः । चक्रुरार्त्तस्वरं घोरं हा राजन्निति संहता ॥ ३८ ॥ गुणान् पार्थस्य संस्मृत्य दुःखार्त्ताः परमातुराः । अकामाः संन्यवर्त्तन्त समागम्याथ पाण्डवान् ॥ ३९ ॥ निवृत्तेषु तु पौरेषु रथानास्थाय पाण्डवाः । आजग्मुर्ज्जाह्नवीतीरे प्रमाणाख्यं

महावटम्॥ ४०॥ ते तं द्विवसमेषित्वा वटं गत्वा तु पाण्डवाः। ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि॥ ४१॥ उदकेनैव तां रात्रिमूषुस्ते दुःखकर्षिताः। अनुजग्मुश्च तत्रैतान् स्नेहात् केचिद्द्विजातयः॥ ४२॥ साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः। स तैः परिवृतो राजा शुशुभे ब्रह्मवादिभिः॥ ४३॥ तेषां प्रादुष्कृताग्नीनां मुहूर्त्ते रम्यदारुणे। ब्रह्मघोषपुरस्कारः सञ्जल्पः समजायत॥ ४४॥ राजानन्तु कुरुश्रेष्ठं ते हंसमधुरस्वराः। आश्वासयन्तो विप्राग्र्याः क्षपां सर्वां व्यनोदयन्॥ ४५॥

इति आरण्यपर्वणि आरण्यकपर्वणि पौरप्रत्यागमने प्रथमोऽध्यायः॥ १॥

---

वैशम्पायन उवाच। प्रभातायान्तु शर्वर्य्यां तेषामक्लिष्टकर्मणाम्। वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः॥ १॥ तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः। वयं हि हृतसर्वस्वा हृतराज्या हृतश्रियः॥ २॥ फलमूलामिषाहारा वनं गच्छाम दुःखिताः। वनञ्च दोषबहुलं बहुव्यालसरीसृपम्॥ ३॥ परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति। ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत्। किं पुनर्मामितो विप्रा निवर्त्तध्वं यथेष्टतः॥ ४॥

ब्राह्मणा ऊचुः। गतिर्या भवतां राजन् वयं हि गन्तुमुद्यताः। नार्हस्यस्मान् परित्यक्तुं भक्तान् सद्धर्मदर्शिनः॥ ५॥ अनुकम्पां हि भक्तेषु दैवता ह्यपि कुर्वते। विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु॥ ६॥

युधिष्ठिर उवाच। ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः। सहायविपरिभ्रंशस्त्वयं सादयतीव माम्॥ ७॥ आहरेयुरिमे

येऽपि फलमूलमृगास्तथा । त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः ॥ ८ ॥ द्रौपद्या विप्रकर्षेण राज्यापहरणेन च । दुःखार्द्दितानिमान् क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ९ ॥

ब्राह्मणा ऊचुः । अस्मत्पोषणजा चिन्ता माभूत्ते हृदि पार्थिव । स्वयमाहृत्य चान्नानि उपयोक्ष्यामहे वयम ॥ १० ॥ अनुध्यानेन जप्येन विधास्यामः शिवं तव । कथाभिश्चातिरम्याभिः सह रंस्यामहे वयम् ॥ ११ ॥

युधिष्ठिर उवाच । एवमेतन्न सन्देहो रमेऽहं सततं द्विजैः । न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥ १२ ॥ कथं द्रक्ष्यामि वः सर्वान् स्वयमाहृत्य भोजिनः । मद्भक्तया क्लिश्यतोऽनर्हान् धिक् पापान् धृतराष्ट्रजान् ॥ १३ ॥

वैशम्पायन उवाच । इत्युक्त्वा स नृपः शोचन् निषसाद महीतले । तमध्यात्मरतो विद्वान् शौनको नाम वै द्विजः । योगे सांख्ये च कुशलो राजानमिदमब्रवीत् ॥ १४ ॥ शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढ़माविशन्ति न पण्डितम् ॥ १५ ॥ न हि ज्ञानविरुद्धेषु बहुदोषेषु कर्मसु । श्रेयघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १६ ॥ अष्टाङ्गां बुद्धिमाहुर्यां सर्वाश्रेयोऽभिघातिनीम् । श्रुतिस्मृतिसमायुक्तां राजन् सा त्वय्यवस्थिता ॥ १७ ॥ अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च । शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः ॥ १८ ॥ श्रूयताञ्चाभिधास्यामि जनकेन यथा पुरा । आत्मव्यवस्थानकरा गीताः श्लोका महात्मना ॥ १९ ॥ मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् । तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु ॥ २० ॥ व्याधेरनिष्टसंस्पर्शात् श्रमादिष्टविवर्जनात । दुःखं चतुर्भिः शरीरं कारणैः संप्रवर्त्तते ॥ २१ ॥ तदा तत् प्रतिकाराच्च सततं वा विचिन्तनात् । आधिव्याधिप्रशमनं क्रियायोग-

द्वयेन च ॥ २२ ॥ मतिमन्तो ह्यतो वैद्याः शमं प्रागेव कुर्वते । मानसस्य प्रियाख्यानैः सम्भोगोपनयैर्नृणाम् ॥ २३ ॥ मानसेन हि दुःखेन शरीरमुपतप्यते । अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ २४ ॥ मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना । प्रशान्ते मानसे ह्यस्य शारीरमुपशाम्यति ॥ २५ ॥ मनसो दुःखमूलन्तु स्नेह इत्युपलभ्यते । स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ॥ २६ ॥ स्नेहमूलानि दुःखानि स्नेहजानि भयानि च । शोकहर्षौ तथायासः सर्वं स्नेहात् प्रवर्त्तते ॥ २७ ॥ स्नेहाद्भावोऽनुरागश्च प्रजज्ञे विषये तथा । अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः ॥ २८ ॥ कोटराग्निर्यथाशेषं समूलं पादपं दहेत् । धर्मार्थौ तु तथाल्पोऽपि रागदोषो विनाशयेत् ॥ २९ ॥ विप्रयोगे न तु त्यागी दोषदर्शी समागमे । विरागं भजते जन्तुर्निर्वैरो निरवग्रहः ॥ ३० ॥ तस्मात् स्नेहं न लिप्सेत मित्रेभ्यो धनसञ्चयात् । स्वशरीरसमुत्थञ्च ज्ञानेन विनिवर्त्तयेत् ॥ ३१ ॥ ज्ञानान्वितेषु युक्तेषु शास्त्रज्ञेषु कृतात्मसु । न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ३२ ॥ रागाभिभूतः पुरुषः कामेन परिकृष्यते । इच्छा संजायते तस्य ततस्तृष्णा विवर्द्धते ॥ ३३ ॥ तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी स्मृता । अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ ३४ ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्य्यतः । योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ३५ ॥ अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् । विनाशयति भूतानि अयोनिज इवानलः ॥ ३६ ॥ यथैधः स्वसमुत्थेन वह्निना नाशमिच्छति । तथाकृतात्मा लोभेन सहजेन विनश्यति ॥ ३७ ॥ राजतः सलिलादग्नेश्चौरतः स्वजनादपि । भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ३८ ॥ यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि । भक्ष्यते सलिले मत्स्यैस्तथा

सर्व्वत्र विस्तवान् ॥ ३९ ॥ अर्थ एव हि केषाञ्चिदनर्थं भजते नृणाम् । अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः ॥ ४० ॥ तस्मादर्थागमाः सर्व्वे लोभमोहविवर्द्धनाः । कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ॥ ४१ ॥ अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् । अर्थस्योत्पादने चैव पालने च तथा क्षयी ॥ ४२ ॥ सहन्ति च महद्दुःखं घ्नन्ति चैवार्थकारणात् । अर्थाद्दुःखं परित्यक्तुं पालितार्थैव शत्रवः ॥ ४३ ॥ दुःखेन चाधिगम्यन्ते तस्मान्नाशं न चिन्तयेत् । असन्तोषपरा मूढ़ाः सन्तोषं यान्ति पण्डिताः ॥४४॥ अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखम् । तस्मात् सन्तोषमेवेह परं पश्यन्ति पण्डिताः ॥ ४५ ॥ अनित्यं यौवनं रूपं जीवितं रत्नसञ्चयः । ऐश्वर्य्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ ४६ ॥ त्यजेत सञ्चयांस्तस्मात्तज्जान् क्लेशान् सहेत च । न हि सञ्चयवान् कश्चिद्दृश्यते निरुपद्रवः । अतश्च धार्म्मिकैः पुम्भिरनीहार्थः प्रशस्यते ॥ ४७ ॥ धर्म्मार्थं यस्य वित्तेहा वरन्तस्य निरीहता । प्रक्षालनाद्धि पङ्कस्य श्रेयो न स्पर्शनं नृणाम् ॥ ४८ ॥ युधिष्ठिरैवं सर्व्वेषु न स्पृहां कर्त्तुमर्हसि । धर्म्मेण यद्दि ते कार्य्यं विमुक्तेच्छो भवार्थतः ॥ ४९ ॥

युधिष्ठिर उवाच । नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम । भरणार्थन्तु विप्राणां ब्रह्मन् काङ्क्षे न लोभतः ॥ ५० ॥ कथमस्मद्विधो ब्रह्मन् वर्त्तमानो गृहाश्रमे । भरणं पालनं वापि न कुर्य्यादनुयायिनाम् ॥ ५१ ॥ संविभागो हि भूतानां सर्व्वेषामेव दृश्यते । तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ५२ ॥ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ५३ ॥ देहमार्त्तस्य शयनं स्थितः श्रान्तस्य चासनम् । तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ५४ ॥ चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात् सुभाषिताम् । उत्थाय चासनं

दद्यादेष धर्मः सनातनः ॥ ५५ ॥ प्रत्युत्थायाभिगमनं कुर्य्या-
न्नप्राधेन चार्चनम्। अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः
॥ ५६ ॥ पुत्रा दाराश्च भृत्याश्च निर्दहेयुरपूजिताः। आत्मने
पाचयेन्नान्नं न वृथा घातयेत् पशून्। न च तत् स्वयमश्नीया-
द्विधिवद्यन्न निर्वपेत् ॥ ५७ ॥ श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपे-
द्भुवि। वैश्वदेवं हि नामैतत् सायं प्रातश्च दीयते ॥ ५८ ॥
विघसाशी भवेत्तस्मान्नित्यञ्चामृतभोजनः। विघसो भुक्तशेषन्तु
यज्ञशेषं तथामृतम् ॥ ५९ ॥ चक्षुर्दद्यात्मनो दद्याद्वाचं दद्याच्च
सूनृताम्। अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥ ६० ॥ यो
दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते। श्रान्तायादृष्टपूर्वाय तस्य
पुण्यफलं महत् ॥ ६१ ॥ एवं यो वर्त्तते वृत्तिं वर्त्तमानो गृहा-
श्रमे। तस्य धर्मं परं प्राहुः कथं वा विप्र मन्यसे ॥ ६२ ॥

शौनक उवाच। अहोवत महत्कष्टं विपरीतमिदं जगत्।
येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ ६३ ॥ शिश्नोदरकृतेऽप्राज्ञः
करोति विघसं बहु। मोहरागवशाक्रान्त इन्द्रियार्थवशानुगः
॥ ६४ ॥ ह्रियते बध्यमानोऽपि नरो हारिभिरिन्द्रियैः। विमूढ-
संज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः ॥ ६५ ॥ षडिन्द्रियाणि विषयं
समागच्छन्ति वै यदा। तदा प्रादुर्भवत्येषां पूर्वसङ्कल्पजं मनः
॥ ६६ ॥ मनो यस्येन्द्रियस्येह विषयान् याति सेवितुम्। तस्यौत्
सुक्यं सम्भवति प्रवृत्तिश्चोपजायते ॥ ६७ ॥ ततः सङ्कल्पवीजेन
कामेन विषयेषुभिः। विद्धः पतति लोभाग्नौ ज्योतिर्लोभात्
पतङ्गवत् ॥६८॥ ततो विहारैराहारैर्मोहितश्च यथेप्सया। महा-
मोहे सुखे मग्नो नात्मानमवबुध्यते ॥ ६९ ॥ एवं पतति संसारे
तासु तास्विह योनिषु। अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथ
चक्रवत् ॥ ७० ॥ ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्त्तते। जले
भुवि तथाकाशे जायमानः पुनः पुनः ॥ ७१ ॥ अबुधानां गति-

स्त्वेषा बुधानामपि मे शृणु। ये धर्मं श्रेयसि रता विमोक्षरतयो जनाः ॥ ७२ ॥ तदिदं वेदवचनं कुरु कर्म्म त्यजेति च। तस्मा-द्धर्मानिमान् सर्वान्नाभिमानात् समाचरेत् ॥ ७३ ॥ इज्या-ध्ययनदानानि तपः सत्यं क्षमा दमः। अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ७४ ॥ अत्र पूर्वश्चतुर्वर्गः पितृयानपथे स्थितः। कर्त्तव्यमिति यत्कार्य्यं नाभिमानात् समाचरेत् ॥ ७५ ॥ उत्तरो देवयानस्तु सद्भिराचरितं सदा। अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥ ७६ ॥ सम्यक् सङ्कल्पसम्बन्धात् सम्यक् चेन्द्रियनिग्रहात्। सम्यग्व्रतविशेषाच्च सम्यक् च गुरुसेवनात् ॥ ७७ ॥ सम्यगाहारयोगाच्च सम्यक् चाध्ययनागमात्। सम्यक् कर्मोपसंन्यासात् सम्यक् चित्तनिरोधनात् ॥ ७८ ॥ एवं कर्माणि कुर्वन्ति संसारविजिगीषवः। रागद्वेषविनिर्मुक्ता ऐश्वर्य्यं देवता गताः ॥ ७९ ॥ रुद्राः साध्यास्तथादित्या वसवोऽथ तथाश्विनौ। योगैश्वर्य्येण संयुक्ता धारयन्ति प्रजा इमाः ॥ ८० ॥ तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम्। तपसा सिद्धिमन्विच्छ योग-सिद्धिञ्च भारत ॥ ८१ ॥ पितृमातृमयी सिद्धिः प्राप्ता कर्म्ममयी च ते। तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ॥ ८२ ॥ सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहात्। तस्मात्तपः समा-स्थाय कुरुष्वात्ममनोरथम् ॥ ८४ ॥

इति आरण्यपर्वणि आरण्यकेपर्वणि पाण्डवानां प्रव्रजनं
नाम द्वितीयोऽध्यायः ॥ २ ॥

---

वैशम्पायन उवाच। शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधि-ष्ठिरः। पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम् ॥ १ ॥ युधिष्ठिर उवाच। प्रस्थितं मानुयान्तीमे ब्राह्मणा वेदपारगाः। न चास्मि पोषणे शक्तो बहुदुःखसमन्वितः ॥ २ ॥ परित्यक्तुं न

शक्तोऽस्मि दानैमक्तिश्च नास्ति मे। कथमत्र मया कार्य्यं प्रब्रूहि भगवन्मम ॥ ३ ॥

वैशम्पायन उवाच। मुहूर्त्तमिव स ध्यात्वा धर्म्मेणान्विष्य तां गतिम्। युधिष्ठिरमुवाचेदं धौम्यो धर्मभृताम्वरः ॥ ४ ॥

धौम्य उवाच। पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशम्। ततोऽनुकम्पया तेषां सविता स्वपिता यथा ॥ ५ ॥ गत्वोत्तरायणं तेजो रसानुद्धृत्य रश्मिभिः। दक्षिणायनमावृत्तो महीं निविशते रविः ॥ ६ ॥ क्षेत्रभूते ततस्तस्मिन् ओषधीरोषधीपतिः। दिवस्तेजः समुद्धृत्य जनयामास वारिणा ॥ ७ ॥ निषिक्तश्चन्द्रतेजोभिः स्वयोनौ निर्गते रविः। ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ॥ ८ ॥ एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम्। पितैव सर्वभूतानां तस्मात्तं शरणं व्रज ॥ ९ ॥ राजानो हि महात्मानो योनिकर्मविशोधिताः। उद्धरन्ति प्रजाः सर्वास्तप आस्थाय पुष्कलम् ॥ १० ॥ भीमेन कार्त्तवीर्य्येण वैन्येन नहुषेण च। तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः ॥ ११ ॥ तथा त्वमपि धर्मात्मन् कर्म्मणा च विशोधितः। तप आस्थाय धर्म्मेण द्विजातीन् भर भारत ॥ १२ ॥

जनमेजय उवाच। कथं कुरूणामृषभः स तु राजा युधिष्ठिरः। विप्रार्थमाराधितवान् सूर्य्यमद्भुतदर्शनम् ॥ १३ ॥

वैशम्पायन उवाच। शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः। क्षणञ्च कुरु राजेन्द्र संप्रवक्ष्याम्यशेषतः ॥ १४ ॥ धौम्येन तु यथापूर्वं पार्थाय सुमहात्मने। नामाष्टशतमाख्यातं तच्छृणुष्व महामते ॥ १५ ॥

धौम्य उवाच। ओं सूर्य्योऽर्य्यमा भगस्त्वष्टा पूषार्कः सविता रविः। गभस्तिमानजः कालो मृत्युर्धाता प्रभाकर ॥ १६ ॥ पृथिव्यापश्च तेजश्च खं वायुश्च परायणम्। सोमो बृहस्पतिः शुक्रो

बुधोऽङ्गारक एव च ॥ १७ ॥ इन्द्रो विवस्वान् दीप्तांशुः शुचिः शौरिः शनैश्चरः । ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ १८ ॥ वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः । धर्म्मध्वजो वेदकर्त्ता वेदाङ्गो वेदवाहनः ॥ १९ ॥ कृतं त्रेता द्वापरश्च कलिः सर्वमलाश्रयः । कला काष्ठा मुहूर्त्ताश्च क्षपा यामस्तथा क्षणः ॥ २० ॥ सम्वत्सरकरोऽश्वत्थः कालचक्रो विभावसुः । पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ २१ ॥ कालाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः । वरुणः सागरोंऽशश्च जीमूतो जीवनोऽरिहा ॥ २२ ॥ भूताश्रयो भूतपतिः सर्वलोकनमस्कृतः । स्रष्टा सम्वर्त्तको वह्निः सर्वस्यादिरलोलुपः ॥ २३ ॥ अनन्तः कपिलो भानुः कामदः सर्वतोमुखः । जयो विशालो वरदः सर्वधातुनिषेचिता ॥ २४ ॥ मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारणः । धन्वन्तरिर्धूमकेतुरादिदेवो दितेः सुतः ॥ २५ ॥ द्वादशात्मारविन्दाक्षः पिता माता पितामहः । स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥२६॥ देहकर्त्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः । चराचरात्मा सूक्ष्मात्मा मैत्रेयः करुणान्वितः ॥२७॥ एतद्वै कीर्त्तनीयस्य सूर्य्यस्यामिततेजसः । नामाष्टशतकञ्चेदं प्रोक्तमेतत् स्वयम्भुवा ॥ २८ ॥ सुरगणपितृयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितम् । वरकनकहुताशनप्रभं प्रणिपतितोऽस्मि हिताय भास्करम् ॥ २९ ॥ सूर्य्योदये यः सुसमाहितः पठेत् स पुत्रदारान् धनरत्नसञ्चयान् । लभेत जातिस्मरतां नरः सदा धृतिञ्च मेधाञ्च स विन्दते पुमान् ॥ ३० ॥ इमं स्तवं देववरस्य मानवः प्रकीर्त्तयेच्छुचिसुमनाः समाहितः । विमुच्यते शोकदवाग्निसागराल्लभेत् कामान्मनसा यथेप्सितान् ॥ ३१ ॥

वैशम्पायन उवाच । एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः । विप्रत्यागसमाधिस्थः संयतात्मा दृढव्रतः ॥ ३२ ॥ धर्म्मराजो विशु-

स्नात्वा तप आतिष्ठदुत्तमम् । पुष्पोपहारैर्बलिभिरर्च्चयित्वा दिवाकरम् ॥ ३३ ॥ सोऽवगाह्य जलं राजा देवस्याभिमुखोऽभवत् । योगमास्थाय धर्मात्मा वायुभक्ष्यो जितेन्द्रियः ॥ ३४ ॥ गाङ्गेयं पर्य्युपस्पृश्य प्राणायामेन तस्थिवान् । शुचिः प्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः ॥ ३५ ॥

युधिष्ठिर उवाच । त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम् । त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ॥ ३६ ॥ त्वं गतिः सर्वसाङ्ख्यानां योगिनां त्वं परायणम् । अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षताम् ॥ ३७ ॥ त्वया सन्धार्य्यते लोकस्त्वया लोकः प्रकाश्यते । त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया ॥ ३८ ॥ त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः । स्वशाखाविहितैर्मन्त्रैरर्च्चन्त्यृषिगणार्चितम् ॥ ३९ ॥ तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः । सिद्धचारणगन्धर्वा यक्षगुह्यकपन्नगाः ॥ ४० ॥ त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः । सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वा सिद्धिमागताः ॥ ४१ ॥ उपयान्त्यर्च्चयित्वा तु त्वां वै प्राप्तमनोरथाः । दिव्यमन्दारमालाभिस्तूर्णं विद्याधरोत्तमाः ॥ ४२ ॥ गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः । ते पूजयित्वा त्वामेव गच्छन्त्याशु प्रधानताम् ॥ ४३ ॥ वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः । वालिखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः ॥ ४४ ॥ सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च । न तद्भूतमहं मन्ये यदर्कादतिरिच्यते ॥ ४५ ॥ सन्ति चान्यानि सत्त्वानि वीर्य्यवन्ति महान्ति च । न तु तेषां तथा दीप्तिः प्रभावो वा यथा तव ॥ ४६ ॥ ज्योतींषि त्वयि सर्वाणि त्वं सर्वज्योतिषां पतिः । त्वयि सत्यञ्च सत्त्वञ्च सर्वे भावाश्च सात्त्विकाः ॥ ४७ ॥ त्वत्तेजसा कृतञ्चक्रं सुनाभं विश्वकर्म्मणा । देवारीणां मदो येन नाशितः शार्ङ्गधन्वना ॥ ४८ ॥

समादायांशुभिस्तेजो निदाघे सर्व्वदेहिनाम् । सर्व्वौषधिरसा-
नाञ्च पुनर्वर्षासु मुञ्चसि ॥ ४९ ॥ तपन्त्यन्ये दहन्त्यन्ये गर्ज-
न्त्यन्ये तथा घनाः । विद्योतन्ते प्रवर्षन्ति तव प्रावृषि रश्मयः
॥ ५० ॥ न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः । शीत-
वातार्दितं लोकं यथा तव मरीचयः ॥ ५१ ॥ त्रयोदशद्वीपवतीं
गोभिर्भासयसे महीम् । त्रयाणामपि लोकानां हितायैकः
प्रवर्त्तसे ॥ ५२ ॥ तव यद्युदयो न स्यादन्धं जगदिदं भवेत् । न
च धर्म्मार्थकामेषु प्रवर्त्तेरन्मनीषिणः ॥ ५३ ॥ आधानपशुबन्धेष्टि-
मन्त्रयज्ञतपःक्रियाः । त्वत्प्रसादादवाप्यन्ते ब्रह्मक्षत्रविशां गणैः
॥ ५४ ॥ यदहो ब्रह्मणः प्रोक्तं सहस्रयुगसम्मितम् । तस्य त्वमादि-
रन्तश्च कालज्ञैः परिकीर्त्तितः ॥ ५६ ॥ मनूनां मनुपुत्राणां
जगतो मानवस्य च । मन्वन्तराणां सर्व्वेषामीश्वराणां त्वमीश्वरः
॥ ५७ ॥ संहारकाले सम्प्राप्ते तव क्रोधविनिःसृतः । संवर्त्त-
काग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते ॥ ५८ ॥ त्वद्दीधितिसमुत्-
पन्ना नानावर्णा महाघनाः । सैरावताः साशनयः कुर्व्वन्त्याभूत-
संप्लवम् ॥ ५९ ॥ कृत्वा द्वादशधात्मानं द्वादशादित्यतां गतः ।
संहृत्यैकार्णवं सर्व्वं त्वं शोषयसि रश्मिभिः ॥ ६० ॥ त्वामिन्द्र-
माहुस्त्वं विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः । त्वमग्निस्त्वं मनः सूक्ष्मं
प्रभुस्त्वं ब्रह्म शाश्वतम् ॥ ६१ ॥ त्वं हंसः सविता भानुरंशुमाली
वृषाकपिः । विवस्वान्मिहिरः पूषा मित्रो धर्मस्तथैव च ॥ ६२ ॥
सहस्ररश्मिरादित्यस्तपनस्त्वं गवाम्पतिः । मार्त्तण्डोऽर्को रविः
सूर्य्यः शरण्यो दिनकृत्तथा ॥ ६३ ॥ दिवाकरः सप्तसप्तिर्धाम-
केशी विरोचनः । आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्त्यसे
॥ ६४ ॥ सप्तम्यामथ वा षष्ठ्यां भक्त्या पूजां करोति यः । अनि-
र्विण्णोऽनहङ्कारी तं लक्ष्मीर्भजते नरम् ॥ ६५ ॥ न तेषामापदः
सन्ति नाधयो व्याधयस्तथा । ये तवानन्यमनसः कुर्व्वते त्वभि-

वन्दनम् ॥ ६६ ॥ सर्वरोगैर्विरहिताः सर्वपापविवर्जिताः । तद्भावभक्ताः सुखिनो भवन्ति चिरजीविनः ॥ ६७ ॥ त्वं ममापन्नकामस्य सर्वातिथ्यञ्चिकीर्षतः । अन्नमन्नपते दातुमभितः श्रद्धयार्हसि ॥ ६८ ॥ ये च तेऽनुचराः सर्वे पादोपान्तं समाश्रिताः । माठरारुणदण्डाद्यास्तांस्तान् वन्देऽशनिक्षुभान् ॥ ६९ ॥ क्षुभया सहिता मैत्री याश्चान्या भूतमातरः । ताश्च सर्वा नमस्यामि पान्तु मां शरणागतम् ॥ ७० ॥

वैशम्पायन उवाच । ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् । दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः ॥ ७१ ॥

विवस्वानुवाच । यत्तेऽभिलषितं किञ्चित्तत्त्वं सर्वमवाप्स्यसि । अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः ॥ ७२ ॥ गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप । यावद्वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ॥ ७३ ॥ फलमूलामिषं शाकं संस्कृतं यन्महानसे । चतुर्विधं तदन्नाद्यमक्षय्यन्ते भविष्यति । इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ॥ ७४ ॥

वैशम्पायन उवाच । एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत । इमं स्तवं प्रयतमनाः समाधिना पठेदिहान्योऽपि वरं समर्थयन् । तत्तस्य दद्याच्च रविर्मनीषितं तदाप्नुयाद्यद्यपि तत् सुदुर्लभम् ॥ ७५ ॥ यश्चेदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः । पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ ७६ ॥ विद्यार्थी लभते विद्यां पुरुषोऽप्यथ वा स्त्रियः । उभे सन्ध्ये पठेन्नित्यं नारी वा पुरुषो यदि ॥ ७७ ॥ आपदं प्राप्य मुच्येत बद्धो मुच्यत बन्धनात् । एतद्ब्रह्मा ददौ पूर्वं शक्राय सुमहात्मने ॥ ७८ ॥ शक्राच्च नारदः प्राप्तो धौम्यस्तु तदनन्तरम् । धौम्याद्युधिष्ठिरः प्राप्य सर्वान् कामानवाप्तवान् ॥ ७९ ॥ संग्रामे च जयेन्नित्यं विपुलञ्चाप्नुयाद्वसु । मुच्यते सर्वपापेभ्यः सूर्य्यलोकं स गच्छति ॥ ८० ॥

वैशम्पायन उवाच। लब्ध्वा वरन्तु कौन्तेयो जलादुत्तीर्य्य धर्म्मवित्। जग्राह पादौ धौम्यस्य भ्रातृंश्च परिषस्वजे ॥ ८१ ॥ द्रौपद्या सह सङ्गम्य वन्द्यमानस्तया प्रभो। महानसे तदानीन्तु साधयामास पाण्डवः ॥ ८२ ॥ संस्कृतं प्रसवं याति स्वल्पमन्न-चतुर्विधम्। अक्षय्यं वर्द्धते चान्नं तेन भोजयते द्विजान् ॥ ८३ ॥ भुक्तवत्सु च विप्रेषु भोजयित्वानुजानपि। शेषं विघससंज्ञन्तु पश्चाद्भुङ्क्ते युधिष्ठिरः ॥ ८४ ॥ युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती। द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च ॥ ८५ ॥ एवं दिवाकरात् प्राप्य दिवाकरसमप्रभः। कामान् मनोऽभि-लषितान् ब्राह्मणेभ्योऽददात् प्रभुः ॥ ८६ ॥ पुरोहितपुरोगाश्च तिथिनक्षत्रपर्व्वसु। यज्ञियार्थाः प्रवर्त्तन्ते विधिमन्त्रप्रमाणतः ॥ ८७ ॥ ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः। द्विजसङ्घैः परिवृताः प्रययुः काम्यकं वनम् ॥ ८८ ॥

इति आरण्यपर्व्वणि आरण्यकपर्व्वणि काम्यवनप्रवेशे
तृतीयोऽध्यायः ॥ ३ ॥

---

वैशम्पायन उवाच। वनं प्रविष्टेष्वथ पाण्डवेषु प्रज्ञाचक्षु-स्तप्यमानोऽम्बिकेयः। धर्म्मात्मानं विदुरमगाधबुद्धिं सुखासीनो वाक्यमुवाच राजा ॥ १ ॥

धृतराष्ट्र उवाच। प्रज्ञा च ते भार्गवस्येव शुद्धा धर्म्मञ्च त्वं परमं वेत्थ सूक्ष्मम्। समश्च त्वं सम्मतः कौरवाणां पथ्यञ्चैषां मम चैव ब्रवीहि ॥ २ ॥ एवं गते विदुर यदद्य कार्य्यं पौराश्चेमे कथ-मस्मान् भजेरन्। ते चाप्यस्मान्नोद्धरेयुः समूलांस्तत्त्वं ब्रूयाः साधु कार्य्याणि वेत्सि ॥ ३ ॥

विदुर उवाच। त्रिवर्गोऽयं धर्म्ममूलो नरेन्द्र राज्यञ्चेदं धर्म्म-

मूलं वदन्ति। धर्मे राजन् वर्त्तमानः स्वशक्त्या पुत्रान् सर्वान् पाहि पाण्डोः सुतांश्च ॥ ४ ॥ स वै धर्मो विप्रलब्धः सभायां पापात्मभिः सौबलेयप्रधानैः। आहूय कुन्तीसुतमक्षवत्यां पराजैषीत् सत्यसन्धं सुतस्ते ॥ ५ ॥ एतस्य ते दुष्प्रणीतस्य राजन् शेषस्याहं परिपश्याम्युपायम्। यथा पुत्रस्तव कौरव्य पापान्मुक्तो लोके प्रतितिष्ठेत साधु ॥ ६ ॥ तद्वै सर्वं पाण्डुपुत्रा लभन्तां यत्तद्राजन्नभिसृष्टं त्वयासीत्। एष धर्मः परमो यत् स्वकेन राजा तुष्येन्न परस्वेषु गृध्येत् ॥ ७ ॥ यशो न नश्येज्ज्ञातिभेदश्च न स्याद्धर्मो न स्यान्नैव चैवं कृते त्वाम्। एतत् कार्य्यं तव सर्वप्रधानं तेषां तुष्टिः शकुनेश्चावमानः ॥ ८ ॥ एवं शेषं यदि पुत्रेषु ते स्यादेतद्राजंस्त्वरमाणः कुरुष्व। तथैतदेवं न करोषि राजन् ध्रुवं कुरूणां भविता विनाशः ॥ ९ ॥ न हि क्रुद्धो भीमसेनोऽर्जुनो वा शेषं कुर्य्यात् शात्रवाणामनीके। येषां योद्धा सव्यसाची कृतास्त्रो धनुर्येषां गाण्डिवं लोकसारम् ॥ १० ॥ येषां भीमो बाहुशाली च योद्धा तेषां लोके किन्नु न प्राप्यमस्ति। उक्तं पूर्वं जातमात्रे सुते ते मया यत्ते हितमासीत्तदानीम् ॥ ११ ॥ पुत्रं त्यजेममहितं कुलस्य हितं परं न च तत्त्वं चकर्थ। इदञ्च राजन् हितमुक्तं न चेत्त्वमेवं कर्त्ता परितप्तासि पश्चात् ॥ १२ ॥ यद्येतदेवमनुमन्ता सुतस्ते संप्रीयमाणः पाण्डवैरेकराज्यम्। तापो न ते भविता प्रीतियोगान्न चेन्निगृह्णीष्व सुतं सुखाय ॥ १३ ॥ दुर्य्योधनन्त्वहितं वै निगृह्य पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये। अजातशत्रुर्हि विमुक्तरागो धर्मेणेमां पृथिवीं शास्तु राजन् ॥ १४ ॥ ततो राजन् पार्थिवाः सर्व एव वैश्या इवास्मानुपतिष्ठन्तु सद्यः। दुर्य्योधनः शकुनिः सूतपुत्रः प्रीत्या राजन् पाण्डुपुत्रान् भजन्तु ॥ १५ ॥ दुःशासनो याचतु भीमसेनं सभामध्ये द्रुपदस्यात्मजाञ्च। युधिष्ठिरं त्वं परिसान्त्वयस्व

राज्य चैनं स्थापयस्वाभिपूज्य। त्वया पृष्टः किमहमन्यद्वदेय-मेतत् कृत्वा कृतकृत्योऽसि राजन् ॥ १६ ॥

धृतराष्ट्र उवाच। एतद्वाक्यं विदुर यत्ते सभायामिह प्रोक्तं पाण्डवान् प्राप्य माञ्च। हितं तेषामहितं मामकानामेतत् सर्व्वं मम नावैति चेतः ॥ १७ ॥ इदन्त्विदानीं कुत एव निश्चितं तेषामर्थे पाण्डवानां यदात्थ। तेनाद्य मन्ये नासि हितो ममेति कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ १८ ॥ असंशयं तेऽपि ममैव पुत्रा दुर्य्योधनस्तु मम देहात् प्रसूतः। स्वं वै देहं परहेतोस्त्यजेति कोऽनु ब्रूयात् समतामन्ववेक्ष्य ॥ १९ ॥ स मां जिह्मं विदुर सर्व्वं ब्रवीषि मानञ्च तेऽहमधिकं धारयामि। यथेच्छकं गच्छ वा तिष्ठ वा त्वं सुसान्त्व्यमाना ह्यसती स्त्री जहाति ॥ २० ॥

वैशम्पायन उवाच। एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्यदन्तर्व्वेश्म सहसोत्थाय राजन्। नेदमस्तीत्यथो विदुरो भाषमाणः सम्प्राद्रवद्यत्र पार्था बभूवुः ॥ २१ ॥

इति आरण्यपर्व्वणि आरण्यकपर्व्वणि विदुरवाक्ये
चतुर्थोऽध्यायः ॥ ४ ॥

---

वैशम्पायन उवाच। पाण्डवास्तु वने वासमुद्दिश्य भरतर्षभाः। प्रययुर्जाह्नवीकूलात् कुरुक्षेत्रं सहानुगाः ॥ १ ॥ सरस्वतीदृषद्वत्यौ यमुनाञ्च निषेव्य ते। ययुर्व्वनेनैव वनं सततं पश्चिमां दिशम् ॥ २ ॥ ततः सरस्वतीकूले समेषु मरुधन्वसु। काम्यकं नाम ददृशुर्व्वनं मुनिजनप्रियम् ॥ ३ ॥ तत्र ते न्यवसन् वीरा वने बहुमृगद्विजे। अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत ॥ ४ ॥ विदुरस्त्वपि पाण्डूनां सदा दर्शनलालसः। जगामैकरथेनैव काम्यकं वनमृद्धिमत् ॥ ५ ॥ ततो गत्वा विदुरः काम्यकं

तच्छीघ्रैरश्वैर्वाहिना स्यन्दनेन। ददर्शासीनं धर्मात्मानं विविक्ते
सार्द्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च ॥ ६ ॥ ततोऽपश्यद्विदुरं तूर्ण-
मारादभ्यायान्तं सत्यसन्धः स राजा। अथाब्रवीद्भ्रातरं भीमसेनं
किं नु क्षत्ता वक्ष्यति नः समेत्य ॥ ७ ॥ कच्चिन्नायं वचनात्
सौवलस्य समाह्वाता देवनायोपयातः। कच्चित् क्षुद्रः शकुनि-
र्नायुधानि जेष्यत्यस्मान् पुनरेवाहवत्याम् ॥ ८ ॥ समाहूतः
केनचिदाद्रवेति नाहं शक्तो भीमसेनापयातुम्। गाण्डीवे च
संशयिते कथं नु राज्यप्राप्तिः संशयिता भवेन्नः ॥ ९ ॥

वैशम्पायन उवाच। तत उत्थाय विदुरं पाण्डवेयाः प्रत्य-
गृह्णन्नृपते सर्व एव। तैः सत्कृतः स च तानाजमीढ़ो यथो
चितं पाण्डुपुत्रान् समेयात् ॥ १० ॥ समाश्वस्तं विदुरं ते नर-
र्षभास्ततोऽपृच्छन्नागमनाय हेतुम्। स चापि तेभ्यो विस्तरतः
शशंस यथावृत्तो धृतराष्ट्रोऽम्बिकेयः ॥ ११ ॥

विदुर उवाच। अवोचन्मां धृतराष्ट्रोऽनुगुप्तमजातशत्रो परि-
गृह्याभिपूज्य। एवं गते समतामभ्युपेत्य पश्यन्तेषां मम चैव
ब्रवीहि ॥ १२ ॥ मयाप्युक्तं यत् क्षमं कौरवाणां हितं पथ्यं धृत-
राष्ट्रस्य चैव। तद्वै तस्मै न रुचामभ्युपैति ततश्चाहं क्षममन्यन्न
मन्ये ॥ १३ ॥ परं श्रेयः पाण्डवेया मयोक्तं न मे तच्च श्रुतवा-
नाम्बिकेयः। यथातुरस्येव हि पथ्यमन्नं न रोचतेस्मास्य तदुच्य-
मानम् ॥ १४ ॥ न श्रेयसे नीयतेऽजातशत्रो स्त्री श्रोत्रियस्येव
गृहे प्रदुष्टा। ध्रुवं न रोचेद्भरतर्षभस्य पतिः कुमार्या इव षष्टि-
वर्षः ॥ १५ ॥ ध्रुवं विनाशो नृप कौरवाणां न वै श्रेयो धृतराष्ट्रः
परैति। यथा च पर्णे पुष्करस्यावसिक्तं जलं न तिष्ठेत् पथ्यमुक्तं
तथास्मिन् ॥ १६ ॥ ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां यस्मिन् श्रद्धा
भारत तत्र याहि। नाहं भूयः कामये त्वां सहायं महीमिमां
पालयितुं पुरं वा ॥ १७ ॥ सोऽहं त्यक्तो धृतराष्ट्रेण राज्ञा

प्रयाचितुं त्वामुपयातो नरेन्द्र। तद्वै सर्वं यन्मयोक्तं सभायां
तद्धार्य्यतां तत प्रवच्यामि भूयः ॥ १८ ॥ क्लेशैस्तीव्रैर्युज्यमानः
सपत्नैः क्षमां कुर्वन् कालमुपासते यः। संवर्द्धयंस्तोकमिवाग्नि-
मात्मवान् स वै भुङ्क्ते पृथिवीमेक एव ॥ १९ ॥ यस्याविभक्तं वसु
राजन् सहायैस्तस्य दुःखेप्यंशभाजः सहायाः। सहायानामेष
संग्रहणेऽभ्युपायः सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥ २० ॥ सत्यं
श्रेयः पाण्डव विप्रलापं तुल्यञ्चान्नं सह भोज्यं सहायैः। आत्मा
चैषामग्रतो न स्म पूज्य एवंवृत्तिर्वर्द्धते भूमिपालः ॥ २१ ॥

युधिष्ठिर उवाच। एवं करिष्यामि यथा ब्रवीषि परां बुद्धि-
मुपगम्याप्रमत्तः। यच्चाप्यन्यद्देशकालोपपन्नं तद्वै वाच्यं तत्
करिष्यामि कृत्स्नम् ॥ २२ ॥

इति आरण्यपर्वणि आरण्यकपर्वणि विदुरनिर्वासे
पञ्चमोऽध्यायः ॥ ५ ॥

---

वैशम्पायन उवाच। गते तु विदुरे राजन्नाश्रमं पाण्डवान्
प्रति। धृतराष्ट्रो महाप्राज्ञः पर्य्यतप्यत भारत ॥ १ ॥ विदुरस्य
प्रभावञ्च सन्धिविग्रहकारितम्। विवृद्धिञ्च परां मत्वा पाण्ड-
वानां भविष्यति ॥ २ ॥ स सभाद्वारमागम्य विदुरस्मारमोहितः।
समक्षं पार्थिवेन्द्राणां पपाताविष्टचेतनः ॥ ३ ॥ स तु लब्ध्वा
पुनः संज्ञां समुत्थाय महीतलात्। समीपोपस्थितं राजा सञ्जयं
वाक्यमब्रवीत् ॥ ४ ॥ भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः।
तस्य स्मृत्वाद्य सुभृशं हृदयं दीर्य्यतीव मे ॥५॥ तमानयस्व धर्म्मज्ञं
मम भ्रातरमाशु वै। इति ब्रुवन् स नृपतिः कृपणं पर्य्यदेवयत्
॥ ६ ॥ पश्चात्तापाभिसन्तप्तो विदुरस्मारमोहितः। भ्रातृस्नेहादिदं
राजा सञ्जयं वाक्यमब्रवीत् ॥ ७ ॥ गच्छ सञ्जय जानीहि भ्रातरं

विदुरं मम। यदि जीवति रोषेण मया पापेन निर्द्धुतः ॥ ८ ॥ न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किञ्चन। व्यलीकं कृतपूर्वं वै प्राज्ञेनामितबुद्धिना ॥ ९ ॥ स व्यलीकं परं प्राप्तो मत्तः परमबुद्धिमान्। त्यक्ष्यामि जीवितं प्राज्ञ तं गच्छानय सञ्जय ॥१०॥

वैशम्पायन उवाच। तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च। सञ्जयो वाढमित्युक्त्वा प्राद्रवत् काम्यकं प्रति ॥ ११ ॥ सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः। रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम् ॥ १२ ॥ विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः। भ्रातृभिश्चाभिसंगुप्तं देवैरिव पुरन्दरम् ॥ १३ ॥ युधिष्ठिरमुपागम्य पूजयामास सञ्जयः। भीमार्जुनयमांश्चापि तद्युक्तं प्रतिपेदिरे ॥ १४ ॥ राज्ञा पृष्टः स कुशलं सुखासीनश्च सञ्जयः। शशंसागमने हेतुमिदञ्चैवाब्रवीद्वचः ॥ १५ ॥

सञ्जय उवाच। राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः। तं पश्य गत्वा त्वं क्षिप्रं संजीवय च पार्थिवम् ॥ १६ ॥ सोऽनुमान्य नरश्रेष्ठान् पाण्डवान् कुरुनन्दन। नियोगाद्राजसिंहस्य गन्तुमर्हसि सत्तम ॥ १७ ॥

वैशम्पायन उवाच। एवमुक्तस्तु विदुरो धीमान् स्वजनवत्सलः। युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् ॥ १८ ॥ तमब्रवीन्महातेजा धृतराष्ट्रः प्रतापवान्। दिष्ट्या प्राप्तोऽसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ ॥ १९ ॥ अद्य चाहं दिवारात्रौ त्वत्कृते भरतर्षभ। प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः ॥ २० ॥ सोऽङ्कमानीय विदुरं मूर्ध्न्युपाघ्राय चैव ह। क्षम्यतामिति चोवाच यदुक्तोऽसि मयानघ ॥ २१ ॥

विदुर उवाच। क्षान्तमेव मया राजन् गुरुर्नः परमो भवान्। एषोऽहमागतः शीघ्रं त्वद्दर्शनपरायणः ॥ २२ ॥ भवन्ति हि नरव्याघ्र पुरुषा धर्मचेतसः। दीनाभिपातिनो राजन्नात्र कार्य्या

विशारदा ॥ २३ ॥ पाण्डोः सुता यादृशा मे तादृशास्तव भारत । दीना इतीव मे बुद्धिरभिपन्नाद्य तान् प्रति ॥ २४ ॥

वैशम्पायन उवाच । अन्योन्यमनुनीयैवं भ्रातरौ द्वौ महाद्युती । विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् ॥ २५ ॥

इति आरण्यपर्वणि आरण्यकपर्वणि विदुरप्रत्यागमनं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

वैशम्पायन उवाच । श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् । धृतराष्ट्रात्मजो राजा पर्य्यतप्यत दुर्मतिः ॥ १ ॥ स सौबलेयमानाय्य कर्णदुःशासनौ तथा । अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः ॥ २ ॥ एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य धीमतः । विदुरः पाण्डुपुत्राणां सुहृद्विद्वान् हिते रतः ॥ ३ ॥ यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति । पाण्डवानयने तावन्मन्त्रयध्वं हितं मम ॥ ४ ॥ अथ पश्याम्यहं पार्थान् प्राप्तानिह कथञ्चन । पुनः शोषं गमिष्यामि निरम्बुर्निरवग्रहः ॥ ५ ॥ विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् । करिष्ये न हि तानृद्धान् पुनर्द्रष्टुमिहोत्सहे ॥ ६ ॥

शकुनिरुवाच । किं बालिशमतिं राजन्नास्थितोऽसि विशाम्पते । गतास्ते समयं कृत्वा नैतदेवं भविष्यति ॥ ७ ॥ सत्यवाक्ये स्थिताः सर्व्वे पाण्डवा भरतर्षभ । पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचित् ॥ ८ ॥ अथवा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरम् । निरस्य समयं सर्व्वे पणोऽस्माकं भविष्यति ॥ ९ ॥ सर्व्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्त्तिनः । छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः ॥ १० ॥

दुःशासन उवाच । एवमेतन्महाप्राज्ञ यथा वदसि मातुल । नित्यं हि मे कथयतस्तव बुद्धिर्हि रोचते ॥ ११ ॥

कर्ण उवाच । काममीहामहे सर्वे दुर्य्योधन तवेप्सितम् । ऐकमत्यं हि नो राजन् सर्वेषामेव लक्षये ॥ १२ ॥ नागमिष्यन्ति ते धीरा अकृत्वा कालसंविदम् । आगमिष्यन्ति चेन्मोहात् पुनर्द्यूतेन तान् जय ॥ १३ ॥

वैशम्पायन उवाच । एवमुक्तस्तु कर्णेन राजा दुर्य्योधनस्तदा । नातिहृष्टमनाः क्षिप्रमभवत् स पराङ्मुखः ॥ १४ ॥ उपलभ्य ततः कर्णो विवृत्य नयने शुभे । रोषाद्दुःशासनञ्चैव सौबलञ्च तमेव च ॥ १५ ॥ उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना । अथो मम मतं यत्तु तन्निबोधत भूमिपाः ॥ १६ ॥ प्रियं सर्वे करिष्यामो राज्ञः किङ्करपाणयः । न चास्य शक्नुमः स्थातुं प्रिये सर्वे ह्यतन्द्रिताः ॥ १७ ॥ वयन्तु शस्त्राण्यादाय रथानास्थाय दंशिताः । गच्छामः सहिता हन्तुं पाण्डवान् वनगोचरान् ॥ १८ ॥ तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम् । निर्विवादा भविष्यन्ति धार्त्तराष्ट्रास्तथा वयम् ॥ १९ ॥ यावदेव परिद्यूना यावच्छोकपरायणाः । यावन्मित्रविहीनाश्च तावच्छक्या मतं मम ॥ २० ॥ तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः । बाढमित्येव ते सर्वे प्रत्यूचुः सूतजं तदा ॥ २१ ॥ एवमुक्त्वा सुसंरब्धा रथैः सर्वे पृथक् पृथक् । निर्ययुः पाण्डवान् हन्तुं सहिताः कृतनिश्चयाः ॥ २२ ॥ तान् प्रस्थितान् परिज्ञाय कृष्णद्वैपायनः प्रभुः । आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा ॥ २३ ॥ प्रतिषिध्याथ तान् सर्वान् भगवान् लोकपूजितः । प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरम् ॥ २४ ॥

इति आरण्यपर्वणि आरण्यकपर्वणि व्यासागमने सप्तमोऽध्यायः ॥ ७ ॥

---

व्यास उवाच । धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम । वक्ष्यामि त्वां कौरवाणां सर्व्वेषां हितमुत्तमम् ॥ १ ॥ न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम् । निकृत्या निर्जिताश्चैव दुर्य्योधनपुरोगमैः ॥ २ ॥ ते स्मरन्तः परिक्लेशान् वर्षे पूर्ण्णे त्रयोदशे । विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत ॥ ३ ॥ तदयं किन्तु पापात्मा तव पुत्रः सुमन्दधीः । पाण्डवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति ॥ ४ ॥ वार्य्यतां साध्वयं मूढः शमं गच्छतु ते सुतः । वनस्थांस्तानयं हन्तुमिच्छन् प्राणान् विमोक्ष्यति ॥ ५ ॥ यथा हि विदुरः प्राज्ञो यथा भीष्मो यथा वयम् । यथा कृपश्च द्रोणश्च तथा साधुर्भवानपि ॥ ६ ॥ विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः । अधर्म्म्यमयशस्यञ्च मा राजन् प्रतिपद्यथाः ॥७॥ समीक्षा यादृशी ह्यस्य पाण्डवान् प्रति भारत । उपेक्ष्यमाणा सा राजन् महान्तमनयं सृजेत् ॥ ८ ॥ अथ वायं सुमन्दात्मा वनं गच्छतु ते सुतः । पाण्डवैः सहितो राजन्नेक एवासहायवान् ॥ ९ ॥ ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः । यदि स्यात् कृतकार्य्योऽद्य भवेस्त्वं मनुजेश्वर ॥ १० ॥ अथ वा जायमानस्य यच्छीलमनुजायते । श्रूयते तन्महाराज नामृतस्यापसर्पति ॥११॥ कथं वा मन्यते भीष्मो द्रोणोऽथ विदुरोऽपि वा । भवान् वात्र क्षमं कार्य्यं पुरा वोऽर्थो निवर्त्तते ॥ १२ ॥

इति आरण्यपर्व्वणि आरण्यकपर्व्वणि व्यासवाक्ये अष्टमोऽध्यायः ॥ ८ ॥

---

धृतराष्ट्र उवाच । भगवन्नाहमप्येतद्रोचये द्यूतसम्भवम् । मन्ये तद्विधिनाक्रम्य कारितोऽस्मीति वै मुने ॥ १ ॥ नैतद्रोचयते भीष्मो न द्रोणो विदुरो न च । गान्धारी नेच्छति द्यूतं तच्च

मोहात् प्रवर्त्तितम् ॥ २ ॥ परित्यक्तुं न शक्नोमि दुर्य्योधनमचेतनम्। पुत्रस्नेहेन भगवन् जानन्नपि प्रियव्रत ॥ ३ ॥

व्यास उवाच। वैचित्रवीर्य्य नृपते सत्यमाह यथा भवान्। दृढं विद्धः परं पुत्रं परं पुत्रान्न विद्यते ॥ ४ ॥ इन्द्रोऽप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः। अन्यैः समृद्धैरप्यर्थैर्न सुतान्मन्यते परम् ॥ ५ ॥ अत्र ते वर्णयिष्यामि महदाख्यानमुत्तमम्। सुरभ्याश्चैव संवादमिन्द्रस्य च विशाम्पते ॥ ६ ॥ त्रिपिष्टपगता राजन् सुरभी प्रारुदत् किल। गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत ॥ ७ ॥

इन्द्र उवाच। किमिदं रोदिषि शुभे कच्चित् क्षेमं दिवौकसाम्। मनुष्येष्वथ नागेषु नैतदल्पं भविष्यति ॥ ८ ॥

सुरभिरुवाच। विनिपातो न ते कश्चिद्दृश्यते त्रिदशाधिप। अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ॥ ९ ॥ पश्यैनं कर्षकं क्षुद्रं दुर्बलं मम पुत्रकम्। प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीडितम् ॥ १० ॥ निषीदमानं सोत्कण्ठं वध्यमानं सुराधिप। कृपाविष्टास्मि देवेन्द्र मनश्चोद्विजते मम ॥ ११ ॥ एकस्तत्र बलोपेतो धुरमुद्वहतेऽधिकाम्। अपरोऽप्यबलप्राणः कृशो धमनिसन्ततः ॥ १२ ॥ कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव। वध्यमानः प्रतोदेन तुद्यमानः पुनः पुनः ॥ १३ ॥ नैव शक्नोति तं भारमुद्वोढुं पश्य वासव। ततोऽहं तस्य शोकार्त्ता विरौमि भृशदुःखिता। अश्रूण्यावर्त्तयन्ती च नेत्राभ्यां करुणायती ॥ १४ ॥

शक्र उवाच। तव पुत्रसहस्रेषु पीड्यमानेषु शोभने। किं कृपायितमस्त्यत्र पुत्र एकत्र हन्यति ॥ १५ ॥

सुरभिरुवाच। यदि पुत्रसहस्राणि सर्वत्र समतैव मे। दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा ॥ १६ ॥

व्यास उवाच। तदिन्द्रः सुरभीवाक्यं निशम्य भृशविस्मितः।

जीवितेनापि कौरव्य स्नेहोऽभ्यधिकमात्मजम् ॥ १७ ॥ प्रववर्ष च
तत्रैव सहसा तोयसुल्बणम् । कर्षकस्याचरन् विघ्नं भगवान्
पाकशासनः ॥ १८ ॥ तद्यथा सुरभिः प्राह समसेवास्तु ते तथा ।
सुतेषु राजन् सर्व्वेषु दीनेष्वभ्यधिका कृपा ॥ १९ ॥ यादृशो मे
सुतः पाण्डुस्तादृशो मेऽसि पुत्रक । विदुरश्च महाप्राज्ञः स्नेहा-
देतद्ब्रवीम्यहम् ॥ २० ॥ चिराय तव पुत्राणां शतमेकश्च भारत ।
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाः सुदुःखिताः ॥ २१ ॥ कथं
जीवेयुरत्यन्तं कथं वर्द्धेयुरित्यपि । इति दीनेषु पार्थेषु मनो मे
परितप्यते ॥२२॥ यदि पार्थिव कौरव्यान् जीवमानानिहेच्छसि ।
दुर्य्योधनस्तव सुतः शमं गच्छतु पाण्डवैः ॥ २३ ॥

इति आरण्यपर्वणि आरण्यकपर्वणि सुरभ्युपाख्याने
नवमोऽध्यायः ॥ ९ ॥

---

धृतराष्ट्र उवाच । एवमेतन्महाप्राज्ञ यथा वदसि नो मुने ।
अहञ्चैव विजानामि सर्व्वे चेमे नराधिपाः ॥ १ ॥ भवांश्च मन्यते
साधु यत् कुरूणां सुखोदयम् । तदेव विदुरोऽप्याह भीष्मो
द्रोणश्च मां मुने ॥ २ ॥ यदि त्वहमनुग्राह्यः कौरव्येषु दया यदि ।
अनुशाधि दुरात्मानं पुत्रं दुर्य्योधनं मम ॥ ३ ॥

व्यास उवाच । अयमायाति वै राजन् मैत्रेयो भगवानृषिः ।
अन्विष्य पाण्डवान् भ्रातॄनिहैवास्मद्दिदृक्षया ॥ ४ ॥ एष दुर्य्यो-
धनं पुत्रं तव राजन् महानृषिः । अनुशास्ता यथान्यायं शमा-
यास्य कुलस्य च ॥ ५ ॥ ब्रूयाद्यदेष कौरव्य तत्कार्य्यमविशङ्कया ।
अक्रियायान्तु कार्य्यस्य पुत्रं ते शप्स्यते रुषा ॥ ६ ॥

वैशम्पायन उवाच । एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्य-
दृश्यत । पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ ७ ॥ अर्घ्या-

पूजाभिः क्रियाभिश्च विश्रान्तं मुनिसत्तमम्। प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः॥ ८॥ सुखेनागमनं कच्चिद्भगवन् कुरु-जाङ्गलात्। कच्चित् कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः॥९॥ समये स्थातुमिच्छन्ति कच्चिच्च भरतर्षभाः। कच्चित् कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति॥ १०॥

मैत्रेय उवाच। तीर्थयात्रामनुक्रामन् प्राप्तोऽस्मि कुरु जाङ्ग-लान्। यदृच्छया धर्मराजं दृष्टवान् काम्यके वने॥ ११॥ तं जटाजिनसंवीतं तपोवननिवासिनम्। समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो॥ १२॥ तत्राश्रौषं महाराज पुत्राणां तव विभ्रमम्। अनयं द्यूतरूपेण महाभयमुपस्थितम्॥ १३॥ ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया। सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो॥ १४॥ नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति। यदन्योऽन्येन ते पुत्रा विरोध्यन्ते कथञ्चन॥ १५॥ मेधीभूतः स्वयं राजन्निग्रहप्रग्रहे भवान्। किमर्थमनयं घोरमुत्पद्यन्तमुपेक्षसे॥ १६॥ दस्यूनामिव यद्वृत्तं सभायां कुरु-नन्दन। तेन न भ्राजसे राजंस्तापसानां समागमे॥ १७॥

वैशम्पायन उवाच। ततो व्यावृत्य राजानं दुर्योधनममर्-षणम्। उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः॥ १८॥

मैत्रेय उवाच। दुर्योधन महाबाहो निबोध वदताम्वर। वचनं मे महाभाग ब्रुवतो यद्धितं तव॥ १९॥ मा द्रुहः पाण्ड-वान्राजन् कुरुष्व प्रियमात्मनः। पाण्डवानां कुरूणाञ्च लोकस्य च नरर्षभ॥ २०॥ ते हि सर्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः। सर्वे नागायुतप्राणा वज्रसंहनना दृढाः॥ २१॥ सत्यव्रतधराः सर्वे सर्वे पुरुषमानिनः। हन्तारो देवशत्रूणां रक्षसां काम-रूपिणाम्॥ २२॥ हिडिम्बवकमुख्यानां किर्मीरस्य च रक्षसः। हतः प्रद्रवतां रात्रौ यः स तेषां महात्मनाम्॥ २३॥ आवृत्य

मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः । तं भीमः समरश्लाघी बलेन बलिनाम्वरः ॥ २४ ॥ जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा । पश्य दिग्विजये राजन् यथा भीमेन पातितः ॥ २५ ॥ जरासन्धो महेष्वासो नागायुतबलो युधि । सम्बन्धी वासुदेवस्य श्यालाः सर्व्वे च पार्षताः ॥ २६ ॥ कस्तान् युधि समासीत जरा-मरणवान्नरः । तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ । कुरु मे वचनं राजन् मा मन्युवशमन्वगाः ॥ २७ ॥

वैशम्पायन उवाच । एवन्तु ब्रुवतस्तस्य मैत्रेयस्य विशाम्पते । ऊरुं गजकराकारं करेणाभिजघान सः । दुर्य्योधनः स्मितं कृत्वा चरणेनोल्लिखन्महीम् ॥ २८ ॥ न किञ्चिदुक्त्वा दुर्मेधास्तस्थौ किञ्चिदवाङ्मुखः । तमशुश्रूषमाणन्तु विलिखन्तं वसुन्धराम् ॥ २९ ॥ दृष्ट्वा दुर्य्योधनं राजन्मैत्रेयं कोप आविशत् । स कोप-वशमापन्नो मैत्रेयो मुनिसत्तमः ॥ ३० ॥ विधिना सम्प्रणुदितः शापायास्य मनो दधे । ततः स वार्य्युपस्पृश्य कोपसंरक्तलोचनः ॥ ३१ ॥ मैत्रेयो धार्त्तराष्ट्रं तमशपद्दुष्टचेतसम् । यस्मात्त्वं मा-मनादृत्य नेमां वाचं चिकीर्षसि । तस्मादस्याभिमानस्य सद्यः फलमवाप्नुहि ॥ ३२ ॥ त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् । तत्र भीमो गदाघातैस्तवोरुं भेतस्यते बली ॥ ३३ ॥ इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः । प्रसादयामास मुनिं नैतदेवं भवि-ष्यति ॥ ३४ ॥

मैत्रेय उवाच । शमं यास्यति चेत् पुत्रस्तव राजन् यदा तदा । शापो न भविता तात विपरीते भविष्यति ॥ ३५ ॥

वैशम्पायन उवाच । विलक्षयंस्तु राजेन्द्रो दुर्य्योधनपिता तदा । मैत्रेयं प्राह किर्म्मीरः कथं भीमेन पातितः ॥ ३६ ॥

मैत्रेय उवाच । नाहं वक्ष्यामि ते भूयो न ते शुश्रूषते सुतः । एष ते विदुरः सर्व्वमाख्यास्यति गते मयि ॥ ३७ ॥ इत्येव-

मुक्ता मैत्रेयः प्रातिष्ठत यथागतम् । किर्म्मीरवधसन्त्विग्नो बहि-
र्दुर्य्योधनो ययौ ॥ ३८ ॥

इति आरण्यपर्व्वणि आरण्यकपर्व्वणि मैत्रेयवाक्ये
दशमोऽध्यायः समाप्तश्चारण्यकपर्व्व ॥ १० ॥

---

## अथ किर्म्मीरवधपर्व्व ।

धृतराष्ट्र उवाच । किर्म्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्य-
ताम् । रक्षसा भीमसेनस्य कथमासीत् समागमः ॥ १ ॥

विदुर उवाच । शृणु भीमस्य कर्म्मेदमतिमानुषकर्म्मणः । श्रुत-
पूर्व्वं मया तेषां कथान्तेषु पुनः पुनः ॥ २ ॥ इतः प्रयाता राजेन्द्र
पाण्डवा द्यूतनिर्जिताः । जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम
तद्वनम् ॥ ३ ॥ रात्रौ निशीथे स्वाभीले गतेऽर्द्धसमये नृप । प्रचारे
पुरुषादानां रक्षसां घोरकर्म्मणाम् ॥ ४ ॥ तद्वनं तपसा नित्यं
गोपाश्च वनचारिणः । दूरात् परिहरन्ति स्म पुरुषादभयात्
किल ॥ ५ ॥ तेषां प्रविशतां तत्र मार्गमावृत्य भारत । दीप्ताक्षं
भीषणं रक्षः सोल्मुकं प्रत्यपद्यत ॥ ६ ॥ बाहू महान्तौ कृत्वा च
तथास्यञ्च भयानकम् । स्थितमावृत्य पन्थानं येन यान्ति कुरू-
द्वहाः ॥ ७ ॥ स्पष्टाष्टदंष्ट्रं ताम्राक्षं प्रदीप्तोर्द्ध्वशिरोरुहम् । सार्क-
रश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ॥ ८ ॥ सृजन्तं राक्षसीं
मायां महानादनिनादितम् ॥९॥ मुञ्चन्तं विपुलान्नादान् सतोयमिव
तोयदम् ॥ ९ ॥ तस्य नादेन सन्त्रस्ताः पक्षिणः सर्व्वतो दिशम् ।
विमुक्तनादाः सम्पेतुः स्थलजा जलजैः सह ॥ १० ॥ सम्प्रद्रुत-
मृगद्वीपिमहिषर्क्षसमाकुलम् । तद्वनं तस्य नादेन सम्प्रस्थित-
मिवाभवत् ॥ ११ ॥ तस्योरुवाताभिहतास्ताम्रपल्लववाहवः ।
विदूरजाताश्च लताः समाश्लिष्यन्ति पादपान् ॥ १२ ॥ तस्मिन्

स्वथोऽथ प्रववौ मारुतो भृशदारुणः। रजसा संवृतं तेन नष्टज्योतिरभून्नभः॥ १७॥ पञ्चानां पाण्डुपुत्राणामविज्ञातो महारिपुः। पञ्चानामिन्द्रियार्थानां शोकाविष्ट इवातुलः॥ १८॥ स दृष्ट्वा पाण्डवान् दूरात् कृष्णाजिनसमावृतान्। आवृणोत्तद्वनद्वारं मैनाक इव पर्वतः॥ १९॥ तं समासाद्य वित्रस्ता कृष्णा कमललोचना। अदृष्टपूर्वं संत्रासान्न्यमीलयत लोचने॥ २०॥ दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा। पञ्चपर्वतमध्यस्था नदीवाकुलतां गता॥ २१॥ मोमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः। इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिम्॥ २२॥ अथ तां राक्षसीं मायामुत्थितां घोरदर्शनाम्। रक्षोघ्नैर्विविधैर्मन्त्रैर्धौम्यः सम्यक् प्रयोजितैः॥ २३॥ पश्यतां पाण्डुपुत्राणां नाशयामास वीर्य्यवान्। स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः॥ २४॥ कामसूर्त्तिधरः क्रूरः कालकल्पो व्यदृश्यत। तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः॥ २५॥ को भवान् कस्य वा किं ते क्रियतां कार्य्यमुच्यताम्। प्रत्युवाचाथ तद्रक्षो धर्मराजं युधिष्ठिरम्॥ २६॥ अहं बकस्य वै भ्राता किर्म्मीर इतिविश्रुतः। वनेऽस्मिन् काम्यके शून्ये निवसामि गतज्वरः॥ २७॥ युधि निर्जित्य पुरुषानाहारं नित्यमाचरन्। के यूयमभिसंप्राप्ता भक्ष्यभूता ममान्तिकम्। युधि निर्जित्य वः सर्वान् भक्षयिष्ये गतज्वरः॥ २८॥

वैशम्पायन उवाच। युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः। आचचक्षे ततः सर्वं गोत्रनामादि भारत॥ २९॥

युधिष्ठिर उवाच। पाण्डवो धर्मराजोऽहं यदि ते श्रोत्रमागतः। सहितो भ्रातृभिः सर्वैर्भीमसेनार्जुनादिभिः॥ ३०॥ हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः। वनमभ्यागतं घोरमिदं तव परिग्रहम्॥ ३१॥

विदुर उवाच । किर्मीरस्त्वब्रवीदेनं दिष्ट्या दैवैरिदं मम । उपपादितमद्येह चिरकालान्मनोगतम् । भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ॥ ३२ ॥ चरामि पृथिवीं कृत्स्नां नैनमासादयाम्यहम् । सोऽयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम् ॥ ३३ ॥ अनेन हि मम भ्राता बको विनिहतः प्रियः । वेत्रकीयवने राजन् ब्राह्मणच्छद्मरूपिणा ॥ ३४ ॥ विद्याबलमुपाश्रित्य न त्वस्त्यौरसं बलम् । हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ॥ ३५ ॥ हतोदुरात्मनानेन स्वसा चास्य हृता पुरा । सोऽयमभ्यागतो मूढो ममेदं गहनं वनम् ॥ ३६ ॥ प्रचारसमयेऽस्माकमर्द्धरात्रे स्थिते समे । अद्यास्य पातयिष्यामि तद्वैरं चिरसम्भृतम् ॥ ३७ ॥ तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा । अद्याहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च ॥ ३८ ॥ शान्तिं लब्धास्मि परमां हत्वा राक्षसकण्टकम् । यदि तेन पुरामुक्तो भीमसेनो बकेन वै ॥ ३९ ॥ अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर । एनं हि विपुलप्राणमद्य हत्वा वृकोदरम् ॥ ४० ॥ संभक्ष्य जरयिष्यामि यथागस्त्यो महासुरम् । एवमुक्तस्तु धर्मात्मा सत्यसन्धो युधिष्ठिरः ॥ ४१ ॥ नैतदस्तीति संक्रुद्धो भर्त्सयामास राक्षसम् । ततो भीमो महाबाहुरारुज्य तरसा द्रुमम् ॥ ४२ ॥ दशव्याममथोद्विद्धं निष्पत्रमकरोत्तदा । चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम् ॥ ४३ ॥ निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः । निवार्य भीमो जिष्णुं तं तद्रक्षो मेघनिस्वनम् ॥ ४४ ॥ अभिद्रुत्याब्रवीद्वाक्यं तिष्ठतिष्ठेति भारत । इत्युक्त्वैनमभिक्रुद्धः कक्षामुत्पीड्य पाण्डवः ॥ ४५ ॥ निष्पिष्य पाणिना पाणिं संदष्टौष्ठपुटो बली । तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ॥ ४६ ॥ यमदण्डप्रतीकाशं ततस्तं तस्य मूर्द्धनि । पातयामास वेगेन कुलिशं मघवानिव ॥ ४७ ॥ असम्भ्रान्तस्तु तद्रक्षः

समरे प्रत्यदृश्यत । चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव
॥ ४८ ॥ तदुद्दस्तमलातन्तु भीमः प्रहरतां वरः । पदा सव्येन
चिक्षेप तद्रक्षः पुनराव्रजत् ॥ ४९ ॥ किर्म्मीरश्चापि सहसा वृक्ष-
मुत्पाट्य पाण्डवम् । दण्डपाणिरिव क्रुद्धः समरे प्रत्यधावत ॥५०॥
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् । वालिसुग्रीवयोर्भ्रात्रोर्यथा
स्त्रीकाङ्क्षिणोः पुरा ॥ ५१ ॥ शीर्षयोः पतिता वृक्षा बिभिदु-
र्नैकधा तयोः । यथैवोत्पलमालानि मत्तयोर्द्विपयोस्तथा ॥५२॥
मुञ्जवज्जर्जरीभूता बहवस्तत्र पादपाः । चीराणीव व्युदस्तानि
रेजुस्तत्र महावने ॥ ५३ ॥ तद्वृक्षयुद्धमभवन्मुहूर्त्तं भरतर्षभ ।
राक्षसानाञ्च मुख्यस्य नराणामुत्तमस्य च ॥ ५४ ॥ ततः शिलां
समुत्क्षिप्य भीमस्य युधि तिष्ठतः । प्राहिणोद्राक्षसः क्रुद्धो भीमश्च
न चचाल ह ॥ ५५ ॥ तं शिलाताड़नजड़ं पर्य्यधावत राक्षसः ।
बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करम् ॥ ५६ ॥ तावन्योऽन्यं
समाश्लिष्य प्रकर्षन्तौ परस्परम् । उभावपि चकाशेते प्रवृद्धौ
वृषभाविव ॥ ५७ ॥ तयोरासीत् सुतुमुलः संप्रहारः सुदारुणः ।
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ५८ ॥ दुर्य्योधननिकारा-
च्च बाहुवीर्य्याच्च दर्पितः । कृष्णाकटाक्षदृष्टश्च व्यवर्द्धत वृको-
दरः ॥ ५९ ॥ अभिपद्य च बाहुभ्यां प्रत्यगृह्णादमर्षितः । मातङ्ग-
मिव मातङ्गः प्रभिन्नकरटामुखम् ॥ ६० ॥ स चाप्येनं ततो रक्षः
प्रतिजग्राह वीर्य्यवान् । तमाक्षिपद्भीमसेनो बलेन बलिनास्वरः
॥ ६१ ॥ तयोर्भुजाविनिष्पेषादुभयोर्बलिनोस्तदा । शब्दः सम-
भवद्घोरो वेणुस्फोटसमो युधि ॥ ६२ ॥ अथैनमाक्षिप्य बलाद्गृह्य
मध्ये वृकोदरः । धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ६३ ॥
स भीमेन परामृष्टो दुर्बलो बलिना रणे । व्यस्पन्दत यथाप्राणं
विचकर्ष च पाण्डवम् ॥ ६४ ॥ तत एनं परिश्रान्तमुपलभ्य
वृकोदरः । योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ ६५ ॥

विनदन्तं महानादं भिन्नभेरीस्वनं बली । भ्रामयामास सुचिरं विस्फुरन्तमचेतनम् ॥ ६६ ॥ तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः । प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् ॥ ६७ ॥ आक्रम्य च कटीदेशे जानुना राक्षसाधमम् । पीड़यामास पाणिभ्यां तस्य कण्ठं वृकोदरः ॥ ६८ ॥ अथ जर्जरसर्वाङ्गं व्याविद्धनयनाम्बरम् । भूतले भ्रामयामास वाक्यञ्चेदमुवाच ह ॥ ६९ ॥ हिड़िम्बबकयोः पाप न त्वमश्रुप्रमार्जनम् । करिष्यसि गतश्चापि यमस्य सदनं प्रति ॥ ७० ॥ इत्येवमुक्त्वा पुरुषप्रवीरस्तं राक्षसं क्रोधपरीतचेताः । विस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज ॥ ७१ ॥ तस्मिन् हते तोयदतुल्यरूपे कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः । भीमं प्रशस्याथ गुणैरनेकैर्हृष्टास्ततो द्वैतवनाय जग्मुः ॥ ७२ ॥

विदुर उवाच । एवं विनिहतः संख्ये किर्मीरो मनुजाधिप । भीमेन वचनात्तस्य धर्मराजस्य कौरव ॥ ७३ ॥ ततो निष्कण्टकं कृत्वा वनं तदपराजितः । द्रौपद्या सह धर्मज्ञो वसतिं तामुवास ह ॥ ७४ ॥ समाश्वास्य च ते सर्वे द्रौपदीं भरतर्षभाः । प्रहृष्टमनसः प्रीत्या प्रशशंसुर्वृकोदरम् ॥ ७५ ॥ भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः । विविशुस्ते वनं वीराः क्षेमं निहतकण्टकम् ॥ ७६ ॥ स मया गच्छता मार्गे विनिकीर्णो भयावहः । वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ॥ ७७ ॥ तत्राश्रौषमहञ्चैतत् कर्म्म भीमस्य भारत । ब्राह्मणानां कथयतां ये तत्रासन् समागताः ॥ ७८ ॥

वैशम्पायन उवाच । एवं विनिहतं संख्ये किर्मीरं रक्षसां वरम् । श्रुत्वा ध्यानपरो राजा निशश्वासार्त्तवत्तदा ॥ ७९ ॥

इति आरण्यपर्वणि किर्मीरवधपर्वणि विदुरवाक्ये एकादशोऽध्यायः समाप्तञ्च किर्मीरवधपर्व ॥ ११ ॥

---

# अथार्जुनाभिगमनपर्व ॥

वैशम्पायन उवाच । भोजाः प्रव्रजितान् श्रुत्वा वृष्णयश्चान्धकैः सह । पाण्डवान् दुःखसन्तप्तान् समाजग्मुर्महावने ॥ १ ॥ पाञ्चालस्य च दायादा धृष्टकेतुश्च चेदिपः । केकयाश्च महावीर्य्या भ्रातरो लोकविश्रुताः ॥ २ ॥ वने द्रष्टुं ययुः पार्थान् क्रोधामर्षसमन्विताः । गर्हयन्तो धार्त्तराष्ट्रान् किं कुर्म इति चाब्रुवन् ॥ ३ ॥ वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः । परिवार्य्योपविविशुर्धर्मराजं युधिष्ठिरम् । अभिवाद्य कुरुश्रेष्ठं विषण्णः केशवोऽब्रवीत् ॥ ४ ॥

वासुदेव उवाच । दुर्य्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः । दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ५ ॥ एतान्निहत्य समरे ये च तेषां पदानुगाः । तांश्च सर्वान् विनिर्जित्य सहितान् सनराधिपान् ॥ ६ ॥ ततः सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम् । निकृत्योपचरन् वध्य एष धर्मः सनातनः ॥ ७ ॥

वैशम्पायन उवाच । पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् । अर्जुनः शमयामास दिधक्षन्तमिव प्रजाः ॥ ८ ॥ संक्रुद्धं केशवं दृष्ट्वा पूर्वदेहेषु फाल्गुनः । कीर्त्तयामास कर्माणि सत्यकीर्त्तेर्महात्मनः ॥ ९ ॥ पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः । प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ॥ १० ॥

अर्जुन उवाच । दशवर्षसहस्राणि यत्रसायंगृहो मुनिः । व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने ॥ ११ ॥ दशवर्षसहस्राणि दशवर्षशतानि च । पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन् पुरा ॥ १२ ॥ ऊर्द्ध्वबाहुर्विशालायां वदर्य्यां मधुसूदन । अतिष्ठ एकपादेन वायुभक्षः शतं समाः ॥ १३ ॥ अवकृष्टोत्तरासङ्गः कृशो धमनिसन्ततः । आसीः कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके ॥ १४ ॥ प्रभासमप्यथासाद्य तीर्थं पुण्यजनोचितम् । तथा कृष्ण महा-

तेजा दिव्यं वर्षसहस्रिकम्। अतिष्ठस्त्वं यत्रैकेन पादेन नियम-
स्थितः ॥ १५ ॥ लोमप्रवृत्तिहेतोस्त्वमिति व्यासो ममाब्रवीत्।
देवश्च सर्वभूतानामादिरन्तश्च केशव ॥ १६ ॥ निधानं तपसां
कृष्ण यज्ञस्त्वञ्च सनातनः। निहत्य नरकं भौममाहृत्य मणि-
कुण्डले। प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ॥ १७ ॥ कृत्वा
तत् कर्म्म लोकानामृषभः सर्वलोकजित्। अवधीस्त्वं रणे सर्वान्
समेतान् दैत्यदानवान् ॥ १८ ॥ ततः सर्वेश्वरत्वञ्च सम्प्रदाय
शचीपतेः। मानुषेषु महावाहो प्रादुर्भूतोऽसि केशव ॥ १९ ॥
स त्वं नारायणो भूत्वा हरिरासीः परन्तप। ब्रह्मा सोमश्च सूर्य्यश्च
धर्मो धाता यमोऽनलः ॥ २० ॥ वायुर्वैश्रवणो रुद्रः कालः खं
पृथिवी दिशः। अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ॥ २१ ॥
परायणं देवमूर्द्ध क्रतुभिर्मधुसूदन। अयजो भूरितेजा वै कृष्ण
चैत्ररथे वने ॥ २२ ॥ शतं शतसहस्राणि सुवर्णस्य जनार्द्दन।
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि भागशः ॥ २३ ॥ अदितेरपि
पुत्रत्वमेत्य यादवनन्दन। त्वं विष्णुरितिविख्यात इन्द्रादवरजो
विभुः ॥ २४ ॥ शिशुर्भूत्वा दिवं खञ्च पृथिवीञ्च परन्तप। त्रिभि-
र्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा ॥ २५ ॥ संप्राप्य दिव-
माकाशमादित्यसदने स्थितः। अत्यरोचश्च भूतात्मन् भास्करं
स्वेन तेजसा ॥ २६ ॥ प्रादुर्भावसहस्रेषु तेषु तेषु त्वया विभो।
अधर्मरुचयः कृष्ण निहताः शतशोऽसुराः ॥ २७ ॥ सादिता
मौरवाः पाशा निसुन्दनरकौ हतौ। कृतः क्षेमः पुनः पन्थाः पुरं
प्राग्ज्योतिषं प्रति ॥ २८ ॥ जारूथ्यामाहृतिः क्राथः शिशुपालो
जनैः सह। जरासन्धश्च शैव्यश्च शतधन्वा च निर्जितः ॥ २९ ॥
तथा पर्जन्यघोषेण रथेनादित्यवर्च्चसा। अवाप्सीर्महिषीं भोज्यां
रणे निर्जित्य रुक्मिणम् ॥ ३० ॥ इन्द्रद्युम्नो हतः कोपाद्यवनश्च
कशेरुमान्। हतः सौभपतिः शाल्वस्त्वया सौभञ्च पातितम् ॥ ३१ ॥

द्वारवत्यां हतो भोजः कार्त्तवीर्य्यसमो युधि । गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ॥ ३२ ॥ ताञ्च भोगवतीं पुण्यामृषिकान्तां जनार्द्दन । द्वारकामात्मसात् कृत्वा समुद्रं गमयिष्यसि ॥ ३३ ॥ न क्रोधो न च मात्सर्य्यं नानृतं मधुसूदन । त्वयि तिष्ठति दाशार्ह न नृशंस्यं कुतोऽनृजुः ॥ ३४ ॥ आसीनं चैत्यमध्ये त्वां दीप्यमानं स्वतेजसा । आगम्य ऋषयः सर्व्वेऽयाचन्ताभयमच्युत ॥ ३५ ॥ युगान्ते सर्व्वभूतानि संक्षिप्य मधुसूदन । आत्मनैवात्मसात् कृत्वा जगदासीः परन्तप ॥ ३६ ॥ युगादौ तव वार्ष्णेय नाभिपद्मादजायत । ब्रह्मा चराचरगुरुर्य्यस्येदं सकलं जगत् ॥ ३७ ॥ तं हन्तुमुद्यतौ घोरौ दानवौ मधुकैटभौ । तयोर्व्यतिक्रमं दृष्ट्वा क्रुद्धस्य भवतो हरे ॥ ३८ ॥ ललाटाज्जातवान् शम्भुः शूलपाणिस्त्रिलोचनः । इत्थं तावपि देवेशौ त्वच्छरीरसमुद्भवौ ॥ ३९ ॥ तन्नियोगकरावेताविति मे नारदोऽब्रवीत् । तथा नारायण पुरा क्रतुभिर्भूरिदक्षिणैः ॥ ४० ॥ इष्टवांस्त्वं महासत्रं कृष्ण चैत्ररथे वने । नैवं पूर्व्वे नापरे वा करिष्यन्ति कृतानि वा ॥ ४१ ॥ यानि कर्म्माणि देव त्वं बाल एव महाबलः । कृतवान् पुण्डरीकाक्ष बलदेवसहायवान् । कैलासभवने चापि ब्राह्मणैर्न्यवसः सह ॥ ४२ ॥

वैशम्पायन उवाच । एवमुक्त्वा महात्मानमात्मा कृष्णस्य पाण्डवः । तूष्णीमासीत्ततः पार्थमित्युवाच जनार्द्दनः ॥ ४३ ॥ ममैव त्वं तवैवाहं ये मदीयास्तवैव ते । यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ ४४ ॥ नरस्त्वमसि दुर्द्धर्ष हरिर्नारायणो ह्यहम् । काले लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ४५ ॥ अनन्यः पार्थ मत्तस्त्वं त्वत्तश्चाहं तथैव च । नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ४६ ॥

वैशम्पायन उवाच । एवमुक्ते तु वचने केशवेन महात्मना ।

तस्मिन् वीरसमावाये संरब्धेष्वथ राजसु। धृष्टद्युम्नमुखैर्वीरै-
र्भ्रातृभिः परिवारिता ॥ ४७ ॥ पाञ्चाली पुण्डरीकाक्षमासीनं
भ्रातृभिः सह। अभिगम्याब्रवीत् क्रुद्धा शरण्यं शरणैषिणी ॥४८॥
द्रौपद्युवाच। पूर्वे प्रजाभिसर्गे त्वामाहुरेकं प्रजापतिम्।
स्रष्टारं सर्वलोकानामसितो देवलोऽब्रवीत् ॥ ४९ ॥ विष्णुस्त्वमसि
दुर्द्धर्ष त्वं यज्ञो मधुसूदन। यष्टा त्वमसि यष्टव्यो जामदग्न्यो
यथाब्रवीत् ॥ ५० ॥ ऋषयस्त्वां क्षमामाहुः सत्यञ्च पुरुषोत्तम।
सत्याद्यज्ञोऽसि संभूतः कश्यपस्त्वां यथाब्रवीत् ॥ ५१ ॥ साध्याना-
मपि देवानां शिवानामीश्वरेश्वर। भूतभावन भूतेश यथा त्वां
नारदोऽब्रवीत् ॥ ५२ ॥ ब्रह्मशङ्करशक्राद्यैर्देववृन्दैः पुनः पुनः।
क्रीड़से त्वं नरव्याघ्र बालः क्रीड़नकैरिव ॥ ५३ ॥ द्यौश्च ते शिरसा
व्याप्ता पद्भ्याञ्च पृथिवी प्रभो। जठरं ते इमे लोकाः पुरुषोऽसि
सनातनः ॥ ५४ ॥ विद्यातपोऽभितप्तानां तपसा भावितात्मनाम्।
आत्मदर्शनतृप्तानां ऋषीणामसि सत्तमः ॥ ५५ ॥ राजर्षीणा-
पुण्यकृतामाहवेष्वनिवर्त्तिनाम्। सर्वधर्मोपपन्नानां त्वं गतिः
पुरुषर्षभ। त्वं प्रभुस्त्वं विभुश्च त्वं भूतात्मा त्वं विचेष्टसे ॥ ५६ ॥
लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश। नभश्चन्द्रश्च सूर्य्यश्च
त्वयि सर्वं प्रतिष्ठितम् ॥ ५७ ॥ मर्त्त्यता चैव भूतानाममरत्वं
दिवौकसाम्। त्वयि सर्वं महाबाहो लोककार्य्यं प्रतिष्ठितम्
॥ ५८ ॥ सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन। ईशस्त्वं
सर्वभूतानां ये दिव्या ये च मानुषाः ॥ ५९ ॥ कथं नु भार्य्या
पार्थानां तव कृष्ण सखी विभो। धृष्टद्युम्नस्य भगिनी सभां
कृष्येत मादृशी ॥ ६० ॥ स्त्रीधर्म्मिणी वेपमाना शोणितेन समु-
क्षिता। एकवस्त्रा विकृष्टास्मि दुःखिता कुरुसंसदि ॥ ६१ ॥
राज्ञां मध्ये सभायान्तु रजसाभिपरिप्लुता। दृष्ट्वा च मां धार्त्त-
राष्ट्राः प्राहसन् पापचेतसः ॥ ६२ ॥ दासीभावेन मां भोक्तुमीषुस्ते

मधुसूदन । जीवत्सु पाण्डुपुत्रेषु पाञ्चालेषु च वृष्णिषु ॥ ६३ ॥
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः । स्नुषा भवामि धर्म्मेण
साहं दासीकृता बलात् ॥ ६४ ॥ गर्हये पाण्डवांस्त्वेव युधि
श्रेष्ठान्महाबलान् । यत् क्लिश्यमानां प्रेक्षन्ते धर्म्मपत्नीं यशस्विनीम्
॥ ६५ ॥ धिग्बलं भीमसेनस्य धिक् पार्थस्य च गाण्डिवम् । यौ
मां विप्रकृतां क्षुद्रैर्मर्षयेतां जनार्द्दन ॥ ६६ ॥ शाश्वतोऽयं धर्म्म-
पथः सद्भिराचरितः सदा । यद्भार्य्यां परिरक्षन्ति भर्त्तारोऽल्प-
बला अपि ॥ ६७ ॥ भार्य्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥ ६८ ॥ आत्मा हि
जायते तस्यां तस्मात् जाया भवत्युत । भर्त्ता च भार्य्यया रक्ष्यः
कथं जायान्ममोदरे ॥ ६९ ॥ नन्विमे शरणं प्राप्तं न त्यजन्ति
कदाचन । ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः ॥ ७० ॥
पञ्चभिः पतिभिर्जाताः कुमारा मे महौजसः । एतेषामप्यवेक्षार्थं
त्रातव्यास्मि जनार्द्दन ॥ ७१ ॥ प्रतिविन्ध्यो युधिष्ठिरात् सुतसोमो
वृकोदरात् । अर्जुनात् श्रुतकीर्त्तिस्तु शतानीकस्तु नाकुलिः ॥७२॥
कनिष्ठात् श्रुतकर्म्मा च सर्व्वे सत्यपराक्रमाः । प्रद्युम्नो यादृशः
कृष्ण तादृशास्ते महारथाः ॥ ७३ ॥ नन्विमे धनुषि श्रेष्ठा अजेया
युधि शात्रवैः । किमर्थं धार्त्तराष्ट्राणां सहन्ते दुर्ब्बलीयसाम् ॥७४॥
अधर्म्मेण हृतं राज्यं सर्व्वे दासाः कृतास्तथा । सभायां परि-
कृष्टाहमेकवस्त्रा रजस्वला ॥ ७५ ॥ नाधिज्यमपि यत् शक्यं
कर्त्तुमन्येन गाण्डिवम् । अन्यत्रार्ज्जुनभीमाभ्यां त्वया वा मधु-
सूदन ॥ ७६ ॥ धिग्बलं भीमसेनस्य धिक् पार्थस्य च पौरुषम् ।
यत्र दुर्य्योधनः कृष्ण मुहूर्त्तमपि जीवति ॥ ७७ ॥ य एता-
नाक्षिपद्राष्ट्रात् सह मात्रा विहिंसकान् । अधीयानान् पुरा बालान्
व्रतस्थान्मधुसूदन ॥ ७८ ॥ भोजने भीमसेनस्य पापः प्राक्षेपय-
द्विषम् । कालकूटं नवन्तीक्ष्णं सम्भृतं लोमहर्षणम् ॥ ७९ ॥

तथौषमविकारेण सहान्नेन जनार्दन। सर्पैश्चास्य महाबाहो भीमस्य पुरुषोत्तम॥ ८०॥ प्रमाणकोट्यां विध्वस्तं तथा सुप्तं वृकोदरम्। बद्धैनं कृष्ण गङ्गायां प्रक्षिप्य पुनराव्रजत्॥ ८१॥ यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम्। उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः॥ ८२॥ आशीविषैः कृष्णसर्पैर्भीमसेनमदंशयत्। सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा॥ ८३॥ प्रतिबुद्धस्तु कौन्तेयः सर्वान् सर्पानपोथयत्। सारथिश्चास्य दयितमपहस्तेन जघ्निवान्॥ ८४॥ पुनः सुप्तानुपाधाक्षीद्दालकान् वारणावते। शयानानार्य्यया सार्द्धं को नु तत् कर्त्तुमर्हति॥ ८५॥ यत्रार्य्या रुदती भीता पाण्डवानिदमब्रवीत्। महद्व्यसनमापन्ना शिखिना परिवारिता॥ ८६॥ हा हतास्मि कुतो न्वद्य भवेच्छान्तिरिहानलात्। अनाथा विनशिष्यामि बालकैः पुत्रकैः सह॥ ८७॥ तत्र भीमो महाबाहुर्वायुवेगपराक्रमः। आर्य्यामाश्वासयामास भ्रातॄंश्चापि वृकोदरः॥ ८८॥ वैनतेयो यथा पक्षी गरुत्मान् पततांवरः। तथैवाभिपतिष्यामि भयं वो नेह विद्यते॥ ८९॥ आर्य्यामङ्केन वामेन राजानं दक्षिणेन च। अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च॥ ९०॥ सहसोत्पत्य वेगेन सर्वानादाय वीर्य्यवान्। भ्रातॄनार्य्याञ्च बलवान् मोचयामास पावकात्॥ ९१॥ ते रात्रौ प्रस्थिताः सर्वे सह मात्रा यशस्विनः। अभ्यगच्छन्महारण्यं हिड़िम्बवनमन्तिकात्॥ ९२॥ श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः। सुप्तांश्चैनानभ्यगच्छद्धिड़िम्बा नाम राक्षसी॥ ९३॥ सा दृष्ट्वा पाण्डवांस्तत्र सुप्तान्मात्रा सह क्षितौ। हृच्छयेनाभिभूतात्मा भीमसेनमकामयत्॥ ९४॥ भीमस्य पादौ कृत्वा तु स्व उत्सङ्गे ततोऽबला। पर्य्यमर्द्दत संहृष्टा कल्याणी मृदुपाणिना॥ ९५॥ तामबुध्यदमेयात्मा बलवान् सत्यविक्रमः। पर्य्यपृच्छत तां भीमः

किमिदैच्छस्यनिन्दिते ॥ ९६ ॥ एवमुक्ता तु भीमेन राक्षसी कामरूपिणी । भीमसेनं महात्मानमाह चैवमनिन्दिता ॥ ९७ ॥ पलायध्वमितः क्षिप्रं मम भ्रातैष वीर्य्यवान् । आगमिष्यति वो हन्तुं तस्माद्गच्छत मा चिरम् ॥ ९८ ॥ अथ भीमोऽभ्युवाचैनां साभिमानमिदं वचः । नोद्विजेयमहं तस्मान्निहनिष्येऽहमागतम् ॥ ९९ ॥ तयोः श्रुत्वा तु संजल्पमागच्छद्राक्षसाधमः । भीमरूपो महानादान् विसृजन् भीमदर्शनः ॥ १०० ॥

राक्षस उवाच । केन सार्द्धं कथयसि आनयैनं ममान्तिकम् । हिड़िम्बे भक्षयिष्यामो न चिरं कर्त्तुमर्हसि ॥ १०१ ॥ सा कृपासंगृहीतेन हृदयेन मनस्विनी । नैवमैच्छत्तदाख्यातुमनुक्रोशादनिन्दिता ॥ १०२ ॥ स नादान् विनदन् घोरान् राक्षसः पुरुषादकः । अभ्यद्रवत वेगेन भीमसेनं तदा किल ॥ १०३ ॥ तमभिद्रुत्य संक्रुद्धो वेगेन महता बली । अगृह्णात् पाणिना पाणिं भीमसेनस्य राक्षसः ॥ १०४ ॥ इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढ़म् । संहृत्य भीमसेनाय व्याक्षिपत् सहसा करम् ॥ १०५ ॥ गृहीतं पाणिना पाणिं भीमसेनस्य रक्षसा । नामृष्यत महाबाहुस्तत्राक्रुध्यद्वृकोदरः ॥ १०६ ॥ तदासीत्तुमुलं युद्धं भीमसेनहिड़िम्बयोः । सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ॥ १०७॥ विक्रीड्य सुचिरं भीमो राक्षसेन सहानघ । निजघान महावीर्य्यस्तं तदा निर्बलं बली ॥ १०८॥ हत्वा हिड़िम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह । हिड़िम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः ॥ १०९ ॥ ततः संप्राद्रवन् सर्व्वे सह मात्रा परन्तपाः । एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ॥ ११० ॥ प्रस्थाने व्यास एषाञ्च मन्त्री प्रियहिते रतः । ततोऽगच्छन्नेकचक्रां पाण्डवाः संशितव्रताः ॥ १११ ॥ तत्राप्यासादयामासुर्वकं नाम महाबलम् । पुरुषादं प्रतिभयं हिड़िम्बेनैव सम्मितम् ॥ ११२ ॥ तत्रापि विनि-

हत्वोग्रं भीमः प्रहरताम्वरः। सहितो भ्रातृभिः सर्व्वैर्द्रुपदस्य
पुरं ययौ ॥ ११३ ॥ लब्धाहमपि तत्रैव वसता सव्यसाचिना।
यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा ॥ ११४ ॥ एवं
सुयुद्धे पार्थेन जिताहं मधुसूदन। स्वयम्वरे महत् कर्म्म कृत्वा
न सुकरं परैः ॥ ११५ ॥ एवं क्लेशैः सुबहुभिः क्लिश्यमाना
सुदुःखिता। निवसाम्यार्य्यया हीना कृष्ण धौम्यपुरःसरा ॥११६॥
त इमे सिंहविक्रान्ता वीर्य्येणाभ्यधिकाः परैः। निहीनैः परि-
क्लिश्यन्तीं समुपेक्षन्ति मां कथम् ॥ ११७ ॥ एतादृशानि दुःखानि
सहन्ती दुर्ब्बलीयसाम्। दीर्घकालं प्रदीप्तास्मि पापानां पाप-
कर्म्मणाम् ॥ ११८ ॥ कुले महति जातास्मि दिव्येन विधिना
किल। पाण्डवानां प्रिया भार्य्या स्नुषा पाण्डोर्महात्मनः ॥११९॥
कचग्रहमनुप्राप्ता सास्मि कृष्ण वरा सती। पञ्चानां पाण्डुपुत्राणां
प्रेक्षतां मधुसूदन ॥ १२० ॥ इत्युक्त्वा प्ररुदत् कृष्णा मुखं प्रच्छाद्य
पाणिना। पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी ॥ १२१ ॥
स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ। अभ्यवर्षत पाञ्चाली
दुःखजैरश्रुविन्दुभिः ॥ १२२ ॥ चक्षुषी परिमार्जन्ती निश्वसन्ती
पुनः पुनः। वाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ १२३ ॥
नैव मे पतयः सन्ति न पुत्रा न च वान्धवाः। न भ्रातरो न च
पिता नैव त्वं मधुसूदन ॥ १२४ ॥ ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं
विशोकवत्। न च मे शाम्यते दुःखं कर्णो यत् प्राहसत्तदा
॥ १२५ ॥ चतुर्भिः कारणैः कृष्ण त्वया रक्ष्यास्मि नित्यशः।
सम्बन्धाद्गौरवात् सख्यात् प्रभुत्वेनैव केशव ॥ १२६ ॥

वैशम्पायन उवाच। अथ तामब्रवीत् कृष्णस्तस्मिन् वीरसमा-
गमे ॥ १२७ ॥

वासुदेव उवाच। रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि
भाविनि। वीभत्सुशरसंछन्नान् शोणितौघपरिप्लुतान्। निह-

तान् वल्लभान् वीक्ष्य मघवावान् वसुधातले ॥ १२८ ॥ यत् समर्थं पाण्डवानां तत् करिष्यामि मा शुच। सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ॥ १२९ ॥ पतेद्यौर्हिमवान् शीर्य्येत् पृथिवी शकलीभवेत्। शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥ १३० ॥ तच्छ्रुत्वा द्रौपदी वाक्यं प्रतिवाक्यमथाच्युतात्। साचीकृतमवैक्षत् सा पाञ्चाली मध्यमं पतिम् ॥ १३१ ॥ आबभाषे महाराज द्रौपदीमर्जुनस्तदा। मा रोदीः शुभताम्राक्षि यथाह मधुसूदनः। तथा तद्भविता देवि नान्यथा वरवर्णिनि ॥ १३२॥

धृष्टद्युम्न उवाच। अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम्। दुर्योधनं भीमसेनः कर्णं हन्ता धनञ्जयः ॥ १३३ ॥ रामकृष्णौ व्यपाश्रित्य अजेयाः स्म रणे स्वसः। अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ १३४ ॥

वैशम्पायन उवाच। इत्युक्तेऽभिमुखा वीरा वासुदेवमुपस्थिताः। तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् ॥ १३५ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्रौपद्याश्वासने द्वादशोऽध्यायः ॥ १२ ॥

---

वासुदेव उवाच। नैतत् कृच्छ्रमनुप्राप्तो भवान् स्याद्वसुधाधिप। यद्यहं द्वारकायां स्यां राजन् सन्निहितः पुरा ॥ १ ॥ आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः। आम्बिकेयेन दुर्द्धर्षं राज्ञा दुर्य्योधनेन च ॥ २ ॥ वारयेयमहं द्यूतं बहून् दोषान् प्रदर्शयन्। भीष्मद्रोणौ समानाय्य कृपं वाह्लीकमेव च ॥ ३ ॥ वैचित्रवीर्य्यं राजानमलं द्यूतेन कौरव। पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो ॥ ४ ॥ तत्राचक्षमहं दोषान् यैर्भवान् व्यतिरोपितः। वीरसेनसुतो यैस्तु राज्यात् प्रभ्रंशितः पुरा ॥५॥

अतर्कितविनाशश्च दैवेनेव विशाम्पते। सातत्यञ्च प्रसङ्गस्य वर्णा-
येयं यथातथम्॥ ६॥ स्त्रियोऽक्षा मृगया पानमेतत् कामसमु-
त्थितम्। दुःखं चतुष्टयं प्रोक्तं यैर्नरो भ्रश्यते श्रियः॥ ७॥ तत्र
सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः। विशेषतश्च वक्तव्यं द्यूते
पश्यन्ति तद्विदः॥ ८॥ एकाह्नाद्द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च।
अभुक्तनाशश्चार्थानां वाक्पारुष्यञ्च केवलम्॥ ९॥ एतच्चान्यच्च
कौरव्य प्रसङ्गिकटुकोदयम्। द्यूते ब्रूयां महाबाहो समासाद्या-
म्बिकासुतम्॥ १०॥ एवमुक्तो यदि मया गृह्णीयाद्वचनं मम।
अनामयं स्याद्धर्मश्च कुरूणां कुरुवर्द्धन॥ ११॥ न चेत् स मम
राजेन्द्र गृह्णीयान्मधुरं वचः। पथ्यञ्च भरतश्रेष्ठ निगृह्णीयां
बलेन तम्॥ १२॥ अथैनमपनीतेन सुहृदो नाम दुर्हृदः।
सभासदोऽनुवर्त्तेरंस्तांश्च हन्यां दुरोदरान्॥ १३॥ असान्निध्यन्तु
कौरव्य ममानर्त्तेष्वभूत्तदा। येनेदं व्यसनं प्राप्ता भवन्तो द्यूत-
कारितम्॥ १४॥ सोऽहमेत्य कुरुश्रेष्ठ [illegible] पाण्डुनन्दन।
अश्रौषं त्वां व्यसनिनं युयुधानाद्यथायथम्॥ १५॥ श्रुत्वैव चाहं
राजेन्द्र परमोद्विग्नमानसः। तूर्णमभ्यागतोऽस्मि त्वां द्रष्टुकामो
विशाम्पते॥१६॥ अहो कृच्छ्रमनुप्राप्ताः सर्वे स्म भरतर्षभ। योऽहं
त्वां व्यसने मग्नं पश्यामि सह सोदरैः॥ १७॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि वासुदेववाक्ये
त्रयोदशोऽध्यायः॥ १३॥

---

युधिष्ठिर उवाच। असान्निध्यं कथं कृष्ण तवासीद्वृष्णि-
नन्दन। क्व चासीद्विप्रवासस्ते किञ्चाकार्षीः प्रवासतः॥ १॥

कृष्ण उवाच। शाल्वस्य नगरं सौभं गतोऽहं भरतर्षभ।
निहन्तुं कौरवश्रेष्ठ तत्र मे शृणु कारणम्॥ २॥ महातेजा

महाबाहुर्यः स राजा महायशाः । दमघोषात्मजो वीरः शिशु-
पालो मया हतः ॥ ३ ॥ यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां
प्रति । स रोषवशमापन्नो नामृष्यत दुरात्मवान् ॥ ४ ॥ श्रुत्वा तं
निहतं शाल्वस्तीव्ररोषसमन्वितः । उपायाद्द्वारकां शून्यामिहस्थे
मयि भारत ॥ ५ ॥ स तत्र योधितो राजन् कुमारैर्वृष्णिपुङ्गवैः ।
आगतः कामगं सौभमारुह्यैव नृशंसवत् ॥ ६ ॥ ततो वृष्णि-
प्रवीरांस्तान् बालान् हत्वा बहूंस्तदा । पुरोद्यानानि सर्वाणि
भेदयामास दुर्मतिः ॥ ७ ॥ उक्तवांश्च महाबाहो क्वासौ वृष्णि-
कुलाधमः । वासुदेवः स मन्दात्मा वसुदेवसुतो गतः ॥ ८ ॥ तस्य
युद्धार्थिनो दर्पं युद्धे नाशयितास्म्यहम् । आनर्त्ताः सत्यमाख्यात
तत्र गन्तास्मि यत्र सः ॥ ९ ॥ तं हत्वा विनिवर्त्तिष्ये कंसकेशि-
निसूदनम् । अहत्वा न निवर्त्तिष्ये सत्येनायुधमालभे ॥ १० ॥
क्वासौ क्वासाविति पुनस्तत्र तत्र प्रधावति । मया किल रणे
योद्धुं कांक्षमाणः स सौभराट् ॥ ११ ॥ अद्य तं पापकर्म्माणं
क्षुद्रं विश्वासघातिनम् । शिशुपालवधामर्षाद्गमयिष्ये यमक्षयम्
॥ १२ ॥ मम पापस्वभावेन भ्राता येन निपातितः । शिशुपालो
महीपालस्तं वधिष्ये महीतले ॥ १३ ॥ भ्राता बालश्च राजा च
न च संग्राममूर्द्धनि । प्रमत्तश्च हतो वीरस्तं हनिष्ये जनार्दनम्
॥ १४ ॥ एवमादि महाराज विलप्य दिवमास्थितः । कामगेन
स सौभेन क्षिप्त्वा मां कुरुनन्दन ॥ १५ ॥ तमश्रौषमहं गत्वा यथा-
वृत्तः स दुर्मतिः । मयि कौरव्य दुष्टात्मा मार्त्तिकावतको नृपः
॥ १६ ॥ ततोऽहमपि कौरव्य रोषव्याकुलमानसः । निश्चित्य
मनसा राजन् वधायास्य मनो दधे ॥ १७ ॥ आनर्त्तेषु विमर्द्दञ्च
क्षेपञ्चात्मनि कौरव । प्रवृद्धमवलेपञ्च तस्य दुष्कृतकर्म्मणः ॥ १८ ॥
ततः सौभवधायाहं प्रतस्थे पृथिवीपते । स मया सागरावर्त्ते
दृष्ट आसीत् परीप्सता ॥ १९ ॥ ततः प्रध्माप्य जलजं पाञ्चजन्य

महं नृप। आहूय शाल्वं समरे युद्धाय समवस्थितः ॥ २० ॥ तस्त्रासीत् महद्युद्धं तत्र मे दानवैः सह। वशीभूताश्च मे सर्व्वे भूतले च निपातिताः ॥ २१ ॥ एतत् कार्य्यं महावाहो येनाहं नागमं तदा। श्रुत्वैव हास्तिनपुरं द्यूतञ्चाविनयोत्थितम्। द्रुतमागतवान् युष्मान् द्रष्टुकामः सुदुःखितान् ॥ २२ ॥

इति आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

युधिष्ठिर उवाच। वासुदेव महावाहो विस्तरेण महामते। सौभस्य वधमाचक्ष्व न हि तृप्यामि कथ्यतः ॥ १ ॥

वासुदेव उवाच। हतं श्रुत्वा महावाहो मया श्रौतश्रवं नृप। उपायाद्भरतश्रेष्ठ शाल्वो द्वारवतीं पुरीम् ॥ २ ॥ अरुन्धत्तां सुदुष्टात्मा सर्व्वतः पाण्डुनन्दन। शाल्वो वैहायसञ्चापि तत् पुरं व्यूह्य विष्ठितः ॥ ३ ॥ तत्रस्थोऽथ महीपालो योधयामास तां पुरीम्। अभिसारेण सर्व्वेण तत्र युद्धमवर्त्तत ॥ ४ ॥ पुरी समन्ताद्विहिता सपताका सतोरणा। सचक्रा सहुड़ा चैव सयन्त्रखनका तथा ॥ ५ ॥ सोपतल्पप्रतोलीका साट्टाट्टालकगोपुरा। सचक्रग्रहणी चैव सोल्काऽलातावपोथिका ॥ ६ ॥ सोष्ट्रिका भरतश्रेष्ठ सभेरीपनवानका। सतोमराङ्कुशा राजन् सशतघ्नीकलाङ्गला ॥ ७ ॥ सभुशुण्ड्यश्मगुड़का सायुधा सपरश्वधा। लोहचर्म्मवती चापि साग्निः सगुड़शृङ्गिका ॥ ८ ॥ शास्त्रदृष्टेन विधिना संयुक्ता भरतर्षभ। रथैरनेकैर्व्विविधैर्गदशाम्बोद्धवादिभिः ॥ ९ ॥ पुरुषैः कुरुशार्दूल समर्थैः प्रतिवारणे। अतिख्यातकुलैर्वीरैर्दृष्टवीर्य्यैश्च संयुगे ॥ १० ॥ मध्यमेन च गुल्मेन रक्षिभिः सा सुरक्षिता। उत्क्षिप्तगुल्मैश्च तथा हयैश्च सपताकिभिः ॥ ११ ॥

अघोषितञ्च नगरे न पातव्या सुरेति वै । प्रमादं परिरक्षद्भिः
रुग्रसेनोद्धवादिभिः ॥ १२ ॥ प्रमत्तेष्वभिघातं हि कुर्य्याच्छाल्वो
नराधिपः । इति कृत्वा प्रमत्तास्ते सर्व्वे वृष्ण्यन्धकाः स्थिताः ॥ १३ ॥
आनर्त्ताश्च तथा सर्व्वे नटनर्त्तकगायनाः । बहिर्निर्व्वासिताः क्षिप्रं
रक्षद्भिर्वित्तसञ्चयम् ॥ १४ ॥ संक्रमा भेदिताः सर्व्वे नावश्च प्रति-
षेधिताः । परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः ॥ १५ ॥
उदपानाः कुरुश्रेष्ठ तथैवाप्यम्बरीषकाः । समन्तात् क्रोशमात्रञ्च
कारिता विषमा च भूः ॥ १६ ॥ प्रकृत्या विषमं दुर्गं प्रकृत्या च
सुरक्षितम् । प्रकृत्या चायुधोपेतं विशेषेण तदानघ ॥ १७ ॥
सुरक्षितं सुगुप्तञ्च सर्व्वायुधसमन्वितम् । तत् पुरं भरतश्रेष्ठ
यथेन्द्रभवनं तथा ॥ १८ ॥ न चामुद्रोऽभिनिर्य्याति न चामुद्रः
प्रवेश्यते । वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे ॥ १९ ॥ अनु-
रथ्यासु सर्व्वासु चत्वरेषु च कौरव । बलं बभूव राजेन्द्र प्रभूत-
गजवाजिमत् ॥ २० ॥ दत्तवेतनभक्तञ्च दत्तायुधपरिच्छदम् ।
कृतोपधानञ्च तदा बलमासीन्महाभुज ॥ २१ ॥ न कुप्यवेतनी
कश्चिन्न चातिक्रान्तवेतनी । नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः
॥ २२ ॥ एवं सुविहिता राजन् द्वारका भूरिदक्षिणा । आहु-
केन सुगुप्ता च राज्ञा राजीवलोचन ॥ २३ ॥

इति आरण्यपर्व्वणि अर्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने
पञ्चदशोऽध्यायः ॥ १५ ॥

---

कृष्ण उवाच । तां तूपयातो राजेन्द्र शाल्वः सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपविवेश ह ॥ १ ॥ समे निविष्टा सा सेना
प्रभूतसलिलाशये । चतुरङ्गबलोपेता शाल्वराजाभिपालिता ॥ २ ॥
वर्ज्जयित्वा श्मशानानि देवतायतनानि च । वल्मीकांश्चैत्यवृक्षांश्च

तन्निविष्टमभूद्दलम् ॥ ३ ॥ अनीकानां विभागेन पन्थानः संवृता भवन् । प्रावणानि च नैवासन् शाल्वस्य शिविरे नृप ॥ ४ ॥ सर्वायुधसमोपेतं सर्वशस्त्रविशारदम् । रथनागाश्वकलिलं पदातिध्वजसंकुलम् ॥५॥ तुष्टपुष्टबलोपेतं वीरलक्षणलक्षितम् । विचित्रध्वजसन्नाहं विचित्ररथकार्मुकम् ॥ ६ ॥ सन्निवेश्य च कौरव्य द्वारकायां नरर्षभ । अभिसारयामास तदा वेगेन पतगेन्द्रवत् ॥ ७ ॥ तदापतन्तं संदृश्य बलं शाल्वपतेस्तदा । निर्य्याय योधयामासुः कुमारा वृष्णिनन्दनाः ॥ ८ ॥ असहन्तोऽभियानं तत् शाल्वराजस्य कौरव । चारुदेष्णश्च साम्बश्च प्रद्युम्नश्च महारथः ॥ ९ ॥ ते रथैर्द्दंशिताः सर्वे विचित्राभरणध्वजाः । संसक्ताः शाल्वराजस्य बहुभिर्योधपुङ्गवैः ॥ १० ॥ गृहीत्वा कार्मुकं साम्बः शाल्वस्य सचिवं रणे । योधयामास संहृष्टः क्षेमवृद्धिं चमूपतिम् ॥ ११ ॥ तस्य बाणमयं वर्षं जाम्बवत्याः सुतो महत् । मुमोच भरतश्रेष्ठ यथा वर्षं सहस्रदृक् ॥ १२ ॥ तदाणवर्षं तुमुलं विषेहे स चमूपतिः । क्षेमवृद्धिर्महाराज हिमवानिव निश्चलः ॥ १३ ॥ ततः साम्बाय राजेन्द्र क्षेमवृद्धिरपि स्वयम् । मुमोच मायाविहितं शरजालं महत्तरम् ॥ १४ ॥ ततो मायामयं जालं माययैव विदार्य्य सः । साम्बः शरसहस्रेण रथमस्याभ्यवर्षत ॥१५॥ ततः स विद्धः साम्बेन क्षेमवृद्धिश्चमूपतिः । अपायाज्जवनैरश्वैः साम्बबाणप्रपीड़ितः ॥ १६ ॥ तस्मिन् विप्रद्रुते क्रूरे शाल्वस्याथ चमूपतौ । वेगवान्नाम दैतेयः सुतं मेऽभ्यद्रवद्बली ॥ १७ ॥ अभिपन्नस्तु राजेन्द्र साम्बो वृष्णिकुलोद्वहः । वेगं वेगवतो राजंस्तस्थौ वीरो विधारयन् ॥ १८ ॥ स वेगवति कौन्तेय साम्बो वेगवतीं गदाम् । चिक्षेप तरसा वीरो व्याविध्य सत्यविक्रमः ॥ १९ ॥ तया त्वभिहतो राजन् वेगवान् न्यपतद्भुवि । वातरुग्ण इव क्षुण्णो जीर्णमूलो वनस्पतिः ॥ २० ॥ तस्मिन् विनिहते वीरे

गदाधुने महासुवे । प्रविश्य महतीं सेनां योधयामास मे सुतः ॥ २१ ॥ चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः । महारथः समाज्ञातो महाराज महाधनुः ॥ २२ ॥ ततः सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः । वृत्रवासवयो राजन् यथा पूर्वं तथाभवत् ॥ २३ ॥ अन्योऽन्यस्याभिसंक्रुद्धावन्योऽन्यं जघ्नतुः शरैः । विनदन्तौ महारावान् सिंहाविव महाबलौ ॥ २४ ॥ रौक्मिणेयस्ततो वाणमग्न्यर्कोपमवर्च्चसम् । अभिमन्त्र्य महास्त्रेण सन्दधे शत्रुनाशनम् ॥ २५ ॥ तं विविन्ध्याय सक्रोधः समाहूय महारथः । चिक्षेप मे सुतो राजन् स गतासुरथापतत् ॥ २६ ॥ विविन्ध्यञ्च निहतं दृष्ट्वा ताञ्च विक्षोभितां चमूम् । कामगेन स सौभेन शाल्वः पुनरुपागमत् ॥ २७ ॥ ततो व्याकुलितं सर्वं द्वारकावासि तद्बलम् । दृष्ट्वा शाल्वं महाबाहो सौभस्थं नृपते तदा ॥ २८ ॥ ततो निर्याय कौरव्य अवस्थाप्य च तद्बलम् । आनर्त्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत् ॥ २९ ॥ सर्व्वे भवन्तस्तिष्ठन्तु सर्व्वे पश्यन्तु मां युधि । निवारयन्तं सङ्ग्राम बलात् सौभं सराजकम् ॥ ३० ॥ अयं सौभपते सेनामायसैर्भुजगैरिव । धनुर्भुजविनिर्मुक्तैर्नाशयाम्यद्य यादवाः ॥ ३१ ॥ आश्वसध्वं न भीः कार्य्या सौभराड़द्य नश्यति । मयाभिपन्नो दुष्टात्मा ससौभो विनशिष्यति ॥ ३२ ॥ एवं ब्रुवति संहृष्टे प्रद्युम्ने पाण्डुनन्दन । स्थितं तद्बलं वीर युयुधे च यथासुखम् ॥ ३३ ॥

इति आरण्यपर्व्वणि अर्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने षोड़शोऽध्यायः ॥ १६ ॥

---

वासुदेव उवाच । एवमुक्त्वा रौक्मिणेयो यादवान् भरतर्षभ । दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् ॥ १ ॥ उच्छ्रित्य मकरं

केतुं व्यात्ताननमिवान्तकम् । उत्पतद्भिरिवाकाशं तैर्हयैरन्वयात् परान् ॥ २ ॥ विक्षिपन्नाद्भुतञ्चापि धनुः श्रेष्ठं महाबलैः । तूणखड्गधरः शूरो बद्धगोधाङ्गुलित्रवान् ॥ ३ ॥ स विद्युच्छुरितञ्चापं विहरन् वै तलात्तलम् । मोहयामास दैतेयान् सर्वान् सौभनिवासिनः ॥ ४ ॥ तस्य विक्षिपतश्चापं सन्दधानस्य चासकृत् । नान्तरं ददृशे कश्चिन्निघ्नतः शात्रवान्रणे ॥ ५ ॥ मुखस्य वर्णो न विकल्पतेऽस्य चेलुश्च गात्राणि न चापि तस्य । सिंहोन्नतं चाप्यभिगर्ज्जतोऽस्य शुश्राव लोकोऽद्भुतवीर्य्यमग्र्यम ॥ ६ ॥ जलेचरः काञ्चनयष्टिसंस्थो व्यात्ताननः सर्वतिमिप्रमाथी । वित्रासयन्राजति वाहमुख्यि शाल्वस्य सेनाप्रमुखे ध्वजाग्रः ॥ ७ ॥ ततस्तूर्णं विनिष्पत्य प्रद्युम्नः शत्रुकर्षणः । शाल्वमेवाभिदुद्राव विधित्सुः कलहं नृप ॥ ८ ॥ अभियानन्तु वीरेण प्रद्युम्नेन महारणे । नामर्षयत संक्रुद्धः शाल्वः कुरुकुलोद्वह ॥ ९ ॥ स रोषमदमत्तो वै कामगादवरुह्य च । प्रद्युम्नं योधयामास शाल्वः परपुरञ्जयः ॥ १० ॥ तयोः सुतुमुलं युद्धं शाल्ववृष्णिप्रवीरयोः । समेता ददृशुर्लोका वलिवासवयोरिव ॥ ११ ॥ तस्य मायामयो वीर रथो हेमपरिष्कृतः । सपताकः सध्वजश्च सानुकर्षः स तूणवान् ॥ १२ ॥ स तं रथवरं श्रीमान् समारुह्य किल प्रभो । मुमोच वाणान् कौरव्य प्रद्युम्नाय महाबल ॥ १३ ॥ ततो वाणमयं वर्षं व्यसृजत्तरसा रणे । प्रद्युम्नो भुजवेगेन शाल्वं सम्मोहयन्निव ॥ १४ ॥ स तैरभिहतः सङ्ख्ये नामर्षयत सौभराट् । शरान्दीप्ताग्निसङ्काशान् मुमोच तनये मम ॥ १५ ॥ तानापततो वाणौघान् सच्छिच्छेद महाबलः । ततश्चान्यान् शरान् दीप्तान् प्रचिक्षेप सुते मम ॥ १६ ॥ स शाल्ववाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः । मुमोच वाणं त्वरितो मर्मभेदिनमाहवे ॥ १७ ॥ तस्य वर्म विभिद्याशु स वाणो मत्सुतेरितः । विव्याध हृदयं पत्री स मुमोह पपात च ॥ १८ ॥

तस्मिन्निपतिते वीरे शाल्वराजे विचेतसि । संप्राद्रवन् दानवेन्द्रा दारयन्तो वसुन्धराम् ॥ १९ ॥ हाहाकृतमभूत् सैन्यं शाल्वस्य पृथिवीपते । नष्टसंज्ञे निपतिते तदा सौभपतौ नृपे ॥ २० ॥ तत उत्थाय कौरव्य प्रतिलभ्य च चेतनाम् । मुमोच वाणान् सहसा प्रद्युम्नाय महाबलः ॥ २१ ॥ तैः स विद्धो महाबाहुः प्रद्युम्नः समरे स्थितः । जत्रुदेशे भृशं वीरो व्यवासीदद्रथे तदा ॥ २२ ॥ तं स विद्धा महाराज शाल्वो रुक्मिणिनन्दनम् । ननाद सिंहनादं वै नादेनापूरयन्महीम् ॥ २३ ॥ ततो मोहं समापन्ने तनये मम भारत । मुमोच वाणांस्त्वरितः पुनरन्यान् दुरासदान् ॥ २४ ॥ स तैरभिहतो वाणैर्बहुभिस्तेन मोहितः । निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ २५ ॥

इति आरण्यपर्व्वणि अर्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने सप्तदशोऽध्यायः ॥ १७ ॥

---

वासुदेव उवाच । शाल्ववाणार्द्दिते तस्मिन् प्रद्युम्ने बलिनाम्वरे । वृष्णयो भग्नसङ्कल्पा विव्यथुः पृतनागताः ॥ १ ॥ हाहाकृतमभूत् सर्व्वं वृष्ण्यन्धकबलं ततः । प्रद्युम्ने मोहिते राजन् परे च मुदिता भृशम ॥ २ ॥ तं तथा मोहितं दृष्ट्वा सारथिर्ज्जवनैर्हयैः । रणादपाहरत्तूर्णं शिक्षितो दारुकिस्तदा ॥ ३ ॥ नातिदूरापयाते तु रथे रथवरप्रणुत् । धनुर्गृहीत्वा यन्तारं लब्धसंज्ञोऽब्रवीदिदम् ॥ ४ ॥ सौते किन्ते व्यवसितं कस्माद्यासि पराङ्मुखः । नैष वृष्णिप्रवीराणामाहवे धर्म्म उच्यते ॥ ५ ॥ कच्चित् सौते न ते मोहः शाल्वं दृष्ट्वा महाहवे । विषादो वा रणं दृष्ट्वा ब्रूहि मे त्वं यथातथम् ॥ ६ ॥

सौतिरुवाच । जानार्द्दने न मे मोहो नापि मां भयमाविशत् ।

प्रतिभावस्तु ते मन्ये शाल्वं केशवनन्दन ॥ ७ ॥ सोऽपयामि शनै-
र्वीर बलवानेष पापकृत्। मोचितश्च रणे शूरो रक्ष्यः सारथिना
रथी ॥ ८ ॥ आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाप्यहम्।
रक्षितव्यो रथी नित्यमिति कृत्वापयाम्यहम् ॥ ९ ॥ एकश्चासि
महाबाहो बहवश्चापि दानवाः। न समं रौक्मिणेयाहं रणे
मत्वापयामि वै ॥ १० ॥

वासुदेव उवाच। एवं ब्रुवति सूते तु तदा मकरकेतुमान्।
उवाच सूतं कौरव्य निवर्त्तय रथं पुनः ॥ ११ ॥

प्रद्युम्न उवाच। दारुकात्मज मैवं त्वं पुनः कार्षीः कथञ्चन।
व्यपयानं रणात् सौते जीवतो मम कर्हिचित् ॥ १२ ॥ न स
वृष्णिकुले जातो यो वै त्यजति सङ्गरम्। यो वा निपतितं
हन्ति तवास्मीति च वादिनम् ॥ १३ ॥ तथा स्त्रियञ्च यो हन्ति
बालं वृद्धं तथैव च। विरथं विप्रकीर्णञ्च भग्नशस्त्रायुधं तथा
॥ १४ ॥ त्वञ्च सूतकुले जातो विनीतः सूतकर्मणि। धर्मज्ञ-
श्चासि वृष्णीनामाहवेष्वपि दारुके ॥ १५ ॥ स जानंश्चरितं
कृत्स्नं वृष्णीनां पृतनामुखे। अपयानं पुनः सौते मैवं कार्षीः
कथञ्चन ॥ १६ ॥ अपयातं हतं पृष्ठे भीतं रणपलायितम्।
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः ॥ १७ ॥ केशवस्या-
ग्रजो वापि नीलवासा मदोत्कटः। किं वक्ष्यति महाबाहुर्बल-
देवः समागतः ॥ १८ ॥ किं वक्ष्यति शिनेर्नप्ता नरसिंहो महा-
धनुः। अपयातं रणात् सूत शाम्बश्च समितिञ्जयः ॥ १९ ॥
चारुदेष्णश्च दुर्द्धर्षस्तथैव गदसारणौ। अक्रूरश्च महाबाहुः किं
मां वक्ष्यति सारथे ॥ २० ॥ शूरं सम्भावितं शान्तं नित्यं पुरुष-
मानिमम्। स्त्रियश्च वृष्णिवीराणां किं मां वक्ष्यन्ति संहताः ॥२१॥
प्रद्युम्नोऽयमुपायाति भीतस्त्यक्त्वा महाहवम्। धिगेनमिति वक्ष्यन्ति
न तु वक्ष्यन्ति साध्विति ॥ २२ ॥ धिग्वाचा परिहासोऽपि मम

वा मद्विधस्य वा । मृत्युनाभ्यधिकः सौते स त्वं मा व्यपयाः पुनः ॥ २३ ॥ भारं हि मयि संन्यस्य यातो मधुनिहा हरिः । यज्ञं भारतसिंहस्य न हि शक्योऽद्य मर्षितुम् ॥ २४ ॥ कृतवर्मा मया वीरो निर्यास्यन्नेव वारितः । शाल्वं निवारयिष्येऽहं तिष्ठ त्वमिति सूतज ॥ २५ ॥ स च सम्भावयन्मां वै निवृत्तो हृदिकात्मजः । तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथम् ॥ २६ ॥ उपयान्तं दुराधर्षं शङ्खचक्रगदाधरम् । पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि महाभुजम् ॥ २७ ॥ सात्यकिं बलदेवञ्च ये चान्येऽन्धकवृष्णयः । मया स्पर्द्धन्ति सततं किं नु वक्ष्यामि तानहम् ॥ २८ ॥ त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः । त्वयापनीतो विवशो न जीवेयं कथञ्चन ॥ २९ ॥ सन्निवर्त्त रथेनाशु पुनर्दारुकनन्दन । न चैतदेवं कर्त्तव्यमथापत्सु कथञ्चन ॥ ३० ॥ न जीवितमहं सौते बहु मन्ये कथञ्चन । अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ॥ ३१ ॥ कदाच सूतपुत्र त्वं जानीषे मां भयार्द्दितम् । अपयातं रणं हित्वा यथा कापुरुषं तथा ॥ ३२ ॥ न युक्तं भवता त्यक्तुं सङ्ग्रामं दारुकात्मज । मयि युद्धार्थिनि भृशं स त्वं याहि यतो रणम् ॥ ३३ ॥

इति आरण्यपर्वणि अर्ज्जुनाभिगमनपर्वणि सौभवधोपाख्याने अष्टादशोऽध्यायः ॥ १८ ॥

---

वासुदेव उवाच । एवमुक्तस्तु कौन्तेय सूतपुत्रस्ततोऽब्रवीत् । प्रद्युम्नं बलिनां श्रेष्ठं मधुरं श्लक्ष्णमञ्जसा ॥ १ ॥ न मे भयं रौक्मिणेय सङ्ग्रामे यच्छतो हयान् । युद्धज्ञश्चास्मि वृष्णीनां नात्र किञ्चिदतोऽन्यथा ॥ २ ॥ आयुष्मन्नुपदेशस्तु सारथ्ये वर्त्ततां स्मृतः । सर्वार्थेषु रथी रक्ष्यस्त्वञ्चापि भृशपीड़ितः ॥ ३ ॥ त्वं हि

शाल्वप्रयुक्तेन शरेणाभिहतो भृशम्। कश्मलाभिहतो वीर ततोऽहमपयातवान्॥४॥ स त्वं शालमुत्थाप्य लब्धसंज्ञो यदृच्छया। पश्य मे हयसंयाने शिक्षां केशवनन्दन॥५॥ दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः। वीतभीः प्रविशाम्येतां शाल्वस्य प्रथितां चमूम्॥६॥

वासुदेव उवाच। एवमुक्त्वा ततो वीर हयान् सञ्चोद्य सङ्गरे। रश्मिभिस्तु समुद्यम्य जवेनाभ्यपतत्तदा॥७॥ मण्डलानि विचित्राणि यमकानीतराणि च। सव्यानि च विचित्राणि दक्षिणानि च सर्वशः॥८॥ प्रतोदेनाहता राजन्रश्मिभिश्च समुद्यताः। उत्पतन्त इवाकाशे व्यचरंस्ते हयोत्तमाः॥९॥ ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिम्। दह्यमाना इव तदा नास्पृशंश्चरणैर्महीम्॥१०॥ सोऽपसव्यां चमूं तस्य शाल्वस्य भरतर्षभ। चकार नातियत्नेन तदद्भुतमिवाभवत्॥११॥ अमृष्यमाणोऽपसव्यं प्रद्युम्नेन स सौभराट्। यन्तारमस्य सहसा त्रिभिर्बाणैः समार्दयत्॥१२॥ दारुकस्य सुतस्तत्र बाणवेगमचिन्तयन्। भूय एव महाबाहो प्रययावपसव्यतः॥१३॥ ततो बाणान् बहुविधान् पुनरेव स सौभराट्। मुमोच तनये वीर मम रुक्मिणिनन्दने॥१४॥ तान् प्राप्तान् शितैर्बाणैश्चिच्छेद परवीरहा। रौक्मिणेयः स्मितं कृत्वा दर्शयन् हस्तलाघवम्॥१५॥ छिन्नान् दृष्ट्वा तु तान् बाणान् प्रद्युम्नेन स सौभराट्। आसुरीं दारुणीं मायामास्थाय व्यसृजत् शरान्॥१६॥ प्रयुज्यमानमाज्ञाय दैतेयास्त्रं महाबलम्। ब्रह्मास्त्रेणान्तरा छित्त्वा मुमोचान्यान् पतत्रिणः॥१७॥ ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः। शिरस्युरसि वक्त्रे च स मुमोह पपात च॥१८॥ तस्मिन्निपतिते क्षुद्रे शाल्वे बाणप्रपीड़िते। रौक्मिणेयोऽपरं बाणं सन्दधे शत्रुनाशनम्॥१९॥ तमर्चितं सर्वदशार्हपूगै-

शाश्वीविषाग्निज्वलनप्रकाशम् । दृष्ट्वा शरं व्योमभिनीयमानं बभूव हाहाकृतमन्तरीक्षम् ॥ २० ॥ ततो देवगणाः सर्व्वे सेन्द्राः सह-धनेश्वराः । नारदं प्रेषयामासुः श्वसनञ्च मनोजवम् ॥ २१ ॥ तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम् । नैष वध्यस्त्वया वीर शाल्वराजः कथञ्चन ॥ २२ ॥ संहरस्व पुनर्बाणमवध्योऽयं त्वया रणे । एतस्य हि शरस्याजौ नावध्योऽस्ति पुमान् क्वचित् ॥ २३ ॥ मृत्युरस्य महाबाहो रणे देवकिनन्दनः । कृष्णः सङ्कल्पितो धात्रा तन्न मिथ्या भवेदिति ॥ २४ ॥ ततः परमसंहृष्टः प्रद्युम्नः शरमुत्तमम् । सञ्जहार धनुःश्रेष्ठात्तूणे चैव न्यवेशयत् ॥ २५ ॥ तत उत्थाय राजेन्द्र शाल्वः परमदुर्मनाः । व्यापायात् सबलस्तूर्णं प्रद्युम्नशरपीड़ितः ॥ २६ ॥ स द्वारकां परित्यज्य क्रूरो वृष्णिभिरर्द्दितः । सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा ॥ २७ ॥

इति आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने ऊनविंशोऽध्यायः ॥ १९ ॥

---

वासुदेव उवाच । आनर्त्तनगरं मुक्तं ततोऽहमगमं तदा । महाक्रतौ राजसूये निवृत्ते नृपते तव ॥ १ ॥ अपश्यं द्वारकाञ्चाहं महाराज हतत्विषम् । निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् ॥ २ ॥ अनभिज्ञेयरूपाणि द्वारकोपवनानि च । दृष्ट्वा शङ्कोपपन्नोऽहमपृच्छं हृदिकात्मजम् ॥ ३ ॥ अस्वस्थनरनारीक-मिदं वृष्णिकुलं भृशम् । किमिदं नरशार्दूल श्रोतुमिच्छामि तत्त्वतः ॥ ४ ॥ एवमुक्तः स तु मया विस्तरेणेदमब्रवीत् । रोधं मोक्षञ्च शाल्वेन हार्द्दिक्यो राजसत्तम ॥ ५ ॥ ततोऽहं भरतश्रेष्ठ श्रुत्वा सर्व्वमशेषतः । विनाशे शाल्वराजस्य तदैवाकरवं मतिम्

॥ ६ ॥ ततोऽहं भरतश्रेष्ठ समाख्याय पुरे जनम् । राजानमाहु-
कञ्चैव तथैवानकदुन्दुभिम् ॥ ७ ॥ सर्वान् वृष्णिप्रवीरांश्च हर्षय-
न्नब्रुवं तदा । अप्रमादः सदा कार्य्यो नगरे यादवर्षभाः ॥ ८ ॥
शाल्वराजविनाशाय प्रयातं मां निबोधत । नाहत्वा तं निव-
र्त्तिष्ये पुरीं द्वारवतीं प्रति ॥ ९ ॥ सशाल्वं सौभनगरं हत्वा
द्रष्टास्मि वः पुनः । त्रिःसमा हन्यतामेषा दुन्दुभी शत्रुभीषणा
॥ १० ॥ ते मयाश्वासिता वीरा यथावद्भरतर्षभ । सर्वे माम-
ब्रुवन् हृष्टाः प्रयाहि जहि शात्रवान् ॥११॥ तैः प्रहृष्टात्मभिर्वीरै-
राशीर्भिरभिनन्दितः । वाचयित्वा द्विजश्रेष्ठान् प्रणम्य शिरसा
भवम् ॥ १२ ॥ शैब्यसुग्रीवयुक्तेन रथेननादयन् दिशः । प्रध्माय
शङ्खप्रवरं पाञ्चजन्यमहं नृप ॥ १३ ॥ प्रयातोऽस्मि नरव्याघ्र बलेन
महता वृतः । क्लृप्तेन चतुरङ्गेण यत्तेन जितकाशिना ॥ १४ ॥
समतीत्य बहून् देशान् गिरींश्च बहुपादपान् । सरांसि सरित-
श्चैव मार्त्तिकावतमासदम् ॥ १५ ॥ तत्राश्रौषं नरव्याघ्र शाल्वं
सागरमन्तिकात् । प्रयान्तं सौभमास्थाय तमहं पृष्ठतोऽन्वियाम्
॥ १६ ॥ ततः सागरमासाद्य कुक्षौ तस्य महोर्म्मिणः । समुद्र-
नाभ्यां शाल्वोऽभूत् सौभमास्थाय शत्रुहन् ॥ १७ ॥ स समालोक्य
दूरान्मां स्मयन्निव युधिष्ठिर । आह्वयामास दुष्टात्मा युद्धायैव
मुहुर्मुहुः ॥ १८ ॥ तस्य शार्ङ्गविनिर्मुक्तैर्बहुभिर्मर्म्मभेदिभिः । पुरं
नासाद्यत शरैस्ततो मां रोष आविशत् ॥ १९ ॥ स चापि पाप-
प्रकृतिर्दैतेयापसदो नृप । मय्यवर्षत दुर्द्धर्षः शरधाराः सहस्रशः
॥ २० ॥ सैनिकान्मम सूतञ्च हयांश्च समवाकिरत् । अचिन्त-
यन्तस्तु शरान् वयं युध्याम भारत ॥ २१ ॥ ततः शतसहस्राणि
शराणां नतपर्व्वणाम् । चिक्षिपुः समरे वीरा मयि शाल्वपदा-
नुगाः ॥ २२ ॥ ते हयांश्च रथञ्चैव तदा दारुकमेव च । छादया-
मासुरसुरास्तैर्बाणैर्मर्म्मभेदिभिः ॥ २३ ॥ न हया न रथो वीर-

न यन्ता मम दारुकः । अदृश्यन्त शरैश्छिन्नास्तथाहं सैनिकाश्च
मे ॥ २४ ॥ ततोऽहमपि कौन्तेय शराणामयुतान् बहून् । आम-
न्त्रितानां धनुषा दिव्येन विधिनाक्षिपम् ॥ २५ ॥ न तत्र
विषयस्त्वासीन्मम सैन्यस्य भारत । खे विषक्तं हि तत् सौभं
क्रोशमात्र इवाभवत् ॥ २६ ॥ ततस्ते प्रेक्षकाः सर्व्वे रङ्गवाट इव
स्थिताः । हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः ॥ २७ ॥ मत्-
कराग्रविनिर्मुक्ता दानवानां शरास्तथा । अङ्गेषु रुचिरापाङ्गा
विविशुः शलभा इव ॥ २८ ॥ ततो हलहलाशब्दः सौभमध्ये
व्यवर्द्धत । वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे ॥ २९ ॥
ते निकृत्तभुजस्कन्धाः कवन्धाकृतिदर्शनाः । नदन्तो भैरवान्नादा-
न्निपतन्ति स्म दानवाः ॥ ३० ॥ पतितास्तेऽपि भक्ष्यन्ते समुद्राम्भो-
निवासिभिः । ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभम् ॥ ३१ ॥
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयम् । तान् दृष्ट्वा पतितांस्तत्र
शाल्वः सौभपतिस्ततः ॥ ३२ ॥ मायायुद्धेन महता योधयामास
मां युधि । ततो गदा हलाः प्रासाः शूलशक्तिपरश्वधाः ॥ ३३ ॥
अयसः शक्तिकुलिशपाशर्ष्टिकनपाः शराः । पट्टिशाश्च भुशुण्ड्यश्च
प्रापतन्ननिशं मयि ॥ ३४ ॥ तामहं माययैवाशु प्रतिगृह्य व्यना-
शयम् । तस्यां हतायां मायायां गिरिशृङ्गैरयोधयत् ॥ ३५ ॥
ततोऽभवत्तम इव प्रकाश इव चाभवत् । दुर्द्दिनं सुदिनञ्चैव
शीतमुष्णञ्च भारत ॥ ३६ ॥ अङ्गारपांशुवर्षञ्च शस्त्रवर्षञ्च भारत ।
एवं मायां प्रकुर्व्वाणो योधयामास मां रिपुः ॥ ३७ ॥ विज्ञाय
तदहं सर्व्वं माययैव व्यनाशयम् । यथाकालन्तु युद्धेन व्यधमं
सर्व्वतः शरैः ॥ ३८ ॥ ततो व्योम महाराज शतसूर्य्यमिवाभवत् ।
शतचन्द्रञ्च कौन्तेय सहस्रायुततारकम् ॥ ३९ ॥ ततो नाज्ञायत
तदा दिवारात्रं तथा दिशः । ततोऽहं मोहमापन्नः प्रज्ञास्त्रं
समयोजयम् ॥ ४० ॥ ततस्तदस्त्रं कौन्तेय धूतं तूलमिवानिलैः ।

तथा तदभवद्युद्धं तुमुलं लोमहर्षणम्। लब्धालोकस्तु राजेन्द्र पुनः शाल्वमयोधयम् ॥ ४१ ॥

इति आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने विंशोऽध्यायः ॥ २० ॥

---

वासुदेव उवाच। एवं स पुरुषव्याघ्रः शाल्वराजो महारिपुः। युध्यमानो मया संख्ये वियदभ्यागमत् पुनः ॥ १ ॥ ततः शतघ्नीश्च महागदाश्च दीप्तांश्च शूलान्मुषलानसींश्च। चिक्षेप रोषान्मयि मन्दबुद्धिः शाल्वो महाराज जयाभिकाङ्क्षी ॥ २ ॥ तानाशुगैरापततोऽहमाशु निवार्य्य हन्तुं खगमान् ख एव। द्विधा त्रिधा चाच्छिनमाशु मुक्तांस्ततोऽन्तरीक्षे निनदो बभूव ॥ ३ ॥ ततः शतसहस्रेण शराणां नतपर्व्वणाम्। दारुकं वाजिनश्चैव रथञ्च समवाकिरत् ॥ ४ ॥ ततो मामब्रवीद्वीर दारुको विह्वलन्निव। स्थातव्यमिति तिष्ठामि शाल्वबाणप्रपीड़ितः ॥ ५ ॥ अवस्थातुं न शक्नोमि अङ्गं मे व्यवसीदति। इति तस्य निशम्याहं सारथेः करुणं वचः ॥ ६ ॥ अवेक्षमाणो यन्तारमपश्यं शरपीड़ितम्। न तस्योरसि नो मूर्द्ध्नि न काये न भुजद्वये ॥ ७ ॥ अन्तरं पाण्डवश्रेष्ठ पश्याम्यनिचितं शरैः। स तु बाणवरोत्पीड़ाद्विस्रवत्यसृगुल्बणम् ॥ ८ ॥ अतिवृष्टे यथा मेघे गिरिर्गैरिकधातुमान्। अभीषुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे ॥ ९ ॥ अस्तम्भयं महाबाहो शाल्वबाणप्रपीड़ितम्। अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत् ॥ १० ॥ त्वरितो रथमारोप्य सौहृदादिव भारत। आहुकस्य वचो वीर तस्यैव परिचारकः ॥ ११ ॥ विषण्णः सन्नकण्ठेन तन्निबोध युधिष्ठिर। द्वारकाधिपतिर्वीर आह त्वामाहुको वचः ॥ १२ ॥ केशवेह विजानीष्व यत्त्वां पितृसखोऽब्रवीत्। उप-

धायाय शाल्वेन द्वारकां वृष्णिनन्दन ॥ १३ ॥ विषक्ते त्वयि दुर्द्धर्षः हतः शूरसुतो बलात्। तदलं साधुयुद्धेन निवर्त्तस्व जनार्द्दन ॥ १४ ॥ द्वारकामेव रक्षस्व कार्य्यमेतन्महत्तव। इत्यहं तस्य वचनं श्रुत्वा परमदुर्मनाः ॥ १५ ॥ निश्चयं नाधिगच्छामि कर्त्तव्यस्येतरस्य वा। सात्यकिं बलदेवञ्च प्रद्युम्नञ्च महारथम् ॥ १६ ॥ जगर्हे मनसा वीर तच्छ्रुत्वा महदप्रियम्। अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन ॥ १७ ॥ तेषु रक्षां समाधाय प्रयातः सौभपातने। बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा ॥ १८ ॥ सात्यकीरौक्मिणेयश्च चारुदेष्णश्च वीर्य्यवान्। शाम्ब-प्रभृतयश्चैवेत्यहमासं सुदुर्मनाः ॥ १९ ॥ एतेषु हि नरव्याघ्र जीवत्सु न कथञ्चन। शक्यः शूरसुतो हन्तुमपि वज्रभृता स्वयम् ॥ २० ॥ हतः शूरसुतो व्यक्तं व्यक्तञ्चैते परासवः। बलदेव-मुखाः सर्व्वे इति मे निश्चिता मतिः ॥ २१ ॥ सोऽहं सर्व्वविनाशं तं चिन्तयानो मुहुर्मुहुः। सुविक्लवो महाराज पुनः शाल्वमयो-धयम् ॥ २२ ॥ ततोऽपश्यं महाराज प्रपतन्तमहं तदा। सौभात् शूरसुतं वीर ततो मां मोह आविशत् ॥ २३ ॥ तस्य रूपं प्रप-ततः पितुर्मम नराधिप। ययातेः क्षीणपुण्यस्य स्वर्गादिव मही-तलम् ॥ २४ ॥ विशीर्णगलितोष्णीषः प्रकीर्णाम्बरमूर्द्धजः। प्रपतन् दृश्यते ह स्म क्षीणपुण्य इव ग्रहः ॥ २५ ॥ ततः शार्ङ्गं धनुः श्रेष्ठं करात् प्रपतितं मम। मोहापन्नश्च कौन्तेय रथो-पस्थ उपाविशम् ॥ २६ ॥ ततो हाहाकृतं सर्व्वं सैन्यं मे गत-चेतनम्। मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत ॥ २७ ॥ प्रसार्य्य बाहू पततः प्रसार्य्य चरणावपि। रूपं पितुर्मे विबभौ शकुनेः पततो यथा ॥ २८ ॥ तं पतन्तं महाबाहो शूलपट्टिश-पाणयः। अभिघ्नन्तो भृशं वीर मम चेतो ह्यकम्पयन् ॥ २९ ॥ ततो मुहूर्त्तात् प्रतिलभ्य संज्ञामहं तदा वीर महाविमर्द्दे। न

तत्र सौभं न रिपुञ्च शाल्वं पश्यामि वृद्धं पितरं न चापि ॥ ३० ॥ ततो ममासीन्मनसि कार्यमिति निश्चितम् । प्रक्रुद्धोऽस्मि ततो भूयः शतशोऽवाकिरन् शरान् ॥ ३१ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि सौभवधोपाख्याने एकविंशोऽध्यायः ॥ २१ ॥

---

वासुदेव उवाच । ततोऽहं भरतश्रेष्ठ प्रगृह्य रुचिरं धनुः । शरैरपातयं सौभात् शिरांसि विबुधद्विषाम् ॥ १ ॥ शरांश्चाशीविषाकारानूर्द्ध्वगांस्तिग्मतेजसः । प्रैषयं शाल्वराजाय शार्ङ्गमुक्तान् सुवाससः ॥ २ ॥ ततो नादृश्यत तदा सौभं कुरुकुलोद्वह । अन्तर्हितं माययाभूत्ततोऽहं विस्मितोऽभवम् ॥ ३ ॥ अथ दानवसङ्घास्ते विकृताननमूर्द्धजाः । उदक्रोशन्महाराज धिष्ठिते मयि भारत ॥ ४ ॥ ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महारणे । अयोजयं तद्वधाय ततः शब्द उपारमत् ॥ ५ ॥ हतास्ते दानवाः सर्वे यैः स शब्द उदीरितः । शरैरादित्यसङ्काशैर्ज्वलितैः शब्दसाधनैः ॥ ६ ॥ तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत् । शब्दोऽपरो महाराज तत्रापि प्राहरं शरैः ॥ ७ ॥ एवं दशदिशः सर्वास्तिर्य्यगूर्द्ध्वञ्च भारत । नादयामासुरसुरास्ते चापि निहता मया ॥ ८ ॥ ततः प्राग्ज्योतिषं गत्वा पुनरेव व्यदृश्यत । सौभं कामगमं वीरो मोहयन्मम चक्षुषी ॥ ९ ॥ ततो लोकान्तकरणो दानवो दारुणाकृतिः । शिलावर्षेण महता सहसा मां समावृणोत् ॥ १० ॥ सोऽहं पर्वतवर्षेण वध्यमानः पुनः पुनः । वल्मीक इव राजेन्द्र पर्वतोपचितोऽभवम् ॥ ११ ॥ ततोऽहं पर्वतचितः सहयः सहसारथिः । अप्रख्यातिमियां राजन् सर्वतः पर्वतैश्चितः ॥ १२ ॥ ततो वृष्णिप्रवीरा ये ममासन् सैनिकास्तदा । ते

भयार्त्ता दिशः सर्व्वे सहसा विप्रदुद्रुवुः ॥ १३ ॥ ततो हाहाकृतमभूत् सर्वं किल विशाम्पते । द्यौश्च भूमिश्च खञ्चैवाऽदृश्यमाने तथा मयि ॥ १४ ॥ ततो विषण्णमनसो मम राजन् सुहृज्जनाः । रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः ॥ १५ ॥ द्विषताञ्च प्रहर्षोऽभूदार्त्तिश्चाद्विषतामपि । एवं विजितवान् वीर पश्चादश्रौषमच्युत ॥ १६ ॥ ततोऽहमिन्द्रदयितं सर्वपाषाणभेदनम् । वज्रमुद्यम्य तान् सर्वान् पर्वतान् समशातयम् ॥ १७ ॥ ततः पर्वतभारार्त्ता मन्दप्राणविचेष्टिताः । हया मम महाराज वेपमाना इवाभवन् ॥ १८ ॥ मेघजालमिवाकाशे विदार्य्याभ्युदितं रविम् । दृष्ट्वा मां बान्धवाः सर्व्वे हर्षमाहारयन् पुनः ॥ १९ ॥ ततः पर्वतभारार्त्तान् मन्दप्राणविचेष्टितान् । हयान् सन्दृश्य मां सूतः प्राह तात्कालिकं वचः ॥ २० ॥ साधु सम्पश्य वार्ष्णेय शाल्वं सौभपतिं स्थितम् । अलं कृष्णावमन्यैनं साधु यत्नं समाचर ॥२१॥ मार्द्दवं सखिताञ्चैव शाल्वादस्य व्यपाहर । जहि शाल्वं महाबाहो मैनं जीवय केशव ॥ २२ ॥ सर्वैः पराक्रमैर्वीर वध्यः शत्रुरमित्रहन् । न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा ॥ २३ ॥ योऽपि स्यात् पीठगः कश्चित् किं पुनः समरे स्थितः । स त्वं पुरुषशार्दूल सर्वयत्नैरिमं प्रभो ॥ २४ ॥ जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगात् पुनः । नैष मार्द्दवसाध्यो वै मतो नापि सखा तव ॥ २५ ॥ येन त्वं योधितो वीर द्वारका चावमर्द्दिता । एवमादि तु कौन्तेय श्रुत्वाहं सारथेर्वचः ॥ २६ ॥ तत्त्वमेतदिति ज्ञात्वा युद्धे मतिमधारयम् । वधाय शाल्वराजस्य सौभस्य च निपातने ॥ २७ ॥ दारुकञ्चाब्रुवं वीर मुहूर्त्तं स्थीयतामिति । ततोऽप्रतिहतं दिव्यमभेद्यमतिवीर्य्यवान् ॥ २८ ॥ आग्नेयमस्त्रं दयितं सर्वसाहं महाप्रभम् । योजयं तत्र धनुषा दानवान्तकरं रणे ॥ २९ ॥ यक्षाणां राक्षसानाञ्च दानवानाञ्च संयुगे । राज्ञाञ्च

प्रतिलोमानां भस्मान्तकरणं महत् ॥ ३० ॥ क्षुरान्तममलं चक्रं
कालान्तकयमोपमम्। अनुमन्त्र्याहमतुलं द्विषतां विनिबर्हणम्
॥ ३१ ॥ जहि सौभं स्ववीर्य्येण ये चात्र रिपवो मम। इत्युक्त्वा
भुजवीर्य्येण तस्मै प्राहिणवं रुषा ॥ ३२ ॥ रूपं सुदर्शनस्यासी-
दाकाशे पततस्तदा। द्वितीयस्येव सूर्य्यस्य युगान्ते प्रपतिष्यतः
॥ ३३ ॥ तत् समासाद्य नगरं सौभं व्यपगतत्विषम्। मध्येन
पाटयामास क्रकचो दार्व्विवोच्छ्रितम् ॥ ३४ ॥ द्विधा कृतं ततः
सौभं सुदर्शनबलाद्धतम्। महेश्वरशरोद्धूतं पपात त्रिपुरं यथा
॥ ३५ ॥ तस्मिन्निपतिते सौभे चक्रमागात् करं मम। पुनश्चादाय
वेगेन शाल्वायेत्यहमब्रुवम् ॥ ३६ ॥ ततः शाल्वं गदां गुर्वीमावि-
ध्यन्तं महाहवे। द्विधा चकार सहसा प्रजज्वाल च तेजसा ॥ ३७ ॥
तस्मिन् विनिहते वीरे दानवाः स्त्रस्तचेतसः। हाहाभूता दिशो
जग्मुरर्द्दिता मम सायकैः ॥ ३८ ॥ ततोऽहं समवस्थाप्य रथं
सौभसमीपतः। शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्य्यहर्षयम् ॥ ३९ ॥
तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम्। दह्यमानमभिप्रेक्ष्य
स्त्रियस्ताः संप्रदुद्रुवुः ॥ ४० ॥ एवं निहत्य समरे सौभं शाल्वं
निपात्य च। आनर्त्तान् पुनरागम्य सुहृदां प्रीतिमावहम् ॥ ४१ ॥
तदेतत् कारणं राजन् यदहं नागसाह्वयम्। नागमं परवीरघ्न
न हि जीवेत् सुयोधनः ॥ ४२ ॥ मय्यागतेऽथ वा वीर द्यूतं न
भविता यथा। अद्याहं किं करिष्यामि भिन्नसेतुरिवोदकम् ॥ ४३ ॥

वैशम्पायन उवाच। एवमुक्त्वा महाबाहुः कौरवं पुरुषो-
त्तमः। आमन्त्र्य प्रययौ श्रीमान् पाण्डवान्मधुसूदनः ॥ ४४ ॥
अभिवाद्य महाबाहुर्धर्म्मराजं युधिष्ठिरम्। राज्ञा मूर्द्ध्न्युपा-
घ्रातो भीमेन च महाभुजः ॥ ४५ ॥ परिष्वक्तश्चार्ज्जुनेन यमा-
भ्याञ्चाभिवादितः। सम्मानितश्च धौम्येन द्रौपद्या चार्च्चितो-
ऽश्रुभिः ॥ ४६ ॥ सुभद्रामभिमन्युञ्च रथमारोप्य काञ्चनम्।

आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः ॥ ४७ ॥ शैव्यसुग्रीव-
युक्तेन रथेनादित्यवर्च्चसा । द्वारकां प्रययौ कृष्णः समाश्वास्य
युधिष्ठिरम् ॥ ४८ ॥ ततः प्रयाते दाशार्हे धृष्टद्युम्नोऽपि पार्षतः ।
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ॥ ४९ ॥ धृष्टकेतुः स्वसा-
रञ्च समादायाथ चेदिराट् । जगाम पाण्डवान् दृष्ट्वा रम्यां शुक्ति-
मतीं पुरीम् ॥ ५० ॥ कैकेयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौ-
जसा । आमन्त्र्य पाण्डवान् सर्वान् प्रययुस्तेऽपि भारत ॥ ५१ ॥
ब्राह्मणाश्च विशश्चैव तथा विषयवासिनः । विसृज्यमानाः सुभृशं
न त्यजन्ति स्म पाण्डवान् ॥ ५२ ॥ समवायः स राजेन्द्र सुमहा-
द्भुतदर्शनः । आसीन्महात्मनां तेषां काम्यके भरतर्षभ ॥ ५३ ॥
युधिष्ठिरस्तु विप्रांस्ताननुमान्य महामनाः । शशास पुरुषान् काले
रथान् योजयतेति वै ॥ ५४ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि सौभवधोपाख्याने
द्वाविंशोऽध्यायः ॥ २२ ॥

---

वैशम्पायन उवाच । तस्मिन् दशार्हाधिपतौ प्रयाते युधि-
ष्ठिरो भीमसेनार्ज्जुनौ च । यमौ च कृष्णा च पुरोहितश्च रथा-
न्महार्हान् परमाश्वयुक्तान् ॥ १ ॥ आस्थाय वीराः सहिता
वनाय प्रतस्थिरे भूतपतिप्रकाशाः । हिरण्यनिष्कान् वसनानि
गाश्च प्रदाय शिक्षाक्षरमन्त्रविद्भ्यः ॥ २ ॥ प्रेष्याः पुरो विंशति-
रात्तशस्त्रा धनूंषि शस्त्राणि शरांश्च दीप्तान् । मौर्वीश्च यन्त्राणि
च सायकांश्च सर्वे समादाय जघन्यमीयुः ॥ ३ ॥ ततश्च वासांसि
च राजपुत्र्या धात्र्यश्च दास्यश्च विभूषणञ्च । तदिन्द्रसेनस्त्वरितः
प्रगृह्य जघन्यमेवोपययौ रथेन ॥ ४ ॥ ततः कुरुश्रेष्ठमुपेत्य पौराः
प्रदक्षिणञ्चक्रुरदीनसत्त्वाः । तं ब्राह्मणाश्चाभ्यवदन् प्रसन्ना मुख्याश्च

सर्वं कुरुजाङ्गलानाम् ॥ ५ ॥ स चापि तानभ्यवदत् प्रसन्नः सहैव तैर्भ्रातृभिर्धर्मराजः । तस्थौ च तत्राधिपतिर्महात्मा दृष्ट्वा जनौघं कुरुजाङ्गलानाम् ॥ ६ ॥ पितेव पुत्रेषु स तेषु भावञ्चक्रे कुरूणा-मृषभो महात्मा । ते चापि तस्मिन् भरतप्रवर्हे तदा बभूवुः पितरीव पुत्राः ॥ ७ ॥ ततस्तमासाद्य महाजनौघाः कुरुप्रवीरं परिवार्य्य तस्थुः । हा नाथ हा धर्म इति ब्रुवाणा ह्रीताश्च सर्वे-ऽश्रुमुखाश्च राजन् ॥ ८ ॥ वरः कुरूणामधिपः प्रजानां पितेव पुत्रानपहाय चास्मान् । पौरानिमान् जानपदांश्च सर्वान् हित्वा प्रयातः क्व नु धर्मराजः ॥ ९ ॥ धिक् धार्त्तराष्ट्रं सुनृशंसबुद्धिं धिक् सौबलं पापमतिञ्च कर्णम् । अनर्थमिच्छन्ति नरेन्द्र पापा ये धर्मनित्यस्य सतस्तवैवम् ॥ १० ॥ स्वयं निवेश्याप्रतिमं महात्मा पुरं महादेवपुरप्रकाशम् । शतक्रतुप्रस्थमजेयकर्मा हित्वा प्रयातः क्व नु धर्मराजः ॥ ११ ॥ चकार यामप्रतिमां महात्मा सभां मयो देवसभाप्रकाशाम् । तां देवगुप्तामिव देवमायां हित्वा प्रयातः क्व नु धर्मराजः ॥ १२ ॥ तान् धर्मकामार्थविदुत्तमौजा बीभत्सु-रुच्चैः सहितानुवाच । आदास्यते वासमिमं निरुष्य वनेषु राजा द्विषतां यशांसि ॥ १३ ॥ द्विजातिमुख्याः सहिताः पृथक् च भवद्भिरासाद्य तपस्विनश्च । प्रसाद्य धर्मार्थविदश्च वाच्या यथार्थ-सिद्धिः परमा भवेन्नः ॥ १४ ॥ इत्येवमुक्ते वचनेऽर्जुनेन ते ब्राह्मणाः सर्ववर्णाश्च राजन् । मुदाभ्यनन्दन् सहिताश्च चक्रुः प्रदक्षिणं धर्मभृतां वरिष्ठम् ॥ १५ ॥ आमन्त्र्य पार्थञ्च वृकोदरञ्च धनञ्जयं याज्ञसेनीं यमौ च । प्रतस्थिरे राष्ट्रमपेतहर्षा युधिष्ठिरेणानुमता यथास्वम् ॥ १६ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्वैतवनप्रवेशे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

वैशम्पायन उवाच । ततस्तेषु प्रयातेषु कौन्तेयः सत्यसङ्गरः ।
अभ्यभाषत धर्म्मात्मा भ्रातॄन् सर्वान् युधिष्ठिरः ॥ १ ॥ द्वादशेमाः
समास्माभिर्वस्तव्यं निर्ज्जने वने । समीक्षध्वं महारण्ये देशं बहु-
मृगद्विजम् ॥ २ ॥ बहुपुष्पफलं रम्यं शिवं पुण्यजनावृतम् ।
यत्रेमाः शरदः सर्वाः सुखं प्रतिवसेमहि ॥ ३ ॥ एवमुक्ते प्रत्यु-
वाच धर्म्मराजं धनञ्जयः । गुरुवन्मानवगुरुं मानयित्वा मन-
स्विनम् ॥ ४ ॥

अर्ज्जुन उवाच । भवानेव महर्षीणां वृद्धानां पर्य्युपासिता ।
अज्ञातं मानुषे लोके भवतो नास्ति किञ्चन ॥ ५ ॥ त्वया ह्युपा-
सिता नित्यं ब्राह्मणा भरतर्षभ । द्वैपायनप्रभृतयो नारदश्च
महातपाः ॥ ६ ॥ यः सर्व्वलोकद्वाराणि नित्यं सञ्चरते वशी ।
देवलोकाद्ब्रह्मलोकं गन्धर्व्वाप्सरसामपि ॥ ७ ॥ अनुभावांश्च
जानासि ब्राह्मणानां न संशयः । प्रभावांश्चैव वेत्थ त्वं सर्व्वेषामेव
पार्थिव ॥ ८ ॥ त्वमेव राजन् जानासि श्रेयः कारणमेव च ।
यत्रेच्छसि महाराज निवासं तत्र कुर्म्महे ॥ ९ ॥ इदं द्वैतवनं
नाम सरः पुण्यजलोचितम् । बहुपुष्पफलं रम्यं नानाद्विजनिषे-
वितम् ॥ १० ॥ यत्रेमा द्वादश समा विहरेमेति रोचये । यदि
तेऽनुमतं राजन् किमन्यन्मन्यते भवान् ॥ ११ ॥

युधिष्ठिर उवाच । ममाप्येतन्मतं पार्थ त्वया यत् समुदा-
हृतम् । गच्छामः पुण्यविख्यातं महद्द्वैतवनं सरः ॥ १२ ॥

वैशम्पायन उवाच । ततस्ते प्रययुः सर्व्वे पाण्डवा धर्म्म-
चारिणः । ब्राह्मणैर्बहुभिः सार्द्धं पुण्यं द्वैतवनं सरः ॥ १३ ॥
ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः । स्वाध्यायिनो भिक्ष-
वश्च तथैव वनवासिनः ॥ १४ ॥ बहवो ब्राह्मणास्तत्र परिवव्रु-
र्युधिष्ठिरम् । ततः सिद्धा महात्मानः शतशः संशितव्रताः ॥ १५ ॥
ते यात्वा पाण्डवास्तत्र बहुभिर्ब्राह्मणैः सह । पुण्यं द्वैतवनं रम्यं

विविशुर्भरतर्षभाः ॥ १६ ॥ तमालतालाम्रमधूकनीपकदम्बसर्जार्जुनकर्णिकारैः । तपात्यये पुष्पधरैरुपेतं महावनं राष्ट्रपतिर्ददर्श ॥ १७ ॥ महाद्रुमाणां शिखरेषु तस्थुर्मनोरमां वाचमुदीरयन्तः । मयूरदात्यूहचकोरसङ्घास्तस्मिन् वने वर्हिणकोकिलाश्च ॥ १८ ॥ करेणुयूथैः सह यूथपानां मदोत्कटानामचलप्रभाणाम् । महान्ति यूथानि महाद्विपानां तस्मिन् वने राष्ट्रपतिर्ददर्श ॥ १९ ॥ मनोरमां भोगवतीमुपेत्य पूतात्मनां चीरजटाधराणाम् । तस्मिन् वने धर्मभृतां निवासे ददर्श सिद्धर्षिगणाननेकान् ॥ २० ॥ ततः स यानादवरुह्य राजा सभ्रातृकः सजनः काननन्तत् । विवेश धर्मात्मवतां वरिष्ठस्त्रिविष्टपं शक्र इवामितौजाः ॥ २१ ॥ तं सत्यसन्धं सहिताभिपेतुर्दिदृक्षवश्चारणसिद्धसङ्घाः । वनौकसश्चापि नरेन्द्रसिंहं मनस्विनं तं परिवार्य्य तस्थुः ॥ २२ ॥ स तत्र सिद्धानभिवाद्य सर्वान् प्रत्यर्चितो राजवद्देववच्च । विवेश सर्वैः सहितो द्विजाग्र्यैः कृताञ्जलिर्धर्मभृतां वरिष्ठः ॥ २३ ॥ स पुण्यशीलः पितृवन्महात्मा तपस्विभिर्धर्मपरैरुपेत्य । प्रत्यर्चितः पुष्पधरस्य मूले महाद्रुमस्योपविवेश राजा ॥ २४ ॥ भीमश्च कृष्णा च धनञ्जयश्च यमौ च ते चानुचरा नरेन्द्रम् । विमुच्य वाहानवशाश्च सर्वे तत्रोपतस्थुर्भरतप्रवर्हाः ॥२५॥ लतावतानावततः स पाण्डवैर्महाद्रुमः पञ्चभिरेव धन्विभिः । वभौ निवासोपगतैर्महात्मभिर्महागिरिर्वारणयूथपैरिव ॥ २६ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्वैतवनप्रवेशे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

वैशम्पायन उवाच । तत् काननं प्राप्य नरेन्द्रपुत्राः सुखोषिता वासमुपेत्य कृच्छ्रम् । विजह्रुरिन्द्रप्रतिमाः शिवेषु सर-

स्वतोऽवालवनेषु तेषु ॥ १ ॥ यतींश्च राजा स मुनींश्च सर्वान् तस्मिन् वने मूलफलैरुदग्रैः । द्विजातिमुख्यानृषभः कुरूणां सन्तर्पयामास महानुभावः ॥ २ ॥ इष्टीश्च पित्र्याणि तथा क्रियाश्च महावने वसतां पाण्डवानाम् । पुरोहितस्तत्र समृद्धतेजाश्चकार धौम्यः पितृवन्नृपाणाम् ॥ ३ ॥ अपेत्य राष्ट्राद्वसतान्तु तेषामृषिः पुराणोऽतिथिराजगाम । तमाश्रमं तीव्रसमृद्धतेजा मार्कण्डेयः श्रीमतां पाण्डवानाम् ॥ ४ ॥ तमागतं ज्वलितहुताशनप्रभं महामनाः कुरुवृषभो युधिष्ठिरः । अपूजयत् सुरऋषिमानवार्च्चितं महामुनिं ह्यनुपमसत्त्ववीर्य्यवान् ॥ ५ ॥ स सर्वविद्द्रौपदीं वीक्ष्य कृष्णां युधिष्ठिरं भीमसेनार्जुनौ च । संस्मृत्य रामं मनसा महात्मा तपस्विमध्येऽस्मयतामितौजाः ॥ ६ ॥ तं धर्मराजो विमना इवाब्रवीत् सर्वे ह्रिया सन्ति तपस्विनोऽमी । भवानिदं किं स्मयतीव हृष्टस्तपस्विनां पश्यतां मामुदीक्ष्य ॥ ७ ॥

मार्कण्डेय उवाच । न तात हृष्यामि न च स्मयामि प्रहर्षजो मां भजते न दर्पः । तवापदं त्वद्य समीक्ष्य रामं सत्यव्रतं दाशरथिं स्मरामि ॥ ८ ॥ स चापि राजा सह लक्ष्मणेन वने निवासं पितुरेव शासनात् । धन्वी चरन् पार्थ मयैव दृष्टो गिरेः पुरा ऋष्यमूकस्य सानौ ॥ ९ ॥ सहस्रनेत्रप्रतिमो महात्मा यमस्य नेता नमुचेश्च हन्ता । पितुर्निदेशादनघः स्वधर्मं वासं वने दाशरथिश्चकार ॥ १० ॥ स चापि शक्रस्य समप्रभावो महानुभावः समरेष्वजेयः । विहाय भोगानचरद्वनेषु नेशे बलस्येति चरेदधर्मम् ॥ ११ ॥ नृपाश्च नाभागभगीरथादयो महीमिमां सागरान्तां विजित्य । सत्येन तेऽप्यजयंस्तात लोकान्नेशे बलस्येति चरेदधर्मम् ॥ १२ ॥ अलर्कमाहुर्नरवर्य्य सन्तं सत्यव्रतं काशिकरूषराजम् । विहाय राज्यानि वसूनि चैव नेशे बलस्येति चरेदधर्मम् ॥ १३ ॥ धाता विधिर्यौ विहितः पुराणैस्तं पूजयन्तो

नरवर्य्य सन्तः । सप्तर्षयः पार्थ दिवि प्रभान्ति नेशे बलस्येति चरेदधर्म्मम् ॥ १४ ॥ महाबलान् पर्वतकूटमात्रान् विषाणिनः पश्य गजान्नरेन्द्र । स्थितान्निदेशे नरवर्य्य धातुर्नेशे बलस्येति चरेदधर्म्मम ॥ १५ ॥ सर्वाणि भूतानि नरेन्द्र पश्य तथा यथावद्विहितं विधात्रा । स्वयोनितः कर्म्म सदा चरन्ति नेशे बलस्येति चरेदधर्मम् ॥ १६ ॥ सत्येन धर्मेण यथार्हवृत्त्या ह्रिया तथा सर्वभूतान्यतीत्य । यशश्च तेजश्च तवापि दीप्तं विभावसोर्भास्करस्येव पार्थ ॥ १७ ॥ यथाप्रतिज्ञञ्च महानुभाव कृच्छ्रं वने वासमिमं निरुष्य । ततः श्रियं तेजसा तेन दीप्तामादास्यसे पार्थिव कौरवेभ्यः ॥ १८ ॥

वैशम्पायन उवाच । तमेवमुक्त्वा वचनं महर्षिस्तपस्विमध्ये सहितं सुहृद्भिः । आमन्त्र्य धौम्यं सहितांश्च पार्थांस्ततः प्रतस्थे दिशमुत्तरां सः ॥ १९ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्वैतवनप्रवेशे पञ्चविंशोऽध्यायः ॥ २५ ॥

---

वैशम्पायन उवाच । वसत्सु वै द्वैतवने पाण्डवेषु महात्मसु । अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत ॥ १ ॥ ईर्य्यमाणेन सततं ब्रह्मघोषेण सर्वशः । ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः ॥ २ ॥ यजुषामृचां साम्नाञ्च गद्यानाञ्चैव सर्वशः । आसीदुच्चार्य्यमाणानां निस्वनो हृदयङ्गमः ॥ ३ ॥ ज्याघोषश्चैव पार्थानां ब्रह्मघोषश्च धीमताम् । संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ ४ ॥ अथाब्रवीद्बको दाल्भ्यो धर्म्मराजं युधिष्ठिरम् । सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ॥ ५ ॥ पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम् । होमवेलां कुरुश्रेष्ठ संप्रज्वलितपावकाम् ॥ ६ ॥

चरन्ति धर्मं पूर्व्वेऽस्मिंस्त्वया गुप्ता धृतव्रताः। भृगवोऽङ्गिरसश्चैव वाशिष्ठाः काश्यपैः सह ॥ ७ ॥ आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः। सर्व्वस्य जगतः श्रेष्ठाः ब्राह्मणाः सङ्गतास्त्वया ॥८॥ इदन्तु वचनं पार्थ शृणुष्व गदतो मम। भ्रातृभिः सह कौन्तेय यत्त्वां वच्यामि कौरव ॥ ९ ॥ ब्रह्म चत्रेण संसृष्टं चत्रञ्च ब्रह्मणा सह। उदीर्णौ दहतः शत्रून् वनानीवाग्निमारुतौ ॥ १० ॥ नाब्राह्मणस्तात चिरं बुभूषेदिच्छन्निमं लोकममुञ्च जेतुम्। विनीतधर्म्मार्थमपेतमोहं लब्ध्वा द्विजं नुदति नृपः सपत्नान् ॥ ११ ॥ चरन्नैःश्रेयसं धर्म्मं प्रजापालनकारितम्। नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥ १२ ॥ अन्यूनमासीदसुरस्य कामैर्वैरोचने श्रीरपि चाचयासीत्। लब्ध्वा महीं ब्राह्मणसंप्रयोगात्तेष्वाचरन् दुष्टमथो व्यनश्यत् ॥ १३ ॥ नाब्राह्मणं भूमिरियं सभूतिर्वर्णं द्वितीयं भजते चिराय। समुद्रनेमिर्नमते तु तस्मै यं ब्राह्मणः शास्ति नयैर्विनीतम् ॥ १४ ॥ कुञ्जरस्येव सङ्ग्रामे परिगृह्याङ्कुशग्रहम्। ब्राह्मणैर्विप्रहीनस्य चत्रस्य चीयते बलम् ॥१५॥ ब्राह्मण्यात्तुपमा दृष्टिः चात्रमप्रतिमं बलम्। तौ यदा चरतः सार्द्धं तदा लोकः प्रसीदति ॥ १६ ॥ यथा हि सुमहानग्निः कचं दहति सानिलः। तथा दहति राजन्यो ब्राह्मणेन समं रिपुम् ॥ १७ ॥ ब्राह्मणेभ्येव मेधावी बुद्धिपर्य्येषणञ्चरेत्। अलब्धस्य च लाभाय लब्धस्य परिवृद्धये ॥ १८ ॥ अलब्धलाभाय च लब्धवृद्धये यथार्हतीर्थप्रतिपादनाय। यशस्विनं वेदविदं विपश्चितं बहुश्रुतं ब्राह्मणमेव वासय ॥ १९ ॥ ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर। तेन ते सर्व्वलोकेषु दीप्यते प्रथितं यशः॥२०॥

वैशम्पायन उवाच। ततस्ते ब्राह्मणाः सर्व्वे वकं दाल्भ्यमपूजयत्। युधिष्ठिरे स्तूयमाने भूयः सुमनसोऽभवन् ॥ २१ ॥ द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः। इन्द्रद्युम्नो भालकिश्च

कृतचेताः सहस्रपात्॥ २२॥ कर्णश्रवाश्च मुञ्जश्च लवणाश्वश्च काश्यपः। हारीतः स्थूलकर्णश्च अग्निवेश्योऽथ शौनकः॥ २३॥ कृतवाक् च सुवाक् चैव बृहदश्वो विभावसुः। ऊर्द्ध्वरेता वृषामित्रः सुहोत्रो होत्रवाहनः॥ २४॥ एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः। अजातशत्रुमानर्चुः पुरन्दरमिवर्षयः॥ २५॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्वैतवनप्रवेशे षड्विंशोऽध्यायः॥ २६॥

---

वैशम्पायन उवाच। ततो वनगताः पार्थाः सायाह्ने सह-कृष्णया। उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः॥ १॥ प्रिया च दर्शनीया च पण्डिता च पतिव्रता। अथ कृष्णा धर्मराज-मिदं वचनमब्रवीत्॥ २॥

द्रौपद्युवाच। न नूनं तस्य पापस्य दुःखमस्मासु किञ्चन। विद्यते धार्त्तराष्ट्रस्य नृशंसस्य दुरात्मनः॥ ३॥ यस्त्वां राजन् मया सार्द्धमजिनैः प्रतिवासितम्। वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः॥ ४॥ आयसं हृदयं नूनं तस्य दुष्कृतकर्म्मणः। यस्त्वां धर्म्मपरं ज्येष्ठं रूक्षाण्यश्रावयत्तदा॥ ५॥ सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः। ईदृशं दुःखयानीय मोदते पापपूरुषः॥ ६॥ चतुर्णामेव पापानामस्रं न पतितं तदा। त्वयि भारत निष्क्रान्ते वनायाजिनवाससि॥ ७॥ दुर्य्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः। दुर्भ्रातुस्तस्य चोग्रस्य राजन् दुःशासनस्य च॥ ८॥ इतरेषान्तु सर्वेषां कुरूणां कुरुसत्तम। दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम्॥ ९॥ इदञ्च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम्। शोचामि त्वां महाराज दुःखानर्हं सुखोचितम्॥ १०॥ दान्तं यच्च सभामध्ये आसनं रत्नभूषितम्।

दृष्ट्वा कुशवृषीश्चेमां शोको मां रुन्धयत्ययम् ॥ ११ ॥ यद्दपश्यं सभायां त्वां राजभिः परिवारितम् । तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १२ ॥ या त्वाहं चन्दनादिग्धमपश्यं सूर्य्यवर्च्चसम् । सा त्वां पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥ १३ ॥ या त्वाहं कौशिकैर्वस्त्रैः शुभ्रैराच्छादितं पुरा । दृष्टवत्यस्मि राजेन्द्र सा त्वां पश्यामि चीरिणम् ॥ १४ ॥ यच्च तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः । ह्रियते ते गृहादन्नं संस्कृतं सार्व्वकामिकम् ॥ १५ ॥ यतीनामगृहाणां ते तथैव गृहमेधिनाम् । दीयते भोजनं राजन्नतीव गुणवत् प्रभो ॥ १६ ॥ सत्कृतानि सहस्राणि सर्व्वकामैः पुरा गृहे । सर्व्वकामैः सुविहितैर्यदपूजयथा द्विजान् ॥ १७ ॥ तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे । यत्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः ॥ १८ ॥ अभोजयन्त मिष्टान्नैः सूदाः परमसंस्कृतैः । सर्व्वांस्तानद्य पश्यामि वने वन्येन जीविनः ॥ १९ ॥ अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः । भीमसेनमिमञ्चापि दुःखितं वनवासिनम् ॥ २० ॥ ध्यायतः किं न मन्युस्ते प्राप्ते काले विवर्द्धते । भीमसेनं हि कर्म्माणि स्वयं कुर्व्वाणमच्युतम् ॥ २१ ॥ सुखार्हं दुःखितं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते । सत्कृतं विविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा ॥ २२ ॥ तन्ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते । अयं कुरून् रणे सर्व्वान् हन्तुमुत्सहते प्रभुः ॥ २३ ॥ त्वत्प्रतिज्ञां प्रतीक्षंस्तु सहतेऽयं वृकोदरः । योऽर्ज्जुनेनार्ज्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ॥ २४ ॥ शरावमर्द्दे शीघ्रत्वात् कालान्तकयमोपमः । यस्य शस्त्रप्रतापेन प्रणताः सर्व्वपार्थिवाः ॥ २५ ॥ यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे । तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ॥ २६ ॥ ध्यायन्तमर्ज्जुनं दृष्ट्वा कस्माद्राजन्न कुप्यसि । दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ॥ २७ ॥ न च ते वर्द्धते मन्युस्तेन मुह्यामि

भारत। यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ॥ २८ ॥ तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः ॥ २९ ॥ प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परन्तपः। चिपत्येकेन वेगेन पञ्चवाणशतानि यः ॥ ३० ॥ तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। श्यामं बृहन्तं तरुणं चर्मिणामुत्तमं रणे ॥ ३१ ॥ नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। दर्शनीयञ्च शूरञ्च माद्रीपुत्रं युधिष्ठिर ॥ ३२ ॥ सहदेवं वने दृष्ट्वा कस्मात् चमसि पार्थिव। नकुलं सहदेवञ्च दृष्ट्वा ते दुःखितावुभौ ॥ ३३ ॥ अदुःखार्हौ मनुष्येन्द्र कस्मान्मन्युर्न वर्द्धते। द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ॥ ३४ ॥ धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम्। मां वै वनगतां दृष्ट्वा कस्मात् चमसि पार्थिव ॥ ३५ ॥ नूनञ्च तव वै नास्ति मन्युर्भरतसत्तम। यत्ते भ्रातॄंश्च माञ्चैव दृष्ट्वा न व्यथते मनः ॥ ३६ ॥ न निर्मन्युः चत्रियोऽस्ति लोके निर्वचनं स्मृतम्। तदद्य त्वयि पश्यामि चत्रिये विपरीतवत् ॥ ३७ ॥ यो न दर्शयते तेजः चत्रियः काल आगते। सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥ ३८ ॥ तत्त्वया न चमा कार्य्या शत्रून् प्रति कथञ्चन। तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥ ३९ ॥ तथैव यः चमाकाले चत्रियो नोपशाम्यति। अप्रियः सर्वभूतानां सोऽमुत्रेऽह च नश्यति ॥ ४० ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्रौपदीपरितापवाक्ये सप्तविंशोऽध्यायः ॥ २७ ॥

---

द्रौपद्युवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥ १ ॥ असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम्। बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥ २ ॥

बलिरुवाच। क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत। एतन्मे संशयं तात यथावद्‌ब्रूहि पृच्छते॥ २॥ श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम्। करिष्यामि हि तत्सर्वं यथावदनुशासनम्॥ ४॥ तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः। सर्वनिश्चयवित् प्राज्ञः संशयं परिपृच्छते॥ ५॥

प्रह्लाद उवाच। न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा। इति तात विजानीहि द्वयमेतदसंशयम्॥ ६॥ यो नित्यं क्षमते तात बहून् दोषान् स विन्दति। भृत्याः परिभवन्त्येनमुदासीनास्तथारयः॥ ७॥ सर्वभूतानि चाप्यस्य न नमन्ते कदाचन। तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता॥ ८॥ अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम्। आदातुञ्चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः॥ ९॥ यानं वस्त्राण्यलङ्कारान् शयनान्यासनानि च। भोजनान्यथ पानानि सर्वोपकरणानि च॥ १०॥ आददीरन्नधिकृता यथाकाममचेतसः। प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात्॥ ११॥ न चैनं भर्तृपूजाभिः पूजयन्ति कथञ्चन। अवज्ञानं हि लोकेऽस्मिन् मरणादपि गर्हितम्॥ १२॥ क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि। प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः॥ १३॥ अथास्य दारानिच्छन्ति परिभूय क्षमावतः। दाराश्चास्य प्रवर्त्तन्ते यथाकाममचेतसः॥ १४॥ तथा च नित्यमुदिता यदि नाल्पमपीश्वरात्। दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते॥ १५॥ एते चान्ये च बहवो नित्यं दोषाः क्षमावताम्। अथ वैरोचने दोषानिमान् विद्धि क्षमावताम्॥१६॥ अस्थाने यदि वा स्थाने सततं रजसावृतः। क्रुद्धो दण्डान् प्रणयति विविधान् स्वेन तेजसा॥ १७॥ मित्रैः सह विरोधञ्च प्राप्नुते तेजसा वृतः। आप्नोति द्वेष्यताञ्चैव लोकात् स्वजनतस्तथा॥ १८॥ सोऽवमानादर्थहानिमुपालम्भमनादरम्। सन्तापद्वेष-

मोहांश्च प्रवृंश्च लभते नरः ॥ १९ ॥ क्रोधाद्दण्डान् मनुष्येषु विवि-
धान् पतपोद्दन् । भ्रंशते शीघ्रमैश्वर्यात् प्राणेभ्यः स्वजना-
दपि ॥ २० ॥ योपकर्तृंश्च हर्तृंश्च तेजसैवोपगच्छति । तस्मादु-
द्विजते लोकः सर्पाद्वेश्मगतादिव ॥ २१ ॥ तस्मादुद्विजते लोकः
कथं तस्य भवो भवेत् । अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवम्
॥ २२ ॥ तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् । काले
काले तु संप्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत् ॥ २३ ॥ काले मृदुर्यो
भवति काले भवति दारुणः । स वै सुखमवाप्नोति लोकेऽमुष्मि-
न्निहैव च ॥२४॥ क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये ते नित्यमसन्त्याज्या यथाप्राहुर्मनीषिणः ॥ २५ ॥ पूर्वोपकारी
यस्ते स्यादपराधे गरीयसि । उपकारेण तत्तस्य क्षन्तव्यमपरा-
धिनः ॥ २६ ॥ अबुद्धिमाश्रितानान्तु क्षन्तव्यमपराधिनाम् । न
हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥ २७ ॥ अथ ये बुद्धिजं
कृत्वा ब्रूयुस्ते तदबुद्धिजम् । पापान् स्वल्पेऽपि तान् हन्यादप-
राधे तथानृजून् ॥ २८ ॥ सर्वस्यैकोऽपराधस्ते क्षन्तव्यः पापिनो
भवेत् । द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥ २९ ॥
अजानता भवेत् कश्चिदपराधः कृतो यदि । क्षन्तव्यमेव तस्याहुः
सुपरीक्ष्य परीक्षया ॥ ३० ॥ मृदुना दारुणं हन्ति मृदुना हन्त्य-
दारुणम् । नासाध्यं मृदुना किञ्चित्तस्मात्तीव्रतरं मृदु ॥ ३१ ॥
देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः । नादेशकाले किञ्चित्-
स्यादेशकालौ प्रतीक्षताम् ॥ ३२ ॥ तथा लोकभयाच्चैव क्षन्तव्य-
मपराधिनः । एत एवंविधाः कालाः क्षमायाः परिकीर्त्तिताः
॥ ३३ ॥ अतोऽन्यथानुवर्त्तत्सु तेजसः काल उच्यते । तदहं
तेजसः कालं तव मन्ये नराधिप ॥ ३४ ॥ धार्त्तराष्ट्रेषु लुब्धेषु
सततञ्चापकारिषु । न हि कश्चित् महाकालो विद्यतेऽद्य कुरून्
प्रति ॥ ३५ ॥ तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि । मृदु-

भवत्यवशात्तस्तीक्ष्णादुद्विजते जनः। काले प्राप्ते द्वयञ्चैतद्यो वेद स महीपतिः॥ ३६॥

इति आरण्यपर्व्वणि अर्जुनाभिगमनपर्व्वणि द्रौपदीवाक्ये अष्टाविंशोऽध्यायः॥ २८॥

---

युधिष्ठिर उवाच। क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः। इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ॥ १॥ यो हि संहरते क्रोधं भवस्तस्य सुशोभने। यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे। तस्याभावाय भवति क्रोधः परमदारुणः॥ २॥ क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते। तत् कथं माद्दशः क्रोधमुत्सृजेल्लोकनाशनम्॥ ३॥ क्रुद्धः पापं नरः कुर्य्यात् क्रुद्धो हन्याद्गुरूनपि। क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते॥ ४॥ वाच्यावाच्यौ हि कुपितो न प्रजानाति कर्हिचित्। नाकार्य्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा॥ ५॥ हिंस्यात् क्रोधादवध्यांस्तु वध्यान् सम्पूजयीत च। आत्मानमपि च क्रुद्धः प्रेरयेद्यमसादनम्॥ ६॥ एतान् दोषान् प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः। इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम्॥ ७॥ तं क्रोधं वर्ज्जितं धीरैः कथमस्मद्विधश्चरेत्। एतद्द्रौपदि सन्धाय न मे मन्युः प्रवर्द्धते॥ ८॥ आत्मानञ्च परांश्चैव त्रायते महतो भयात्। क्रुध्यन्तमप्रतिक्रुध्यन् द्वयोरेष चिकित्सकः॥ ९॥ मूढ़ो यदि क्लिश्यमानः क्रुद्ध्यतेऽशक्तिमान्नरः। बलीयसां मनुष्याणां त्यजत्यात्मानमात्मना॥ १०॥ तस्यात्मानं सन्त्यजतो लोका नश्यन्त्यनात्मनः। तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम्॥ ११॥ विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति। अनाशयित्वा क्लेष्टारं परलोके च नन्दति॥ १२॥ तस्माद्बलवता चैव

दुर्बलेन च नित्यदा। क्षन्तव्यं पुरुषेणाङ्गरापत्स्वपि विजानता ॥ १३ ॥ मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः। क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ १४ ॥ सत्यञ्चानृततः श्रेयो नृशंसाच्चानृशंसता। तमेवं बहुदोषन्तु क्रोधं साधुविवर्ज्जितम् ॥ १५ ॥ मादृशः प्रसृजेत् कस्मात् सुयोधनवधादपि। तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ॥ १६ ॥ न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम्। यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते। तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ १७ ॥ क्रुद्धोहि कार्य्यं सुश्रोणि न यथावत् प्रपश्यति। न कार्य्यं न च मर्य्यादां नरः क्रुद्धोऽनुपश्यति ॥ १८ ॥ हन्त्यवध्यानपि क्रुद्धो गुरून् क्रुद्धस्तुदत्यपि। तस्मात्तेजसि कर्त्तव्यः क्रोधो दूरे प्रतिष्ठितः ॥ १९ ॥ दाक्ष्यं ह्यमर्षः शौर्य्यञ्च शीघ्रत्वमिति तेजसः। गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥ २० ॥ क्रोधं त्यक्त्वा तु पुरुषः सम्यक् तेजोऽभिपद्यते। कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहम् ॥ २१ ॥ क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिनिश्चितम्। रजस्तु लोकनाशाय विहितं मानुषं प्रति ॥ २२ ॥ तस्माच्छश्वत्त्यजेत् क्रोधं पुरुषः सम्यगाचरन्। श्रेयान् स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ २३ ॥ यदि सर्व्वमबुद्धीनामतिक्रान्तमचेतसाम्। अतिक्रमो मद्विधस्य कथं स्यात् ष्विदनिन्दिते ॥ २४ ॥ यदि न स्युर्मानुषेषु क्षमिणः पृथिवीसमाः। न स्यात् सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ २५ ॥ अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः। एवं विनाशो भूतानामधर्मः प्रथितो भवेत् ॥ २६ ॥ आक्रुष्टः पुरुषः सर्व्वं प्रत्याक्रोशेदनन्तरम्। प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥ २७ ॥ हन्युर्हि पितरः पुत्रान् पुत्राश्चापि तथा पितॄन्। हन्युश्च पतयो भार्य्याः पतीन् भार्य्यास्तथैव च ॥ २८ ॥ एवं संकुपिते लोके जन्म कृष्णे न

पिद्यते। प्रजानां सन्धिमूलं हि जन्म विद्धि शुभानने ॥ २९ ॥
गाः क्षिपेरन् प्रजाः सर्व्वाः क्षिप्रं द्रौपदि तादृशि। तस्मान्मन्यु-
र्विनाशाय प्रजानामभवाय च ॥ ३० ॥ यस्मात्तु लोके दृश्यन्ते
क्षमिणः पृथिवीसमाः। तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते
॥ ३१ ॥ क्षन्तव्यं पुरुषेणेह सर्व्वापत्सु सुशोभने। क्षमावतो
हि भूतानां जन्म चैव प्रकीर्त्तितम् ॥ ३२ ॥ आक्रुष्टस्ताडितः
क्रुद्धः क्षमते यो बलीयसः। यश्च नित्यं जितक्रोधो विद्वानुत्तम-
पूरुषः ॥ ३३ ॥ प्रभाववानपि नरस्तस्य लोकाः सनातनाः।
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥ ३४ ॥ अत्राप्युदा-
हरन्तीमा गाथा नित्यं क्षमावताम्। गीता क्षमावता कृष्णे
काश्यपेन महात्मना ॥ ३५ ॥ क्षमा धर्म्मः क्षमा यज्ञः क्षमा वेदाः
क्षमा श्रुतम्। य एतदेवं जानाति स सर्व्वं क्षन्तुमर्हति ॥३६॥ क्षमा
ब्रह्म क्षमा सत्यं क्षमा भूतञ्च भावि च। क्षमा तपः क्षमा शौचं
क्षमयेदं धृतं जगत् ॥ ३७ ॥ अतियज्ञविदात् लोकान् क्षमिणः
प्राप्नुवन्ति च। अतिब्रह्मविदां लोकानति चापि तपस्विनाम्
॥ ३८ ॥ अन्ये वै यजुषां लोकाः कर्म्मिणामपरे तथा। क्षमा-
वतां ब्रह्मलोके लोकाः परमपूजिताः ॥ ३९ ॥ क्षमा तेजस्विनां
तेजः क्षमा ब्रह्म तपस्विनाम्। क्षमा सत्यं सत्यवतां क्षमा यज्ञः
क्षमा शमः ॥ ४० ॥ तां क्षमां तादृशीं कृष्णे कथमस्मद्विधस्त्यजेत्।
यस्यां ब्रह्म च सत्यञ्च यज्ञा लोकाश्च धिष्ठिताः ॥ ४१ ॥ क्षन्तव्य-
मेव सततं पुरुषेण विजानता। यदा हि क्षमते सर्व्वं ब्रह्म सम्प-
द्यते तदा ॥ ४२ ॥ क्षमावतामयं लोकः परश्चैव क्षमावताम्।
इह सम्मानमर्हन्ति परत्र च शुभां गतिम् ॥ ४३ ॥ येषां मन्यु-
र्मनुष्याणां क्षमयाभिहतः सदा। तेषां परतरे लोकास्तस्मात्
क्षान्तिः परा मता ॥ ४४ ॥ इति गीताः काश्यपेन गाथा नित्यं
क्षमावताम्। श्रुत्वा गाथा क्षमायास्त्वं तुष्य द्रौपदि मा क्रुधः॥४५॥

पितामहः शान्तनवः शमं सम्पूजयिष्यति। कृष्णश्च देवकीपुत्रः शमं सम्पूजयिष्यति ॥ ४६ ॥ आचार्य्यो विदुरः क्षत्ता शममेव वदिष्यतः। कृपश्च सञ्जयश्चैव शममेव वदिष्यतः ॥ ४७ ॥ सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च। पितामहश्च नो व्यासः शमं वदति नित्यशः ॥ ४८ ॥ एतैर्हि राजा नियतञ्चोद्यमानः शमं प्रति। राज्यं दातेति मे बुद्धिर्नचेल्लोभान्नशिष्यति ॥ ४९ ॥ कालोऽयं दारुणः प्राप्तो भरतानामभूतये। निश्चितं मे सदैवैतत् पुरस्तादपि भाविनि ॥ ५० ॥ सुयोधनो नार्हतीति क्षमामेवं न विन्दति। अर्हस्तत्राहमित्येवं तस्मान्मां विन्दते क्षमा ॥ ५१ ॥ एतदात्मवतां वृत्तमेष धर्मः सनातनः। क्षमा चैवानृशंस्यञ्च तत् कर्त्तास्म्यहमञ्जसा ॥ ५२ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि युधिष्ठिरद्रौपदी-
संवादे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

द्रौपद्युवाच। नमो धात्रे विधात्रे च यौ मोहञ्चक्रतुस्तव। पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः ॥ १ ॥ कर्मभिश्चिन्तितो लोको गत्या गत्यां पृथग्विधः। तस्मात् कर्माणि नित्यानि लोभान्मोक्षं यियासति ॥ २ ॥ नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्ज्जवेन च। पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥ ३ ॥ त्वाञ्चेद्व्यसनमभ्यागादिदं भारत दुःसहम्। यत्त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ॥ ४ ॥ न हि तेऽध्यगमन् जातु तदानीं नाद्य भारत। धर्मात् प्रियतरं किञ्चिदपि चेज्जीवितादिह ॥ ५ ॥ धर्मार्थमेव ते राज्यं धर्मार्थं जीवितञ्च ते। ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ॥ ६ ॥ भीमसेनार्जुनौ चेमौ माद्रेयौ च मया सह। त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ॥ ७ ॥

राजानं धर्म्मगोप्तारं धर्मो रक्षति रक्षितः । इति मे श्रुतमार्य्याणां त्वान्तु मन्ये न रक्षति ॥ ८ ॥ अनन्या हि नरव्याघ्र नित्यदा धर्म्ममेव ते । बुद्धिः सततमन्वेति छायेव पुरुषं निजा ॥ ९ ॥ नावमंस्था हि सदृशान्नावरान् श्रेयसः कुतः । अवाप्य पृथिवीं कृत्स्नां न ते शृङ्गमवर्द्धत ॥ १० ॥ स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान् । दैवतानि पितॄंश्चैव सततं पार्थ सेवसे ॥ ११ ॥ ब्राह्मणाः सर्व्वकामैस्ते सततं पार्थ तर्पिताः । यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत ॥ १२ ॥ भुञ्जते रुक्मपात्रीभिर्यत्राहं परिचारिका । आरण्यकेभ्यो लौहानि भोजनानि प्रयच्छसि ॥ १३ ॥ नादेयं ब्राह्मणेभ्यस्ते गृहे किञ्चन विद्यते । यदिदं वैश्वदेवं ते शान्तये क्रियते गृहे ॥ १४ ॥ तद्दत्वा तिथिभूतेभ्यो राजन् शिष्टेन जीवसि । इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये ॥ १५ ॥ वर्त्तन्ते पाकयज्ञाश्च यज्ञकर्म्म च नित्यदा । अस्मिन्नपि महारण्ये विजने दस्युसेविते ॥ १६ ॥ राष्ट्रादपेत्य वसतो धर्म्मस्ते नावसीदति । अश्वमेधो राजसूयः पुण्डरीकोऽथ गोसवः ॥ १७ ॥ एतैरपि महायज्ञैरिष्टं ते भूरिदक्षिणैः । राजन् परीतया बुद्ध्या विषमेऽक्षपराजये ॥ १८ ॥ राज्यं वसून्यायुधानि भ्रातॄंश्चापि निर्ज्जितः । ऋजोर्म्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ॥ १९ ॥ कथमक्षव्यसनजा बुद्धिरापतिता तव । अतीव मोहमायाति मनश्च परिदूयते ॥ २० ॥ निशम्य ते दुःखमिदमिमाञ्चापदमीदृशीम् । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ २१ ॥ ईश्वरस्य वशे लोकास्तिष्ठन्ते नात्मनो यथा । धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ॥ २२ ॥ दधाति सर्व्वमीशानः पुरस्तात् शुक्रमुच्चरन् । यथा दारुमयी योषा नरवीर समाहिता ॥ २३ ॥ ईरयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः । आकाश इव भूतानि व्याप्य सर्व्वाणि भारत ॥ २४ ॥ ईश्वरो विदधातीह कल्याणं

इव पावकम्। शकुनिस्तन्तुबद्धो वा नियतोऽयमनीश्वरः ॥२५॥
ईश्वरस्य वशे तिष्ठेन्नान्येषां नात्मनः प्रभुः। मणिः सूत्र इव प्रोतो
नस्योत इव गोवृषः ॥२६॥ धातुरादेशमन्वेति तन्मयो हि
तदर्पणः। नात्माधीनो मनुष्योऽयं कालं भजति कञ्चन। स्रोतसो
मध्यमापन्नः कूलाद्वृक्ष इव च्युतः ॥२७॥ अज्ञो जन्तुरनीशोऽय-
मात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव
वा ॥२८॥ यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः। धातु-
रेव वशं यान्ति सर्वभूतानि भारत ॥२९॥ आर्य्यकर्मणि
युञ्जानः पापे वा पुनरीश्वरः। व्याप्य भूतानि चरते न चाय-
मिति लक्ष्यते ॥३०॥ हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञि-
तम्। येन कारयते कर्म शुभाशुभफलं विभुः ॥३१॥ पश्य
मायाप्रभावोऽयमीश्वरेण यथा कृतः। यो हन्ति भूतैर्भूतानि
मोहयित्वात्ममायया ॥३२॥ अन्यथा परिदृष्टानि मुनिभिस्तत्त्व-
दर्शिभिः। अन्यथा परिवर्त्तन्ते वेगा इव नभस्वतः ॥ ३३ ॥
अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च। अन्यथैव प्रभुस्तानि
करोति विकरोति च ॥३४॥ यथा काष्ठेन वा काष्ठमश्मान-
मश्मना पुनः। अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ॥३५॥
एवं च भगवान् देवः स्वयम्भूः प्रपितामहः। हिनस्ति भूतै-
र्भूतानि छद्म कृत्वा युधिष्ठिर ॥३६॥ संप्रयोज्य वियोज्यायं
कामकारकरः प्रभुः। क्रीड़ते भगवान् भूतैर्बालः क्रीड़नकैरिव॥३७
न मातृपितृवद्राजन् धाता भूतेषु वर्त्तते। रोषादिव प्रवृत्तोऽयं
यथायमितरो जनः ॥३८॥ आर्य्यान् शीलवतो दृष्ट्वा ह्रीमतो
वृत्तिकर्षितान्। अनार्य्यान् सुखिनश्चैव विह्वलामीव चिन्तया
॥३९॥ तवेमामापदं दृष्ट्वा समृद्धिञ्च सुयोधने। धातारं गर्हये
पार्थ विषमं योऽनुपश्यति ॥४०॥ आर्य्यशास्त्रातिगे क्रूरे लुब्धे
धर्मापचायिनि। धार्त्तराष्ट्रे श्रियं दृष्ट्वा धाता किं फलमश्नुते

॥ ४१ ॥ कर्म चेत् कृतमन्वेति कर्त्तारं नान्यमृच्छति । कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ४२ ॥ अथ कर्मकृतं पापं नचेत् कर्त्तारमृच्छति । कारणं बलमेवेह जनान् शोचामि दुर्बलान् ॥ ४३ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि युधिष्ठिरद्रौपदी-संवादे त्रिंशोऽध्यायः ॥ ३० ॥

---

युधिष्ठिर उवाच । वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः । उक्तं तत् श्रुतमस्माभिर्नास्तिक्यन्तु प्रभाषसे ॥ १ ॥ नाहं कर्म्मफलान्वेषी राजपुत्रि चराम्युत । ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ २ ॥ अस्तु वात्र फलं मा वा कर्त्तव्यं पुरुषेण यत् । गृहे वा वसता कृष्णे यथाशक्ति करोमि तत् ॥ ३ ॥ धर्मञ्चरामि सुश्रोणि न धर्मफलकारणात् । आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥ ४ ॥ धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् । धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ॥ ५ ॥ न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति । यश्चैनं शङ्कते कृत्वा नास्तिक्यात् पापचेतनः ॥ ६ ॥ अतिवादाद्वदाम्येष मा धर्ममभि-शङ्किथाः । धर्माभिशङ्की पुरुषस्तिर्य्यग्गतिपरायणः ॥ ७ ॥ धर्मो यस्याभिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः । वेदात् शूद्र इवापेयात् स लोकादजरामरात् ॥ ८ ॥ वेदाध्यायी धर्मपरः कुले जातो मनस्विनि । स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ॥ ९ ॥ पापीयान् स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते । शास्त्रातिगो मन्दबुद्धिर्यो धर्ममभिशङ्कते ॥ १० ॥ प्रत्यक्षं हि त्वया दृष्ट ऋषि-र्गच्छन् महातपाः । मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविता ॥ ११ ॥ व्यासो वशिष्ठो मैत्रेयो नारदो लोमशः शुकः । अन्ये

च ऋषयः सर्वे धर्म एव सुचेतसः ॥ १२ ॥ प्रत्यक्ष पश्यसि ह्येतान् दिव्ययोगसमन्वितान् । शापानुग्रहणे शक्तान् देवेभ्योऽपि गरीयसः ॥ १३ ॥ एते हि धर्ममेवादौ वर्णयन्ति सदानघे । कर्त्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥ १४ ॥ अतो नार्हसि कल्याणि धातारं धर्ममेव च । राज्ञि मूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥ १५ ॥ उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् । धर्माभिशङ्की नान्यस्मात् प्रमाणमधिगच्छति ॥ १६ ॥ आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः । इन्द्रियप्रीतिसम्बद्धं यदिदं लोकसाक्षिकम् । एतावन्मन्यते बालो मोहमन्यत्र गच्छति ॥ १७ ॥ प्रायश्चित्तं न तस्यास्ति यो धर्ममभिशङ्कते । ध्यायन् स कृपणः पापो न लोकान् प्रतिपद्यते ॥ १८ ॥ प्रमाणाद्धि निवृत्तो हि वेदशास्त्रार्थनिन्दकः । कामलोभातिगो मूढो नरकं प्रतिपद्यते ॥ १९ ॥ यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते । अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ॥ २० ॥ आर्षं प्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन् । सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥ २१ ॥ यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि । नैव तस्य परो लोको नायमस्तीति निश्चयः ॥ २२ ॥ शिष्टैराचरितं धर्मं कृष्णे मा स्माभिशङ्किथाः । पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥ २३ ॥ धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् । सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ २४ ॥ अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः । अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥ २५ ॥ निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् । विद्यया नैव युज्येयुर्न चार्थं केचिदाप्नुयुः ॥ २६ ॥ तपश्च ब्रह्मचर्यञ्च यज्ञः स्वाध्याय एव च । दानमार्जवमेतानि यदि स्युरफलानि वै ॥ २७ ॥ नाचरिष्यन् परे धर्मं परे परतरे च ये । विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥ २८ ॥ ऋषयश्चैव

देवाश्च गन्धर्वासुरराक्षसाः। ईश्वराः कस्य हेतोस्ते चरेयुर्धर्म-माहृताः॥ २९॥ फलदस्त्विह विज्ञाय धातारं श्रेयसि ध्रुवम्। धर्मन्ते व्यचरन् कृष्णे तद्धि धर्मं सनातनम्॥ ३०॥ स नायं सफलो धर्मो नाधर्मोऽफलवानपि। दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा॥ ३१॥ त्वमात्मनो विजानीहि जन्म कृष्णे यथाश्रुतम्। वेत्थ चापि यथाजातो धृष्टद्युम्नः प्रतापवान्॥३२॥ एतावदेव पर्य्याप्तमुपमानं शुचिस्मिते। कर्मणां फलमाप्नोति धीरोऽल्पेनापि तुष्यति॥ ३३॥ बहुनापि ह्यविद्वांसो नैव तुष्य-न्त्यबुद्धयः। तेषां न धर्मजं किञ्चित् प्रेत्य शर्मास्ति वा पुनः॥३४॥ कर्मणां श्रुतपुण्यानां पापानाञ्च फलोदयः। प्रभवश्चाप्ययश्चैव देवगुह्यानि भाविनि॥ ३५॥ नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः। अपि कल्पसहस्रेण न स श्रेयोऽधिगच्छति॥३६॥ रक्ष्याण्येतानि देवानां गूढ़माया हि देवताः। कृताशाश्च व्रता-शाश्च तपसा दग्धकिल्विषाः॥ ३७॥ प्रसादैर्मानसैर्युक्ताः पश्य-न्त्येतानि वै द्विजाः। न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ॥ ३८॥ यष्टव्यञ्च प्रयत्नेन दातव्यञ्चानसूयता। कर्मणां फल-मस्तीह तथैतद्धर्मशाश्वतम्॥३९॥ ब्रह्मा प्रोवाच पुत्राणां यदृषि र्वेद कश्यपः तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु॥ ४०॥ व्यवस्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज। ईश्वरञ्चापि भूतानां धातारं मा च वै क्षिप। शिक्षस्वैनं नमस्वैनं मा तेऽभूद्बुद्धि-रीदृशी॥ ४१॥ यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम्। उत्तमां देवतां कृष्णे मावमंस्थाः कथञ्चन॥ ४२॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि युधिष्ठिर द्रौपदी संवादे एकोनत्रिंशोऽध्यायः॥ ३१॥

---

द्रौपद्युवाच । नावमन्ये न गर्हे च धर्मं पार्थ कथञ्चन । ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम् ॥ १ ॥ आर्त्ताहं प्रलपामीदमिति मां विद्धि भारत । भूयश्च विलपिष्यामि सुमनास्त्वं निबोध मे ॥ २ ॥ कर्म खल्विह कर्त्तव्यं जानतामित्रकर्षण । अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥ ३ ॥ यावद्गोस्तनपानाच्च यावच्छायोपसेवनात् । जन्तवः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर ॥ ४ ॥ जङ्गमेषु विशेषेण मनुष्या भरतर्षभ । इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रेत्य चेह च ॥ ५ ॥ उत्थानमभिजानन्ति सर्वभूतानि भारत । प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥ ६ ॥ सर्वे हि स्वं समुत्थानमुपजीवन्ति जन्तवः । अपि धाता विधाता च यथायमुदके वकः ॥ ७ ॥ अकर्मणां वै भूतानां वृत्तिः स्यान्न हि काचन । तदेवाभिप्रपद्येत न विहन्यात् कदाचन ॥ ८ ॥ स्वकर्म कुरु मा ग्लासीः कर्मणा भव दंशितः । कृतं हि योऽभिजानाति सहस्रे सोऽस्ति नास्ति च ॥ ९ ॥ तस्य चापि भवेत् कार्यं विवृद्धौ रक्षणे तथा । भक्ष्यमाणो ह्यनादानात् क्षीयेत हिमवानपि ॥ १० ॥ उत्सीदेरन् प्रजाः सर्वा न कुर्युः कर्म चेद्भुवि । तथा ह्येता न वर्द्धेरन् कर्म चेदफलं भवेत् ॥ ११ ॥ अपि चाप्यफलं कर्म पश्यामः कुर्वतो जनान् । नान्यथा ह्यपि गच्छन्ति वृत्तिं लोकाः कथञ्चन ॥ १२ ॥ यश्च दिष्टपरो लोके यश्चापि हठवादिकः । उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥ १३ ॥ यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत् । अवसीदेत् सुदुर्बुद्धिरामो घट इवोदके ॥ १४ ॥ तथैव हठदुर्बुद्धिः शक्तः कर्मण्यकर्मकृत् । आसीत न चिरं जीवेदनाथ इव दुर्बलः ॥ १५ ॥ अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः । तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥ १६ ॥ यच्चापि किञ्चित् पुरुषो दिष्टं नाम भजत्युत । दैवेन विधिना पार्थ तद्दैवमिति

निश्चितम् ॥ १७ ॥ यत् स्वयं कर्म्मणा किञ्चित् फलमाप्नोति पुरुषः । प्रत्यक्षमेतल्लोकेषु तत् पौरुषमिति स्मृतम ॥ १८ ॥ स्वभावतः प्रवृत्तो यः प्राप्नोत्यर्थं न कारणात् । तत् स्वभावात्मकं विद्धि फलं पुरुष सत्तम ॥ १९ ॥ एवं हठाच्च दैवाच्च स्वभावात् कर्म्मणस्तथा । यानि प्राप्नाति पुरुषस्तत्फलं पूर्वकर्म्मणाम् ॥ २० ॥ धातापि हि स्वकर्म्मैव तैस्तैर्हेतुभिरीश्वरः । विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ॥ २१ ॥ यद्ययं पुरुषः किञ्चित् कुरुते वै शुभाशुभम् । तद्धातृविहितं विद्धि पूर्वकर्म्मफलोदयम् ॥ २२ ॥ कारणं तस्य देहोऽयं धातुः कर्म्मणि वर्त्तते । स यथा प्रेरयत्येनं तथायं कुरुतेऽवशः ॥ २३ ॥ तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः । सर्व्वभूतानि कौन्तेय कारयत्यवशान्यपि ॥२४॥ मनसार्थान् विनिश्चित्य पश्चात् प्राप्नोति कर्म्मणा । बुद्धिपूर्वं स्वयं वीर पुरुषस्तत्र कारणम् ॥ २५ ॥ संख्यातुं नैव शक्यानि कर्म्माणि पुरुषर्षभ । अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥ २६ ॥ तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः । धिया धीरो विजानीयादुपायञ्चास्य सिद्धये ॥ २७ ॥ ततः प्रवर्त्तते पश्चात् कारणेस्तत्र सिद्धये । तां सिद्धिमुपजीवन्ति कर्म्मजामिह जन्तवः ॥ २८ ॥ कुशलेन कृतं कर्म्म कर्त्ता साधु स्वनुष्ठितम् । इदं त्वकुशलेनेति विशेषादुपलभ्यते ॥ २९ ॥ इष्टापूर्त्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् । पुरुषः कर्म्मसाध्येषु स्याच्चेदयमकारणम् ॥ ३० ॥ कर्त्तृत्वादेव पुरुषः कर्म्मसिद्धौ प्रशस्यते । असिद्धौ निन्द्यते चापि कर्त्ता नाशीत् कथन्त्विह ॥ ३१ ॥ सर्व्वमेव हठेनैके दैवेनैके वदन्त्युत । पुंसः प्रयत्नजं किञ्चित्तैधमेतन्निरुच्यते ॥ ३२ ॥ न चैवैतावता कार्य्यं मन्यन्त इति चापरे । अस्ति सर्व्वमदृश्यन्तु दिष्टं चैव तथा हठः ॥ ३३ ॥ दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य सन्ततिः । किञ्चिद्दैवाद्धठात् किञ्चित् किञ्चिदेव स्वभावतः ॥ ३४ ॥

पुरुष फलमाप्नोति चतुर्थं नात्र कारणम्। कुशलाः प्रतिजानन्ति ये वै तत्त्वविदो जनाः॥ ३५॥ तथैव धाता भूतानामिष्टानिष्टफलप्रदः। यदि न स्यान्न भूतानां कृपणो नाम कश्चन॥ ३६॥ यं यमर्थमभिप्रेप्सुः कुरुते कर्म पुरुषः। तत्तत्सफलमेव स्याद्यदि न स्यात् पुराकृतम्॥ ३७॥ त्रिद्वारामर्थसिद्धिन्तु नानुपश्यन्ति ये नराः। तथैवानर्थसिद्धिञ्च यथैवात्मा तथैव ते॥ ३८॥ कर्त्तव्यमेव कर्मेति मनोरेष विनिश्चयः। एकान्तेन ह्यनीहोऽयं पराभवति पूरुषः॥ ३९॥ कुर्वतो हि भवत्येव प्रायेणेह युधिष्ठिर। एकान्तफलसिद्धिन्तु न विन्दत्यलसः क्वचित्॥ ४०॥ असम्भवे त्वस्य हेतुः प्रायश्चित्तन्तु लक्षयेत्। कृते कर्मणि राजेन्द्र तथानृण्यमवाप्नुते॥ ४१॥ अलक्ष्मीराविशत्येनं शयानमलसं नरम्। निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते॥ ४२॥ अनर्थाः संशयावस्थाः सिध्यन्ते मुक्तसंशयाः। धीरा नरा कर्मरता ननु निःसंशयाः क्वचित्॥ ४३॥ एकान्तेन ह्यनर्थोऽयं वर्त्ततेऽस्मासु साम्प्रतम्। स तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते॥ ४४॥ अथवा सिद्धिरेव स्यादभिमानं तदेव ते। वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि॥ ४५॥ अन्येषां कर्म सफलमस्माकमपि वा पुनः। विप्रकर्षेण बुध्येत कृतवर्मा यथाफलम्॥ ४६॥ पृथिवीं लाङ्गलेनेह भित्त्वा वीजं वपत्युत। आस्तेऽयं कर्षकस्तूष्णीं पर्ज्जन्यस्तत्र कारणम्॥ ४७॥ वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः। यदन्यः पुरुषः कुर्य्यात् कृतं तत् सफलं मया॥ ४८॥ तच्चेदफलमस्माकमपराधो न मे क्वचित्। इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्र गर्हयेत्॥ ४९॥ कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत। निर्वेदो नात्र कर्त्तव्यो द्वावन्यौ ह्यत्र कारणम्॥ ५०॥ सिद्धिर्वाप्यथ वासिद्धिरप्रवृत्तिरतोऽन्यथा। बहूना समवाये हि भावाना कर्मसिद्धय॥ ५१॥

गुणाभावे फलं न्यूनं भवत्यफलमेव च। अनारम्भे तु न फलं न गुणो दृश्यते क्वचित् ॥ ५२ ॥ देशकालावुपायांश्च मङ्गलं स्वस्तिवृद्धये। युनक्ति मेधया धीरो यथाशक्ति यथाबलम् ॥ ५३ ॥ अप्रमत्तेन तत् कार्य्यमुपदेष्टा पराक्रमः। भूयिष्ठं कर्मयोगेषु सिद्धिमेव पराक्रमः ॥ ५४ ॥ यत्र धीमानवेक्षेत श्रेयांसं बहुभिर्गुणैः। साम्नैवार्थं ततो लिप्सेत् कर्म चास्मै प्रयोजयेत् ॥ ५५ ॥ व्यसनञ्चास्य काङ्क्षेत विनाशं वा युधिष्ठिर। अपि सिन्धोर्गिरेर्वापि किं पुनर्मर्त्यधर्मिणः ॥ ५६ ॥ उत्थानयुक्तः सततं परेषामन्तरैषणे। आनृण्यमाप्नोति नरः परस्यात्मन एव च ॥ ५७ ॥ न चैवात्मावमन्तव्यः पुरुषेण कदाचन। न ह्यात्मपरिभूतस्य भूतिर्भवति शोभना ॥ ५८ ॥ एवं संस्थितिका सिद्धिरियं लोकस्य भारत। तत्र सिद्धिगतिः प्रोक्ता कालावस्थाविभागतः ॥ ५९ ॥ ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम्। सोऽपि सर्वामिमां प्राह पित्रे मे भरतर्षभ ॥ ६० ॥ नीतिं बृहस्पतिप्रोक्तां भ्रातॄन् मेऽग्राहयत् पुरा। तेषां सकाशादश्रौषमहमेतत्तदा गृहे ॥ ६१ ॥ स मां राजन् कर्मवतीमागतामाह सान्त्वयन्। शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर ॥ ६२ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्रौपदीवाक्यं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

वैशम्पायन उवाच। याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः। निःश्वसन्नुपसङ्गम्य क्रुद्धो राजानमब्रवीत् ॥ १ ॥ राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचिताम्। धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥ २ ॥ नैव धर्मेण तद्राज्यं नार्ज्जवेन न चौजसा। अक्षकूटमधिष्ठाय हृतं दुर्य्योधनेन वै ॥ ३ ॥ गोमायु-

मेव सिंहानां दुर्ब्बलेन बलीयसाम्। आमिषं विघसाशेन तद्‌-
द्राज्यं हि नो हृतम् ॥ ४ ॥ धर्म्मलेशप्रतिच्छन्नः प्रभवं धर्म्म-
कामया। अर्थमुत्सृज्य किं राजन् दुःखेषु परितप्यसे ॥ ५ ॥
भवतोऽनवधानेन राज्य नः पश्यता हृतम्। अहार्य्यमपि शक्रेण
गुप्तं गाण्डीवधन्वना ॥ ६ ॥ कुणीनामिव बिल्वानि पङ्गुनामिव
धेनवः। हृतमैश्वर्य्यमस्माकं जीवतां भवतः कृते ॥ ७ ॥ भवतः
प्रियमित्येवं महद्व्यसनमीदृशम्। धर्म्मकामे प्रतीतस्य प्रतिपन्नाः
स्म भारत ॥ ८ ॥ कर्षयामश्च मित्राणि नन्दयामश्च शात्रवान्।
आत्मानं भवतां शास्त्रैर्नियम्य भरतर्षभ ॥ ९ ॥ यद्वयं न तदै-
वैतान् धार्त्तराष्ट्रान्निहन्महि। भवतः शास्त्रमादाय तन्नस्तपति
दुष्कृतम् ॥ १० ॥ अथैनामन्ववेक्षस्व मृगचर्य्यामिवात्मनः। दुर्ब्ब-
लाचरितं राजन्न बलस्थैर्न्निषेवितात्म् ॥ ११ ॥ यां न कृष्णो न
वीभत्सुर्नाभिमन्युर्न सृञ्जयाः। न चाहमभिनन्दामि न च
माद्रीसुतावुभौ ॥ १२ ॥ भवान् धर्म्मो धर्म्म इति सततं व्रतकर्षितः।
कच्चिद्राजन्न निर्व्वेदादापन्नः क्लीवजीविकाम् ॥ १३ ॥ दुर्म्मनुष्या
हि निर्व्वेदमफलं स्वार्थघातकम्। अशक्ताः श्रियमाहर्त्तुमात्मनः
कुर्व्वते प्रियम् ॥ १४ ॥ स भवान् दृष्टिमान् शक्तः पश्यन्नस्मासु
पौरुषम्। आनृशंस्यपरो राजन्नानर्थमवबुध्यसे ॥ १५ ॥ अस्मा-
नमी धार्त्तराष्ट्राः क्षममाणानलं सतः। अशक्तानिव मन्यन्ते
तद्दुःखं नाहवे वधः ॥ १६ ॥ तत्र चेद्युध्यमानानामजिह्ममनि-
वर्त्तिनाम्। सर्व्वशो हि वधः श्रेयान् प्रेत्य लोकान् लभेमहि ॥ १७ ॥
अथवा वयमेवैतान् निहत्य भरतर्षभ। आददीमहि गां सर्व्वां
तथापि श्रेय एव नः ॥ १८ ॥ सर्व्वथा कार्य्यमेतन्नः स्वधर्म्ममनु-
तिष्ठताम्। काङ्क्षतां विपुलां कीर्त्तिं वैरं प्रतिचिकीर्षताम् ॥ १८ ॥
आत्मार्थं युध्यमानानां विदिते कृत्यलक्षणे। अन्यैरपि हृते राज्ये
प्रशस्यैव न गर्हणा ॥ १९ ॥ कर्षणार्थो हि यो धर्म्मो मित्राणा-

आत्मनस्तथा। व्यसनं नाम तद्राजन् न स धर्म्मं कुधर्म्मं तत् ॥ २० ॥
सर्व्वथा धर्म्मनित्यन्तु पुरुषं धर्म्मदुर्ब्बलम्। त्यजतस्तात धर्म्मार्थौ
प्रेतं दुःखसुखे यथा ॥ २१ ॥ यस्य धर्म्मो हि धर्म्मार्थं क्लेशभाङ्
न पण्डितः। न स धर्म्मस्य वेदार्थं सूर्य्यस्यान्धः प्रभामिव ॥ २२ ॥
यस्य चात्मार्थमेवार्थः स च नार्थस्य कोविदः। रचेत भृतको-
ऽरखे यथा गास्तादृगेव सः ॥ २३ ॥ अतिवेलं हि योऽर्थार्थी
नेतरावनुतिष्ठति। स वध्यः सर्व्वभूतानां ब्रह्महेव जुगुप्सितः ॥२४॥
सततं यश्च कामार्थी नेतरावनुतिष्ठति। मित्राणि तस्य नश्यन्ति
धर्म्मार्थाभ्याञ्च हीयते ॥ २५ ॥ तस्य धर्म्मार्थहीनस्य कामान्ते
निधनं ध्रुवम्। कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥२६॥
तस्माद्धर्म्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः। प्रकृतिः सा हि
कामस्य पावकस्यारणिर्य्यथा ॥ २७ ॥ सर्व्वथा धर्म्ममूलोऽर्थो धर्म्म-
श्चार्थपरिग्रहः। इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥२८॥
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते। स कामश्चित्तसङ्कल्प-
शरीरं नास्य दृश्यते ॥ २९ ॥ अर्थार्थी पुरुषो राजन् वृहन्तं
धर्म्ममिच्छति। अर्थमिच्छति कामार्थी न कामादन्यमिच्छति ॥३०॥
न हि कामेन कामोऽन्यः साध्यते फलमेव तत्। उपयोगात् फल-
स्येव काष्ठाद्भस्मेव पण्डितः ॥ ३१ ॥ इमान् शकुनकान्राजन् हन्ति
वैतंसिको यथा। एतद्रूपमधर्म्मस्य भूतेषु हि विहिंसता ॥ ३२ ॥
कामाल्लोभाच्च धर्म्मस्य प्रवृत्तिं यो न पश्यति। स वध्यः सर्व्वभूतानां
प्रेत्य चेह च दुर्म्मतिः ॥ ३३ ॥ व्यक्तं ते विदितो राजन्नार्थो द्रव्य-
परिग्रहः। प्रकृतिश्चापि वेत्यास्य विकृतिश्चापि भूयसीम् ॥ ३४ ॥
तस्य नाशे विनाशे वा जरया मरणेन वा। अनर्थ इति मन्यन्ते
सोऽयमस्मासु वर्त्तते ॥ ३५ ॥ इन्द्रियाणाञ्च पञ्चानां मनसो
हृदयस्य च। विषये वर्त्तमानानां या प्रीतिरुपजायते ॥ ३६ ॥
स काम इति मे बुद्धिः कर्म्मणां फलमुत्तमम्। एवमेव पृथग्दृष्ट्वा

धर्मार्थौ काममेव च ॥३७॥ न धर्मपर एव स्यान्न चार्थपरमो नरः। न कामपरमो वा स्यात् सर्वान् सेवेत सर्वदा ॥ ३८॥ धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत्। अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः॥ ३९॥ कामं पूर्वं धनं मध्ये जघन्ये धर्ममाचरेत्। वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः॥ ४०॥ धर्मञ्चार्थञ्च कामञ्च यथावद्वदताम्वर। विभज्य काले कालज्ञः सर्वान् सेवेत पण्डितः॥ ४१॥ मोक्षो वा परमं श्रेय एषां राजन् सुखार्थिनाम्। प्राप्तिर्वा बुद्धिमास्थाय सोपायां कुरुनन्दन ॥४२॥ तद्वाशु क्रियतां राजन् प्राप्तिर्वाप्यधिगम्यताम्। जीवितं ह्यातुरस्येव दुःखमन्तरवर्त्तिनः॥ ४३॥ विदितश्चैव ते धर्मः सततं चरितश्च ते। जानन्तस्त्वयि शंसन्ति सुहृदः कर्म चोदनाम् ॥४४॥ दानं यज्ञः सतां पूजा वेदधारणमार्जवम्। एष धर्मः परो राजन् बलवान् प्रेत्य चेह च॥ ४५॥ एष नार्थविहीनेन शक्यो राजन्निषेवितुम्। अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीतरे ॥४६॥ धर्ममूलमिदं राजन् नान्यद्धर्माद्विशिष्यते। धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम॥ ४७॥ न चार्थो भैक्ष्यचर्य्येण नापि क्लैब्येन कर्हिचित्। वेत्तुं शक्यः सदा राजन् केवलं धर्मबुद्धिना॥ ४८॥ प्रतिषिद्धा हि ते याच्ञा यया सिध्यति वै द्विजः। तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ॥ ४९॥ भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका। क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम्॥ ५०॥ स्वधर्मं प्रतिपद्यस्व जहि शत्रून् समागतान्। धार्त्तराष्ट्रबलं पार्थ मया पार्थेन नाशय॥ ५१॥ उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः। उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि॥ ५२॥ अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान् सनातनान्। क्रूरकर्माभिजातोऽसि यस्माद्‌द्विजते जनः॥ ५३॥ प्रजापालनसम्भूतं फलं तव न गर्हितम्। एष ते विहितो राजन्

स्वधर्मः सनातनः ॥ ५४ ॥ तस्मादपचितः पार्थ लोके हास्यं गमिष्यसि । स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ॥ ५५ ॥ स चावं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः । वीर्य्यमास्थाय कौरव्य धुरमुद्वह धुर्य्यवत् ॥ ५६ ॥ न हि केवलधर्मात्मा पृथिवीं जातु कश्चन । पार्थिवो व्यजयद्राजन्न भूतिं न पुन श्रियम् ॥५७॥ जिह्मां दत्त्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम् । निकृत्या लभते राज्यमाहारमिव शल्यकः ॥ ५८ ॥ भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः । निकृत्या निर्जिता देवैरसुराः पार्थिवर्षभ ॥५९॥ एवं बलवतः सर्वमिति बुद्ध्वा महीपते । जहि शत्रून् महाबाहो परान्निकृतिमास्थितः ॥ ६० ॥ न ह्यर्जुनसमः कश्चिद्युधि योद्धा धनुर्द्धरः । भविता वा पुनः कश्चिन्मत्समो वा गदाधरः ॥ ६१ ॥ सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि । न प्रमाणेन नोत्साहात् सत्त्वस्थो भव पाण्डव ॥ ६२ ॥ सत्त्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा । न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ॥ ६३ ॥ अर्थत्यागोऽपि कार्य्यः स्यादर्थं श्रेयांसमिच्छता । वीजौपम्येन कौन्तेय मा तेऽभूदत्र संशयः ॥ ६४ ॥ अर्थेन तु समो नार्थो यत्र लभ्येत नोदयः । न तत्र विपणः कार्य्यः खरकण्डूयितं हि तत् ॥ ६५ ॥ एवमेतन्मनुष्येन्द्र धर्मं त्यक्त्वाल्पकं नरः । बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितम् ॥ ६६ ॥ अमित्रं मित्रसम्पन्नं मित्रैर्भिन्दति पण्डिताः । भिन्नैर्मित्रैः परित्यक्तं दुर्वलं कुरुतेऽवशम् ॥ ६७ ॥ सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि । नोद्यमेन न होत्राभिः सर्वाः स्वीकुरुते प्रजाः ॥ ६८ ॥ सर्वथा संहतैरेव दुर्वलैर्बलवानपि । अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ ६९ ॥ यथा राजन् प्रजाः सर्वाः सूर्य्यः पाति गभस्तिभिः । अत्ति चैव तथैव त्वं सदृशः सवितुर्भव ॥ ७० ॥ एतच्चापि तपो राजन् पुराणमिति नः श्रुतम् । विधिना पालनं भूमेर्यत्कृतं

नः पितामहैः ॥ ७१ ॥ न तथा तपसा राजन् लोकान् प्राप्नोति क्षत्रियः। यथा सृष्टेन युद्धेन विजयेनेतरेण वा ॥ ७२ ॥ अपेयात् किल भा सूर्य्यात् लक्ष्मीश्चन्द्रमसस्तथा। इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम् ॥ ७३ ॥ भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च। कथा युक्ताः परिषदः पृथग्राजन् समागताः ॥ ७४ ॥ इदमभ्यधिकं राजन् ब्राह्मणाः कुरवश्च ते। समेताः कथयन्तीह मुदिताः सत्यसन्धताम् ॥ ७५ ॥ यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि। अनृतं किञ्चिदुक्तं ते न कामान्नार्थकारणात् ॥ ७६ ॥ यदेनः कुरुते किञ्चिद्राजा भूमिमवाप्नुवन्। सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ॥ ७७ ॥ ब्राह्मणेभ्यो ददद्ग्रामान् गाश्च राजन् सहस्रशः। मुच्यते सर्वपापेभ्यस्तमोभ्यः इव चन्द्रमाः ॥ ७८ ॥ पौरजानपदाः सर्वे प्रायशः कुरुनन्दन। सवृद्धबालसहिताः शंसन्ति त्वां युधिष्ठिर ॥ ७९ ॥ श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा। सत्यं स्तेने बलं नार्य्यां राज्यं दुर्य्योधने तथा ॥ ८० ॥ इति लोके निर्वचनं पुनश्चरति भारत। अपि चैताः स्त्रियो बालाः स्वाध्यायमधिकुर्वते ॥ ८१ ॥ इमामवस्थाञ्च गते सहास्माभिररिन्दम। हन्त नष्टाः स्म सर्वे वै भवतोपद्रवे सति ॥ ८२ ॥ स भवान्रथमास्थाय सर्वोपकरणान्वितम्। त्वरमाणोऽभिनिर्य्यातु विप्रेभ्योऽर्थविभावकः ॥ ८३ ॥ वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयम्। अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः ॥ ८४ ॥ आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा। अमित्रान् तेजसा मृद्नन्नसुरानिव वृत्रहा। श्रियमादत्स्व कौन्तेय धार्त्तराष्ट्रान्महाबल ॥ ८५ ॥ न हि गाण्डीवमुक्तानां शराणां गार्द्ध्रवाससाम्। स्पर्शमाशीविषाभाणां मर्त्त्यः कश्चन संसहेत् ॥ ८६ ॥ न स वीरो न मातङ्गो न च सोऽश्वोऽस्ति भारत। यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥ ८७ ॥

सृञ्जयैः सह कैकेयैर्वृष्णीनां वृषभेण च । कथंस्विद्युधि कौन्तेय न राज्यं प्राप्नुयामहे ॥ ८८ ॥ शत्रुहस्तगतां राजन् कथंस्विन्नाहरेर्महीम् । इह यत्नमुपाहृत्य बलेन महतान्वितः ॥ ८९ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि भीमवाक्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

वैशम्पायन उवाच । स एवमुक्तस्तु महानुभावः सत्यव्रतो भीमसेनेन राजा । अजातशत्रुस्तदनन्तरं वै धैर्य्यान्वितो वाक्यमिदं बभाषे ॥ १ ॥

युधिष्ठिर उवाच । असंशयं भारत सत्यमेतद्यन्मां तुदन् वाक्यशल्यैः क्षिणोषि । न त्वा विगर्हे प्रतिकूलमेव ममानयाद्धि व्यसनं व आगात् ॥ २ ॥ अहं ह्यचानन्वपद्यं जिहीर्षन् राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् । तन्मां शठः कितवः प्रत्यदेवीत् सुयोधनार्थं सुबलस्य पुत्रः ॥ ३ ॥ महामायः शकुनिः पार्वतीयः सभामध्ये प्रवपन्नक्षपूगान् । अमायिनं मायया प्रत्यजैषीत्ततोऽपश्यं वृजिनं भीमसेन ॥ ४ ॥ अक्षांश्च दृष्ट्वा शकुनेर्यथावत् कामानुकूलानयुजो युजश्च । शक्यं नियन्तुमभविष्यदात्मा मन्युस्तु हन्यात् पुरुषस्य धैर्य्यम् ॥ ५ ॥ यन्तुं नात्मा शक्यते पौरुषेण मानेन वीर्य्येण च तात नद्धः । न ते वाचो भीमसेनाभ्यसूये मन्ये तथा तद्भवितव्यमासीत् ॥ ६ ॥ स नो राजा धृतराष्ट्रस्य पुत्रो न्यपातयद्व्यसने राज्यमिच्छन् । दास्यञ्च नोऽगमयद्भीमसेन यत्राभवच्छरणं द्रौपदी नः ॥ ७ ॥ लब्धापि तद्देत्य धनञ्जयस्य पुनर्द्यूतायागतानां सभां नः । यन्माब्रवीद्धृतराष्ट्रस्य पुत्रः एकग्लहार्थं भरतानां समक्षम् ॥ ८ ॥ वने समा द्वादश राजपुत्र यथाकामं विजितमजातशत्रो । तथापरञ्चाविदितश्चरेथाः सर्वैः

सह भ्रातृभिश्छद्मगूढः॥ ९॥ त्वाञ्चेत् श्रुत्वा तात तथाचरन्त-मवभोत्स्यन्ते भारतानाञ्चराश्च। अन्यांश्चरैथास्त्वावतोऽव्दांस्तथा त्वं निश्चित्य तत् प्रतिजानीहि पार्थ॥ १०॥ चरैश्चेन्नो विदितः कालमेतं युक्तो राजन्मोहयित्वा महीयान्। ब्रवीमि सत्यं कुरु-संसदीह तत्रैव ता भारत पञ्चनद्यः॥ ११॥ वयञ्चैतद्भारत सर्वं एव त्वयाजिताः कालमपास्य भोगान्। वसेम इत्याह पुरा स राजा मध्येऽत्र कुरूणां स मयोक्तस्तथेति॥ १२॥ तत्र द्यूतमभवन्नो जघन्यं तस्मिन् जिताः प्रव्रजिताश्च सर्वे। इत्थञ्च देशाननुसञ्च-रामो वनानि कृच्छ्राणि च कृच्छ्ररूपाः॥ १३॥ सुयोधनश्चापि न शान्तिमिच्छन् भूयः स मन्योर्वशमन्वगच्छत्। उद्योजयामास कुरूंश्च सर्वान् ये चास्य केचिद्वशमन्वगच्छन्॥ १४॥ तं सन्धि-मास्थाय सतां सकाशे को नाम जह्यादिह राज्यहेतोः। आर्य्यस्य मन्ये मरणाद्गरीयो यद्धर्ममुत्क्रम्य महीं प्रशासेत्॥ १५॥ तदैव चेद्वीरकर्मा करिष्यो यदा द्यूते परिघं पर्य्यमृक्षः। बाहू दिध-क्षन् वारितः फाल्गुनेन किं दुष्कृतं भीम तदाभविष्यत्॥ १६॥ प्रागेव चैवं समयक्रियायां किं नाब्रवीः पौरुषमाविदानः। प्राप्तन्तु कालं त्वभिपद्य पश्चात् किं मामिदानीमतिवेलमात्थ॥ १७॥ भूयोऽपि दुःखं मम भीमसेन दूये विषस्येव रसं हि पीत्वा। यद्याज्ञसेनीं परिक्लिश्यमानां संदृश्य तत्क्षान्तमिति स्म भीम॥ १८॥ न त्वद्य शक्यं भरतप्रवीर कृत्वा यदुक्तं कुरुवीरमध्ये। कालं प्रतीक्षस्व सुखोदयस्य पङ्क्तिं फलानामिव वीजवापः॥१९॥ यदा हि पूर्वं निकृतो निकृन्तेत् वैरं सपुष्पं सफलं विदित्वा। महागुणं हरति हि पौरुषेण तदा वीरो जीवति जीवलोके॥ २०॥ श्रियञ्च लोके लभते समग्रां मन्ये चास्मै शत्रवः संन-मन्ते। मित्राणि चैनमचिराद्भजन्ते देवा इवेन्द्रमुपजीवन्ति चैनम्॥ २१॥ मम प्रतिज्ञाञ्च निबोध सत्यां वृणे धर्मममृता-

जीवितार्थं । राज्यञ्च पुत्राश्च यशो धनञ्च सर्वं न सत्यस्य कला-
मुपैति ॥ २२ ॥

इति आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि युधिष्ठिरवाक्ये
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

भीम उवाच । सन्धिं कृत्वैव कालेन ह्यन्तकेन पतत्रिणा ।
अनन्तेनाप्रमेयेण स्रोतसा सर्व्वहारिणा ॥ १ ॥ प्रत्यक्षं मन्यसे
कालं मर्त्यः सन् कालबन्धनः । फेनधर्म्मा महाराज फलधर्म्मा
तथैव च ॥ २ ॥ निमेषादपि कौन्तेय यस्यायुरपचीयते । सूच्येव
वाञ्जनचूर्णस्य किमिति प्रतिपालयेत् ॥ ३ ॥ यो नूनममितायुः
स्यादथ वापि प्रमाणवित् । स कालं वै प्रतीक्षेत सर्व्वप्रत्यक्षदर्शि-
वान् ॥ ४ ॥ प्रतीक्ष्यमाणः कालो नः समा राजंस्त्रयोदश ।
आयुषोऽपचयं कृत्वा मरणायोपनेष्यति ॥ ५ ॥ शरीरिणां हि
मरणं शरीरे नित्यमाश्रितम् । प्रागेव मरणात्तस्माद्राज्यायैव
घटामहे ॥ ६ ॥ यो न याति प्रसङ्ख्यानमस्पष्टो भूमिवर्द्धनः ।
अयातयित्वा वैराणि सोऽवसीदति गौरिव ॥ ७ ॥ यो न यात-
यते वैरमल्पसत्त्वोद्यमः पुमान् । अफलं जन्म तस्याहं मन्ये
दुर्जातजायिनः ॥८॥ हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिवी ।
हत्वा द्विषन्तं सङ्ग्रामे भुङ्क्ष्व बाहुर्जितं वसु ॥ ९ ॥ हत्वा वै
पुरुषो राजन् विकर्त्तारमरिन्दम । अह्नाय नरकं गच्छेत् स्वर्गं-
णास्य स सम्मितः ॥ १० ॥ अमर्षजो हि सन्तापः पावकाद्दीप्ति-
मत्तरः । येनाहमतिसन्तप्तो न नक्तं न दिवा शये ॥ ११ ॥ अयञ्च
पार्थो बीभत्सुर्व्वरिष्ठो ज्याविकर्षणे । आस्ते परमसन्तप्तो नूनं
सिंह इवाशये ॥ १२ ॥ योऽयमेकोऽभिमनुते सर्व्वान् लोके धनु-
र्भृतः । सोऽयमात्मजमूष्माणं महाहस्तीव यच्छति ॥ १३ ॥

नकुलः सहदेवश्च वृद्धा माता च वीरसूः। तथैव प्रियमिच्छन्त आसते जडमूकवत् ॥ १४ ॥ सर्वे ते प्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः। अहमेकस्तु सन्तप्तो माता च प्रतिविन्ध्यतः ॥ १५ ॥ प्रियमेव तु सर्वेषां यद्ब्रवीम्युत किञ्चन। सर्वे हि व्यसनं प्राप्ताः सर्वे युद्धाभिनन्दिनः ॥ १६ ॥ नातः पापीयसी काचिदापद्राजन् भविष्यति। यन्नो नीचैरल्पबलैराज्यमाच्छिद्य भुज्यते ॥ १७ ॥ शीलदोषाद्घृणाविष्ट आनृशंस्यात् परन्तप। क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित् प्रशंसति ॥ १८ ॥ श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः। अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥ १९ ॥ घृणी ब्राह्मणरूपोऽसि कथं क्षत्रेषु जायथाः। अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः ॥ २० ॥ अश्रौषीस्त्वं राजधर्मान् यथा वै मनुरब्रवीत्। क्रूरान्निकृतिसम्पन्नान् विहितानशमात्मकान् ॥ २१ ॥ धार्त्तराष्ट्रान्महाराज क्षमसे किं दुरात्मनः। कर्त्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत् ॥ २२ ॥ बुद्ध्या वीर्येण संयुक्तः श्रुतेनाभिजनेन च। तृणानां मुष्टिनैकेन हिमवन्तञ्च पर्वतम् ॥ २३ ॥ छन्नमिच्छसि कौन्तेय योऽस्मान् संवर्त्तुमिच्छसि। अज्ञातचर्य्यां गूढेन पृथिव्यां विश्रुतेन च ॥ २४ ॥ दिवीव पार्थ सूर्य्येण न शक्या चरितुं त्वया। बृहच्छाल इवानूपे शाखापुष्पपलाशवान् ॥ २५ ॥ हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति। इमौ च सिंहसङ्काशौ भ्रातरौ सहितौ शिशू ॥ २६ ॥ नकुलः सहदेवश्च कथं पार्थ चरिष्यतः। पुण्यकीर्त्ती राजपुत्री द्रौपदी वीरसूरियम् ॥ २७ ॥ विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति। माञ्चापि राजन् जानन्ति आकुमारमिमाः प्रजाः ॥ २८ ॥ नाज्ञातचर्य्यां पश्यामि मेरोरिव निगूहनम्। तथैव बहवोऽस्माभीराष्ट्रेभ्यो विप्रवासिताः ॥ २९ ॥ राजानो राजपुत्राश्च धृतराष्ट्रमनुव्रताः। न हि तेऽप्युपशाम्यन्ति निकृता वा

निराकृताः ॥ ३० ॥ अवश्यं तैर्निकर्त्तव्यमस्माकं तत्प्रियैषिभिः । तेऽप्यस्मासु प्रयुञ्जीरन् प्रच्छन्नान् सुबहूंश्चरान् । आचक्षीरंश्च नो ज्ञात्वा ततः स्यात् सुमहद्भयम् ॥ ३१ ॥ अस्माभिरुषिताः सम्यग्वने मासास्त्रयोदश । परिमाणेन तान् पश्य तावतः परिवत्सरान् ॥ ३२ ॥ अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः । पूतिकामिव सोमस्य तथेदं क्रियतामिति ॥ ३३ ॥ अथवानडुहे राजन् साधवे साधुवाहिने । सौहित्यदानादेतस्मादेनसः प्रतिमुच्यते ॥ ३४ ॥ तस्माच्छत्रुवधे राजन् क्रियतां निश्चयस्त्वया । क्षत्रियस्य हि सर्वस्य नान्यो धर्मोऽस्ति संयुगात् ॥ ३५ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि भीमवाक्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

वैशम्पायन उवाच । भीमसेनवचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः । निश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परन्तपः ॥ १ ॥ श्रुता मे राजधर्माश्च वर्णानाञ्च विनिश्चयाः । आयत्याञ्च तदात्वे च यः पश्यति स पश्यति ॥ २ ॥ धर्मस्य जानमानोऽहं गतिमग्र्यां सुदुर्विदाम् । कथं बलात् करिष्यामि मेरोरिव विमर्द्दनम् ॥ ३ ॥ स मुहूर्त्तमिव ध्यात्वा विनिश्चित्येति कृत्यताम् । भीमसेनमिदं वाक्यमपदान्तरमब्रवीत् ॥ ४ ॥

युधिष्ठिर उवाच । एवमेतन्महावाहो यथा वदसि भारत । इदमन्यत् समाधत्स्व वाक्यं मे वाक्यकोविद ॥ ५ ॥ महापापानि कर्म्माणि यानि केवलसाहसात् । आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ॥ ६ ॥ सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते । सिध्यन्त्यर्था महाबाहो दैवञ्चात्र प्रदक्षिणम् ॥ ७ ॥ यत्तु केवलचापल्याद्बलदर्पोत्थितः स्वयम् । आरब्धव्यमिदं कार्य्यं मन्यसे

शृणु तत्र मे ॥ ८ ॥ भूरिश्रवाः शलश्चैव जलसन्धश्च वीर्य्यवान्। भीष्मो द्रोणश्च कर्णश्च द्रोणपुत्रश्च वीर्य्यवान् ॥ ९ ॥ धार्त्तराष्ट्रा दुराधर्षा दुर्य्योधनपुरोगमाः। सर्व्व एव कृतास्त्राश्च सततञ्चात-तायिनः ॥ १० ॥ राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः। संश्रिताः कौरवं पक्षं जातस्नेहाश्च तं प्रति ॥ ११ ॥ दुर्य्योधन-हिते युक्ता न तथास्मासु भारत। पूर्णकोषबलोपेताः प्रयति-ष्यन्ति सङ्गरे ॥ १२ ॥ सर्व्वं कौरवसैन्यस्य सपुत्रामात्यसैनिकाः। संविभक्ता हि मात्राभिर्भोगैरपि च सर्व्वशः ॥ १३ ॥ दुर्य्योधनेन ते वीरा मानिताश्च विशेषतः। प्राणांस्त्यक्ष्यन्ति सङ्ग्रामे इति मे निश्चिता मतिः ॥ १४ ॥ समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च। द्रोणस्य च महाबाहोः कृपस्य च महात्मनः ॥ १५ ॥ अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः। तस्मात्त्यक्ष्यन्ति सङ्ग्रामे प्राणानपि सुदुस्त्यजान् ॥ १६ ॥ सर्व्वे दिव्यास्त्रविद्वांसः सर्व्वे धर्म-परायणाः। अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः ॥ १७ ॥ अमर्षी नित्यसंरब्धस्तत्र कर्णो महारथः। सर्व्वास्त्रविदनाधृष्यो ह्यभेद्यकवचावृतः ॥ १८ ॥ अनिर्ज्जित्य रणे सर्व्वानेतान् पुरुष-सत्तमान्। अशक्यो ह्यसहायेन हन्तुं दुर्य्योधनस्त्वया ॥ १९ ॥ न निद्रामधिगच्छामि चिन्तयानो वृकोदर। अति सर्व्वान् धनु-र्ग्राहान् सूतपुत्रस्य लाघवम् ॥ २० ॥

वैशम्पायन उवाच। एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः। बभूव विमनास्त्रस्तो न चैवोवाच किञ्चन ॥ २१ ॥ तयोः संवदतो-रेवं तदा पाण्डवयोर्द्वयोः। आजगाम महायोगी व्यासः सत्य-वतीसुतः ॥ २२ ॥ सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः। युधिष्ठिरमिदं वाक्यमुवाच वदताम्वरः ॥ २३ ॥

व्यास उवाच। युधिष्ठिर महाबाहो वेद्मि ते हृदयस्थितम्। मनीषया ततः क्षिप्रमागतोऽस्मि नरर्षभ ॥ २४ ॥ भीष्मात् द्रोणात्

कृपात् कर्णात् द्रोणपुत्राच्च भारत । दुर्य्योधनान्नृपसुतात्तथा दुःशासनादपि ॥ २५ ॥ यत्ते भयममित्रघ्न हृदि सम्परिवर्त्तते । तत्तेऽहं नाशयिष्यामि विधिदृष्टेन कर्म्मणा ॥ २६ ॥ तच्छ्रुत्वा धृतिमास्थाय कर्म्मणा प्रतिपादय । प्रतिपाद्य तु राजेन्द्र ततः चिप्रं ज्वरं जहि ॥ २७ ॥ तत एकान्तमुन्नीय पाराशर्य्यो युधिष्ठिरम् । अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः ॥ २८ ॥ श्रेयसस्ते परः कालः प्राप्तो भरतसत्तम । येनाभिभविता शत्रूनृणे पार्थो धनञ्जयः ॥ २९ ॥ गृहाणेमां मया प्रोक्तां सिद्धिं मूर्त्तिमतीमिव । विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ॥ ३० ॥ यामवाप्य महाबाहुरर्जुनः साधयिष्यति । अस्त्रहेतोर्म्महेन्द्रञ्च रुद्रञ्चैवाभिगच्छतु ॥ ३१ ॥ वरुणञ्च कुवेरञ्च धर्म्मराजञ्च पाण्डव । शक्तो ह्येष सुरान् द्रष्टुं तपसा विक्रमेण च ॥ ३२ ॥ ऋषिरेष महातेजा नारायणसहायवान् । पुराणः शाश्वतो देवस्त्वजेयो जिष्णुरच्युतः ॥ ३३ ॥ अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च । समादाय महाबाहुर्म्महत् कर्म्म करिष्यति ॥ ३४ ॥ वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम् । निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते ॥ ३५ ॥ एकत्र चिरवासो हि न प्रीतिजननो भवेत् । तापसानाञ्च सर्व्वेषां भवेदुद्वेगकारकः ॥ ३६ ॥ मृगाणामुपयोगश्च वीरुदोषधिसंक्षयः । बिभर्षि च बहून् विप्रान् वेदवेदाङ्गपारगान् ॥ ३७ ॥

वैशम्पायन उवाच । एवमुक्त्वा प्रपन्नाय शुचये भगवान् प्रभुः । प्रोवाच लोकतत्त्वज्ञो योगी विद्यामनुत्तमाम् ॥ ३८ ॥ धर्म्मराजाय धीमान् स व्यासः सत्यवतीसुतः । अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ॥ ३९ ॥ युधिष्ठिरस्तु धर्म्मात्मा तद्ब्रह्म मनसा यतः । धारयामास मेधावी काले काले सदाभ्यसन् ॥ ४० ॥ स व्यासवाक्यमुदितो वनाद्द्वैतवनात्ततः । ययौ सरस्वतीकूले काम्यकं

नाम तद्वनम् ॥ ४१ ॥ तमन्वयुर्महाराज शिक्षाक्षरविशारदाः । ब्राह्मणा स्तापसा युक्ता देवेन्द्रमृषयो यथा ॥ ४२ ॥ ततः काम्यकमासाद्य पुनस्ते भरतर्षभाः । न्यवसन्त महात्मानः सामात्याः सपरिच्छदाः ॥ ४३ ॥ तत्र ते न्यवसन्राजन् कञ्चित्कालं मनस्विनः । धनुर्वेदपरा वीराः शृण्वन्तो वेदमुत्तमम् ॥ ४४ ॥ चरन्तो मृगयां नित्यं शुद्धैर्बाणैर्मृगार्थिनः । पितृदैवतविप्रेभ्यो निर्वपन्तो यथाविधि ॥ ४५ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि काम्यकवनप्रवेशे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

वैशम्पायन उवाच । कस्य चित्त्वथ कालस्य धर्मराजो युधिष्ठिरः । संस्मृत्य मुनिसन्देशमिदं वचनमब्रवीत् ॥ १ ॥ विविक्ते विदितप्रज्ञमर्ज्जुनं पुरुषर्षभ । सान्त्वपूर्वं स्मितं कृत्वा पाणिना परिसंस्पृशन् ॥ २ ॥ स मुहूर्त्तमिव ध्यात्वा वनवासमरिन्दमः । धनञ्जयं धर्म्मराजो रहसीदमुवाच ह ॥ ३ ॥

युधिष्ठिर उवाच । भीष्मे द्रोणे कृपे कर्ण्णे द्रोणपुत्रे च भारत । धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ॥ ४ ॥ ब्राह्मं दैवं मानुषञ्च वायव्यं सचिकित्सितम् । सर्वास्त्राणां प्रयोगञ्च तेऽभिजानन्ति कृत्स्नशः ॥ ५ ॥ ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः । संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्त्तते ॥ ६ ॥ सर्वयोधेषु चैवास्य सदा प्रीतिरनुत्तमा । आचार्य्या मानितास्तुष्टाः शान्तिं व्यवहरन्त्युत ॥ ७ ॥ शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः । अद्य चेयं मही कृत्स्ना दुर्य्योधनवशानुगा ॥ ८ ॥ सग्रामनगरा पार्थ ससागरवनाकरा । भवानेव प्रियोऽस्माकं त्वयि भारः समाहितः ॥ ९ ॥ अत्र कृत्यं प्रपश्यामि प्राप्तकालमरिन्दम ।

कृष्णाद्वैपायनात्तात गृहीतोपनिषन्मया ॥ १० ॥ तथा प्रयुक्तया सम्यक् जगत् सर्वं प्रकाशते । तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः ॥ ११ ॥ देवतानां यथाकालं प्रसादं प्रतिपालय । तपसा योजयात्मानमुग्रेण भरतर्षभ ॥ १२ ॥ धनुष्मान् कवची खड्गी मुनिः साधुव्रते स्थितः । न कस्यचिद्ददन्मार्गं गच्छ तातोत्तरां दिशम् ॥ १३ ॥ इन्द्रे ह्यस्त्राणि दिव्यानि समस्तानि धनञ्जय । वृत्राद्भीतैर्बलं देवैस्तदा शक्रे समर्पितम् ॥ १४ ॥ तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे । शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति । दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरन्दरम् ॥ १५ ॥

वैशम्पायन उवाच । एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभुः । दीक्षितं विधिनानेन धृतवाक्कायमानसम् ॥ १६ ॥ अनुजज्ञे तदा वीरं भ्राता भ्रातरमग्रजः । निदेशाद्धर्मराजस्य द्रष्टुकामः पुरन्दरम् ॥ १७ ॥ धनुर्गाण्डीवमादाय तथाक्षय्ये महेषुधी । कवची सतलत्राणो बद्धगोधाङ्गुलित्रवान् ॥ १८॥ हुताग्निर्ब्राह्मणान्निष्कैः स्वस्ति वाच्य महाभुजः । प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः ॥ १९ ॥ वधाय धार्त्तराष्ट्राणां निश्वस्योर्द्ध्वमुदीक्ष्य च । तं दृष्ट्वा तत्र कौन्तेयं प्रगृहीतशरासनम् ॥२०॥ अब्रुवन् ब्राह्मणाः सिद्धा भूतान्यन्तर्हितानि च । क्षिप्रमाप्नुहि कौन्तेय मनसा यद्यदिच्छसि ॥ २१ ॥ अब्रुवन् ब्राह्मणाः पार्थमिति कृत्वा जयाशिषः । संसाधयस्व कौन्तेय ध्रुवोऽस्तु विजयस्तव ॥ २२ ॥ तं तथा प्रस्थितं वीरं शालस्कन्धोरुमर्जुनम् । मनांस्यादाय सर्वेषां कृष्णा वचनमब्रवीत् ॥ २३ ॥

कृष्णोवाच । यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय । तत्तेऽस्तु सर्वं कौन्तेय यथा च स्वयमिच्छसि । मास्माकं क्षत्रियकुले जन्म कश्चिदवाप्नुयात् ॥ १४ ॥ ब्राह्मणेभ्यो नमो नित्यं

येषां भैक्ष्येण जीविका। इदं मे परमं दुःखं यः स पापः सुयो-
धनः ॥ २५ ॥ दृष्ट्वा मां गौरिति प्राह प्रहसन्राजसंसदि।
तस्माद्दुःखादिदं दुःखं गरीय इति मे मतिः ॥ २६ ॥ यत्तत्
परिषदो मध्ये बह्वयुक्तमभाषत। नूनं ते भ्रातरः सर्वे त्वत्कथाभिः
प्रजागरे ॥ २७ ॥ रंस्यन्ते वीर कर्माणि कथयन्तः पुनः पुनः।
नैव नः पार्थ भोगेषु न धने नोत जीविते ॥ २८ ॥ तुष्टिर्बुद्धि-
र्भवित्री वा त्वयि दीर्घप्रवासिनि। त्वयि नः पार्थ सर्वेषां सुख-
दुःखे समाहिते ॥ २९ ॥ जीवितं मरणञ्चैव राज्यमैश्वर्य्यमेव
च। आपृष्टो मेऽसि कौन्तेय स्वस्ति प्राप्नुहि भारत ॥ ३० ॥
बलवद्भिर्विरुद्धं न कार्य्यमेतत्त्वयानघ। प्रयाह्यविघ्नेनैवाशु विज-
याय महाबल ॥ ३१ ॥ नमो धात्रे विधात्रे च स्वस्ति गच्छ
ह्यनामयम्। ह्रीः श्रीः कीर्त्तिर्द्युतिः तुष्टिरुमा लक्ष्मीः सर-
स्वती ॥ ३२ ॥ इमा वै तव पान्थस्य पालयन्तु धनञ्जय। ज्येष्ठा-
पचायी ज्येष्ठस्य भ्रातुर्वचनकारकः ॥ ३३ ॥ प्रपद्येऽहं वसून्
रुद्रानादित्यान् समरुद्गणान्। विश्वेदेवांस्तथा साध्यान् शान्त्यर्थं
भरतर्षभ ॥ ३४ ॥ स्वस्ति तेऽस्त्वन्तरीक्षेभ्यः पार्थिवेभ्यश्च भारत।
दिव्येभ्यश्चैव भूतेभ्यो ये चान्ये परिपन्थिनः ॥ ३५ ॥

वैशम्पायन उवाच। एवमुक्त्वाशिषः कृष्णा विरराम यश-
स्विनी। ततः प्रदक्षिणं कृत्वा भ्रातॄन् धौम्यञ्च पाण्डवः ॥ ३६ ॥
प्रातिष्ठत महाबाहुः प्रगृह्य रुचिरं धनुः। तस्य मार्गादपा-
क्रामन् सर्वभूतानि गच्छतः ॥ ३७ ॥ युक्तस्यैन्द्रेण योगेन परा-
क्रान्तस्य शुष्मिणः। सोऽगच्छत् पर्वतांस्तात तपोधननिषेविताम्
॥ ३८ ॥ दिव्यं हैमवतं पुण्यं देवजुष्टं परन्तप। अगच्छत् पर्वतं
पुण्यमेकाह्नैव महामनाः ॥ ३९ ॥ मनोजवगतिर्भूत्वा योगयुक्तो
यथानिलः। हिमवन्तमतिक्रम्य गन्धमादनमेव च ॥ ४० ॥ अत्य-
क्रामत् स दुर्गाणि दिवारात्रमतन्द्रितः। इन्द्रकीलं समासाद्य

ततोऽतिष्ठद्धनञ्जयः ॥ ४१ ॥ अन्तरीक्षेऽतिशुश्राव तिष्ठेति स वचस्तदा। तच्छ्रुत्वा सर्व्वतो दृष्टिं चारयामास पाण्डवः ॥ ४२ ॥ अथापश्यन् सव्यसाची वृक्षमूले तपस्विनम्। ब्राह्म्या श्रिया दीप्यमानं पिङ्गलं जटिलं कृशम् ॥ ४३ ॥ सोऽब्रवीदर्ज्जुनं तत्र स्थितं दृष्ट्वा महातपाः। कस्त्वं तातेह सम्प्राप्तो धनुष्मान् कवची शरी ॥ ४४ ॥ निबद्धासितलत्राणः क्षात्रं धर्म्ममनुव्रतः। नेह शस्त्रेण कर्त्तव्यं शान्तानामेष आलयः ॥ ४५ ॥ विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनाम्। नेहास्ति धनुषा कार्य्यं न सङ्ग्रामोऽत्र कर्हिचित् ॥ ४६ ॥ निक्षिपैतद्धनुस्तात प्राप्तोऽसि परमां गतिम्। ओजसा तेजसा वीर यथा नान्यः पुमान् क्वचित् ॥४७॥ तथा हसन्निवाभीक्ष्णं ब्राह्मणोऽर्ज्जुनमब्रवीत्। न चैनञ्चालयामास धैर्य्यात् सुधृतनिश्चयम् ॥ ४८ ॥ तमुवाच ततः प्रीतः स द्विजः प्रहसन्निव। वरं वृणीष्व भद्रन्ते शक्रोऽहमरिसूदन ॥४९॥ एवमुक्तः सहस्राक्षं प्रत्युवाच धनञ्जयः। प्राञ्जलिः प्रणतो भूत्वा शूरः कुरुकुलोद्वहः ॥ ५० ॥ ईप्सितो ह्येष वै कामो वरञ्चैनं प्रयच्छ मे। त्वत्तोऽद्य भगवन्नस्त्रं कृत्स्नमिच्छामि वेदितुम् ॥५१॥ प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव। इह प्राप्तस्य किं कार्य्यमस्त्रैस्तव धनञ्जय ॥ ५२ ॥ कामान् वृणीष्व लोकांस्त्वं प्राप्तोऽसि परमां गतिम्। एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः ॥ ५३ ॥ न लोकान्न पुनः कामान्न देवत्वं कुतः सुखम्। न च सर्व्वामरैश्वर्य्यं कामये त्रिदशाधिप ॥ ५४ ॥ भ्रातॄंस्तान् विपिने त्यक्त्वा वैरमप्रतियात्य च। अकीर्त्तिं सर्व्वलोकेषु गच्छेयं शाश्वतीः समाः ॥ ५५ ॥ एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनम्। सान्त्वयन् श्लक्ष्णया वाचा सर्व्वलोकनमस्कृतः ॥ ५६ ॥ यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवम्। तदा दातास्मि ते तात दिव्यान्यस्त्राणि सर्व्वशः ॥ ५७ ॥ क्रियतां दर्शने यत्नो देवस्य परमे-

ष्ठिनः। दर्शनात्तस्य कौन्तेय संसिद्धः स्वर्गमेष्यसि ॥ ५८ ॥ इत्युक्ता फाल्गुनं शक्रो जगामादर्शनं पुनः। अर्ज्जुनोऽथ तत्रैव तस्थौ योगसमन्वितः ॥ ५९ ॥

इति आरण्यपर्वणि अर्जुनाभिगमनपर्वणि इन्द्रदर्शने सप्तत्रिंशोऽध्यायः समाप्तञ्च अर्जुनाभिगमनपर्व ॥ ३७ ॥

---

## अथ कैरातपर्व।

जनमेजय उवाच। भगवन् श्रोतुमिच्छामि पार्थस्याक्लिष्टकर्मणः। विस्तरेण कथामेतां यथास्त्राण्युपलब्धवान् ॥ १ ॥ कथा च पुरुषव्याघ्रो दीर्घबाहुर्धनञ्जयः। वनं प्रविष्टस्तेजस्वी निर्मनुष्यमभीतवत् ॥ २ ॥ किञ्च तेन कृतं तत्र वसता ब्रह्मवित्तम। कथञ्च भगवान् स्थाणुर्देवराजश्च तोषितः ॥ ३ ॥ एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद्द्विजोत्तम। त्वं हि सर्वज्ञ दिव्यञ्च मानुषञ्चैव वेत्थ ह ॥ ४ ॥ अत्यद्भुततमं ब्रह्मन् लोमहर्षणमर्जुनः। भवेन सह सङ्ग्रामे चकाराप्रतिमं किल ॥ ५ ॥ पुरा प्रहरतां श्रेष्ठः सङ्ग्रामेष्वपराजितः। यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात् ॥ ६ ॥ शूराणामपि पार्थानां हृदयानि चकम्पिरे। यद्यच्च कृतवानन्यत् पार्थस्तदखिलं वद ॥ ७ ॥ न ह्यस्य निन्दितं जिष्णोः सुसूक्ष्ममपि लक्षये। चरितं तस्य शूरस्य तन्मे सर्वं प्रकीर्त्तय ॥ ८ ॥

वैशम्पायन उवाच। कथयिष्यामि ते तात कथामेतां महात्मनः। दिव्यां कौरवशार्दूल महतीमद्भुतोपमाम् ॥ ९ ॥ गात्रसंस्पर्शसम्बद्धां त्र्यम्बकेण महानघ। पार्थस्य देवदेवेन शृणु सम्यक् समागमम् ॥ १० ॥ युधिष्ठिरनियोगात् स जगामामितविक्रमः।

शक्रं सुरेश्वरं द्रष्टुं देवदेवञ्च शङ्करम् ॥ ११ ॥ दिव्यं तद्धनु-
रादाय खड्गञ्च कनकत्सरुम् । महाबलो महाबाहुरर्जुनः कार्य्य-
सिद्धये ॥ १२ ॥ दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति ।
ऐन्द्रिः स्थिरमना राजन् सर्व्वलोकमहारथः ॥ १३ ॥ त्वरया
परया युक्तस्तपसे धृतनिश्चयः । वनं कण्टकितं घोरमेक एवान्व-
पद्यत ॥ १४ ॥ नानापुष्पफलोपेतं नानापक्षिनिषेवितम् । नाना-
मृगगणाकीर्णं सिद्धचारणसेवितम् ॥ १५ ॥ ततः प्रयाते कौन्तेये
वनं मानुषवर्ज्जितम् । शङ्खानां पटहानाञ्च शब्दः समभवद्दिवि
॥ १६ ॥ पुष्पवर्षञ्च सुमहन्निपपात महीतले । मेघजालञ्च विततं
छादयामास सर्व्वतः ॥ १७ ॥ सोऽतीत्य वनदुर्गाणि सन्निकर्षे
महागिरेः । शुशुभे हिमवत्पृष्ठे वसमानोऽर्ज्जुनस्तदा ॥ १८ ॥
तत्रापश्यद्द्रुमान् फुल्लान् विहगैर्व्वल्गुनादितान् । नदीश्च विपुला-
वर्त्ता वैदूर्य्यविमलप्रभाः ॥ १९ ॥ हंसकारण्डवोद्गीताः सारसा-
भिरुतास्तथा । पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः ॥ २० ॥
मनोहरवनोपेतास्तस्मिन्नतिरथोऽर्ज्जुनः । पुण्यशीतामलजलाःपश्यन्
प्रीतमनाभवत् ॥ २१ ॥ रमणीये वनोद्देशे रममाणोऽर्ज्जुनस्तदा ।
तपस्युग्रे वर्त्तमान उग्रतेजा महामनाः ॥ २२ ॥ दर्भचीरं निव-
स्याथ दण्डाजिनविभूषितः । शीर्णञ्च पतितं भूमौ पर्णं समुप-
युक्तवान् ॥ २३ ॥ पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः ।
द्विगुणेन हि कालेन द्वितीयं मासमत्ययात् ॥ २४ ॥ तृतीयमपि
मासं स पक्षेणाहारमाचरत् । चतुर्थे त्वथ संप्राप्ते मासे भरत-
सत्तमः ॥ २५ ॥ वायुभक्षो महाबाहुरभवत् पाण्डुनन्दनः । ऊर्द्ध-
बाहुर्निरालम्बः पादाङ्गुष्ठाग्रधिष्ठितः ॥ २६ ॥ सदोपस्पर्शना-
च्चास्य बभूवुरमितौजसः । विद्युदम्भोरुहनिभा जटास्तस्य महा-
त्मनः ॥ २७ ॥ ततो महर्षयः सर्व्वे जग्मुर्द्देवं पिनाकिनम् । निवे-
दयिषवः पार्थं तपस्युग्रे समास्थितम् ॥ २८ ॥ तं प्रणम्य महा-

देवं धर्मज्ञः पार्थकर्म तत् । एष पार्थो महातेजा हिमवत्पृष्ठ-
माश्रितः ॥ २९ ॥ उग्रे तपसि दुष्पारे स्थितो धूमाययन्दिशः ।
तस्य देवेश न वयं विद्मः सर्वं चिकीर्षितम् ॥ ३० ॥ सन्तापयति
नः सर्वानसौ साधु निवार्य्यताम् । तेषां तद्वचनं श्रुत्वा मुनीनां
भावितात्मनाम् । उमापतिर्भूतपतिर्वाक्यमेतदुवाच ह ॥ ३१ ॥
महादेव उवाच । न वो विषादः कर्त्तव्यः फाल्गुनं प्रति
सर्वशः । शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः । अहमस्य
विजानामि सङ्कल्पं मनसि स्थितम् ॥ ३२ ॥ नास्य स्वर्गस्पृहा
काचिन्नैश्वर्य्यस्य तथायुषः । यत्त्वस्य काङ्क्षितं सर्वं तत् करिष्ये-
ऽहमद्य वै ॥ ३३ ॥
वैशम्पायन उवाच । तच्छ्रुत्वा सर्ववचनमृषयः सत्यवादिनः ।
प्रहृष्टमनसो जग्मुर्यथा स्वान् पुनरालयान् ॥ ३४ ॥

इति आरण्यपर्वणि कैरातपर्वणि मुनिशङ्करसंवादे
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

वैशम्पायन उवाच । गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।
पिनाकपाणिर्भगवान् सर्वपापहरो हरः ॥ १ ॥ कैरातं वेश-
मास्थाय काञ्चनद्रुमसन्निभम् । विभ्राजमानो विपुलो गिरि-
र्मेरुरिवापरः ॥ २ ॥ श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान् ।
निष्पपात महावेगो दहनो देहवानिव ॥ ३ ॥ देव्या सहोमया
श्रीमान् समानव्रतवेशया । नानावेशधरैर्हृष्टैर्भूतैरनुगतस्तदा
॥ ४ ॥ किरातवेशसंच्छन्नः स्त्रीभिश्चापि सहस्रशः । अशोभत तदा
राजन् स देशोऽतीव भारत ॥ ५ ॥ क्षणेन तद्वनं सर्वं निःशब्द-
मभवत्तदा । नादः प्रस्रवणानाञ्च पक्षिणाञ्चाप्युपारमत् ॥ ६ ॥
स सन्निकर्षमागम्य पार्थस्याक्लिष्टकर्मणः । मूकं नाम दनोः पुत्रं

ह्हर्शाद्भुतदर्शनम् ॥ ७ ॥ वाराहं रूपमास्थाय तर्कयन्तमिवा-
र्जुनम् । हन्तुं परमदुष्टात्मा तमुवाचाथ फाल्गुनः ॥ ८ ॥ गाण्डीवं
धनुरादाय शरांश्चाशीविषोपमान् । सज्यं धनुर्वरं कृत्वा ज्या-
घोषेण निनादयन् ॥ ९ ॥ यन्मां प्रार्थयसे हन्तुमनागसमिहा-
गतम् । तस्मात्त्वां पूर्वमेवाहं नेताद्य यमसादनम् ॥ १० ॥ दृष्ट्वा
तं प्रहरिष्यन्तं फाल्गुनं दृढधन्विनम् । किरातरूपी सहसा
वारयामास शङ्करः ॥ ११ ॥ मयैष प्रार्थितः पूर्वमिन्द्रनीलसम-
प्रभः । अनादृत्य च तद्वाक्यं प्रजहाराथ फाल्गुनः ॥ १२ ॥
किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः । प्रमुमोचाशनिप्रख्यं
शरमग्निशिखोपमम् ॥ १३ ॥ तौ मुक्तौ सायकौ ताभ्यां समन्तत्र
निपेततुः । शूकरस्य गात्रे विस्तीर्णे शैलसंहनने तदा ॥ १४ ॥
यथाशनेर्विनिर्घोषो वज्रस्येव च पर्वते । तथा तयोः सन्निपातः
शरयोरभवत्तदा ॥ १५ ॥ स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगै-
रिव । ममार राक्षसं रूपं भूयः कृत्वा विभीषणम् ॥ १६ ॥ स
ददर्श ततो जिष्णुः पुरुषं काञ्चनप्रभम् । किरातवेशसंच्छन्नं
स्त्रीसहायममित्रहा ॥ १७ ॥ तमब्रवीत् प्रीतमनाः कौन्तेयः प्रह-
सन्निव । को भवानटते शून्ये वने स्त्रीगणसंवृतः ॥ १८ ॥ न
त्वमस्मिन् वने घोरे बिभेषि कनकप्रभ । किमर्थञ्च त्वया विद्धो
वराहो मत्परिग्रहः ॥ १९ ॥ मयाभिपन्नः पूर्वं हि राक्षसोऽय-
मिहागतः । कामात् परिभवाद्वापि न मे जीवन् विमोच्यसे ॥२०॥
न ह्येष मृगयाधर्मो यस्त्वयाद्य कृतो मयि । तेन त्वां भ्रंशयि-
ष्यामि जीवितात् पर्वताश्रय ॥ २१ ॥ इत्युक्तः पाण्डवेयेन
किरातः प्रहसन्निव । उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचि-
नम् ॥ २२ ॥ न मत्कृते त्वया वीर भीः कार्य्या वनमन्तिकात् ।
इयं भूमिः सदास्माकमुचिता वसतां वने ॥ २३ ॥ त्वया तु दुष्करः
कस्मादिह वासः प्ररोचितः । वयन्तु बहुसत्त्वेऽस्मिन्निवसामस्तपो-

धन॥ २४॥ भवांस्तु कृष्णावल्लाभः सुकुमारः सुखोचितः। कथं शून्यमिमं देशमेकाकी विचरिष्यति॥ २५॥

अर्जुन उवाच। गाण्डीवमाश्रयं कृत्वा नाराचांश्चाग्निसन्निभान्। निवसामि महारण्ये द्वितीय इव पावकः॥ २६॥ एष चापि महाजन्तुर्मृगरूपं समाश्रितः। राक्षसो निहतो घोरो हन्तुं मामिह चागतः॥ २७॥

किरात उवाच। मयैष धनुर्भिर्मुक्तैस्ताड़ितः पूर्वमेव हि। वाणैरभिहतः शेते नीतश्च यमसादनम्॥ २८॥ ममैष लक्ष्यभूतो हि मम पूर्वपरिग्रहः। ममैव च प्रहारेण जीविताद्व्यपरोपितः॥ २९॥ दोषान् स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः। अवलिप्तोऽसि मन्दात्मन् न मे जीवन् विमोक्ष्यसे॥ ३०॥ स्थिरो भवस्व मोक्ष्यामि सायकानशनीरिव। घटस्व परया शक्त्या मुञ्च त्वमपि सायकान्॥ ३१॥ तस्य तद्वचनं श्रुत्वा किरातस्यार्जुनस्तदा। रोषमाहारयामास ताड़यामास चेषुभिः॥ ३२॥ ततो हृष्टेन मनसा प्रतिजग्राह सायकान्। भूयोभूय इति प्राह मन्द-मन्देत्युवाच ह॥ ३३॥ प्रहरस्व शरानेतान्नाराचान्मर्मभेदिनः। इत्युक्तो वाणवर्षं स मुमोच सहसार्जुनः॥ ३४॥ ततस्तौ तत्र संरब्धौ गर्ज्जमानौ मुहुर्मुहुः। शरैराशीविषाकारैस्ततक्षाते परस्परम्॥ ३५॥ ततोऽर्जुनः शरवर्षं किराते समवासृजत्। तत् प्रसन्नेन मनसा प्रतिजग्राह शङ्करः॥ ३६॥ मुहूर्त्तं शरवर्षं तत् प्रतिगृह्य पिनाकधृक्। अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः॥ ३७॥ स दृष्ट्वा वाणवर्षन्तु मोघीभूतं धनञ्जयः। परमं विस्मयञ्चक्रे साधु साध्विति चाब्रवीत्॥ ३८॥ अहोऽयं सुकुमाराङ्गो हिमवच्छिखराश्रयः। गाण्डीवमुक्तान्नाराचान् प्रतिगृह्णात्यविह्वलः॥ ३९॥ कोऽयं देवो भवेत् साक्षात् रुद्रो यक्षः सुरोऽसुरः। विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः॥ ४०॥

न हि महास्त्रजालानामुत्सृष्टानां सहस्रशः। शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् ॥ ४१ ॥ देवो वा यदि वा यक्षो रुद्रा-दन्यो व्यवस्थितः। अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ४२ ॥ ततो हृष्टमना जिष्णुर्नाराचान्मर्म्मभेदिनः। व्यसृजच्छतधा राजन् मयूखानिव भास्करः ॥ ४३ ॥ तान् प्रसन्नेन मनसा भगवान् लोकभावनः। शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः ॥ ४४ ॥ क्षणेन क्षीणबाणोऽथ संवृत्तः फाल्गुनस्तदा। भीश्चैनमाविश-त्तीव्रा तं दृष्ट्वा शरसङ्क्षयम् ॥ ४५ ॥ चिन्तयामास जिष्णुश्च भगवन्तं हुताशनम्। पुरस्तादक्षयौ दत्तौ तूणौ येनास्य खाण्डवे ॥ ४६ ॥ किं नु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः। अयञ्च पुरुषः कोऽपि बाणान् ग्रसति सर्वशः ॥ ४७ ॥ हन्त चैनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम्। नयामि दण्डधारस्य यमस्य सदनं प्रति ॥ ४८ ॥ प्रगृह्याथ धनुष्कोट्या ज्यापाशेनावकृष्य च। मुष्टिभिश्चापि हतवान् वज्रकल्पैर्महाद्युतिः ॥ ४९ ॥ संप्रयुद्धो धनुष्कोट्या कौन्तेयः परवीरहा। तदप्यस्य धनुर्दिव्यं जग्रास गिरिगोचरः ॥ ५० ॥ ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत। युद्धस्यान्तमभीप्सन् वै वेगेनाभिजगाम तम् ॥ ५१ ॥ तस्य मूर्द्ध्नि शितं खड्गमसक्तं पर्व्वतेष्वपि। मुमोच भुजवीर्य्येण विक्रम्य कुरुनन्दनः ॥ ५२ ॥ तस्य मूर्द्धानमासाद्य पफालासिवरो हि सः। ततो वृक्षैः शिलाभिश्च योधयामास फाल्गुनः ॥ ५३ ॥ तदा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः। किरातरूपी भगवां-स्ततः पार्थो महाबलः ॥ ५४ ॥ मुष्टिभिर्व्वज्रसङ्काशैर्धूममुत्पादयन् मुखे। प्रजहार दुराधर्षे किरातसमरूपिणि ॥ ५५ ॥ ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः। किरातरूपी भगवानर्दया-मास पाण्डवम् ॥ ५६ ॥ ततश्चटचटाशब्दः सुघोरः समपद्यत। पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः ॥ ५७ ॥ सुमुहूर्त्तन्तु

तद्युद्धमभवल्लोमहर्षणम्। भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ॥५८॥
जघानाथ ततो जिष्णुः किरातमुरसा बली। पाण्डवञ्च विचेष्टन्तं
किरातोऽप्यहनद्बली ॥ ५९ ॥ तयोर्भुजविनिष्पेषात् सङ्घर्षेणो-
रसोस्तथा। समजायत गात्रेषु पावकोऽङ्गारधूमवान् ॥ ६० ॥
तत एनं महादेवः पीड्य गात्रैः सुपीडितम्। तेजसा व्याक्रमद्रोषा-
च्चेतस्तस्य विमोहयन् ॥ ६१ ॥ ततोऽतिपीडितैर्गात्रैः पिण्डीकृत
इवाबभौ। फाल्गुनो गात्रसंरुद्धो देवदेवेन भारत ॥ ६२ ॥ निरु-
च्छ्वासोऽभवच्चैव सन्निरुद्धो महात्मना। पपात भूम्यां निश्चेष्टो गत-
सत्त्व इवाभवत् ॥ ६३ ॥ स मुहूर्त्तं तथा भूत्वा सचेताः पुन-
रुत्थितः। रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदुःखितः ॥ ६४ ॥
शरण्यं शरणं गत्वा भगवन्तं पिनाकिनम्। मृन्मयं स्थण्डिलं कृत्वा
माल्येनपूजयद्भवम् ॥ ६५ ॥ तच्च माल्यं तदा पार्थः किरात-
शिरसि स्थितम्। अपश्यत् पाण्डवश्रेष्ठो हर्षेण प्रकृतिङ्गतः ॥६६॥
पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः। उवाच चैनं वचसा मेघ-
गम्भीरगीर्हरः। जातविस्मयमालोक्य तपःक्षीणाङ्गसंहतिम् ॥६७
भव उवाच। भो भो फाल्गुन तुष्टोऽस्मि कर्मणाप्रतिमेन ते।
शौर्य्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ६८ ॥ समं
तेजश्च वीर्य्यञ्च ममाद्य तव चानघ। प्रीतस्तेऽहं महाबाहो पश्य
मां भरतर्षभ ॥ ६९ ॥ ददामि ते विशालाक्ष चक्षुः पूर्वऋषि-
र्भवान्। विजेष्यसि रणे शत्रूनपि सर्वान् दिवौकसः ॥ ७० ॥
प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम्। त्वं हि शक्तो
मदीयं तदस्त्रं धारयितुं क्षणात् ॥ ७१ ॥
वैशम्पायन उवाच। ततो देवं महादेवं गिरिशं शूलपाणि-
नम्। ददर्श फाल्गुनस्तत्र सह देव्या महाद्युतिम् ॥ ७२ ॥ स
जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च। प्रसादयामास हरं
पार्थ परपुरञ्जयः ॥ ७३ ॥

अर्जुन उवाच। कपर्द्दिन् सर्वदेवेश भगनेत्रनिपातन। देव-देव महादेव नीलग्रीव जटाधर। कारणानाञ्च परमं जाने त्वां त्र्यम्बकं विभुम् ॥ ७४ ॥ देवानाञ्च गतिं देव त्वत्प्रसूतमिदं जगत्। अजेयस्त्वं त्रिभिर्लोकैः सदेवासुरमानुषैः ॥ ७५ ॥ शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे। दक्षयज्ञविनाशाय हरि-रुद्राय वै नमः ॥ ७६ ॥ ललाटाक्षाय सर्वाय मीढुषे शूलपाणये। पिनाकगोप्त्रे सूर्य्याय मार्ज्जालीयाय वेधसे ॥ ७७ ॥ प्रसादये त्वां भगवन् सर्वभूतमहेश्वर। गणेशं जगतः शम्भुं लोककारण-कारणम् ॥ ७८ ॥ प्रधानपुरुषातीतं परं सूक्ष्मतरं हरम्। व्यति-क्रमं मे भगवन् क्षन्तुमर्हसि शङ्कर ॥ ७९ ॥ भगवद्दर्शनाकाङ्क्षी प्राप्तोऽस्मीमं महागिरिम्। दयितं तव देवेश तापसालयमुत्तमम् ॥ ८० ॥ प्रसादये त्वां भगवन् सर्वलोकनमस्कृतम्। न मे स्याद-पराधोऽयं महादेवातिसाहसात् ॥ ८१ ॥ कृतो मयायमज्ञानात् विमर्द्दो यस्त्वया सह। शरणं प्रतिपन्नाय तत् क्षमस्वाद्य शङ्कर ॥ ८२

वैशम्पायन उवाच। तमुवाच महातेजाः प्रहस्य वृषभध्वजः। प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फाल्गुनम् ॥ ८३ ॥ परिष्वज्य च बाहुभ्यां प्रीतात्मा भगवन् हरः। पुनः पार्थं सान्त्वपूर्वमुवाच वृषभध्वजः ॥ ८४ ॥

इति आरण्यपर्वणि कैरातपर्वणि महादेवस्तवे
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

देवदेव उवाच। नरस्त्वं पूर्वदेहे वै नारायणसहायवान्। वदर्य्यां तप्तवानुग्रं तपो वर्षायुतान् बहून् ॥ १ ॥ त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे। युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्य्यते जगत् ॥ २ ॥ शक्राभिषेके सुमहद्धनुर्जलदनिःस्वनम्।

प्रशस्य दानवाः शस्त्रास्त्वया कृष्णेन च प्रभो॥ ३॥ तदेतद्देव गाण्डीवं तव पार्थ करोचितम्। मायामास्थाय यद्ग्रस्तं मया पुरुषसत्तम॥ ४॥ तूणौ चाप्यक्षयौ भूयस्तव पार्थ यथोचितौ। भविष्यति शरीरञ्च नीरुजं कुरुनन्दन॥ ५॥ प्रीतिमानस्मि ते पार्थ भवान् सत्यपराक्रमः। गृहाण वरमस्मत्तः काङ्क्षितं पुरुषोत्तम॥ ६॥ न त्वया पुरुषः कश्चित् पुमान् मर्त्येषु मानद। दिवि वा वर्त्तते क्षत्रं त्वत्प्रधानमरिन्दम॥ ७॥

अर्जुन उवाच। भगवन् ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज। कामये दिव्यमस्त्रं तद्घोरं पाशुपतं प्रभो॥ ८॥ यत्तु ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम्। युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत्॥ ९॥ कर्णभीष्मकृपद्रोणैर्भविता तु महाहवः। त्वत्प्रसादान्महादेव जयेयं तान् यथाविधि॥ १०॥ दहेयं येन सङ्ग्रामे दानवान्राक्षसांस्तथा। भूतानि च पिशाचांश्च गन्धर्वानथ पन्नगान्॥ ११॥ यस्मिन् शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः। शराश्चाशीविषाकाराः सम्भवन्त्यनुमन्त्रिते॥ १२॥ युध्येयं येन भीष्मेण द्रोणेन च कृपेण च। सूतपुत्रेण च रणे नित्यं कटुकभाषिणा॥ १३॥ एष मे प्रथमः कामो भगवन् भगनेत्रहन्। त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा॥ १४॥

भव उवाच। ददामि तेऽस्त्रं दयितमहं पाशुपतं विभो। समर्थो धारणे मोक्षे संहारे चासि पाण्डव॥ १५॥ नैतद्वेद महेन्द्रोऽपि न यमो न च यक्षराट्। वरुणोऽप्यथ वा वायुः कुतो वेत्स्यन्ति मानवाः॥ १६॥ न त्वेतत् सहसा पार्थ मोक्तव्यं पुरुषे क्वचित्। जगद्विनाशयेत् सर्वमल्पतेजसि पातितम्॥ १७॥ अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे। मनसा चक्षुषा वाचा धनुषा च निपात्यते॥ १८॥

वैशम्पायन उवाच। तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समा-

ष्ठितः । उपसङ्गम्य विधिवच्छमधीष्वेत्यथ सोऽब्रवीत् ॥ १९ ॥ तत-स्त्वध्यापयामास सरहस्यनिवर्त्तनम् । तदस्त्रं पाण्डवश्रेष्ठं मूर्त्ति-मन्तमिवान्तकम् ॥ २० ॥ उपतस्थे च तत्पार्थं यथा त्र्यम्बकमुमा-पतिम् । प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥२१॥ ततश्चचाल पृथिवी सपर्वतवनद्रुमा । ससागरवनोद्देशा सग्रामनगराकरा ॥ २२ ॥ शङ्खदुन्दुभिघोषाश्च भेरीणाञ्च सहस्रशः । तस्मिन् मुहूर्त्ते संप्राप्ते निर्घाताश्चापतन्मुहुः ॥ २३ ॥ अथास्त्रं जाज्वलद्घोरं पाण्ड-वस्यामितौजसः । मूर्त्तिमद्वै स्थितं पार्श्वे ददृशुर्द्देवदानवाः ॥ २४ ॥ स्पृष्टस्य त्र्यम्बकेनाथ फाल्गुनस्यामितौजसः । यत्किञ्चि-दशुभं देहे तत् सर्व्वं नाशमीयिवत् ॥ २५ ॥ स्वर्गं गच्छेत्यनु-ज्ञातस्त्र्यम्बकेन तदार्ज्जुनः । प्रणम्य शिरसा राजन् प्राञ्जलिर्द्देव-मैक्षत ॥ २६ ॥ ततः प्रभुस्त्रिदिवनिवासिनां वशी महाद्युति-र्गिरिश उमापतिः शिवः । धनुर्महद्दितिजपिशाचसूदनं ददौ भवः पुरुषवराय गाण्डिवम् ॥ २७ ॥ ततः शुभं गिरिवरमीश्वर-स्तदा सहोमया सिततटसानुकन्दरम् । विहाय तं पतगमहर्षि-सेवितं जगाम खं पुरुषवरस्य पश्यतः ॥ २८ ॥

इति आरण्यपर्व्वणि कैरातपर्व्वणि शिवप्रस्थाने

चत्वारिंशोऽध्यायः ॥ ४० ॥

---

वैशम्पायन उवाच । तस्य सम्पश्यतस्त्वेव पिनाकी वृषभ-ध्वजः । जगामादर्शनं भानुर्लोकस्येवास्तमीयिवान् ॥ १ ॥ ततो-ऽर्ज्जुनः परञ्चक्रे विस्मयं परवीरहा । मया साक्षान्महादेवो दृष्ट-इत्येव भारत ॥ २ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यम्बको हरः । पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ॥ ३ ॥ कृतार्थञ्चावगच्छामि परमात्मानमाहवे । शत्रूंश्च विजितान् सर्व्वान्

निर्वृत्तञ्च प्रयोजनम्॥ ४॥ इत्येवं चिन्तयानस्य पार्थस्यामित-
तेजसः। ततो वैदूर्य्यवर्णाभो भासयन् सर्वतो दिशः॥ ५॥
यादोगणवृतः श्रीमानाजगाम जलेश्वरः। नागैर्नदैर्नदीभिश्च
दैत्यैः साध्यैश्च दैवतैः॥ ६॥ वरुणो यादसां भर्त्ता वशी तं
देशमागमत्। अथ जाम्बूनदवपुर्विमानेन महार्च्चिषा॥ ७॥
कुवेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः। विद्योतयन्निवाकाशमद्भुतो-
पमदर्शनः॥ ८॥ धनानामीश्वरः श्रीमानर्जुनं द्रष्टुमागतः।
तथा लोकान्तकृत् श्रीमान् यमः साक्षात् प्रतापवान्॥ ९॥
मर्त्त्यमूर्त्तिधरैः सार्द्धं पितृभिर्लोकभावनैः। दण्डपाणिरचि-
न्त्यात्मा सर्वभूतविनाशकृत्॥ १०॥ वैवस्वतो धर्मराजो विमाने-
नावभासयन्। त्रींल्लोकान् गुह्यकांश्चैव गन्धर्वांश्च सपन्नगान्॥ ११॥
द्वितीय इव मार्त्तण्डो युगान्ते समुपस्थिते। ते भानुमन्ति चित्राणि
शिखराणि महागिरेः॥ १२॥ समास्थायार्जुनं तत्र ददृशु-
स्तपसान्वितम्। ततो मुहूर्त्ताद्भगवानैरावतशिरोगतः॥ १३॥
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः। पाण्डरेणातपत्रेण
ध्रियमाणेन मूर्द्धनि॥ १४॥ शुशुभे तारकाराजः सितमभ्र-
मिवास्थितः। संस्तूयमानो गन्धर्वैरृषिभिश्च तपोधनैः॥ १५॥
शृङ्गं गिरेः समासाद्य तस्थौ सूर्य्य इवोदितः। अथ मेघस्वनो
धीमान् व्याजहार शुभां गिरम्॥ १६॥ यमः परमधर्मज्ञो
दक्षिणां दिशमास्थितः। अर्जुनार्जुन पश्यास्मान् लोकपालान्
समागतान्॥ १७॥ दृष्टिं ते वितरामोऽद्य भवानर्हति दर्शनम्।
पूर्व्वर्षिरमितात्मा त्वं नरो नाम महाबलः॥ १८॥ नियोगाद्
ब्रह्मणस्तात मर्त्त्यतां समुपागतः। त्वया च वसुसम्भूतो महा-
वीर्य्यः पितामहः॥ १९॥ भीष्मः परमधर्मात्मा संसाध्यश्च रणे-
ऽनघ। क्षत्रञ्चाग्निसमस्पर्शं भारद्वाजेन रक्षितम्॥ २०॥ दान-
वाश्च महावीर्य्या ये मनुष्यत्वमागताः। निवातकवचाश्चैव दानवाः

कुरुनन्दन ॥ २१ ॥ पितुर्मम्मांशो देवस्य सर्व्वलोकप्रतापिनः । कर्णश्च सुमहावीर्य्यस्त्वया वध्यो धनञ्जय ॥ २२ ॥ अंशाश्च चितिसम्प्राप्ता देवदानवरक्षसाम् । त्वया निपातिता युद्धे स्वकर्म्मफलनिर्ज्जिताम् ॥ २३ ॥ गतिं प्राप्स्यन्ति कौन्तेय यथा स्वामरिकर्षण । अक्षया तव कीर्त्तिश्च लोके स्थास्यति फाल्गुन ॥ २४ ॥ त्वया साक्षान्महादेवस्तोषितो हि महामृधे । लघ्वी वसुमती चापि कर्त्तव्या विष्णुना सह ॥ २५ ॥ गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम् । अनेनास्त्रेण सुमहत्त्वं हि कर्म्म करिष्यसि ॥ २६ ॥

वैशम्पायन उवाच । प्रतिजग्राह तत्पार्थो विधिवत् कुरुनन्दन । समन्त्रं सोपचारञ्च समोक्षविनिवर्त्तनम् ॥ २७ ॥ ततो जलधरश्यामो वरुणो यादसां पतिः । पश्चिमां दिशमास्थाय गिरमुच्चारयन् प्रभुः ॥ २८ ॥ पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्म्मे व्यवस्थितः । पश्य मां पृथुताम्राक्ष वरुणोऽस्मि जलेश्वरः ॥ २९ ॥ मया समुद्यतान् पाशान् वारुणाननिवारितान् । प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्त्तनान् ॥ ३० ॥ एभिस्तदा मया वीर संग्रामे तारकामये । दैतेयानां सहस्राणि संयतानि महात्मनाम् ॥ ३१ ॥ तस्मादिमान् महासत्त्व मत्प्रसादसमुत्थितान् । गृहाण न हि ते मुच्येदन्तकोऽप्याततायिनः ॥ ३२ ॥ अनेन त्वं यदास्त्रेण सङ्ग्रामे विचरिष्यसि । तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः ॥ ३३ ॥

वैशम्पायन उवाच । ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत । दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ॥ ३४ ॥ प्रीतोऽहमपि ते प्राज्ञ पाण्डवेय महाबल । त्वया सह समागम्य अजितेन तथैव च ॥ ३५ ॥ सव्यसाचिन्महाबाहो पूर्व्वदेव सनातन । सहास्माभिर्भवान् श्रान्तः पुराकल्पेषु नित्यशः ॥ ३६ ॥ दर्शनात्ते

त्विदं दिव्यं प्रदिशामि नरर्षभ। अमनुष्यान्महाबाहो दुर्जया-
नपि जेष्यसि ॥ ३७ ॥ मत्तश्चैव भवानाशु गृह्णात्वस्त्रमनुत्तमम्।
अनेन त्वमनीकानि धार्त्तराष्ट्रस्य धक्ष्यसि ॥ ३८ ॥ तदिदं प्रति-
गृह्णीष्व अन्तर्द्धानं प्रियं मम। ओजस्तेजो द्युतिकरं प्रस्वापन-
मरातिनुत् ॥ ३९ ॥ महात्मना शङ्करेण त्रिपुरं निहतं यदा।
तदैतदस्त्रं निर्मुक्तं येन दग्धा महासुराः ॥ ४० ॥ त्वदर्थमुद्यत-
च्चेदं मया सत्यपराक्रम। त्वमर्हो धारणे चास्य मेरुप्रतिमगौरव
॥ ४१ ॥ ततोऽर्जुनो महाबाहुर्विधिवत् कुरुनन्दनः। कौवेर-
मभिप्रग्राह दिव्यमस्त्रं महाबलः ॥ ४२ ॥ ततोऽब्रवीद्देवराजः
पार्थमक्लिष्टकारिणम्। सान्त्वयन् श्लक्ष्णया वाचा मेघदुन्दुभि-
निस्वनः ॥ ४३ ॥ कुन्तीमातर्महाबाहो त्वमीशानः पुरातनः।
परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिङ्गतः ॥ ४४ ॥ देवकार्यन्तु
सुमहत्त्वया कार्य्यमरिन्दम। आरोढ़व्यस्त्वया स्वर्गः सज्जीभव
महाद्युते ॥ ४५ ॥ रथ मातलिसंयुक्त आगन्ता तत्कृते महीम्।
तत्र तेऽहं प्रदास्यमि दिव्यान्यस्त्राणि कौरव ॥ ४६ ॥ तान् दृष्ट्वा
लोकपालांस्तु समेतान् गिरिमूर्द्धनि। जगाम विस्मयं धीमान्
कुन्तीपुत्रो धनञ्जयः ॥ ४७ ॥ ततोऽर्जुनो महातेजा लोकपालान्
समागतान्। पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि ॥ ४८ ॥
ततः प्रतिययुर्देवाः प्रतिमान्य धनञ्जयम्। यथागतेन विबुधाः
सर्वे काममनोजवाः ॥ ४९ ॥ ततोऽर्जुनो मुदं लेभे लब्धास्त्रः
पुरुषर्षभः। कृतार्थमथ चात्मानं स मेने पूर्णमानसम् ॥ ५० ॥

इति आरण्यपर्वणि कैरातपर्वणि इन्द्रादिदेवप्रस्थाने एक-
चत्वारिंशोऽध्यायः समाप्तञ्च कैरातपर्व ॥ ४१ ॥

---

अथ इन्द्रलोकाभिगमनपर्व ।

वैशम्पायन उवाच । गतेषु लोकपालेषु पार्थः शत्रुनिवर्हणः । चिन्तयामास राजेन्द्र देवराजरथं प्रति ॥ १ ॥ ततश्चिन्तयमानस्य गुडाकेशस्य धीमतः । रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ २ ॥ नभो वितिमिरं कुर्वन् जलदान् पाटयन्निव । दिशः सम्पूरयन्नादैर्महामेघरवोपमैः ॥ ३ ॥ असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः । दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ॥ ४ ॥ तथैवाशनयश्चैव चक्रयुक्तास्तुलागुडाः । वायुस्फोटाः सनिर्घाता महामेघस्वनास्तथा ॥ ५ ॥ तत्र नागा महाकाया ज्वलितास्याः सुदारुणाः । सिताभ्रकूटप्रतिमाः संहताश्च तथोपलाः ॥ ६ ॥ दशवाजिसहस्राणि हरीणां वातरंहसाम् । वहन्ति यं नेत्रमुषं दिव्यं मायामयं रथम् ॥ ७ ॥ तत्रापश्यन्महानीलं वैजयन्तं महाप्रभम् । ध्वजमिन्दीवरश्यामं वंशं कनकभूषणम् ॥ ८ ॥ तस्मिन्रथे स्थितं सूतं तप्तहेमविभूषितम् । दृष्ट्वा पार्थो महाबाहुर्देवमेवान्वतर्कयत् ॥ ९ ॥ तथा तर्कयतस्तस्य फाल्गुनस्याथ मातलिः । सन्नतः प्रश्रितो भूत्वा वाक्यमर्जुनमब्रवीत् ॥ १० ॥

मातलिरुवाच । भो भोः शक्रात्मज श्रीमान् शक्रस्त्वां द्रष्टुमिच्छति । आरोहतु भवान् शीघ्रं रथमिन्द्रस्य सम्मतम् ॥ ११ ॥ आह मामसरश्रेष्ठः पिता तव शतक्रतुः । कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः ॥ १२ ॥ एष शक्रः परिवृतो देवैरृषिगणैस्तथा । गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते ॥ १३ ॥ अस्माल्लोकाद्देवलोकं पाकशासनशासनात् । आरोह त्वं मया सार्द्धं लब्धास्त्रः पुनरेष्यसि ॥ १४ ॥

अर्जुन उवाच । मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमम् । राजसूयाश्वमेधानां शतैरपि सुदुर्लभम् ॥ १५ ॥ पार्थिवैः सुमहाभागैर्यज्वभिर्भूरिदक्षिणैः । दैवतैर्वा समारोढुं

दानवैर्त्रा रथोत्तमम् ॥ १६ ॥ नातप्ततपसा शक्य एष दिव्यो महारथः। द्रष्टुं वाप्यथवा स्प्रष्टुमारोढुं कुत एव च ॥ १७ ॥ त्वयि प्रतिष्ठितं साधो रथस्थे स्थिरवाजिनि। पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥ १८ ॥

वैशम्पायन उवाच। तस्य तद्वचनं श्रुत्वा मातलिः शक्रसारथिः। आरुरोह रथं शीघ्रं हयान् येमे च रश्मिभिः ॥१९॥ ततोऽर्जुनो हृष्टमना गङ्गायामाप्लुतः शुचिः। जजाप जप्यं कौन्तेयो विधिवत् कुरुनन्दनः ॥ २० ॥ ततः पितॄन् यथान्यायं तर्पयित्वा यथाविधि। मन्दरं शैलराजन्तमाप्रष्टुमुपचक्रमे ॥२०॥ साधूनां पुण्यशीलानां मुनीनां पुण्यकर्मणाम्। त्वं सदा संश्रयः शैल स्वर्गमार्गाभिकाङ्क्षिणाम् ॥ २१ ॥ त्वत्प्रसादात् सदा शैल ब्राह्मणाः क्षत्रिया विशः। स्वर्गं प्राप्ताश्चरन्तिस्म देवैः सह गतव्यथाः ॥ २२ ॥ अद्रिराज महाशैल मुनिसंश्रय तीर्थवन्। गच्छाम्यामन्त्रयिता त्वां सुखमस्म्युषितस्त्वयि ॥ २३ ॥ तव सानूनि कुञ्जाश्च नद्यः प्रस्रवणानि च। तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः ॥ २४ ॥ फलानि च सुगन्धीनि भक्षितानि ततस्ततः। सुसुगन्धाश्च वार्य्योवास्त्वच्छरीरविनिःसृताः ॥ २५ ॥ अमृतास्वादनीया मे पीताः प्रस्रवणोदकाः। शिशुर्यथा पितुरङ्के सुसुखं वर्त्तते नग ॥ २६ ॥ तथा तवाङ्के ललितं शैलराज मया प्रभो। अप्सरोगणसङ्कीर्णे ब्रह्मघोषानुनादिते ॥ २७ ॥ सुखमस्म्युषितः शैल तव सानुषु नित्यदा। एवमुक्त्वार्जुनः शैलमामन्त्र्य परवीरहा ॥ २८ ॥ आरुरोह रथं दिव्यं द्योतयन्निव भास्करः। स तेनादित्यरूपेण दिव्येनाद्भुतकर्मणा ॥ २९ ॥ ऊर्द्ध्वमाचक्रमे धीमान् प्रहृष्टः कुरुनन्दनः। सोऽदर्शनपथं यातो मर्त्यानां धर्म्मचारिणाम् ॥ ३० ॥ ददर्शाद्भुतरूपाणि विभीनानि सहस्रशः। न तत्र सूर्य्यः सोमो वा द्योतते न च पावकः

॥ ३१ ॥ स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया । ताराद्रूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै ॥ ३२ ॥ दीपवद्विप्रकृष्टत्वात्तनूनि सुमहान्त्यपि । तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः ॥३३॥ ददर्श स्वेषु धिष्ण्येषु दीप्तिमन्ति स्वयार्चिषा । तत्र राजर्षयः सिद्धा वीराश्च निहता युधि ॥ ३४ ॥ तपसा च जितं स्वर्गं संपेतुः शतसङ्घशः । गन्धर्व्वाणां सहस्राणि सूर्य्यज्वलिततेजसाम् ॥ ३५ ॥ गुह्यकानामृषीणाञ्च तथैवाप्सरसां गणान् । लोकानात्मप्रभान् पश्यन् फाल्गुनो विस्मयान्वितः ॥ ३६ ॥ पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह । एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः ॥ ३७ ॥ यान् दृष्टवानसि विभो ताराद्रूपाणि भूतले । ततोऽपश्यत् स्थितं द्वारि शुभ्रं वैजयिनं गजम् ॥ ३८ ॥ ऐरावतञ्चतुर्द्दन्तं कैलासमिव शृङ्गिणम् । स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः ॥ ३९ ॥ व्यरोचत यथा पूर्व्वं मान्धाता पार्थिवोत्तमः । अतिचक्राम लोकान् स राज्ञां राजीवलोचनः ॥ ४० ॥ एवं स संक्रमंस्तत्र स्वर्गलोके महायशाः । ततो ददर्श शक्रस्य पुरीं ताममरावतीम् ॥ ४१ ॥

इति आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि शक्रपुरीदर्शने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

वैशम्पायन उवाच । स ददर्श पुरीं रम्यां सिद्धचारणसेविताम् । सर्व्वर्त्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ १ ॥ तत्र सौगन्धिकानाञ्च पुष्पाणां पुण्यगन्धिनाम् । उद्धीज्यमानो मिश्रेण वायुना पुण्यगन्धिनाम् ॥ २ ॥ नन्दनञ्च वनं दिव्यमप्सरोगणसेवितम् । ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ॥ ३ ॥ नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना । स लोकः पुण्यकर्तॄणां

नापि युद्धे पराङ्मुखैः ॥ ४ ॥ नायज्वभिर्नानृतिकैर्न वेदश्रुति-
वर्ज्जितैः। नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानवहिष्कृतैः ॥ ५ ॥ नापि
यज्ञहनैः क्षुद्रैर्द्रष्टुं शक्यः कथञ्चन। पानपैर्गुरुतल्पैश्च मांसा-
दैर्वा दुरात्मभिः ॥ ६ ॥ स तद्दिव्यं वनं पश्यन् दिव्यगीतनिना-
दितम्। प्रविवेश महाबाहुः शक्रस्य दयितां पुरीम् ॥ ७ ॥ तत्र
देवविमानानि कामगानि सहस्रशः। संस्थितान्यभियातानि
ददर्शायुतशस्तदा ॥ ८॥ संस्तूयमानो गन्धर्वैरप्सरोभिश्च पाण्डवः।
पुष्पगन्धवहैः पुण्यै र्वायुभिश्चानुवीजितः ॥ ९ ॥ ततो देवाः सग-
न्धर्वाः सिद्धाश्च परमर्षयः। हृष्टाः सम्पूजयामासुः पार्थमक्लिष्ट-
कारिणम् ॥ १० ॥ आशीर्वादैः स्तूयमानो दिव्यवादित्रनिस्वनैः।
प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितम् ॥ ११ ॥ नक्षत्रमार्गं
विपुलं सुरवीथीतिविश्रुतम्। इन्द्राज्ञया ययौ पार्थः स्तूयमानः
समन्ततः ॥ १२ ॥ तत्र साध्यास्तथा विश्वे मरुतोऽथाश्विनौ तथा।
आदित्या वसवो रुद्रास्तथा ब्रह्मर्षयोऽमलाः ॥ १३ ॥ राजर्षयश्च
बहवो दिलीपप्रमुखा नृपाः। तुम्बुरुर्नारदश्चैव गन्धर्वौ च
हाहाहुहू ॥ १४ ॥ तान् सर्वान् स समागम्य विधिवत् कुरु-
नन्दनः। ततोऽपश्यद्देवराजं शतक्रतुमरिन्दमः ॥ १५ ॥ ततः
पार्थो महाबाहुरवतीर्य्य रथोत्तमात्। ददर्श साक्षाद्देवेशं पितरं
पाकशासनम् ॥ १६ ॥ पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा।
दिव्यगन्धाधिवासेन व्यजनेन विधूयता ॥ १७ ॥ विश्वावसुप्रभृ-
तिभिर्गन्धर्वैस्तुतिवन्दिभिः। स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसाम-
सम्भवैः ॥ १८ ॥ ततोऽभिगम्य कौन्तेयः शिरसाभ्यगमद्बली। स
चैनं वृत्तपीनाभ्यां वाहुभ्यां प्रत्यगृह्णत ॥ १९ ॥ ततः शक्रासने
पुण्ये देवर्षिगणसेविते। शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके
॥ २० ॥ मूर्द्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा। अङ्कमारो-
पयामास प्रश्रयावनतं तदा ॥ २१ ॥ सहस्राक्षनियोगात् स पार्थः

शक्रासनं गतः । अध्यक्रामदमेयात्मा द्वितीय इव वासवः ॥ २२ ॥ ततः प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं मुखम् । स्पृश्य पुण्यगन्धेन करेण परिसान्त्वयन् ॥ २३ ॥ प्रमार्ज्यमानः शनकैर्बाहू चास्यायतौ शुभौ । ज्याशरक्षेपकठिनौ स्तम्भाविव हिरण्मयौ ॥ २४ ॥ वज्रग्रहणचिह्नेन करेण परिसान्त्वयन् । मुहुर्मुहुर्वज्रधरो बाहू चास्फोटयञ्छनैः ॥ २५ ॥ स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक् । हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा ॥ २६ ॥ एकासनोपविष्टौ तौ शोभयाञ्चक्रतुः सभाम् । सूर्य्यचन्द्रमसौ व्योम चतुर्द्दश्यामिवोदितौ ॥ २७ ॥ तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना । गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ॥२८॥ घृताची मेनका रम्भा पूर्वचित्तिः स्वयम्प्रभा । उर्वशी मिश्रकेशी च दण्डगौरी वरूथिनी ॥ २९ ॥ गोपाली सहजन्या च कुम्भयोनिः प्रजागरा । चित्रसेना चित्रलेखा सहा च मधुरस्वना ॥ ३० ॥ एताश्चान्याश्च ननृतुस्तत्र तत्र सहस्रशः । चित्तप्रसादने युक्ताः सिद्धानां पद्मलोचनाः ॥ ३१ ॥ महाकटितटश्रोण्यः कम्पमानैः पयोधरैः । कटाक्षहावमाधुर्य्यैश्चेतोबुद्धिमनोहरैः ॥ ३२ ॥

इति आरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि इन्द्रसभादर्शने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

वैशम्पायन उवाच । ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम् । शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥ १ ॥ पाद्यमाचमनीयञ्च प्रतिग्राह्य नृपात्मजम् । प्रवेशयामासुरथो पुरन्दरनिवेशनम् ॥ २ ॥ एवं सम्पूजितो जिष्णुरुवास भवने पितुः । उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ३ ॥ शक्रस्य हस्ताद्दयितं वज्रमस्त्रञ्च दुःसहम अशनीश्च महानादा मेघबर्हिण-

लक्षणाः ॥ ४ ॥ गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन् सस्मार पाण्डवः ।
पुरन्दरनियोगाच्च पञ्चाब्दानवसत् सुखी ॥ ५ ॥ ततः शक्रोऽब्र-
वीत् पार्थं कृतास्त्रं काल आगते । नृत्यं गीतञ्च कौन्तेय चित्र-
सेनादवाप्नुहि ॥ ६ ॥ वादित्रं देवविहितं नृलोके यन्न विद्यते ।
तदर्ज्जयस्व कौन्तेय श्रेयो वै ते भविष्यति ॥ ७ ॥ सखायं प्रददौ
चास्य चित्रसेनं पुरन्दरः । स तेन सह सङ्गम्य रेमे पार्थो निरा-
मयः ॥ ८ ॥ गीतवादित्रनृत्यानि भूय एवादिदेश ह । तथापि
नालभच्छर्म्म तरस्वी द्यूतकारितम् ॥ ९ ॥ दुःशासनवधामर्षी
शकुनेः सौवलस्य च । ततस्तेनातुलां प्रीतिमुपागम्य क्वचित्
क्वचित् । गान्धर्व्वमतुलं नृत्यं वादित्रञ्चोपलब्धवान् ॥ १० ॥ स
शिक्षितो नृत्यगुणाननेकान् वादित्रगीतार्थगुणांश्च सर्वान् । न
शर्म्म लेभे परवीरहन्ता भ्रातॄन् स्मरन्मातरञ्चैव कुन्तीम् ॥ ११ ॥

इति आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि अर्ज्जुनास्त्रादि-
शिक्षायां चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

वैशम्पायन उवाच । कदाचिदथ तं शक्रश्चित्रसेनं रहोऽब्र-
वीत् । पार्थस्य चक्षुरुर्व्वश्यां सक्तं विज्ञाय वासवः ॥ १ ॥ गन्धर्व्व-
राज गच्छाद्य प्रहितोऽप्सरसां वराम् । उर्व्वशीं पुरुषव्याघ्र
सोपतिष्ठतु फाल्गुनम् ॥ २ ॥ यथार्च्चितो गृहीतास्त्रो विद्यायान्
मन्नियोगतः । तथा त्वया विधातव्यः स्त्रीषु सङ्गविशारदः ॥ ३ ॥
एवमुक्तस्तथेत्युक्त्वा सोऽनुज्ञां प्राप्य वासवात् । गन्धर्व्वराजोऽप्सर-
समभ्यगादुर्व्वशीं वराम् ॥ ४ ॥ तां दृष्ट्वा विदितो हृष्टः स्वागते-
नार्च्चितस्तथा । सुखासीनः सुखासीनां स्मितपूर्व्वं वचोऽब्रवीत्
॥ ५ ॥ विदितं तेऽस्तु सुश्रोणि प्रहितोऽहमिहागतः । त्रिदिव-
स्यैकराजेन त्वत्प्रसादाभिनन्दिना ॥ ६ ॥ यस्तु देवमनुष्येषु

प्रख्यातः स्वहजैर्गुणैः। श्रिया शीलेन रूपेण व्रतेन च दमेन च ॥७॥
प्रख्यातो बलवीर्य्येण सम्मतः प्रतिभानवान्। वर्च्चस्वी तेजसा
युक्तः क्षमावान् वीतमत्सरः ॥ ८ ॥ साङ्गोपनिषदान् वेदान् चतु-
राख्यानपञ्चमान्। योऽधीते गुरुशुश्रूषां मेधाञ्चाष्टगुणाश्रयाम
॥ ९ ॥ ब्रह्मचर्य्येण दाक्ष्येण प्रसवैर्वयसापि च। एको वै रक्षिता
चैव त्रिदिवं मघवानिव ॥ १० ॥ अकत्थनो मानयिता स्थूल-
लक्ष्यः प्रियम्वदः। सुहृदश्चान्नपानेन विविधेनाभिवर्षति ॥ ११ ॥
सत्यवाक् पूजितो वक्ता रूपवाननहंकृतः। भक्तानुकम्पी कान्तश्च
प्रियश्च स्थिरसङ्गरः ॥ १२ ॥ प्रार्थनीयैर्गुणगणैर्महेन्द्रवरुणोपमः।
विदितस्तेऽर्जुनो वीरः स स्वर्गफलमाप्नुयात् ॥ १३ ॥ तव शक्रा-
भ्यनुज्ञातः पादावद्य प्रपद्यताम। तदेवं कुरु कल्याणि प्रपन्नस्त्वां
धनञ्जयः ॥ १४ ॥ एवमुक्ता स्मितं कृत्वा सम्मानं बहु मन्य च।
प्रत्यवाचोर्वशी प्रीत्या चित्रसेनमनिन्दिता ॥ १५ ॥'यस्त्वस्य कथितः
सत्यो गुणोद्देशस्त्वया मम। तं श्रुत्वाव्यथयं पुंसो वृणुयां कि-
मतोऽर्जुनम् ॥ १६ ॥ महेन्द्रस्य नियोगेन त्वत्तः संप्रणयेन च।
तस्य चाहं गुणौघेन फाल्गुने जातमन्मथा। गच्छ त्वं हि यथा-
काममागमिष्याम्यहं सुखम् ॥ १७ ॥

इति आरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि चित्रसेनोर्वशी-
संवादे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

वैशम्पायन उवाच। ततो विसृज्य गन्धर्वं कृतकृत्यं शुचि-
स्मिता। उर्वशी चाकरोत् स्नानं पार्थप्रार्थनलालसा ॥ १ ॥
स्नानालङ्करणैर्हृद्यैर्गन्धमाल्यैश्च सुप्रभैः। धनञ्जयस्य रूपेण
शरैर्मन्मथचोदितैः ॥ २ ॥ अतिविद्धेन मनसा मन्मथेन प्रदी-
पिता। दिव्यास्तरणसंस्तीर्णे विस्तीर्णे शयनोत्तमे ॥ ३ ॥ चित्त-

सङ्कल्पभावेन स्वचित्तानन्यमानसा। मनोरथेन संप्राप्तं रमत्येनं हि फाल्गुनम् ॥ ४ ॥ निर्गम्य चन्द्रोदयने विगाढ़े रजनीमुखे। प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं प्रति ॥ ५ ॥ मृदुकुञ्चितदीर्घेण कुसुमोत्करधारिणा। केशहस्तेन ललना जगामाथ विराजती ॥ ६ ॥ भ्रूक्षेपालापमाधुर्य्यैः कान्त्या सौम्यतयापि च। शशिनं वक्त्रचन्द्रेण साह्वयन्तीव गच्छती ॥ ७ ॥ दिव्याङ्गरागौ सुमुखौ दिव्यचन्दनरूषितौ। गच्छन्त्या हारविकचौ स्तनौ तस्या ववल्गतुः ॥ ८ ॥ स्तनोद्वहनसङ्क्षोभान्नम्यमाना पदे पदे। त्रिवलीदामचित्रेण मध्येनातीव शोभिना ॥ ९ ॥ अधोभूधरविस्तीर्णं नितम्बोन्नतपीवरम्। मन्मथायतनं शुभ्रं रसनादामभूषितम् ॥ १० ॥ ऋषीणामपि दिव्यानां मनोव्याघातकारणम्। सूक्ष्मवस्त्रधरं रेजे जघनं निरवद्यवत् ॥ ११ ॥ गूढ़गुल्फधरौ पादौ ताम्रायततलाङ्गुलौ। कूर्मपृष्ठोन्नतौ चापि शोभेते किङ्किणीकिणौ ॥ १२ ॥ सीधुपानेन चाल्पेन तुष्टाथ मदनेन च। विलासनैश्च विविधैः प्रेक्षणीयतराभवत् ॥ १३ ॥ सिद्धचारणगन्धर्वैः सा प्रयाता विलासिनी। बह्वाश्चर्य्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः ॥ १४ ॥ सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता। तन्वभ्रावृता व्योम्नि चन्द्रलेखेव गच्छती ॥ १५ ॥ ततः प्राप्ता क्षणेनैव मनःपवनगामिनी। भवनं पाण्डुपुत्रस्य फाल्गुनस्य शुचिस्मिता ॥ १६ ॥ तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता। अर्जुनस्य नरश्रेष्ठ उर्वशी शुभलोचना ॥ १७ ॥ उपातिष्ठत तद्वेश्म निर्मलं सुमनोहरम्। स शङ्कितमना राजन् प्रत्युद्गच्छत तां निशि ॥ १८ ॥ दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः। तदाभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् ॥ १९ ॥

अर्जुन उवाच। अभिवादे त्वां शिरसा प्रवराप्सरसां वरे। किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपस्थितः ॥ २० ॥ फाल्गुनस्य

वचः श्रुत्वा गतसंज्ञा तदोर्वशी। गन्धर्ववचनं सर्वं श्रावयामास तं तदा ॥ २१ ॥

उर्वश्युवाच। यथा मे चित्रसेनेन कथितं मनजोत्तम। तत्तेऽहं संप्रवक्ष्यामि यथा चाहमिहागता ॥ २२ ॥ उपस्थाने महेन्द्रस्य वर्त्तमाने मनोरमे। तवागमनतो वृत्ते स्वर्गस्य परमोत्सवे ॥ २३ ॥ रुद्राणाञ्चैव सान्निध्यमादित्यानाञ्च सर्वशः। समागमेऽश्विनोश्चैव वसूनाञ्च नरोत्तम ॥ २४ ॥ महर्षीणाञ्च सङ्घेषु राजर्षिप्रवरेषु च। सिद्धचारणयक्षेषु महोरगगणेषु च ॥२५॥ उपविष्टेषु सर्व्वेषु स्थानमानप्रभावतः। ऋद्ध्या प्रज्वलमानेषु अग्निसोमार्कवर्ष्मसु ॥ २६ ॥ वीणासु वाद्यमानासु गन्धर्वैः शक्रनन्दन। दिव्ये मनोरमे गेये प्रवृत्ते पृथुलोचन ॥ २७ ॥ सर्वाप्सरःसु मुख्यासु प्रनृत्यासु कुरूद्वह। त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान् ॥ २८ ॥ तत्र चावभृथे तस्मिन्नुपस्थाने दिवौकसाम्। तव पित्राभ्यनुज्ञाता गताः स्वं स्वं गृहं सुराः ॥ २९ ॥ तथैवाप्सरसः सर्वा विशिष्टाः स्वगृहं गताः। अपि चान्याश्च शत्रुघ्न तव पित्रा विसर्ज्जिताः ॥ ३० ॥ ततः शक्रेण सन्दिष्टश्चित्रसेनो ममान्तिकम्। प्राप्तः कमलपत्राक्ष स च मामब्रवीदथ ॥ ३१ ॥ त्वत्कृतेऽहं सुरेशेन प्रेषितो वरवर्णिनि। प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह ॥ ३२ ॥ शक्रतुल्यं रणे शूरं सदौदार्य्यगुणान्वितम्। पार्थं प्रार्थय सुश्रोणि त्वमित्येव तदाब्रवीत् ॥ ३३ ॥ ततोऽहं समनुज्ञाता तेन पित्रा च तेऽनघ। तवान्तिकमनुप्राप्ता शुश्रूषितुमरिन्दम ॥ ३४ ॥ तद्गुणाकृष्टचित्ताहमनङ्गवशमागता। चिराभिलषितो वीर ममाप्येष मनोरथः ॥ ३५ ॥

वैशम्पायन उवाच। तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जावृतोऽर्ज्जुनः। उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशालये ॥ ३६ ॥

अर्जुन उवाच। दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भाविनि।

गुरुदारैः समाना मे निश्चयेन वरानने ॥ ३७ ॥ यथा कुन्ती महाभागा यथेन्द्राणी शची मम । तथा त्वमपि कल्याणि नात्र कार्य्या विचारणा ॥ ३८ ॥ यच्चेक्षितासि विस्पष्टं विशेषेण मया शुभे । तच्च कारणपूर्वं हि शृणु सत्यं शुचिस्मिते ॥ ३९ ॥ इयं पौरववंशस्य जननी मुदितेति च । त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचनः ॥ ४० ॥ न मामर्हसि कल्याणि अन्यथा ध्यातुमप्सरः । गुरोर्गुरुतरा मे त्वं मम त्वं वंशवर्द्धिनी ॥ ४१ ॥

उर्वश्युवाच । अनावृतास्तु सर्वाः स्म देवराजाभिनन्दन । गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥ ४२ ॥ पुरोर्वंशे हि ये पुत्रा नप्तारो वा त्विहागताः । तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रमः ॥ ४३ ॥ तत् प्रसीद न मामार्त्तां विसर्जयितुमर्हसि । हृच्छयेन च सन्तप्तां भक्तां च भज मानद ॥ ४४ ॥

अर्जुन उवाच । शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिन्दिते । शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ॥ ४५ ॥ यथा कुन्ती च माद्री च शची चैव ममानघे । तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ॥ ४६ ॥ गच्छ मूर्द्ध्ना प्रपन्नोऽस्मि पादौ ते वरवर्णिनि । त्वं हि मे मातृवत् पूज्या रक्ष्योऽहं पुत्रवत्त्वया ॥ ४७ ॥

वैशम्पायन उवाच । एवमुक्ता तु पार्थेन उर्वशी क्रोधमूर्च्छिता । वेपन्ती भ्रुकुटीवक्त्रा शशापाथ धनञ्जयम् ॥ ४८ ॥

उर्वश्युवाच । तव पित्राभ्यनुज्ञातां स्वयञ्च गृहमागताम् । यस्मान्मां नाभिनन्देथाः कामबाणवशङ्गताम् ॥ ४९ ॥ तस्मात्त्वं नर्त्तनः पार्थ स्त्रीमध्ये मानवर्जितः । अपुमानिति विख्यात षण्ढवद्विचरिष्यसि ॥ ५० ॥

वैशम्पायन उवाच । एवं दत्त्वार्जुने शापं स्फुरदोष्ठी श्वसन्त्यथ । पुनः प्रत्यागता क्षिप्रमुर्वशी गृहमात्मनः ॥ ५१ ॥ ततोऽर्जुनस्त्वरमाणश्चित्रसेनमरिन्दमः । संप्राप्य रजनीवृत्तं तदुर्वश्या

यथा तथा ॥ ५२ ॥ निवेदयामास तदा चित्रसेनाय पाण्डवः ।
तत्र चैव यथावृत्तं शापञ्चैव पुनः पुनः ॥ ५३ ॥ न्यवेदयच्च शक्रस्य
चित्रसेनोऽपि सर्व्वशः । तत आनाय्य तनयं विविक्ते हरिवाहनः
॥ ५४ ॥ सान्त्वयित्वा शुभैर्वाक्यैः स्मयमानोऽभ्यभाषत । सुपु-
त्राद्य पृथा तात त्वया पुत्रेण सत्तम ॥ ५५ ॥ ऋषयोऽपि हि
धैर्य्येण जिता वै ते महाभुज । यत्तु दत्तवती शापमुर्व्वशी तव
मानद ॥ ५६ ॥ स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ।
अज्ञातवासो वस्तव्यो भवद्भिर्भूतलेऽनघ ॥ ५७ ॥ वर्षे त्रयोदशे
वीर तं तत्र क्षपयिष्यसि । तेन नर्त्तनवेशेन अपुंस्त्वेन तथैव च
॥ ५८ ॥ वर्षमेकं विहृत्यैवं ततः पुंस्त्वमवाप्स्यसि । एवमुक्तस्तु
शक्रेण फाल्गुनः परवीरहा ॥ ५९ ॥ मुदं परमिकां लेभे न च
शापं व्यचिन्तयत् । चित्रसेनेन सहितो गन्धर्व्वेण यशस्विना ॥ ६० ॥
रेमे स स्वर्गभवने पाण्डुपुत्रो धनञ्जयः । य इदं शृणुयान्नित्यं
वृत्तं पाण्डुसुतस्य वै । न तस्य कामः कामेषु पापकेषु प्रवर्त्तते
॥ ६१ ॥ इदममरवरात्मजस्य घोरं शुचिचरितं विनिशम्य फाल्गु-
नस्य । व्यपगतमददम्भरागदोषास्त्रिदिवगताभिरमन्ति मान-
वेन्द्राः ॥ ६२ ॥

इति आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि उर्व्वशीशापे
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

वैशम्पायन उवाच । कदाचिदटमानस्तु महर्षिरुत लोमशः ।
जगाम शक्रभवनं पुरन्दरदिदृक्षया ॥ १ ॥ स समेत्य नमस्कृत्य
देवराजं महामुनिः । ददर्शार्द्धासनगतं पाण्डवं वासवस्य हि ॥ २ ॥
ततः शक्राभ्यनुज्ञात आसने विष्टरोत्तरे । निषसाद द्विजश्रेष्ठः
पूज्यमानो महर्षिभिः ॥ ३ ॥ तस्य दृष्ट्वाभवद्बुद्धिः पार्थमिन्द्रासने

स्थितम्। कथन्तु क्षत्रियः पार्थः शक्रासनमवाप्तवान् ॥ ४ ॥ किं न्वस्य सुकृतं कर्म के लोका वै विनिर्ज्जिताः। य एवमनुसम्प्राप्तः स्थानं देवनमस्कृतम् ॥ ५ ॥ तस्य विज्ञाय सङ्कल्पं शक्रो वलनिसूदनः। लोमशं प्रहसन् वाक्यमिदमाह शचीपतिः ॥ ६ ॥ ब्रह्मर्षे श्रूयतां यत्ते मनसैतद्विवक्षितम्। नायं केवलमर्त्त्यो वै मानुषत्वमुपागतः ॥ ७ ॥ महर्षे मम पुत्रोऽयं कुन्त्यां जातो महाभुजः। अस्त्रहेतोरिह प्राप्तः कस्माच्चित् कारणान्तरात् ॥ ८ ॥ अहो नैनं भवान् वेत्ति पुराणमृषिसत्तमम्। शृणु मे वदतो ब्रह्मन् योऽयं यश्चास्य कारणम् ॥ ९ ॥ नरनारायणौ यौ तौ पुराणावृषिसत्तमौ। ताविमावनुजानीहि हृषीकेशधनञ्जयौ ॥ १० ॥ विख्यातौ त्रिषु लोकेषु नरनारायणावृषी। कार्य्यार्थमवतीर्णौ तौ पृथ्वीं पुण्यप्रतिश्रयाम् ॥ ११ ॥ यन्न शक्यं सुरैर्द्रष्टुमृषिभिर्वा महात्मभिः। तदाश्रमपदं पुण्यं वदरीनामविश्रुतम् ॥ १२ ॥ स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च। यतः प्रववृते गङ्गा सिद्धचारणसेविता ॥ १३ ॥ तौ मन्नियोगाद्ब्रह्मर्षे क्षितौ जातौ महाद्युती। भूमेर्भारावतरणं महावीर्य्यौ करिष्यतः ॥ १४ ॥ उद्वृत्ता ह्यसुराः केचिन्निवातकवचा इति। विप्रियेषु स्थितास्माकं वरदानेन मोहिताः ॥ १५ ॥ तर्कयन्ते सुरान् हन्तुं वलदर्पसमन्विताः। देवान्न गणयन्त्येते तथा दत्तवरा हि ते ॥ १६ ॥ पातालवासिनो रौद्रा दनोः पुत्रा महावलाः। सर्वदेवनिकाया हि नालं योधयितुं हि तान् ॥ १७ ॥ योऽसौ भूमिगतः श्रीमान् विष्णुर्मधुनिसूदनः। कपिलो नाम देवोऽसौ भगवानजितो हरिः ॥ १८ ॥ येन पूर्वं महात्मानः खनमाना रसातलम्। दर्शनादेव निहताः सागरस्यात्मजा विभो ॥ १९ ॥ तेन कार्य्यं महत् कार्य्यमस्माकं द्विजसत्तम। पार्थेन च महायुद्धे समेताभ्यां न संशयः ॥ २० ॥ सोऽसुरान् दर्शनादेव

शक्तो हन्तुं सहानुगान्। निवातकवचान् सर्वान् नागानिव महाह्रदे ॥ २१ ॥ किन्तु नाल्पेन कार्य्येण प्रबोध्यो मधुसूदनः। तेजसः सुमहाराशिः प्रबुद्धः प्रदहेज्जगत् ॥ २२ ॥ अयं तेषां समस्तानां शक्तः प्रतिसमासने। तान्निहत्य रणे शूर पुनर्यास्यति मानुषान् ॥ २३ ॥ भवानस्मन्नियोगेन यातु तावन्महीतलम्। काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरम् ॥ २४ ॥ स वाच्यो मम सन्देशाद्धर्मात्मा सत्यसङ्गरः। नोत्कण्ठा फाल्गुने कार्य्या कृतास्त्रः शीघ्रमेष्यति ॥ २५ ॥ नाशुद्धबाहुवीर्य्येण नाकृतास्त्रेण वा रणे। भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् ॥ २६ ॥ गृहीतास्त्रो गुड़ाकेशो महाबाहुर्महामनाः। नृत्यवादित्रगीतानां दिव्यानां पारमीयिवान् ॥ २७ ॥ भवानपि विविक्तानि तीर्थानि मनुजेश्वर। भ्रातृभिः सहितः सर्वैर्द्रष्टुमर्हत्यरिन्दम ॥ २८ ॥ तीर्थेष्वाप्लुत्य पुण्येषु विपाप्मा विगतज्वरः। राज्यं भोक्ष्यसि राजेन्द्र सुखी विगतकल्मषः ॥ २९ ॥ भवांश्चैनं द्विजश्रेष्ठ पर्य्यटन्तं महीतलम्। त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः ॥ ३० ॥ गिरिदुर्गेषु च सदा देशेषु विषमेषु च। वसन्ति राक्षसा रौद्रा-स्तेभ्यो रक्षां विधास्यति ॥ ३१ ॥ एवमुक्तो महेन्द्रेण वीभत्सु-रपि लोमशम्। उवाच प्रयतो वाक्यं रक्षेथाः पाण्डुनन्दनम् ॥ ३२ ॥ यथागुप्तस्त्वया राजा चरेत्तीर्थानि सत्तम। दानं दद्याद्यथा चैव तथा कुरु महामुने ॥ ३३ ॥

वैशम्पायन उवाच। तथेति सम्प्रतिज्ञाय लोमशः सुमहातपाः। काम्यकं वनमुद्दिश्य समुपायान्महीतलम् ॥ ३४ ॥ ददर्श तत्र कौन्तेयं धर्म्मराजमरिन्दमम्। तापसैर्भ्रातृभिश्चैव सर्व्वतः परिवारितम् ॥ ३५ ॥

इति आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि लोमशागमने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

जनमेजय उवाच। अत्यद्भुतमिदं कर्म्म पार्थस्यामिततेजसः।
धृतराष्ट्रो महाप्राज्ञः श्रुत्वा विप्र किमब्रवीत् ॥ १ ॥

वैशम्पायन उवाच। शक्रलोकगतं पार्थं श्रुत्वा राजाम्बिकासुतः। द्वैपायनादृषिश्रेष्ठात् सञ्जयं वाक्यमब्रवीत् ॥ २ ॥

धृतराष्ट्र उवाच। श्रुतं मे सूत कार्त्स्न्येन कर्म्म पार्थस्य धीमतः। कच्चित्तवापि विदितं याथातथ्येन सारथे ॥ ३ ॥ प्रमत्तो ग्राम्यधर्म्मेषु मन्दात्मा पापनिश्चयः। मम पुत्रः सुदुर्बुद्धिः पृथिवीं घातयिष्यति ॥ ४ ॥ यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः। त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ॥ ५ ॥ अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान्। कोऽर्जुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः ॥ ६ ॥ मम पुत्रा दुरात्मानः सर्वे मृत्युवशानुगाः। येषां युद्धं दुराधर्षैः पाण्डवैः प्रत्युपस्थितम् ॥७॥ तथैव च न पश्यामि युधि गाण्डीवधन्वनः। अनिशञ्चिन्तमानोऽपि य एनमुदियाद्रथी ॥ ८ ॥ द्रोणकर्णौ प्रतीयातां यदि भीष्मोऽपि वा रणे। महान् स्यात् संशयो लोके तत्र पश्यामि नो जयम् ॥ ९ ॥ घृणी कर्णः प्रमादी च आचार्य्यः स्थविरो गुरुः। अमर्षी बलवान् पार्थः संरम्भी दृढविक्रमः ॥ १० ॥ सभवेत्तुमुलं युद्धं सर्वशोऽप्यपराजितम्। सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ॥ ११ ॥ अपि सर्वेश्वरत्वं हि ते वाञ्छन्त्यपराजिताः। वधे नूनं भवेच्छान्तिरेतेषां फाल्गुनस्य वा ॥ १२ ॥ न तु हन्तार्जुनस्यास्ति जेता वास्य न विद्यते। मन्युस्तस्य कथं शाम्येन्मन्दं प्रति समुत्थितः ॥ १३ ॥ त्रिदशेशसमो वीरः खाण्डवेऽग्निमतर्पयत्। जिगाय पार्थिवान् सर्वान् राजसूये महाक्रतौ ॥ १४ ॥ शेषं कुर्य्याद्गिरेर्वज्रो निपतन्मूर्ध्नि सञ्जय। न तु कुर्य्युः शरा शेषं क्षिप्तास्तात किरीटिना ॥ १५ ॥ यथा हि किरणा भानोस्तपन्तीह चराचरम्। तथा पार्थभुजोत्सृष्टाः शरास्तप्स्यन्ति मत्सुतान् ॥१६॥

अपि तद्रथघोषेण भयार्त्ताः सव्यसाचिनः। प्रतिभाति विदीर्णेव सर्व्वतो भारती चमूः ॥ १७ ॥ यदुद्वमन् प्रवपंश्चैव वाणान् स्थाताततायो समरे किरीटी। सृष्टोऽन्तकः सर्व्वहरो विधात्रा भवेद्यथा तद्वदपारणीयः ॥ १८ ॥

इति आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि धृतराष्ट्रविलापे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

सञ्जय उवाच। यदेतत् कथितं राजंस्त्वया दुर्य्योधनं प्रति। सर्व्वमेतद्यथा तत्त्वं नैतन्मिथ्या महीपते ॥ १ ॥ मन्युना हि समाविष्टाः पाण्डवास्ते महौजसः। दृष्ट्वा कृष्णां सभां नीतां धर्म्मपत्नीं यशस्विनीम् ॥ २ ॥ दुःशासनस्य ता वाचः श्रुत्वा ते दारुणोदयाः। कर्णस्य च महाराज जुगुप्सन्तीति मे मतिः ॥ ३ ॥ श्रुतं हि मे महाराज यथा पार्थेन संयुगे। एकादशतनुः स्थाणुर्धनुषा परितोषितः ॥ ४ ॥ कैरातं वेशमास्थाय योधयामास फाल्गुनम्। जिज्ञासुः सर्व्वदेवेशः कपर्द्दी भगवान् स्वयम् ॥ ५ ॥ तत्रैनं लोकपालास्ते दर्शयामासुरच्युतम्। अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभम् ॥ ६ ॥ नैतदुत्सहते चान्यो लब्धुमन्यत्र फाल्गुनात्। साक्षाद्दर्शनमेतेषामीश्वराणां नरो भुवि ॥ ७ ॥ महेश्वरेण यो राजन्न जीर्णो ह्यष्टमूर्त्तिना। कस्तमुत्सहते वीरो युद्धे जरयितुं पुमान् ॥ ८ ॥ आसादितमिदं घोरं तुमुलं लोमहर्षणम्। द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् ॥ ९ ॥ यत्तु प्रस्फुरमाणौष्ठो भीमः प्राह वचोऽर्थवत्। दृष्ट्वा दुर्य्योधनेनोरू द्रौपद्या दर्शितावुभौ ॥ १० ॥ ऊरू भेत्स्यामि ते पाप गदया भीमवेगया त्रयोदशानां वर्षाणामन्ते दुर्द्यूतदेविनः ॥ ११ ॥ सर्व्वे प्रहरतां श्रेष्ठाः सर्व्वे चामिततेजसः। सर्व्वे सर्व्वास्त्रविद्वांसो

देवैरपि सुदुर्ज्जयाः॥ १२॥ मन्ये मन्युसमुद्भूताः पुत्राणां तव संयुगे। अन्तं पार्थाः करिष्यन्ति भार्य्यामर्षसमन्विताः॥ १३॥

धृतराष्ट्र उवाच। किं कृतं सूत कर्णेन वदता परुषं वचः। पर्य्याप्तं वैरमेतावत् यत् कृष्णा सा सभां गता॥ १४॥ अपीदानीं मम सुतास्तिष्ठेरन्मन्दचेतसः। येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते॥ १५॥ ममापि वचनं सूत न शुश्रूषति मन्दभाक्। दृष्ट्वा मां चक्षुषा हीनं निर्व्विचेष्टमचेतनम्॥ १६॥ ये चास्य सचिवा मन्दाः कर्णसौबलकादयः। ते तस्य भूयसो दोषान् वर्द्धयन्ति विचेतसः॥ १७॥ स्वैरमुक्ता ह्यपि शराः पार्थेनामिततेजसा। निर्द्दहेयुर्मम सुतान् किं पुनर्मन्युसेविताः॥ १८॥ पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः। दिव्यास्त्रमन्त्रमुदिताः सादयेयुः सुरानपि॥ १९॥ यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्द्दनः। हरिस्त्रैलोक्यनाथः स किं नु तस्य न निर्ज्जितम्॥ २०॥ इदं हि सुमहच्चित्रमर्जुनस्येह सञ्जय। महादेवेन बाहुभ्यां यत्समेत इति श्रुतिः॥ २१॥ प्रत्यक्षं सर्वलोकस्य खाण्डवे यत्कृतं पुरा। फाल्गुनेन सहायार्थं वह्नेर्दामोदरेण च॥ २२॥ समर्था न हि मे पुत्राः सहामात्याः ससौबलाः। क्रुद्धे भीमे च पार्थे च वासुदेवे च सात्वते॥ २३॥

इति आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि धृतराष्ट्रखेदे एकोनपञ्चाशोऽध्यायः॥ ४९॥

---

जनमेजय उवाच। यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने। प्रव्राज्य पाण्डवान् वीरान् सर्वमेतन्निरर्थकम्॥ १॥ कथञ्च राजा पुत्रं तमुपेक्षेताल्पचेतसम्। दुर्य्योधनं पाण्डुपुत्रान् कोपयानं महारथान्॥ २॥ किमासीत् पाण्डुपुत्राणां वने भोजनमुच्यताम्। वानेयमथवा कृष्टमेतदाख्यातु मे भवान्॥ ३॥

वैशम्पायन उवाच । वानेयञ्च मृगांश्चैव शुद्धैर्बाणैर्निपातितान् । ब्राह्मणानां निवेद्याग्रमभुञ्जन् पुरुषर्षभाः ॥ ४ ॥ तांस्तु शूरान् महेष्वासांस्तदा निवसतो वने । अन्वयुर्ब्राह्मणा राजन् साग्नयोऽनग्नयस्तथा ॥ ५ ॥ ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम् । दश मोक्षविदां तत्र यान् बिभर्त्ति युधिष्ठिरः ॥ ६ ॥ रुरून् कृष्णमृगांश्चैव मेध्यांश्चान्यान् वनेचरान् । बाणैरुन्मथ्य विविधैर्ब्राह्मणेभ्यो न्यवेदयत् ॥ ७ ॥ न तत्र कश्चिद्दुर्वर्णो व्याधितो वापि दृश्यते । कृशो वा दुर्ब्बलो वापि दीनो भीतोऽपि वा पुनः ॥ ८ ॥ पुत्त्रानिव प्रियान् भ्रातॄन् ज्ञातीनिव सहोदरान् । पुपोष कौरवश्रेष्ठो धर्म्मराजा युधिष्ठिरः ॥ ९ ॥ पतींश्च द्रौपदी सर्वान् द्विजातींश्च यशस्विनी । मातृवद्भोजयित्वाग्रे शिष्टमाहारयत्तदा ॥ १० ॥ प्राचीं राजा दक्षिणां भीमसेनो यमौ प्रतीचीमथ वाप्युदीचीम् । धनुर्द्धरा मांसहेतोर्मृगाणां क्षयञ्चक्रुर्नित्यमेवोपगम्य ॥ ११ ॥ तथा तेषां वसतां काम्यके वै विहीनानामर्जुनेनोत्सुकानाम् । पञ्चैव वर्षाणि तथा व्यतीयुरधीयतां जपतां जुह्वताञ्च ॥ १२ ॥

इति आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि पार्थाहारकथने पञ्चाशोऽध्यायः ॥ ५० ॥

---

वैशम्पायन उवाच । तेषां तच्चरितं श्रुत्वा मनुष्यातीतमद्भुतम् । चिन्ताशोकपरीतात्मा मन्युनाभिपरिप्लुतः ॥ १ ॥ दीर्घमुष्णञ्च निःश्वस्य धृतराष्ट्रोऽम्बिकासुतः । अब्रवीत् सञ्जयं सूतमामन्त्र्य पुरुषर्षभः ॥ २ ॥ न रात्रौ न दिवा सूत शान्तिं प्राप्नोमि वै क्षणम् । सञ्चिन्त्य दुर्नयं घोरं पुत्त्राणां द्यूतजं हि यत् ॥ ३ ॥ तेषामसह्यवीर्य्याणां शौर्य्यं धृतिं पराम् । अन्योऽन्यमनु-

रागश्च भ्रातृणामतिमानुषम् ॥ ४ ॥ देवपुत्रौ महाभागौ देवराजसमद्युतौ। नकुलः सहदेवश्च पाण्डवौ युद्धदुर्मदौ ॥ ५ ॥ दृढ़ायुधौ दूरपातौ युद्धे च कृतनिश्चयौ। शीघ्रहस्तौ दृढ़क्रोधौ नित्ययुक्तौ तरस्विनौ ॥ ६ ॥ भीमार्जुनौ पुरोधाय यदा तौ रणमूर्द्धनि। स्थास्येते सिंहविक्रान्तावश्विनाविव दुःसहौ ॥ ७ ॥ न शेषं हि प्रपश्यामि मम सैन्यस्य सञ्जय। तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ ॥ ८ ॥ द्रौपद्यास्तं परिक्लेशं न क्षंस्येते त्वमर्षिणौ। वृष्णयोऽथ महेष्वासाः पाञ्चाला वा महौजसः ॥ ९ ॥ युधि सत्याभिसन्धेन वासुदेवेन रक्षिताः। प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीम् ॥ १० ॥ रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन। न शक्यः सहितुं वेगः सर्वैस्तैरपि संयुगे ॥ ११ ॥ तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः। शैक्यया वीरघातिन्या गदया विचरिष्यति ॥ १२ ॥ तथा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः। गदावेगञ्च भीमस्य नालं सोढुं नराधिपाः ॥ १३ ॥ ततोऽहं सुहृदां वाचो दुर्य्योधनवशानुगः। स्मरणीयाः स्मरिष्यामि मया या न कृताः पुरा ॥ १४ ॥

सञ्जय उवाच। व्यतिक्रमोऽयं सुमहांस्त्वया राजन्नुपेक्षितः। समर्थेनापि यन्मोहात् सुतस्ते न निवारितः ॥ १५ ॥ श्रुत्वा हि निर्ज्जितान् द्यूते पाण्डवान् मधुसूदनः। त्वरितः काम्यके पार्थान् समभावयदच्युतः ॥ १६ ॥ द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः। विराटो धृष्टकेतुश्च कैकेयाश्च महारथाः ॥ १७ ॥ तैश्च यत् कथितं राजन् दृष्ट्वा पार्थान् पराजितान्। चारेण विदितं सर्वं तन्मया विदितञ्च ते ॥ १८ ॥ समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः। सारथ्ये फाल्गुनस्याजौ तथेत्याह च तान् हरिः ॥ १९ ॥ अमर्षितो हि कृष्णोऽपि दृष्ट्वा पार्थांस्तथागतान्। कृष्णाजिनोत्तरासङ्गानब्रवीच्च युधिष्ठिरम् ॥ २० ॥ या सा समृद्धिः

पार्थानामिन्द्रप्रस्थे बभूव ह । राजसूये मया दृष्टा नृपरन्यैः सुदुर्लभा ॥ २१ ॥ यत्र सर्व्वान्महीपालान् शस्त्रतेजोमयार्द्दितान् । सवङ्गाङ्गान् सपौण्ड्रोड्रान् सचोलद्राविड़ान्धकान् ॥ २२ ॥ सागरानूपकांश्चैव ये च पत्तनिवासिनः । सिंहलान् वर्व्वरान् म्लेच्छान् ये च लङ्कानिवासिनः ॥ २३ ॥ पश्चिमानि च राष्ट्राणि शतशः सागरान्तिकान् । पल्लवान् दरदान् सर्व्वान् किरातान् यवनाञ्छकान् ॥ २४ ॥ हारहूणांश्च चीनांश्च तुखारान् सैन्धवांस्तथा । जागुड़ान्रमटान् हूणान् स्त्रीराज्यानथ तङ्गणान् । कैकेयान्मालवांश्चैव तथा काश्मीरकानपि ॥ २५ ॥ अद्राक्षमहमाहूतान् यज्ञ ते परिवेषकान् । सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी ॥ २६ ॥ आदाय जीवितं तेषामाहरिष्यामि तामहम् । रामेण सह कौरव्य भीमार्जुनयमैस्तथा ॥ २७ ॥ अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च । धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च ॥ २८ ॥ दुर्य्योधनं रणे हत्वा सद्यः कर्णञ्च भारत । दुःशासनं सौवलेयं यश्चान्यः प्रतियोत्स्यते ॥ २९ ॥ ततस्त्वं हास्तिनपुरे भ्रातृभिः सहितो वसन् । धार्त्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमाम् ॥ ३० ॥ अथैनमब्रवीद्राजा तस्मिन् वीरसमागमे । शृण्वतसु तेषु वीरेषु धृष्टद्युम्नमुखेषु च ॥ ३१ ॥

युधिष्ठिर उवाच । प्रतिगृह्लामि ते वाचमिमां सत्यां जनार्द्दन । अमित्रांस्ते महावाहो सानुबन्धान् हनिष्यसि ॥ ३२ ॥ वर्षात्त्रयोदशादूर्द्ध्वं सत्यं मां कुरु केशव । प्रतिज्ञातो वने वासो राजमध्ये मया ह्ययम् ॥ ३३ ॥ तद्धर्म्मराजवचनं प्रतिश्रुत्य सभासदः । धृष्टद्युम्नपुरोगास्ते शमयामासुरञ्जसा ॥ ३४ ॥ केशवं मधुरैर्वाक्यैः कालयुक्तैरमर्षितम् । पाञ्चालीं प्राहुरक्लिष्टां वासुदेवस्य शृण्वतः ॥ ३५ ॥ दुर्य्योधनस्तव क्रोधाद्देवि त्यक्ष्यति जीवितम् । प्रतिजानीमहे सत्यं मा शुचो वरवर्णिनि ॥ ३६ ॥ ये स्म

तेऽस्मजितां कृष्णां दृष्ट्वा त्वां प्राहसंस्तदा। मांसानि तेषां खादन्तो हसिष्यन्ति वृकद्विजाः॥ ३७॥ पास्यन्ति रुधिरं तेषां गृध्रगोमायवस्तथा। उत्तमाङ्गानि कर्षन्तो यैः कृष्टासि सभातले ॥ ३८॥ तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले। क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत्॥ ३९॥ परिक्लिष्टासि यैस्तत्र यैश्चापि समुपेक्षिता। तेषामुत्कृत्तशिरसां भूमिः पास्यति शोणितम्॥ ४०॥ एवं बहुविधा वाचस्त ऊचुर्भरतर्षभाः। सर्वे तेजस्विनः शूराः सर्वे चाहवलक्षणाः॥ ४१॥ ते धर्मराजेन वृता वर्षाद्र्ध्वं त्रयोदशात्। पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ॥ ४२॥ रामश्च कृष्णश्च धनञ्जयश्च प्रद्युम्नसाम्बौ युयुधानभीमौ। माद्रीसुतौ कैकेयराजपुत्राः पाञ्चालपुत्राः सह मत्स्यराज्ञा ॥४३॥ एतान् सर्वान् लोकवीरानजेयान् महात्मनः सानुबन्धान् ससैन्यान्। को जीवितार्थी समरेऽभ्युदीयात् क्रुद्धान् सिंहान् केशरिणो यथैव॥ ४४॥

धृतराष्ट्र उवाच। यन्मां ब्रवीद्विदुरो द्यूतकाले त्वं पाण्डवान् जेष्यसि चेन्नरेन्द्र। ध्रुवं कुरूणामयमन्तकालो महाभयो भविता शोणितौघ॥ ४५॥ मन्ये तथा तद्भवितेति सूत यथा क्षत्ता प्राह वचः पुरा माम्। असंशयं भविता युद्धमेतद्गते काले पाण्डवानां यथोक्तम्॥ ४६॥

इति आरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि धृतराष्ट्रविलापे एकपञ्चाशोऽध्यायः समाप्तञ्च इन्द्रलोकाभिगमनपर्व॥ ५१॥

---

अथ नलोपाख्यानपर्व।

जनमेजय उवाच। अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि। युधिष्ठिरप्रभृतयः किमकुर्वन्त पाण्डवाः॥ १॥

वैशम्पायन उवाच । अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
अवसन् कृष्णया सार्द्धं काम्यके भरतर्षभाः ॥ २ ॥ ततः कदा-
चिदेकान्ते विविक्त इव शाद्वले । दुःखार्त्ता भरतश्रेष्ठा निषेदुः
सह कृष्णया ॥ ३ ॥ धनञ्जयं शोचमानाः साश्रुकण्ठाः सुदुः-
खिताः । तद्वियोगाद्दिताान् सर्व्वान् शोकः समभिपुप्लुवे ॥ ४ ॥
धनञ्जयवियोगाच्च राज्यभ्रंशाच्च दुःखिताः । अथ भीमो महा-
बाहुर्युधिष्ठिरमभाषत ॥ ५ ॥ निदेशात्ते महाराज गतोऽसौ
भरतर्षभः । अर्ज्जुनः पाण्डुपुत्राणां यस्मिन् प्राणाः प्रतिष्ठिताः
॥ ६ ॥ यस्मिन् विनष्टे पाञ्चालाः सह पुत्रैस्तथा वयम् । सात्यकि-
र्वासुदेवश्च विनश्येयुर्न संशयः ॥ ७ ॥ योऽसौ गच्छति धर्मात्मा
बहून् क्लेशान् विचिन्तयन् । भवन्नियोगाद्वीभत्सुस्ततो दुःख-
तरं नु किम् ॥ ८ ॥ यस्य बाहू समाश्रित्य वयं सर्व्वे महात्मनः ।
मन्यामहे जितानाजौ परान् प्राप्ताञ्च मेदिनीम् ॥ ९ ॥ यस्य
प्रभावान्न मया सभामध्ये धनुष्मतः । नीता लोकममुं सर्व्वे धार्त्त-
राष्ट्राः ससौवलाः ॥१०॥ ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।
सहामहे भवन्मूलं वासुदेवेन पालिताः ॥ ११ ॥ वयं हि सह
कृष्णेन हत्वा कर्णमुखान् परान् । स्वबाहुविजितां कृत्स्नां
प्रशासेम वसुन्धराम् ॥ १२ ॥ भवतो द्यूतदोषेण सर्व्वे वयमुप-
प्लुताः । अहीनपौरुषा बाला बलिभिर्बलवत्तराः ॥ १३ ॥ क्षात्र-
धर्मं महाराज त्वमवेक्षितुमर्हसि । न हि धर्मो महाराज क्षत्रि-
यस्य वनाश्रयः ॥ १४ ॥ राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः ।
स क्षत्रधर्म्मविद्राजा धर्म्यान्मा नीनशः पथः ॥ १५ ॥ प्राग्द्वादश-
समा राजन् धार्त्तराष्ट्रान्निहन्महि । निवर्त्त्य च वनात् पार्थ-
मानाय्य च जनार्द्दनम् ॥ १६ ॥ व्यूढ़ानीकान्महाराज जवेनैव
महामते । धार्त्तराष्ट्रानमुं लोकं गमयामि विशाम्पते ॥ १७ ॥
सर्व्वानहं हनिष्यामि धार्त्तराष्ट्रान् ससौबलान् । दुर्य्योधनञ्च

कश्चिच्च यो वान्यः प्रतियोत्स्यति ॥ १८ ॥ मया प्रशमिते पश्चा-
त्त्वमेष्यसि वनं पुनः। एवं कृते न दोषास्त्व भविष्यन्ति विशाम्पते
॥ १९ ॥ यज्ञैश्च विविधैस्तात कृतं पापमरिन्दम। अवधूय
महाराज गच्छेम स्वर्गमुत्तमम् ॥ २० ॥ एवमेतद्भवेद्राजन् यदि
राजा न वालिशः। अस्माकं दीर्घसूत्रः स्याद्भवान् धर्मपरायणः
॥ २१ ॥ निकृत्या निकृतप्रज्ञा हन्तव्या इति निश्चयः। न हि
नैकृतिकं हत्वा निकृत्या पापमुच्यते ॥ २२ ॥ तथा भारत धर्मेषु
धर्मज्ञैरिह दृश्यते। अहोरात्रं महाराज तुल्यं सम्वत्सरेण ह
॥ २३ ॥ तथैव वेदवचनं श्रूयते नित्यदा विभो। सम्वत्सरो महा-
राज पूर्णो भवति कृच्छ्रतः ॥ २४ ॥ यदि वेदाः प्रमाणास्ते दिव-
सादूर्द्धमच्युत। त्रयोदशसमाः कालो ज्ञायतां परिनिष्ठितः ॥२५॥
कालो दुर्य्योधनं हन्तुं सानुबन्धमरिन्दम। एकाग्रां पृथिवीं सर्व्वां
पुरा राजन् करोति सः ॥ २६ ॥ द्यूतप्रियेण राजेन्द्र तथा
तद्भवता कृतम्। प्रायेणाज्ञातचर्य्यायां वयं सर्व्वे निपातिताः ॥२७॥
न तं देशं प्रपश्यामि यत्र सोऽस्मान् सुदुर्जनः। न विज्ञास्यति
दुष्टात्मा चारैरिति सुयोधनः ॥ २८ ॥ अधिगम्य च सर्व्वान्नो
वनवासमिमं ततः। प्रव्राजयिष्यति पुनर्निकृत्याधमपूरुषः ॥२९॥
यद्यस्मानभिगच्छेत पापः स हि कथञ्चन। अज्ञातचर्य्यामुत्ती-
र्णान् दृष्ट्वा च पुनराह्वयेत् ॥ ३० ॥ द्यूतेन ते महाराज पुन-
र्द्यूतमवर्त्तत। भवांश्च पुनराहूतो द्यूतेनैवापनेष्यति ॥ ३१ ॥
स तथाक्षेषु कुशलो निश्चितो गतचेतनः। चरिष्यसि महाराज
वनेषु वसतीः पुनः ॥ ३२ ॥ यद्यस्मान् न महाराज कृपणान्
कर्त्तुमर्हसि। यावज्जीवमवेक्षस्व वेदधर्मांश्च कृत्स्नशः ॥ ३३ ॥
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः। अनुज्ञातस्त्वया
गत्वा यावच्छक्ति सुयोधनम् ॥ ४४ ॥ यथैव कक्षमुत्सृष्टो दहे-
दनिलसारथिः। हनिष्यामि तथा मन्दमनुजानातु मे भवान् ॥३५॥

वैशम्पायन उवाच। एवं ब्रुवाणं भीमन्तु धर्म्मराजो युधि-
ष्ठिरः। उवाच सान्त्वयन् राजा मूर्द्ध्नुपाघ्राय पाण्डवम् ॥३६॥
असंशयं महाबाहो हनिष्यसि सुयोधनम्। वर्षात्त्रयोदशादूर्द्ध्वं
सह गाण्डीवधन्वना ॥ ३७ ॥ यत्त्वं मां भाषसे पार्थ प्राप्तः काल
इति प्रभो। अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते ॥ ३८ ॥
अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयाम्। हन्ता त्वमसि
दुर्द्धर्षं सानुबन्धं सुयोधनम् ॥ ३९ ॥ एवं ब्रुवति भीमन्तु धर्म-
राजे युधिष्ठिरे। आजगाम महाभागो वृहदश्वो महानृषिः ॥४०॥
तमभिप्रेक्ष्य धर्म्मात्मा सम्प्राप्तं धर्मचारिणम्। शास्त्रवन्मधुपर्केण
पूजयामास धर्म्मराट् ॥ ४१ ॥ आश्वस्तञ्चैनमासीनमुपासीनो
युधिष्ठिरः। अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ४२ ॥
अक्षद्यूते च भगवन् धनं राज्यञ्च मे हृतम्। आहूय निकृति-
प्रज्ञैः कितवैरक्षकोविदैः ॥ ४३ ॥ अनक्षज्ञस्य हि सतो निकृत्या
पापनिश्चयैः। भार्य्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी
॥ ४४ ॥ पुनर्द्यूतेन मां जित्वा वनवासं सुदारुणम्। प्राव्राजय-
न्महारण्यमजिनैः परिवारितम् ॥ ४५ ॥ अहं वने दुर्वसतीर्वसन्
परमदुःखितः। अक्षद्यूताधिकारे च गिरः शृण्वन् सुदारुणाः
॥ ४६ ॥ आर्त्तानां सुहृदां वाचो द्यूतप्रभृति शंसताम्। अहं
हृदि श्रिताः स्मृत्वा सर्व्वरात्रीर्विचिन्तयन् ॥ ४७ ॥ यस्मिंश्चैव
समस्तानां प्राणा गाण्डीवधन्वनि। विना महात्मना तेन गतसत्त्व
इवाभवम् ॥ ४८ ॥ कदा द्रक्ष्यामि बीभत्सुं कृतास्त्रं पुनरागतम्।
प्रियवादिनमक्षुद्रं दयायुक्तमतन्द्रितम् ॥ ४९ ॥ अस्ति राजा मया
कश्चिदल्पभाग्यतरो भुवि। भवता दृष्टपूर्व्वो वा श्रुतपूर्व्वोऽपि वा
क्वचित्। न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ ५० ॥

वृहदश्व उवाच। यद्ब्रवीषि महाराज न मत्तो विद्यते
क्वचित्। अल्पभाग्यतरः कश्चित् पुमानस्तीति पाण्डव ॥ ५१ ॥

अत ते वर्णयिष्यामि यदि शुश्रूषसेऽनघ। यस्त्वत्तो दुःखिततरो राजासीत् पृथिवीपते॥ ५२॥

वैशम्पायन उवाच। अथैनमब्रवीद्राजा ब्रवीतु भगवानिति। इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवम्॥ ५३॥

बृहदश्व उवाच। शृणु राजन्नवहितः सह भ्रातृभिरच्युत। यस्त्वत्तो दुःखिततरो राजासीत् पृथिवीपते॥ ५४॥ निषधेषु महीपालो वीरसेन इति स्मृतः। तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थकोविदः॥ ५५॥ स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम्। वनवासं सुदुःखार्त्तो भार्य्यया न्यवसत् सह॥ ५६॥ न तस्य दासा न रथो न भ्राता न च बान्धवाः। वने निवसतो राजन् शिष्यन्ते स्म कदाचन॥ ५७॥ भवान् हि संवृतो वीरै-र्भ्रातृभिर्देवसन्निभैः। ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम्॥ ५८॥

युधिष्ठिर उवाच। विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः। चरितं वदतां श्रेष्ठ तन्ममाख्यातुमर्हसि॥ ५९॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि बृहदश्वयुधिष्ठिर-संवादे द्विपञ्चाशोऽध्यायः॥ ५२॥

---

बृहदश्व उवाच। आसीद्राजा नलो नाम वीरसेनसुतो बली। उपपन्नो गुणैरिष्टैरूपवानश्वकोविदः॥ १॥ अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा। उपर्य्युपरि सर्वेषामादित्य इव तेजसा॥ २॥ ब्रह्मण्यो वेदवित् शूरो निषधेषु महीपतिः। अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः॥ ३॥ ईप्सितो नरनारीणामुदारः संयतेन्द्रियः। रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम्॥ ४॥ तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः।

शूरः सर्व्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥ ५ ॥ स प्रजार्थे परं यत्नमकरोत् सुसमाहितः । तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ॥ ६ ॥ तं स भीमः प्रजाकामस्तोषयामास धर्म्मवित् । महिष्या सह राजेन्द्र सत्कारेण सुवर्च्चसम् ॥ ७ ॥ तस्मै प्रसन्नो दमनः सभार्य्याय वरं ददौ । कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ॥ ८ ॥ दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसम् । उपपन्नान् गुणैः सर्व्वैर्भीमान् भीमपराक्रमान् ॥ ९ ॥ दमयन्ती तु रूपेण तेजसा यशसा श्रिया । सौभाग्येषु च लोकेषु यशः प्राप सुमध्यमा ॥ १० ॥ अथ तां वयसि प्राप्ते दासीनां समलङ्कृतम् । शतं शतं सखीनाञ्च पर्य्युपासच्छचीमिव ॥ ११ ॥ तत्र स्म राजते भैमी सर्व्वाभरणभूषिता । सखीमध्येऽनवद्याङ्गी विद्युत्सौदामिनी यथा ॥ १२ ॥ अतीव रूपसम्पन्ना श्रीरिवायतलोचना । न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ॥ १३ ॥ मानुषेष्वपि चान्येषु दृष्टरूपाथ वा श्रुता । चित्तप्रसादनी बाला देवानामपि सुन्दरी ॥ १४ ॥ नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि । कन्दर्प इव रूपेण मूर्त्तिमानभवत् स्वयम् ॥ १५ ॥ तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् । नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ॥ १६ ॥ तयोरदृष्टः कामोऽभूत् शृण्वतः सततं गुणान् । अन्योऽन्यं प्रति कौन्तेय स व्यवर्द्धत हृच्छयः ॥ १७ ॥ अशक्नुवन्नलः कामं तदा धारयितुं हृदा । अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ १८ ॥ स ददर्श ततो हंसान् जातरूपपरिष्कृतान् । वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ १९ ॥ ततोऽन्तरीक्षगो वाचं व्याजहार नलं तदा । हन्तव्योऽस्मि न ते राजन् करिष्यामि तव प्रियम् ॥ २० ॥ दमयन्तीसकाशे त्वां कथयिष्यामि नैषध । यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ २१ ॥ एवमुक्तस्ततो हंसमुत्ससर्ज्ज महीपतिः । ते तु हंसाः

समुत्पत्य विदर्भानगमंस्ततः॥ २२॥ विदर्भनगरीं गत्वा दमयन्त्यास्तदन्तिके। निपेतुस्ते गरुत्मन्तः सा ददर्श च तान् गणान् ॥ २३॥ सा तानद्भुतरूपान् वै दृष्ट्वा सखिगणावृता। हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे॥ २४॥ अथ हंसा विससृपुः सर्वतः प्रमदावने। एकैकशस्तदा कन्यास्तान् हंसान् समुपाद्रवन् ॥ २५॥ दमयन्ती तु यं हंसं समुपाधावदन्तिके। स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत्॥२६॥ दमयन्ति नलो नाम निषधेषु महीपतिः। अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः। कन्दर्प इव रूपेण मूर्त्तिमानभवत् स्वयम्॥ २७॥ तस्य वै यदि भार्य्या त्वं भवेथा वरवर्णिनि। सफलन्ते भवेज्जन्म रूपञ्चेदं सुमध्यमे॥ २८॥ वयं हि देवगन्धर्वमनुष्योरगराक्षसान्। दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः॥ २९॥ त्वञ्चापि रत्नं नारीणां नरेषु च नलो वरः। विशिष्टाया विशिष्टेन सङ्गमो गुणवान् भवेत्॥३०॥ एवमुक्ता तु हंसेन दमयन्ती विशाम्पते। अब्रवीत्तत्र तं हंसं त्वमप्येवं नलं वद॥ ३१॥ तथेत्युक्त्वाण्डजः कन्यां विदर्भस्य विशाम्पते। पुनरागम्य निषधान्नले सर्वं न्यवेदयत्॥ ३२॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि हंसवाक्ये त्रिपञ्चाशोऽध्यायः॥ ५३॥

---

बृहदश्व उवाच। दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत। ततः प्रभृति न स्वस्था नलं प्रति बभूव सा॥ १॥ ततश्चिन्तापरा दीना विवर्णवदना कृशा। बभूव दमयन्ती तु निश्वासपरमा तदा॥ २॥ ऊर्द्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना। पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना॥ ३॥ न शय्यासनभोगेषु रतिं विन्दति कर्हिचित्। न नक्तं न दिवा शेते हाहेति रुदती

पुनः ॥ ४ ॥ तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः ।
ततो विदर्भपतये दमयन्त्याः सखीगणः ॥ ५ ॥ न्यवेदयत्ताम-
स्वस्थां दमयन्तीं नरेश्वरे । तच्छ्रुत्वा नृपतिर्भीमो दमयन्ती-
सखीगणात् ॥ ६ ॥ चिन्तयामास तत्कार्य्यं सुमहत् स्वां सुतां
प्रति । किमियं दुहिता मेऽद्य नातिस्वस्थेव लक्ष्यते ॥ ७ ॥ स
समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् । अपश्यदात्मना
कार्य्यं दमयन्त्याः स्वयम्वरम् ॥ ८ ॥ स संनिमन्त्रयामास मही-
पालान् विशाम्पतिः । अनुभूयतामयं वीराः स्वयम्वर इति प्रभो
॥ ९ ॥ श्रुत्वा तु पार्थिवाः सर्व्वे दमयन्त्याः स्वयम्वरम् । अभिजग्मु-
स्ततो भीमं राजानो भीमशासनात् ॥ १० ॥ हस्त्यश्वरथघोषेण
पूरयन्तो वसुन्धराम् । विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलंकृतैः
॥ ११ ॥ तेषां भीमो महाबाहुः पार्थिवानां महात्मनाम् । यथार्ह-
मकरोत् पूजां तेऽवसंस्तत्र पूजिताः ॥ १२ ॥ एतस्मिन्नेव काले तु
सुराणामृषिसत्तमौ । अटमानौ महात्मानाविन्द्रलोकमितो गतौ
॥ १३ ॥ नारदः पर्व्वतश्चैव महाप्राज्ञौ महाव्रतौ । देवराजस्य
भवनं विविशाते सुपूजितौ ॥ १४ ॥ तावर्च्चयित्वा मघवा ततः
कुशलमव्ययम् । पप्रच्छानमयञ्चापि तयोः सर्व्वगतं विभुः ॥ १५ ॥

नारद उवाच । आवयोः कुशलं देव सर्व्वत्र गतमीश्वर ।
लोके च मघवन् कृत्स्ने नृपाः कुशलिनो विभो ॥ १६ ॥

वृहदश्व उवाच । नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा ।
धर्म्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः ॥ १७ ॥ शस्त्रेण
निधनं काले ये गच्छन्त्यपराङ्मुखाः । अयं लोकोऽक्षयस्तेषां यथैव
मम कामधुक् ॥ १८ ॥ क्व नु ते क्षत्रियाः शूरा न हि पश्यामि
तानहम् । आगच्छतो महीपालान् दयितानतिथीन् मम । एव-
मुक्तस्तु शक्रेण नारदः प्रत्यभाषत ॥ १९ ॥

नारद उवाच । शृणु मे मघवन् येन न दृश्यन्ते महीक्षितः ।

विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता । रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ २० ॥ तस्याः स्वयम्वरः शक्र भविता न चिरादिव । तत्र गच्छन्ति राजानो राजपुत्राश्च वृत्रहः ॥ २१ ॥ तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः । काङ्क्षन्ति स्म विशेषेण बलवृत्रनिसूदन ॥ २२ ॥ एतस्मिन् कथ्यमाने तु लोकपालाश्च साग्निकाः । आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ २३ ॥ ततस्ते शुश्रुवुः सर्वे नारदस्य वचो महत् । श्रुत्वैव चाब्रुवन् हृष्टा गच्छामो वयमप्युत ॥ २४ ॥ ततः सर्वे महाराज सगणाः सहवाहनाः । विदर्भानभिजग्मुस्ते यतः सर्वे महीक्षितः ॥ २५ ॥ नलोऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् । अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥ २६ ॥ अथ देवाः पथि नलं ददृशुर्भूतले स्थितम् । साक्षादिव स्थितं मूर्त्या मन्मथं रूपसम्पदा ॥ २७ ॥ तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् । तस्थुर्विगतसङ्कल्पा विस्मिता रूपसम्पदा ॥ २८ ॥ ततोऽन्तरीक्षे विष्टभ्य विमानानि दिवौकसः । अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ २९ ॥ भो भो निषधराजेन्द्र नल सत्यव्रती भवान् । अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥ ३० ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलदौत्ये
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

बृहदश्व उवाच । तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत । अथैतान् परिपप्रच्छ कृताञ्जलिरुपस्थितः ॥ १ ॥ के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः । किञ्च तद्वो मया कार्यं कथयध्वं यथातथम् ॥ २ ॥ एवमुक्ते नैषधेन मघवानभ्यभाषत । अमरान् वै निबोधास्मान् दमयन्त्यर्थमागतान् ॥ ३ ॥ अहमिन्द्रो-

अयमग्निश्च तथैवायमपाम्पतिः। शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ॥ ४ ॥ त्वं वै समागतानस्मान् दमयन्त्यै निवेदय। लोकपाला महेन्द्राद्याः सभां यान्ति दिदृक्षवः ॥ ५ ॥ प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यमः। तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ ६ ॥ एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत्। एकार्थसमुपेतं मां न प्रेषयितुमर्हथ ॥ ७ ॥ कथन्तु जातसङ्कल्पः स्त्रियमुत्सहते पुमान्। परार्थमीदृशं वक्तुं तत् क्षमन्तु महेश्वराः ॥ ८ ॥

देवा ऊचुः। करिष्य इति संश्रुत्य पूर्व्वमस्मासु नैषध। न करिष्यसि कस्मात्त्वं व्रज नैषध मा चिरम् ॥ ९ ॥

बृहदश्व उवाच। एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत्। सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ १० ॥ प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत। स जगाम तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥ ११ ॥ ददर्श तत्र वैदर्भीं सखीगणसमावृताम्। देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥ १२ ॥ अतीवसुकुमाराङ्गीं तनुमध्यां सुलोचनाम्। आक्षिपन्तीमिव प्रभां शशिनः स्वेन तेजसा ॥ १३ ॥ तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम्। सत्यञ्चिकीर्षमाणस्तु धारयामास हृच्छयम् ॥ १४ ॥ ततस्ता नैषधं दृष्ट्वा सम्भ्रान्ताः परमाङ्गनाः। आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥ १५ ॥ प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः। न चैनमभ्यभाषन्त मनोभिस्त्वभ्यपूजयन् ॥ १६ ॥ अहो रूपमहो कान्तिरहो धैर्य्यं महात्मनः। कोऽयं देवोऽथ वा यक्षो गन्धर्व्वो वा भविष्यति ॥ १७ ॥ न तास्तं शक्नुवन्ति स्म व्याहर्त्तुमपि किञ्चन। तेजसा धर्षितास्तस्य लज्जावत्यो वराङ्गनाः ॥ १८ ॥ अथैनं स्मयमानन्तु स्मितपूर्व्वाभिभाषिणी। दमयन्ती नलं वीरमभ्यभाषत विस्मिता ॥ १९ ॥ कस्त्वं सर्व्वानवद्याङ्ग मम हृच्छय-

वर्द्धनः। प्राप्तोऽस्यमरवद्वीर ज्ञातुमिच्छामि तेऽनघ ॥ २० ॥ कथमागमनञ्चेह कथञ्चासि न लक्षितः। सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः। एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ॥ २१ ॥

नल उवाच। नलं मां विद्धि कल्याणि देवदूतमिहागतम्। देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः। तेषामन्यतमं देवं पतिं वरय शोभने ॥ २२ ॥ तेषामेव प्रभावेन प्रविष्टोऽहमलक्षितः। प्रविशन्तं न मां कश्चिदपश्यन्नाप्यवारयत् ॥ २३ ॥ एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः। एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥ २४ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलस्य देवदौत्ये पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

दमयन्त्युवाच। सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत्। प्रणयस्व यथाश्रद्धं राजन् किं करवाणि ते ॥ १ ॥ अहञ्चैव हि यच्चान्यन्ममास्ति वसु किञ्चन। तत्सर्वं तव विश्रब्धं कुरु प्रणयमीश्वर ॥ २ ॥ हंसानां वचनं यत्तु तन्मां दहति पार्थिव। त्वत्कृते हि मया वीर राजानः सन्निपातिताः ॥ ३ ॥ यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद। विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ४ ॥ एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह। तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ ५ ॥ येषामहं लोककृतामीश्वराणां महात्मनाम्। न पादरजसा तुल्यो मनस्तेषु प्रवर्त्तताम् ॥ ६ ॥ विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति। त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ७ ॥ विरजांसि च वासांसि दिव्याश्चित्राः स्रजस्तथा। भूषणानि च मुख्यानि देवान् प्राप्य तु भुङ्क्ष्व वै ॥ ८ ॥ य इमां पृथिवीं

कृत्स्नां संक्षिप्य ग्रसते पुनः। हुताश मीशं देवानां का तं न वरयेत् पतिम् ॥ ९ ॥ यस्य दण्डभयात् सर्वे भूतग्रामाः समागताः। धर्ममेवानुरुध्यन्ति का तं न वरयेत् पतिम् ॥ १० ॥ धर्मात्मानं महात्मानं दैत्यदानवमर्द्दनम्। महेन्द्रं सर्वदेवानां का तं न वरयेत् पतिम् ॥ ११ ॥ क्रियतामविशङ्केन मनसा यदि मन्यसे। वरणं लोकपालानां सुहृद्वाक्यमिदं शृणु ॥ १२ ॥ नैषधेनैवमुक्ता सा दमयन्ती वचोऽब्रवीत्। समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा ॥ १३ ॥ देवेभ्योऽहं नमस्कृत्य सर्व्वेभ्यः पृथिवीपते। वृणे त्वामेव भर्त्तारं सत्यमेतद्ब्रवीमि ते ॥ १४ ॥ तामुवाच ततो राजा वेपमानां कृताञ्जलिम्। दौत्येनागत्य कल्याणि तथा भद्रे विधीयताम् ॥ १५ ॥ कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषतः। परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे ॥ १६ ॥ एष धर्मो यदि स्वार्थो ममापि भविता ततः। एवं स्वार्थं करिष्यामि तथा भद्रे विधीयताम् ॥ १७ ॥ ततो वाष्पाकुलां वाचं दमयन्ती शुचिस्मिता। प्रव्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ १८ ॥ उपायोऽयं मया दृष्टो निरपायो नरेश्वर। येन दोषो न भविता तव राजन् कथञ्चन ॥ १९ ॥ त्वञ्चैव हि नरश्रेष्ठ देवाश्चेन्द्रपुरोगमाः। आयान्तु सहिताः सर्वे मम यत्र स्वयम्बरः ॥ २० ॥ ततोऽहं लोकपालानां सन्निधौ त्वां नरेश्वर। वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ २१ ॥ एवमुक्तस्तु वैदर्भ्या नलो राजा विशाम्पते। आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ २२ ॥ तमपश्यंस्तथायान्तं लोकपाला महेश्वराः। दृष्ट्वा चैनं ततोऽपृच्छन् वृत्तान्तं सर्वमेव तम् ॥ २३ ॥ कच्चिद्दृष्टा त्वया राजन् दमयन्ती शुचिस्मिता। किमब्रवीच्च नः सर्वान् वद भूमिपतेऽनघ ॥ २४ ॥

नल उवाच। भवद्भिरहमादिष्टो दमयन्त्या निवेशनम्। प्रविष्टः सुमहाकक्षं दण्डिभिः स्थविरैर्वृतम् ॥ २५ ॥ प्रविशन्तञ्च

मां तत्र न कश्चिद्दृष्टवान्नरः। ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥ २६ ॥ सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः। विस्मिताश्चाभवन् सर्वा दृष्ट्वा मां विबुधेश्वराः ॥ २७ ॥ वर्ण्यमानेषु च मया भवत्सु रुचिरानना। मामेव गतसङ्कल्पा वृणीते सा सुरोत्तमाः ॥ २८ ॥ अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः। त्वया सह नरव्याघ्र मम यत्र स्वयम्वरः ॥ २९ ॥ तेषामहं सन्निधौ त्वां वरयिष्यामि नैषध। एवं तव महाबाहो दोषो न भवितेति ह ॥ ३० ॥ एतावदेव विबुधा यथावृत्तमुदाहृतम्। मया शेषे प्रमाणन्तु भवन्तस्त्रिदशेश्वराः ॥ ३१ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलस्य देवदौत्ये षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

बृहदश्व उवाच। अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा। आजुहाव महीपालान् भीमो राजा स्वयम्वरे ॥ १ ॥ तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीड़िताः। त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २ ॥ कनकस्तम्भरुचिरं तोरणेन विराजितम्। विविशुस्ते नृपा रङ्गं महासिंहा इवाचलम् ॥ ३ ॥ तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः। सुरभिस्रग्धराः सर्वे प्रमृष्टमणिकुण्डलाः ॥ ४ ॥ तां राजसमितिं पुण्यां नागैर्भोगवतीमिव। सम्पूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव ॥ ५ ॥ तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः। आकारवर्णसुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ६ ॥ सकेशान्तानि चारूणि सुनासाक्षिभ्रुवाणि च। मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ७ ॥ दमयन्ती ततो रङ्गं प्रविवेश शुभानना। मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ८ ॥ तस्या गात्रेषु पतिता तेषां

दृष्टिर्मनश्चात्मनाम् । तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ९ ॥
ततः सङ्कीर्त्त्यमानेषु राज्ञां नामसु भारत । ददर्श भैमी पुरु-
षान् पञ्चतुल्याकृतीनथ ॥ १० ॥ तान् समीक्ष्य ततः सर्व्वान्
निर्व्विशेषाकृतीन् स्थितान् । सन्देहादथ वैदर्भी नाभ्यजानन्नलं
नृपम् ॥ ११ ॥ यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ।
सा चिन्तयन्ती बुद्ध्या तर्कयामास भाविनी ॥ १२ ॥ कथं हि
देवान् जानीयां कथं विद्यां नलं नृपम् । एवं सञ्चिन्तयन्ती सा
वैदर्भी भृशदुःखिता ॥ १३ ॥ श्रुतानि देवलिङ्गानि तर्कयामास
भारत । देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे ॥ १४ ॥
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये । सा विनिश्चित्य बहुधा
विचार्य्य च पुनः पुनः ॥ १५ ॥ शरणं प्रति देवानां प्राप्तकाल-
ममन्यत । वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ॥ १६ ॥
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् । हंसानां वचनं श्रुत्वा
यथा मे नैषधो वृतः ॥ १७ ॥ पतित्वे तेन सत्येन देवास्तं प्रदि-
शन्तु मे । मनसा वचसा चैव यथा नाभिचराम्यहम् ॥ १८ ॥
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे । यथा देवैः स मे भर्त्ता
विहितो निषधाधिपः ॥ १९ ॥ तेन सत्येन मे देवास्तमेव प्रदि-
शन्तु मे । यथेदं व्रतमारब्धं नलस्याराधने मया ॥ २० ॥ तेन
सत्येन मे देवास्तमेव प्रदिशन्तु मे । स्वञ्चैव रूपं कुर्व्वन्तु लोक-
पाला महेश्वराः ॥ २१ ॥ यथाहमभिजानीयां पुण्यश्लोकं नरा-
धिपम् । निशम्य दमयन्त्यास्तत् करुणं परिदेवितम् ॥ २२ ॥
निश्चयं परमं तथ्यमनुरागञ्च नैषधे । मनोविशुद्धिं बुद्धिञ्च भक्तिं
रागञ्च नैषधे ॥ २३ ॥ यथोक्तञ्चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ।
सापश्यद्विबुधान् सर्व्वानस्वेदांस्तब्धलोचनान् ॥ २४ ॥ हृषितस्र-
ग्रजोहीनान् स्थितानस्पृशतः क्षितिम् । छायाद्वितीयो म्लान-
स्रग्रजःस्वेदसमन्वितः ॥ २५ ॥ भूमिष्ठो नैषधश्चैव निमिषेण च

सूचितः। सा समीक्ष्य तु तान्देवान् पुण्यश्लोकञ्च भारत ॥ २६ ॥
नैषधं वरयामास भैमी धर्मेण पाण्डव। विलज्जमाना वस्त्रान्ते
जग्राहायतलोचना ॥ २७ ॥ स्कन्धदेशेऽसृजत्तस्य स्रजं परम-
शोभनाम्। वरयामास चैवैनं पतित्वे वरवर्णिनी ॥ २८ ॥ ततो
हाहेति सहसा मुक्तः शब्दो नराधिपैः। देवैर्महर्षिभिस्तत्र
साधुसाध्विति भारत ॥ २९ ॥ विस्मितैरीरितः शब्दः प्रशंसद्भि-
र्नलं नृपम्। दमयन्तीन्तु कौरव्य वीरसेनसुतो नृपः ॥ ३० ॥
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना। यत्त्वं भजसि कल्याणि
पुमांसं देवसन्निधौ ॥ ३१ ॥ तस्मान्मां विद्धि भर्त्तारमेतत्ते वचने
रतम्। यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते ॥ ३२ ॥
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते। दमयन्ती तथा
वाग्भिरभिनन्द्य कृताञ्जलिः ॥ ३३ ॥ तौ परस्परतः प्रीतौ दृष्ट्वा
त्वग्निपुरोगमान्। तानेव शरणं देवान् जग्मतुर्मनसा तदा ॥ ३४ ॥
वृते तु नैषधे भैम्या लोकपाला महौजसः। प्रहृष्टमनसः सर्वे
नलायाष्टौ वरान् ददुः ॥ ३५ ॥ प्रत्यक्षदर्शनं यज्ञे गतिञ्चानुत्तमां
शुभाम्। नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥ ३६ ॥
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः। लोकानात्मप्रभांश्चैव
ददौ तस्मै हुताशनः ॥ ३७ ॥ यमस्त्वन्नरसं प्रादाद्धर्मे च परमां
स्थितिम्। अपाम्पतिरपाम्भावं यत्र वाञ्छति नैषधः ॥ ३८ ॥
स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः। वरानेवं प्रदायास्य
देवास्ते त्रिदिवं गताः ॥ ३९ ॥ पार्थिवाश्चानुभूयास्य विवाहं
विस्मयान्विताः। दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम्
॥ ४० ॥ गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः। विवाहं
कारयामास दमयन्त्या नलस्य च ॥ ४१ ॥ उष्य तत्र यथाकामं
नैषधो द्विपदाम्वर। भीमेन समनुज्ञातो जगाम नगरं स्वकम्
॥ ४२ ॥ अवाप्य नारीरत्नन्तु पुण्यश्लोकोऽपि पार्थिवः। रेमे

सह तया राजन् शच्येव बलवृत्रहा ॥ ४३ ॥ अतीव मुदितो राजा भ्राजमानोंऽशुमानिव । अरञ्जयत् प्रजा वीरो धर्म्मेण परिपालयन् ॥ ४४ ॥ ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः । अन्यैश्च बहुभिर्धीमान् क्रतुभिश्चाप्तदक्षिणैः ॥ ४५ ॥ पुनश्च रमणीयेषु वनेषूपवनेषु च । दमयन्त्या सह नलो विजहारामरोपमः ॥ ४६ ॥ जनयामास च ततो दमयन्त्यां महामनाः । इन्द्रसेनं सुतञ्चापि इन्द्रसेनाञ्च कन्यकाम् ॥ ४७ ॥ एवं स यजमानश्च विहरंश्च नराधिपः । ररक्ष वसुसम्पूर्णां वसुधां वसुधाधिपः ॥४८॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि दमयन्तीस्वयम्वरे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

बृहदश्व उवाच । वृते तु नैषधे भैम्या लोकपाला महौजसः । यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ १ ॥ अथाब्रवीत् कलिं शक्रः सम्प्रेक्ष्य बलवृत्रहा । द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ॥ २ ॥ ततोऽब्रवीत् कलिः शक्रं दमयन्त्याः स्वयम्वरम् । गत्वा हि वरयिष्ये तां मनो हि मम तद्गतम् ॥ ३ ॥ तमब्रवीत् प्रहस्येन्द्रो निर्वृत्तः स स्वयम्वरः । वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ४ ॥ एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः । देवानामन्त्र्य तान् सर्व्वानुवाचेदं वचस्तदा ॥ ५ ॥ देवानां मानुषं मध्ये यत् सा पतिमविन्दत । तत्र तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ॥ ६ ॥ एवमुक्ते तु कलिना प्रत्युचुस्ते दिवौकसः । अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः ॥ ७ ॥ का च सर्व्वगुणोपेतं नाश्रयेत नलं नृपम् । यो वेद धर्म्मानखिलान् यथावच्चरितव्रतः ॥ ८ ॥ योऽधीते चतुरो वेदान् सर्व्वानाख्यानपञ्चमान् । नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्म्मतः ॥ ९ ॥

अहिंसानिरतो यश्च सत्यवादी दृढ़व्रतः। यस्मिन् सत्यं धृतिर्दानं तपः शौचं दमः शमः ॥ १० ॥ ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे। एवं रूपं नलं यो वै कामयेच्छपितुं कले ॥ ११ ॥ आत्मानं स शपेन्मूढ़ो हन्यादात्मानमात्मना। एवङ्गुणं नलं यो वै कामयेच्छपितुं कले ॥ १२ ॥ कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे। एवमुक्त्वा कलिं देवा द्वापरञ्च दिवं ययुः ॥ १३ ॥ ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत्। संहर्त्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ॥ १४ ॥ भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते। त्वमप्यक्षान् समाविश्य साहाय्यं कर्त्तुमर्हसि ॥ १५ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि कलिदेवसंवादे
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

बृहदश्व उवाच। एवं स समयं कृत्वा द्वापरेण कलिः सह। आजगाम ततस्तत्र यत्र राजा स नैषधः ॥ १ ॥ स नित्यमन्तरप्रेप्सुर्निषधेष्ववसच्चिरम्। अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ २ ॥ कृत्वा मूत्रमुपस्पृश्य सन्ध्यामन्वास्त नैषधः। अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ३ ॥ स समाविश्य च नलं समीपं पुष्करस्य च। गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ४ ॥ अक्षद्यूते नलं जेता भवान् हि सहितो मया। निषधान् प्रतिपद्यस्व जित्वा राज्यं नलं नृपम् ॥ ५ ॥ एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात्। कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात् ॥ ६ ॥ आसाद्य तु नलं वीरं पुष्करः परवीरहा। दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ७ ॥ न चक्षमे ततो राजा समाह्वानं महामनाः। वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत ॥ ८ ॥ हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम्। आविष्टः

कलिना द्यूते जीयते स्म नलस्तदा ॥ ९ ॥ तमत्तमदसंमत्तं सुहृदां न तु कश्चन । निवारणेऽभवच्छक्तो दीव्यमानमरिन्दमम् ॥ १० ॥ ततः पौरजनाः सर्व्वे मन्त्रिभिः सह भारत । राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ ११ ॥ ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् । एष पौरजनो देवि द्वारि तिष्ठति कार्य्यवान् ॥ १२ ॥ निवेद्यतां नैषधाय सर्व्वाः प्रकृतयः स्थिताः । अमृष्यमाणा व्यसनं राज्ञो धर्म्मार्थदर्शिनः ॥ १३ ॥ ततः सा वाष्पकलया वाचा दुःखेन कर्षिता । उवाच नैषधं भैमी शोकोपहतचेतना ॥ १४ ॥ राजन् पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः । मन्त्रिभिः सहितः सर्व्वराजभक्तिपुरस्कृतः ॥ १५ ॥ तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत । तां तथा रुचिरापाङ्गीं विलपन्तीं तथाविधाम् ॥ १६ ॥ आविष्टः कलिना राजा नाभ्यभाषत किञ्चन । ततस्ते मन्त्रिणः सर्व्वे ते चैव पुरवासिनः ॥ १७ ॥ नायमस्तीति दुःखार्त्ता व्रीड़िता जग्मुरालयान् । तथा तदभवद्द्यूतं पुष्करस्य नलस्य च । युधिष्ठिर बहून् मासान् पुण्यश्लोकस्त्वजीयत ॥ १८ ॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलद्यूते एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

वृहदश्व उवाच । दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् । उन्मत्तवदनुन्मत्ता देवने गतचेतसम् ॥ १ ॥ भयशोकसमाविष्टा राजन् भीमसुता ततः । चिन्तयामास तत् कार्य्यं सुमहत् पार्थिवं प्रति ॥ २ ॥ सा शङ्कमाना तत् पापं चिकीर्षन्ती च तत्प्रियम् । नलञ्च हृतसर्व्वस्वमुपलभ्येदमब्रवीत् ॥ ३ ॥ वृहत्सेनामतियशां तां धात्रीं परिचारिकाम् । हिता सर्व्वार्थकुशलामनुरक्तां सुभाषिताम् ॥ ४ ॥ वृहत्सेने व्रजामात्यानानाय्य

नलशासनात्। आचक्ष्व यत्कृतं द्रव्यमवशिष्टञ्च यद्वसु ॥ ५ ॥
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम्। अपि नो भागधेयं
स्यादित्युक्त्वा नलमाव्रजन् ॥ ६ ॥ तास्तु सर्वाः प्रकृतयो द्वितीयं
समुपस्थिताः। न्यवेदयद्भैमसुता न च स प्रत्यनन्दत ॥ ७ ॥
वाक्यमप्रतिनन्दन्तं भर्त्तारमभिवीक्ष्य सा। दमयन्ती पुनर्वेश्म
व्रीड़िता प्रविवेश ह ॥ ८ ॥ निशम्य सततं चाक्षान् पुण्यश्लोक-
पराङ्मुखान्। नलञ्च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ९ ॥
वृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात्। सूतमानय कल्याणि
महत्कार्य्यमुपस्थितम् ॥ १० ॥ वृहत्सेना तु सा श्रुत्वा दमयन्त्या
प्रभाषितम्। वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ ११ ॥
वार्ष्णेयन्तु ततो भैमी सान्त्वयन् श्लक्ष्णया गिरा। उवाच देश-
कालज्ञा प्राप्तकालमनिन्दिता ॥ १२ ॥ जानीषे त्वं यथा राजा
सम्यग्वृत्तः सदा त्वयि। तस्य त्वं विषमस्थस्य साहाय्यं कर्त्तु-
मर्हसि ॥ १३ ॥ यथा यथा हि नृपतिः पुष्करेणैव जीयते।
तथा तथास्य वै द्यूते रागो भूयोऽभिवर्द्धते ॥ १४ ॥ यथा च
पुष्करस्याक्षाः पतन्ति वशवर्त्तिनः। तथा विपर्य्ययश्चापि नल-
स्याक्षेषु दृश्यते ॥ १५ ॥ सुहृत्स्वजनवाक्यानि यथावन्न शृणोति
च। ममापि च तथा वाक्यं नाभिनन्दति मोहितः ॥ १६ ॥
नूनं मन्ये न दोषोऽस्ति नैषधस्य महात्मनः। यत्तु मे वचनं
राजा नाभिनन्दति मोहितः ॥ १७ ॥ शरणं त्वां प्रपन्नास्मि
सारथे कुरु मद्वचः। न हि मे शुध्यते भावः कदाचिद्विनशेदपि
॥ १८ ॥ नलस्य दयितानश्वान् योजयित्वा मनोजवान्। इद-
मारोप्य मिथुनं कुण्डिनं यातुमर्हसि ॥ १९ ॥ मम ज्ञातिषु
निक्षिप्य दारकौ स्यन्दनन्तथा। अश्वांश्चेमान् यथाकामं वस
चान्यत्र गच्छ वा ॥ २० ॥ दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नल-
सारथिः। न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥ २१ ॥ तैः

समेत्य वितिखिच्य सोऽनुज्ञातो महीपते। ययौ मिथुनमारोप्य
विदर्भांस्तेन वाहिना ॥ २२ ॥ हयांस्तत्र विनिक्षिप्य सूतो रथ-
वरञ्च तम्। इन्द्रसेनाञ्च तां कन्यामिन्द्रसेनञ्च बालकम् ॥ २३ ॥
आमन्त्र्य भीमं राजानमार्त्तः शोचन्नलं नृपम्। अटमानस्ततो-
ऽयोध्यां जगाम नगरीन्तदा ॥ २४ ॥ ऋतुपर्णं स राजानमुपतस्थे
सुदुःखितः। भृतिञ्चोपययौ तस्य सारथ्येन महीपतेः ॥ २५ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलद्यूते
षष्टितमोऽध्यायः ॥ ६० ॥

---

बृहदश्व उवाच। ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किञ्चन ॥ १ ॥ हृतराज्यं नलं
राजन् प्रहसन् पुष्करोऽब्रवीत्। द्यूतं प्रवर्त्ततां भूयः प्रतिपाणो-
ऽस्ति कस्तव ॥ २ ॥ शिष्टा ते दमयन्त्येका सर्वमन्यज्जितं मया।
दमयन्त्याः पणः साधु वर्त्ततां यदि मन्यसे ॥ ३ ॥ पुष्करेणैव-
मुक्तस्य पुण्यश्लोकस्य मन्युना। व्यदीर्य्यतेव हृदयं न चैनं किञ्चि-
दब्रवीत् ॥ ४ ॥ ततः पुष्करमालोक्य नलः परममन्युमान्।
उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ॥ ५ ॥ एकवासा
ह्यसंवीतः सुहृच्छोकविवर्द्धनः। निश्चक्राम ततो राजा त्यक्ता
सुविपुलां श्रियम् ॥ ६ ॥ दमयन्त्येकवस्त्राथ गच्छन्तं पृष्ठतोऽन्व-
गात्। स तया बाह्यतः सार्द्धं त्रिरात्रं नैषधोऽवसत् ॥ ७ ॥
पुष्करस्तु महाराज घोषयामास वै पुरे। नले यः सम्यगातिष्ठेत्
स गच्छेद्वध्यतां मम ॥ ८ ॥ पुष्करस्य तु वाक्येन तस्य विद्वे-
षणेन च। पौरा न तस्य सत्कारं कृतवन्तो युधिष्ठिर ॥ ९ ॥
स तथा नगराभ्यासे सत्कारार्हो न सत्कृतः। त्रिरात्रमुषितो
राजा जलमात्रेण वर्त्तयन् ॥ १० ॥ पीड्यमानः क्षुधा तत्र फल-

मूलानि कर्षयन्। प्रातिष्ठत ततो राजा दमयन्ती तमन्वगात्
॥ ११ ॥ क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि। अपश्यत्
शकुनान् कांश्चिद्धिरण्यसदृशच्छदान् ॥ १२ ॥ स चिन्तयामास
तदा निषधाधिपतिर्बली। अस्ति भक्ष्यो ममाद्यायं वसु चेदं
भविष्यति ॥ १३ ॥ ततस्तान् परिधानेन वाससा स समावृणोत्।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥ १४ ॥ उत्पतन्तः खगा
वाक्यमेतदाहुस्ततो नलम्। दृष्ट्वा दिग्वाससं भूमौ स्थितं दीन-
मधोमुखम् ॥ १५ ॥ वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ १६ ॥ तान्
समीपगतानक्षानात्मानञ्च विवाससम्। पुण्यश्लोकस्तदा राजन्
दमयन्तीमथाब्रवीत् ॥ १७ ॥ येषां प्रकोपादैश्वर्यात् प्रच्युतोऽह-
मनिन्दिते। प्राणयात्रान्न विन्देयं दुःखितः क्षुधयान्वितः ॥१८॥
येषां कृते न सत्कारमकुर्वन्मयि नैषधाः। इमे ते शकुना भूत्वा
वासो भीरु हरन्ति मे ॥ १९ ॥ वैषम्यं परमं प्राप्तो दुःखितो
गतचेतसः। भर्त्ता तेऽहं निबोधेदं वचनं हितमात्मनः ॥ २० ॥
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम्। अवन्तीमृक्षवन्तञ्च
समतिक्रम्य पर्वतम् ॥ २१ ॥ एष विन्ध्यो महाशैलः पयोष्णी च
समुद्रगा। आश्रमाश्च महर्षीणां बहुमूलफलान्विताः ॥ २२ ॥
एष पन्था विदर्भाणामसौ गच्छति कोशलान्। अतः परञ्च
देशोऽयं दक्षिणे दक्षिणापथः ॥ २३ ॥ एतद्वाक्यं नलो राजा
दमयन्तीं समाहितः। उवाचासकृदार्त्तो हि भैमीमुद्दिश्य भारत
॥ २४ ॥ ततः सा बाष्पकलया वाचा दुःखेन कर्षिता। उवाच
दमयन्ती तं नैषधं करुणं वचः ॥ २५ ॥ उद्विजते मे हृदयं
सीदन्त्यङ्गानि सर्वशः। तव पार्थिव सङ्कल्पं चिन्तयन्त्याः पुनः
पुनः ॥ २६ ॥ हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितम्।
कथमुत्सृज्य गच्छेयं त्वामहं निर्जने वने ॥ २७ ॥ श्रान्तस्य ते

क्षुधार्त्तस्य चिन्तयानस्य तत् सुखम् वने घोरे महाराज नाश-
यिष्याम्यहं क्लमम ॥ २८ ॥ न च भार्य्यासमं किञ्चिद्विद्यते भिषजां
मतम्। औषधं सर्व्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ २९ ॥

नल उवाच। एवमेतद्यथात्थ त्वं दमयन्ति सुमध्यमे। नास्ति
भार्य्यासमं मित्रं नरस्यार्त्तस्य भेषजम् ॥ ३० ॥ न चाहं त्यक्तु-
कामस्त्वां किमलं भीरु शङ्कसे। त्यजेयमहमात्मानं न चैव त्वा-
मनिन्दिते ॥ ३१ ॥

दमयन्त्युवाच। यदि मां त्वं महाराज न विहातुमिहेच्छसि।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ॥ ३२ ॥ अवैमि चाहं
नृपते न तु मां त्यक्तुमर्हसि। चेतसा त्वपकृष्टेन मां त्यजेथा
महीपते ॥ ३३ ॥ पन्थानं हि ममाभीक्ष्णमाख्यासि च नरोत्तम।
अतो निमित्तं शोकं मे वर्द्धयस्यमरोपम ॥ ३४ ॥ यदि चाय-
मभिप्रायस्तव ज्ञातीन् व्रजेदिति। सहितावेव गच्छावो विद-
र्भान् यदि मन्यसे ॥ ३५ ॥ विदर्भराजस्तत्र त्वां पूजयिष्यति
मानद। तेन त्वं पूजितो राजन् सुखं वत्स्यसि नो गृहे ॥ ३६ ॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलयात्रायां
मेकषष्टोऽध्यायः ॥ ६१ ॥

---

नल उवाच। यथा राज्यं तव पितुस्तथा मम न संशयः।
न तु तत्र गमिष्यामि विषमस्थः कथञ्चन ॥ १ ॥ कथं समृद्धो
गत्वाहं तव हर्षविवर्द्धनः। परिच्युतो गमिष्यामि तव शोक-
विवर्द्धनः ॥ २ ॥

वृहदश्व उवाच। इति ब्रुवन्नलो राजा दमयन्तीं पुनः
पुनः। सान्त्वयामास कल्याणीं वाससोऽर्द्धेन संवृताम् ॥ ३ ॥
तावेकवस्त्रसंवीतावटमानावितस्ततः। क्षुत्पिपासापरिश्रान्तौ सभां

काञ्चिदुपैयतुः ॥ ४ ॥ तां सभामुपसम्प्राप्य तदा स निषधाधिपः । वैदर्भ्या सहितो राजा निषसाद महीतले ॥ ५ ॥ स वैकवस्त्रो मलिनो विकटः पांशुगुण्ठितः । दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ ६ ॥ दमयन्त्यपि कल्याणी निद्रयापहृता ततः । सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ७ ॥ सुप्तायां दमयन्त्यान्तु नलो राजा विशाम्पते । शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा ॥ ८ ॥ स तद्राज्यापहरणं सुहृत्त्यागञ्च सर्वशः । वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ९ ॥ किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः । किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ १० ॥ मामियं ह्यनुरक्तैवं दुःखं प्राप्नोति मत्कृते । मद्विहीना त्वियं गच्छेत् कदाचित् स्वजनं प्रति ॥ ११ ॥ मयि निःसंशयं दुःखमिमं प्राप्स्यत्यनुव्रता । उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित् ॥ १२ ॥ स विनिश्चित्य बहुधा विचार्य्य च पुनः पुनः । उत्सर्गं मन्यते श्रेयो दमयन्त्या नराधिप ॥ १३ ॥ न चैषा तेजसा शक्या कैश्चिद्धर्षयितुं पथि । यशस्विनी महाभागा मद्भक्तेयं पतिव्रता ॥ १४ ॥ एवं तस्य तदा बुद्धिर्दमयन्त्यां न्यवर्त्तत । कलिना दुष्टभावेन दमयन्त्या विसर्ज्जने ॥ १५ ॥ सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् । चिन्तयित्वाभ्यगाद्राजा वस्त्रार्द्धस्यावकर्त्तनम् ॥ १६ ॥ कथं वासो विकर्त्तेयं न च बुध्येत मे प्रिया । विचिन्त्यैवं नलो राजा सभां पर्य्यचरत्तदा ॥ १७ ॥ परिधावन्नथ नल इतश्चेतश्च भारत । आससाद सभोद्देशे विकोषं खड्गमुत्तमम् ॥ १८ ॥ तेनार्द्धं वाससश्छित्वा निरस्य च परन्तपः । सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनाम् ॥ १९ ॥ ततो निवृत्तहृदयः पुनरागम्य तां सभाम् । दमयन्तीं तदा दृष्ट्वा रुरोद निषधाधिपः ॥ २० ॥ यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् । सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ २१ ॥

इयं वस्त्रावकर्त्तेन संवीता चारुहासिनी। उन्मत्तेव वरारोहा कथं बुद्धा भविष्यति ॥ २२ ॥ कथमेका सती भैमी मया विरहिता शुभा। चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ २३ ॥ आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ। रक्षन्तु त्वां महाभागे धर्म्मेणासि समावृता ॥ २४ ॥ एवमुक्त्वा प्रियां भार्य्यां रूपेणाप्रतिमां भुवि। कलिनापहृतज्ञानो नलः प्रातिष्ठदुद्यतः ॥ २५ ॥ गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः। आकृष्यमाणः कलिना सौहृदेनावकृष्यते ॥२६॥ द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा। दोलेव मुहुरायाति याति चैव सभां प्रति ॥ २७ ॥ अवकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः। सुप्तामुत्सृज्य तां भार्य्यां विलप्य करुणं बहु ॥ २८ ॥ नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः। जगामैकां वने शून्ये भार्य्यामुत्सृज्य दुःखितः ॥ २९ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलस्य दमयन्तीत्यागे द्विषष्टोऽध्यायः ॥ ६२ ॥

---

वृहदश्व उवाच। अपक्रान्ते नले राजन् दमयन्ती गतक्लमा। अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १ ॥ अपश्यमाना भर्त्तारं शोकदुःखसमन्विता। प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ २ ॥ हा नाथ हा महाराज हा स्वामिन् किं जहासि माम्। हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥ ३ ॥ ननु नाम महाराज धर्म्मज्ञः सत्यवागसि। कथमुक्त्वा तथा सत्यं सुप्तामुत्सृज्य कानने ॥ ४ ॥ कथमुत्सृज्य गन्तासि दक्षां भार्य्यामनुव्रताम्। विशेषतोऽनपकृते परेणापकृते सति ॥ ५ ॥ शक्यसे ता गिरः सम्यक् कर्त्तुं मयि नरेश्वर। यास्तेषां लोकपालानां सन्निधौ कथिताः पुरा ॥ ६ ॥ नाकाले विहितो मृत्यु-

मर्त्यानां पुरुषर्षभ। यत्र कान्ता त्वयोद्दृष्टा मुहूर्त्तमपि जीवति ॥ ७ ॥ पर्य्याप्तः परिहासोऽयमेतावान् पुरुषर्षभ। भीताहमतिदुर्द्धर्ष दर्शयात्मानमीश्वर ॥ ८ ॥ दृश्यसे दृश्यसे राजन्नेष दृष्टोऽसि नैषध। आवार्य्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ९ ॥ नृशंसं वत राजेन्द्र यन्मामेवं गतामिह। विलपन्तीं समागम्य नाश्वासयसि पार्थिव ॥ १० ॥ न शोचाम्यहमात्मानं न चान्यदपि किञ्चन। कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥ ११ ॥ कथं नु राजंस्तृषितः क्षुधितः श्रमकर्षितः। सायाह्ने वृक्षमूलेषु मामपश्यन् भविष्यसि ॥ १२ ॥ ततः सा तीव्रशोकार्त्ता प्रदीप्तेव च मन्युना। इतश्चेतश्च रुदती पर्य्यधावत दुःखिता ॥ १३ ॥ मुहुरुत्पतते बाला मुहुः पतति विह्वला। मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ १४ ॥ अतीव शोकसन्तप्ता मुहुर्निश्वस्य विह्वला। उवाच भैमी निश्वस्य रुदत्यथ पतिव्रता ॥ १५ ॥ यस्याभिशापाद्दुःखार्त्तो दुःखं विन्दति नैषधः। तस्य भूतस्य नो दुःखाद्दुःखमभ्यधिकं भवेत् ॥ १६ ॥ अपापचेतसं पापो य एवं कृतवान्नलम्। तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् ॥ १७ ॥ एवन्तु विलपन्ती सा राज्ञो भार्य्या महात्मनः। अन्वेषमाणा भर्त्तारं वने श्वापदसेविते ॥ १८ ॥ उन्मत्तवद्भीमसुता विलपन्ती इतस्ततः। हाहा राजन्निति मुहुरितश्चेतश्च धावति ॥ १९ ॥ तां क्रन्दमानामत्यर्थं कुररीमिव वाशतीम्। करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः ॥ २० ॥ सहसाभ्यागतां भैमीमभ्याशपरिवर्त्तिनीम्। जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ २१ ॥ सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता। नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ २२ ॥ हा नाथ मामिह वने ग्रस्यमानामनाथवत्। ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ २३ ॥ कथं भविष्यसि पुनर्मामनुस्मृत्य

नैषध । कथं भवान् जगामाद्य मामुत्सृज्य वने प्रभो ॥ २४ ॥ शापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च । श्रान्तस्य ते क्षुधार्त्तस्य परिग्लानस्य नैषध ॥ २५ ॥ कः श्रमं राजशार्दूल नाशयिष्यति तेऽनघ । ततः कश्चिन्मृगव्याधो विचरन् गहने वने ॥२६॥ आक्रन्दमानां संश्रुत्य जवेनाभिससार ह । तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ॥ २७ ॥ त्वरमाणो मृगव्याधः समतिक्रम्य वेगतः । मुखतः पाटयामास शस्त्रेण निशितेन च ॥ २८ ॥ निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवनः । मोक्षयित्वा स तां व्याधः प्रक्षाल्य सलिलेन ह ॥ २९ ॥ समाश्वास्य कृताहारामथ पप्रच्छ भारत । कस्य त्वं मृगशावाक्षि कथञ्चाभ्यागतं वनम् ॥३०॥ कथञ्चेदं महत् कृच्छ्रं प्राप्तवत्यसि भाविनि । दमयन्ती तथा तेन पृच्छ्यमाना विशाम्पते ॥ ३१ ॥ सर्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत । तामर्द्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ॥ ३२ ॥ सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् । अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ॥ ३३ ॥ लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् । तामेवं श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया ॥ ३४ ॥ सान्त्वयामास कामार्त्तस्तदबुध्यत भाविनी । दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ॥३५॥ तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना । स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः ॥ ३६ ॥ दुर्द्धर्षान्तर्कयामास दीप्तामग्निशिखामिव । दमयन्ती तु दुःखार्त्ता पतिराज्यविनाकृता ॥ ३७ ॥ अतीतवाक्पथे काले शशापैनं रुषान्विता । यद्यहं नैषधादन्यं मनसापि न चिन्तये ॥३८॥ तथायं पततां क्षुद्रः परासुर्मृगजीवनः । उक्तमात्रे तु वचने तथा स मृगजीवनः । व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ३९ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि दमयन्तीसर्पग्रासमोचने त्रिषष्टोऽध्यायः ॥ ६३ ॥

बृहदश्व उवाच। सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा। वनं प्रतिभयं शून्यं झिल्लिकागणनादितम्॥ १॥ सिंहद्वीपि-रुरुव्याघ्रमहिषर्क्षमृगैर्युतम्। नानापक्षिगणाकीर्णं म्लेच्छतस्कर-सेवितम्॥ २॥ शालवेणुधवाश्वत्थतिन्दुकेङ्गुदकिंशुकैः। अर्जुना-रिष्टसंच्छन्नं स्यन्दनैश्च सशाल्मलैः॥ ३॥ जम्ब्वाम्रलोध्रखदिर-शालवेत्रसमाकुलम्। पद्मकामलकप्लक्षकदम्बोडुम्बरावृतम्॥ ४॥ बदरीविल्वसंच्छन्नं न्यग्रोधैश्च समाकुलम्। पियालतालखर्जूर-हरीतकविभीतकैः॥ ५॥ नानाधातुशतैर्नद्धान् विविधानपि चाचलान्। निकुञ्जान् पक्षिसङ्घुष्टान् दरीश्चाद्भुतदर्शनाः॥ ६॥ नदीः सरांसि वापीश्च विविधांश्च मृगद्विजान्। सा बहून् भीम-रूपांश्च पिशाचोरगराक्षसान्॥ ७॥ पल्वलानि तडागानि गिरि-कूटानि सर्वशः। सरितो निर्झरांश्चैव ददर्शाद्भुतदर्शनान्॥ ८॥ यूथशो ददृशे तत्र विदर्भाधिपनन्दिनी। महिषांश्च वराहांश्च ऋक्षांश्च वनपन्नगान्॥ ९॥ तेजसा यशसा लक्ष्म्या स्थित्या च परया युता। वैदर्भी विचरत्येका नलमन्वेषती तदा॥ १०॥ नाबिभ्यत सा नृपसुता भैमी तत्राथ कस्यचित्। दारुणामटवीं प्राप्य भर्तृव्यसनपीड़िता॥ ११॥ विदर्भतनया राजन् विललाप सुदुःखिता। भर्तृशोकपरीताङ्गी शिलातलमथाश्रिता॥ १२॥

दमयन्त्युवाच। व्यूढ़ोरस्क महाबाहो नैषधानां जनाधिप। क्व नु राजन् गतोऽस्यद्य विसृज्य विजने वने॥ १३॥ अश्वमेधा-दिभिर्वीर क्रतुभिर्भूरिदक्षिणैः। कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्त्तसे॥ १४॥ यत्त्वयोक्तं नरश्रेष्ठ मत् समक्षं महाद्युते। स्मर्तुमर्हसि कल्याण वचनं पार्थिवर्षभ॥ १५॥ यच्चोक्तं विहगै-र्हंसैः समीपे तव भूमिप। मत् समक्षं यदुक्तञ्च तदवेक्षितुमर्हसि॥ १६॥ चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः स्वधीता मनुजव्याघ्र सत्यमेकं किलैकतः॥ १७॥ तस्मादर्हसि शत्रुघ्न

सत्यं कर्त्तुं नरेश्वर। उक्तवानसि यद्वीर मत्सकाशे पुरा वचः
॥ १८ ॥ हा वीर नल नामाहं नष्टा किल तवानघ। अस्या-
मटव्यां घोरायां किं मां न प्रतिभाषसे ॥ १९ ॥ भर्त्सयत्येष मां
रौद्रो व्यात्तास्यो दारुणाकृतिः। अरण्यराट् क्षुधाविष्टः किं मां
न त्रातुमर्हसि ॥ २० ॥ न मे त्वदन्या काचिद्धि प्रियास्तीत्यब्रवीः
सदा। तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ २१ ॥
उन्मत्तां विलपन्तीं मां भार्य्यामिष्टां नराधिप। ईप्सितामीप्सि-
तोऽसि त्वं किं मां न प्रतिभाषसे ॥ २२ ॥ कृशां दीनां विवर्णाञ्च
मलिनां वसुधाधिप। वस्त्रार्द्धप्रावृतामेकां विलपन्तीमनाथवत्
॥ २३ ॥ यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन। न मानयसि
मामार्य्य रुदतीमरिकर्षण ॥ २४ ॥ महाराज महारण्ये अह-
मेकाकिनी सती। दमयन्त्यभिभाषे त्वां किं मां न प्रतिभाषसे
॥ २५ ॥ कुलशीलोपसम्पन्नं चारुसर्वाङ्गशोभनम्। नाद्य त्वा-
मनुपश्यामि गिरावस्मिन्नरोत्तम ॥ २६ ॥ वने चास्मिन्महाघोरे
सिंहव्याघ्रनिषेविते। शयानमुपविष्टं वा स्थितं वा निषधाधिप
॥ २७ ॥ प्रस्थितं वा नरश्रेष्ठ मम शोकविवर्द्धन। कं नु पृच्छामि
दुःखार्त्ता त्वदर्थे शोककर्षिता ॥ २८ ॥ कच्चिद्दृष्टस्त्वयारण्ये सङ्ग-
त्येह नलो नृपः। को नु मे वाद्य प्रष्टव्यो वनेऽस्मिन् प्रस्थितं
नलम् ॥ २९ ॥ अभिरूपं महात्मानं परव्यूहविनाशनम्। यम-
न्वेषसि राजानं नलं पद्मनिभेक्षणम् ॥ ३० ॥ अयं स इति
कस्याद्य श्रोष्यामि मधुरां गिरम्। अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो
महाहनुः ॥ ३१ ॥ शार्दूलोऽभिमुखोऽभ्येति व्रजाम्येनमशङ्किता।
भवान् मृगाणामधिपस्त्वमस्मिन् कानने प्रभुः ॥ ३२ ॥ विदर्भ-
राजतनयां दमयन्तीति विद्धि माम्। निषधाधिपतेर्भार्य्यां नल-
स्यामित्रघातिनः ॥ ३३ ॥ पतिमन्वेषतीमेकां कृपणां शोक-
कर्षिताम्। आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ॥ ३४ ॥

अथ वा त्वं वनपते नलं यदि न मंससि। मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय ॥ ३५ ॥ शूलारण्ये विलपतीं न मामाश्वासयत्ययम्। यामीमां स्वादुसलिलामापगां सागरङ्गमाम् ॥३६॥ इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितम्। विराजद्भिर्दिवानेकैर्नैकवर्णैर्मनोरमैः ॥ ३७ ॥ नानाधातुसमाकीर्णं विविधोपलभूषितम्। अस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम् ॥ ३८ ॥ सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतम्। पतत्रिभिर्बहुविधैः समन्तादनुनादितम् ॥ ३९ ॥ किंशुकाशोकवकुलपुन्नागैरुपशोभितम्। कर्णिकारधवप्लक्षैः सुपुष्पैरुपशोभितम् ॥ ४० ॥ सरिद्भिः सविहङ्गाभिः शिखरैश्च समाकुलम्। गिरिराजमिमं तावत् पृच्छामि नृपतिं प्रति ॥ ४१ ॥ भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत। शरण्य बहुकल्याण नमस्तेऽस्तु महीधर ॥ ४२ ॥ प्रणमे त्वाभिगम्याहं राजपुत्रीं निबोध माम्। राज्ञः स्नुषां राजभार्य्यां दमयन्तीति विश्रुताम् ॥ ४३ ॥ राजा विदर्भाधिपतिः पिता मम महारथः। भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ॥ ४४ ॥ राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम्। आहर्त्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ॥ ४५ ॥ ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः। शीलवान् वीर्य्यसम्पन्नः पृथुश्रीर्धर्मविच्छुचिः ॥४६॥ सम्यग्गोप्ता विदर्भाणां निर्ज्जितारिगणः प्रभुः। तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ॥ ४७ ॥ निषधेषु महाराज श्वशुरो मे नरोत्तमः। गृहीतनामा विख्यातो वीरसेन इति स्म ह ॥४८॥ तस्य राज्ञः सुतो वीरः श्रीमान् सत्यपराक्रमः। क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ॥ ४९ ॥ नलो नामारिहा श्यामः पुण्यश्लोक इति श्रुतः। ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत् सोमपोऽग्निमान् ॥ ५० ॥ यष्टा दाता च योद्धा च सम्यक् चैव प्रशासिता। तस्य मामबलां श्रेष्ठां विद्धि भार्य्यामिहागताम् ॥ ५१ ॥

त्वन्नाथेयं भर्त्तहीनामनाथां व्यसनान्विताम् । अन्वेषमाणां भर्त्तारं
त्वं मां पर्व्वतसत्तम ॥ ५२ ॥ समुल्लिखद्भिरेतैर्हि त्वया शृङ्ग-
शतैर्नृपः । कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः ॥ ५३ ॥
गजेन्द्रविक्रमो धीमान् दीर्घवाहुरमर्षणः । विक्रान्तः सत्व-
वान् वीरो भर्त्ता मम महायशाः ॥ ५४ ॥ निषधानामधिपतिः
कच्चिद्दृष्टस्त्वया नलः । किं मां विलपतीमेकां पर्व्वतश्रेष्ठ विह्व-
लाम् ॥ ५५ ॥ गिरा नाश्वासयस्यद्य स्वः सुतामिव दुःखिताम् ।
वीर विक्रान्त धर्म्मज्ञ सत्यसन्ध महीपते ॥ ५६ ॥ यद्यस्यस्मिन्
वने राजन् दर्शयात्मानमात्मना । कदा सुस्निग्धगम्भीरां जीमूत-
स्वनसन्निभाम् ॥ ५७ ॥ श्रोष्यामि नैषधस्याहं वाचं तामम्रतोप-
माम् । वैदर्भीत्येव विस्पष्टां शुभां राज्ञो महात्मनः ॥ ५८ ॥
आम्नायसारिणीमृद्धां मम शोकविनाशिनीम् । भीतामाश्वासय च
मां नृपते धर्म्मवत्सल ॥ ५९ ॥ इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिव-
नन्दिनी । दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ६० ॥ सा
गत्वा त्रीनहोरात्रान् ददर्श परमाङ्गना । तापसारण्यमतुलं दिव्य-
काननशोभितम् ॥ ६१ ॥ वशिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ॥ ६२ ॥ अब्भक्षैर्वायुभक्षैश्च
पर्णाहारैस्तथैव च । जितेन्द्रियैर्महाभागैः स्वर्गमार्ग दिदृक्षुभिः ।
वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः ॥ ६३ ॥ तापसाध्युषितं
रम्यं ददर्शाश्रममण्डलम् । नानामृगगणैर्जुष्टं नानाशाखामृगगणायुतम्
॥ ६४ ॥ तापसैः समुपेतञ्च सा दृष्ट्वैव समाश्वसत् । सुभ्रूः सुकेशी
सुश्रोणी सकुचा सुद्विजानना ॥ ६५ ॥ वर्च्चस्विनी सुप्रतिष्ठा स्वसि-
तायतलोचना । सा विवेशाश्रमपदं वीरसेनसुतप्रिया ॥६६॥ योषि-
द्रत्नं महाभागा दमयन्ती तपस्विनी । साभिवाद्य तपोवृद्धान्
विनयावनता स्थिता ॥ ६७ ॥ स्वागतन्तु इति प्रोक्ता तैः सर्व्वैस्ताप-
सैश्च सा । पूजाञ्चास्या यथान्यायं कृत्वा तत्र तपोधनाः ॥ ६८ ॥

आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे। तानुवाच वरारोहा कच्चिद्भगवतामिह ॥६९॥ तपस्स्वग्निषु धर्मेषु मृगपक्षिषु चानघाः। कुशलं वो महाभागाः स्वधर्माचरणेषु च ॥ ७० ॥ तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी। ब्रूहि सर्वानवद्याङ्गि का त्वं किञ्च चिकीर्षसि ॥ ७१ ॥ दृष्ट्वैव ते परं रूपं द्युतिञ्च परमामिह। विस्मयो न समुत्पन्नः समाश्वसिहि मा शुचः ॥ ७२ ॥ अस्यारण्यस्य देवी त्वमुताहोऽस्य महीभृतः। अस्याश्च नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ७३ ॥ साब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता। न चाप्यस्य गिरेर्विप्रा नैव नद्याश्च देवता ॥ ७४ ॥ मानुषीं मां विजानीत यूयं सर्वे तपोधनाः। विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ७५ ॥ विदर्भेषु महीपालो भीमो नाम महीपतिः। तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ७६ ॥ निषधाधिपतिर्धीमान्नलो नाम महायशाः। वीरः सङ्ग्रामजिद्विद्वान्मम भर्त्ता विशाम्पतिः ॥ ७७ ॥ देवताभ्यर्चनपरो द्विजातिजनवत्सलः। गोप्ता निषधवंशस्य महातेजा महाबलः ॥ ७८ ॥ सत्यवान् धर्मवित् प्राज्ञः सत्यसन्धोऽरिमर्द्दनः। ब्रह्मण्यो दैवतपरः श्रीमान् परपुरञ्जयः ॥ ७९ ॥ नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः। मम भर्त्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ८० ॥ आहर्त्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः। सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ८१ ॥ स कैश्चिन्निकृतिप्रज्ञै रनार्य्यैरकृतात्मभिः। आहूय पृथिवीपालः सत्यधर्मपरायणः ॥ ८२ ॥ देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च। तस्य मामवगच्छध्वं भार्य्यां राजर्षभस्य वै ॥ ८३ ॥ दमयन्तीति विख्यातां भर्त्तुर्दर्शनलालसाम्। सा वनानि गिरींश्चैव सरांसि सरितस्तथा ॥ ८४ ॥ पल्वलानि च सर्वाणि तथारण्यानि सर्वशः। अन्वेत्नाग्ता भर्त्तारं नलं रणविशारदम् ॥ ८५ ॥ महात्मानं

कृतास्त्रञ्च विचरामीह दुःखिता। कच्चिद्भगवतां रम्यं तपोवन-
मिदं नृप ॥ ८६ ॥ भवेत् प्राप्तो नलो नाम निषधानां जना-
धिपः। यत्कृतेऽहमिदं ब्रह्मन् प्रपन्ना भृशदारुणम् ॥ ८७ ॥
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम्। यदि कैश्चिदहोरात्रैर्न
द्रक्ष्यामि नलं नृपम् ॥ ८८ ॥ आत्मानं श्रेयसा योक्ष्ये देहस्यास्य
विमोचनात्। को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ॥ ८९ ॥
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीड़िता। तथा विलपती-
मेकामरण्ये भीमनन्दिनीम् ॥ ९० ॥ दमयन्तीमथोचुस्ते तापसाः
सत्यदर्शिनः। उदर्कस्तव कल्याणि कल्याणो भविता शुभे ॥ ९१ ॥
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम्। निषधानामधिपतिं
नलं रिपुनिपातिनम् ॥ ९२ ॥ भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगत-
ज्वरम्। विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ॥ ९३ ॥ तदेव
नगरं श्रेष्ठं प्रशासन्तमरिन्दमम्। द्विषतां भयकर्त्तारं सुहृदां
शोकनाशनम् ॥ ९४ ॥ पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं
नृपम्। एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ॥ ९५ ॥
तापसान्तर्हिताः सर्वे साग्निहोत्राश्रमास्तथा। सा दृष्ट्वा महदा-
श्चर्य्यं विस्मिता ह्यभवत्तदा ॥ ९६ ॥ दमयन्त्यनवद्याङ्गी वीर-
सेननृपस्नुषा। किं नु स्वप्नो मया दृष्टः कोऽयं विधिरिहाभवत्
॥ ९७ ॥ क्व नु ते तापसाः सर्वे क्व तदाश्रममण्डलम्। क्व सा
पुण्यजला रम्या नदी द्विजनिषेविता ॥ ९८ ॥ ध्यात्वा चिरं
भीमसुता दमयन्ती शुचिस्मिता। भर्तृशोकपरा दीना विवर्ण-
वदनाभवत् ॥ ९९ ॥ सा गत्वाथ परां भूमिं वाष्पसन्दिग्धया
गिरा। विललापाश्रुपूर्णाक्षी दृष्ट्वाशोकतरुन्ततः ॥ १०० ॥ उप-
गम्य तरुश्रेष्ठमशोकं पुष्पितं वने। पल्लवापीड़ितं हृद्यं विहङ्गै-
रनुनादितम् ॥ १०१ ॥ अहो बतायमगमः श्रीमानस्मिन् वना-
न्तरे। आपीडैर्बहुभिर्भाति श्रीमान् पर्वतराडिव ॥ १०२ ॥

विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन। वीतशोकभयाबाधं
कच्चित्त्वं दृष्टवान्नृपम् ॥ १०३ ॥ नलं नामारिदमनं दमयन्त्याः
प्रियं पतिम्। निषधानामधिपतिं दृष्टवानसि मे प्रियम् ॥ १०४ ॥
एकवस्त्रार्द्धसंवीतं सुकुमारतनुत्वचम्। व्यसनेनार्द्दितं वीरमरण्य-
मिदमागतम् ॥ १०५ ॥ यथा विशोका गच्छेयमशोक नग तत्
कुरु। सत्यनामा भवाशोक अशोकः शोकनाशनः ॥ १०६ ॥ एवं
साशोकवृक्षमार्त्ता वै परिगम्य ह। जगाम दारुणतरं देशं
भैमी वराङ्गना ॥ १०७ ॥ सा ददर्श नगान्नैकान्नैकाश्च सरित-
स्तथा। नैकांश्च पर्वतान् रम्यान् नैकांश्च मृगपक्षिणः ॥ १०८ ॥
कन्दरांश्च नितम्बांश्च नदीश्चाद्भुतदर्शनाः। ददर्श सा भीमसुता
पतिमन्वेषती तदा ॥ १०९ ॥ गत्वा प्रकृष्टमध्वानं दमयन्ती
शुचिस्मिता। ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम् ॥ ११० ॥
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम्। सुशान्ततोयां विस्तीर्णां
ह्रदिनीं वेतसैर्वृताम् ॥ १११ ॥ प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोप-
कूजिताम्। कूर्मग्राहझषाकीर्णां विपुलद्वीपशोभिताम् ॥ ११२ ॥
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी। उपसर्प्य वरारोहा
जनमध्यं विवेश ह ॥ ११३ ॥ उन्मत्तरूपा शोकार्त्ता तथा वस्त्रार्द्ध-
संवृता। कृशा विवर्णा मलिना पांशुध्वस्तशिरोरुहा ॥ ११४ ॥
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः। केचिच्चिन्तां परां
जग्मुः केचित्तत्र विचुक्रुशुः ॥ ११५ ॥ प्रहसन्ति स्म तां केचि-
दभ्यसूयन्ति चापरे। अकुर्वत दयां केचित् पप्रच्छुश्चापि भारत
॥ ११६ ॥ कासि कस्यासि कल्याणि किं वा मृगयसे वने। त्वां
दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी ॥ ११७ ॥ वद सत्यं
वनस्यास्य पर्वतस्याथ वा दिशः। देवता त्वं हि कल्याणि त्वां
वयं शरणं गताः ॥ ११८ ॥ यक्षी वा राक्षसी वा त्वमुताहोऽसि
वराङ्गना। सर्वथा कुरु नः स्वस्ति रक्ष चास्माननिन्दिते ॥ ११९ ॥

यथायं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत्। तथा विधत्स्व कल्याणि यथा श्रेयो हि नो भवेत् ॥ १२० ॥ तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा। प्रत्युवाच ततः साध्वी भर्तृव्यसनपीड़िता ॥ १२१ ॥ सार्थवाहञ्च सार्थञ्च जना ये तत्र केचन। युवस्थविरबालाश्च सार्थस्य च पुरोगमाः ॥ १२२ ॥ मानुषीं मां विजानीत मनुजाधिपतेः सुताम्। नृपस्नुषां राजभार्य्यां भर्तृदर्शनलालसाम् ॥ १२३ ॥ विदर्भराड् मम पिता भर्त्ता राजा च नैषधः। नलो नाम महाभागस्तं मार्गाम्यपराजितम् ॥ १२४ ॥ यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम्। नलं पुरुषशार्दूलममित्रगणसूदनम् ॥ १२५ ॥ तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः। सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः ॥ १२६ ॥ अहं सार्थस्य नेता वै सार्थवाह शुचिस्मिते। मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥ १२७ ॥ कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि। पश्याम्यस्मिन् वने कृत्स्ने ह्यमनुष्यनिषेविते ॥ १२८ ॥ ऋते त्वां मानुषीं मर्त्यं न पश्यामि महावने। तथा नो यक्षराड़द्य मणिभद्रः प्रसीदतु ॥ १२९ ॥ साब्रवीद्वणिजः सर्वान् सार्थवाहञ्च तं ततः। क्व नु यास्यति सार्थोऽयमेतदाख्यातुमर्हथ ॥ १३० ॥

सार्थवाह उवाच। सार्थोऽयं चेदिराजस्य सुबाहोः सत्यदर्शिनः। क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ १३१ ॥

इति आरण्यकपर्वणि नलोपाख्यानपर्वणि दमयन्तीविलापे चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

बृहदश्व उवाच। सा तच्छ्रुत्वानवद्याङ्गी सार्थवाहवचस्तदा। जगाम सह तेनैव सार्थेन पतिलालसा ॥ १ ॥ अथ काले बहुतिथे वने महति दारुणे। तड़ागं सर्वतोभद्रं पद्मसौगन्धिकं

महत् ॥ २ ॥ ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम्। बहुपुष्प-
फलोपेतं नानापक्षिनिषेवितम् ॥ ३ ॥ निर्मलस्वादुसलिलं मनो-
हारि सुशीतलम्। सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः
॥ ४ ॥ सम्मते सार्थवाहस्य विविशुर्वनमुत्तमम्। उवास सार्थः
सुमहान् वेलामासाद्य पश्चिमाम् ॥ ५ ॥ अथार्धरात्रसमये निः-
शब्दस्तिमिते तदा। सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत्
॥ ६ ॥ पानीयार्थं गिरिनदीं मदप्रस्रवणाविलाम्। अथापश्यत
सार्थं तं सार्थजान् सुबहून् गजान् ॥ ७ ॥ ते तान् ग्राम्यगजान्
दृष्ट्वा सर्वे वनगजास्तदा। समाद्रवन्त वेगेन जिघांसन्तो मदोत्-
कटाः ॥ ८ ॥ तेषामापततां वेगः करिणां दुःसहोऽभवत्। नगा-
ग्रादिव शीर्णानां शृङ्गाणां पततां क्षितौ ॥ ९ ॥ स्पन्दतामपि
नागानां मार्गा नष्टा वनोद्भवाः। मार्गं संरुध्य संसुप्तं पद्मिन्याः
सार्थमुत्तमम् ॥ १० ॥ ते तं ममर्दुः सहसा चेष्टमानं महीतले।
हाहाकारं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः ॥ ११ ॥ वनगुल्मांश्च
धावन्तो निद्रान्धा महतो भयात्। केचिद्दन्तैः करैः केचित् केचित्
पद्भ्यां हता गजैः ॥ ॥ १२ ॥ निहतोष्ट्राश्च बहुलाः पदातिजन-
संकुलाः। भयादाधावमानाश्च परस्परहतास्तदा ॥ १३ ॥ घोरा-
न्नादान् विमुञ्चन्तो निपेतुर्धरणीतले। वृक्षेष्वासज्य संरब्धाः
पतिता विषमेषु च ॥ १४ ॥ एवं प्रकारैर्बहुभिर्दैवेनाक्रम्य
हस्तिभिः। राजन् विनिहतं सर्वं समृद्धं सार्थमण्डलम् ॥ १५ ॥
आरावः सुमहांश्चासीत्त्रैलोक्यभयकारकः। एषोऽग्निरुत्थितः कष्ट-
स्त्रायध्वं धावताधुना ॥ १६ ॥ रत्नराशिर्विशीर्णोऽयं गृह्णीध्वं
किं प्रधावत। सामान्यमेतद्द्रविणं न मिथ्यावचनं मम ॥ १७ ॥
एवमेवाभिभाषन्तो विद्रवन्ति भयात्तदा। पुनरेवाभिधास्यामि
चिन्तयध्वं सुकातराः ॥ १८ ॥ तस्मिंस्तथा वर्तमाने दारुणे
जनसंक्षये। दमयन्ती च बुबुधे भयसन्त्रस्तमानसा ॥ १९ ॥

अपश्यद्वैशसं तत्र सर्वलोकभयङ्करम्। अदृष्टपूर्वं तद्दृष्ट्वा बाला पद्मनिभेक्षणा ॥ २० ॥ संसक्तवदनाश्वासा उत्तस्थौ भयविह्वला। ये तु तत्र विनिर्मुक्ताः सार्थात् केचिदविक्षताः ॥ २१ ॥ तेऽब्रुवन् सहिताः सर्वे कस्येदं कर्मणः फलम्। नूनं न पूजितोऽस्माभिर्मणिभद्रो महायशाः ॥ २२ ॥ तथा यक्षाधिपः श्रीमान्न वै वैश्रवणः प्रभुः। न पूजा विघ्नकर्तॄणामथवा प्रथमं कृता ॥ २३ ॥ शकुनानां फलं वाथ विपरीतमिदं ध्रुवम्। ग्रहा न विपरीतास्तु किमन्यदिदमागतम् ॥ २४ ॥ अपरे त्वब्रुवन् दीना ज्ञातिद्रव्यविनाकृताः। यासावद्य महासार्थे नारी ह्युन्मत्तदर्शना ॥ २५ ॥ प्रविष्टा विकृताकारा कृत्वा रूपममानुषम्। तयेयं विहिता पूर्वं माया परमदारुणा ॥ २६ ॥ राक्षसी वा ध्रुवं यक्षी पिशाची वा भयङ्करी। तस्याः सर्वमिदं पापं नात्र कार्य्या विचारणा ॥२७॥ यदि पश्याम तां पापां सार्थघ्नीं नैकदुःखदाम्। लोष्टुभिः पांशुभिश्चैव तृणैः काष्ठैश्च मुष्टिभि ॥ २८ ॥ अवश्यमेव हन्यामः सार्थस्य किल कृत्यकाम्। दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणम् ॥ २९ ॥ ह्रीता भीता च संविग्ना प्राद्रवद्यत्र काननम्। आशङ्कमाना तत्पापमात्मानं पर्यदेवयत् ॥ ३० ॥ अहो ममोपरि विधेः संरम्भो दारुणो महान्। नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् ॥ ३१ ॥ न स्मराम्यशुभं किञ्चित् कृतं कस्यचिदण्वपि। कर्मणा मनसा वाचा कस्येदं कर्मणः फलम् ॥ ३२ ॥ नूनं जन्मान्तरकृतं पापमापतितं महत्। अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहम् ॥ ३३ ॥ भर्तृराज्यापहरणं स्वजनाच्च पराजयः। भर्त्रा सह वियोगश्च तनयाभ्याञ्च विच्युतिः ॥ ३४ ॥ निर्नाथता वने वासो बहुव्यालनिषेविते। अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा ॥ ३५ ॥ देशात्तस्माद्विनिष्क्रम्य शोचन् वैशसं कृतम्। भ्रातरं पितरं पुत्रं सखायञ्च नराधिप ॥ ३६ ॥ अशोचत्तत्र

वैदर्भी किं नु मे दुष्कृतं कृतम्। योऽपि मे निर्जनेऽरण्ये सं-
प्राप्तोऽयं जनार्णवः ॥ ३७ ॥ स हतो हस्तियूथेन मन्दभाग्या-
न्ममैव तत्। प्राप्तव्यं सुचिरं दुःखं नूनमद्यापि वै मया ॥ ३८ ॥
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम्। या नाहमद्य
मृदिता हस्तियूथेन दुःखिता ॥ ३९ ॥ न ह्यदैवकृतं किञ्चिन्नरा-
णामिह विद्यते। न च मे बालभावेऽपि किञ्चित् पापकृतं कृतम्
॥ ४० ॥ कर्मणा मनसा वाचा यदिदं दुःखमागतम्। मन्ये स्वय-
म्बरकृते लोकपालाः समागताः ॥ ४१ ॥ प्रत्याख्याता मया तत्र
नलस्यार्थाय देवताः। नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम्
॥ ४२ ॥ एवमादीनि दुःखार्त्ता सा विलप्य वराङ्गना। प्रला-
पानि तदा तानि दमयन्ती पतिव्रता ॥ ४३ ॥ हतशेषैः सह
तदा ब्राह्मणैर्वेदपारगैः। अगच्छद्राजशार्दूल चन्द्रलेखेव शारदी
॥ ४४ ॥ गच्छन्ती सा चिराद्बाला पुरमासादयन्महत्। सायाह्ने
चेदिराजस्य सुबाहोः सत्यदर्शिनः ॥ ४५ ॥ अथ वस्त्रार्द्धसंवीता
प्रविवेश पुरोत्तमम्। तां विह्वलां कृशां दीनां मुक्तकेशीममा-
र्जिताम् ॥ ४६ ॥ उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः।
प्रविशन्तीन्तु तां दृष्ट्वा चेदिराजपुरीं तदा ॥ ४७ ॥ अनुजग्मु-
स्तत्र बाला ग्रामिपुत्रा कुतूहलात्। सा तैः परिवृतागच्छत्
समीपं राजवेश्मनः ॥ ४८ ॥ तां प्रासादगतापश्यद्राजमाता जनै-
र्वृताम्। धात्रीमुवाच चैवैनामानयेति ममान्तिकम् ॥ ४९ ॥
जनेन क्लिश्यते बाला दुःखिता शरणार्थिनी। यादृग्रूपञ्च पश्यामि
विद्योतयति मे गृहम् ॥ ५० ॥ उन्मत्तवेशा कल्याणी श्रीरिवा-
यतलोचना। सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ॥ ५१ ॥
आरोप्य विस्मिता राजन् दमयन्तीमपृच्छत। एवमप्यसुखाविष्टा
बिभर्षि परमं वपुः ॥ ५२ ॥ भासि विद्युदिवाभ्रेषु शंस मे कासि
कस्य वा। न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ॥ ५३ ॥

असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे । तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ॥ ५४ ॥ मानुषीं मां विजानीहि भर्त्तारं समनुव्रताम् । सैरिन्ध्रीं जातिसम्पन्नां भुजिष्यां कामवासिनीम् ॥ ५५ ॥ फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् । असङ्ख्येयगुणो भर्त्ता माञ्च नित्यमनुव्रतः ॥ ५६ ॥ भक्ताहमपि तं वीरं छायेवानुगता पथि । तस्य दैवात् प्रसङ्गोऽभूदतिमात्रं सुदेवने ॥ ५७ ॥ द्यूते स निर्जितश्चैव वनमेक उपेयिवान् । तमेकवसनं वीरमुन्मत्तमिव विह्वलम् ॥ ५८ ॥ आश्वासयन्ती भर्त्तारमहमप्यगमं वनम् । स कदाचिद्वने वीरः कस्मिंश्चित् कारणान्तरे ॥ ५९ ॥ क्षुत्परीतस्तु विमनास्तदप्येकं व्यसर्जयत् । तमेकवसना नग्नमुन्मत्तवदचेतसम् ॥ ६० ॥ अनुव्रजन्ती बहुला न स्वपामि निशास्तदा । ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ॥ ६१ ॥ वाससोऽर्द्धं परिच्छिद्य त्यक्तवान्मामनागसम् । तं मार्गमाणा भर्त्तारं दह्यमाना दिवानिशम् ॥ ६२ ॥ साहं कमलगर्भाभमपश्यन्ती हृदि प्रियम् । न विन्दाम्यमरप्रख्यं प्रियं प्राणेश्वरं प्रभुम् ॥ ६३ ॥ तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु । राजमाताब्रवीदार्त्तां भैमीमार्त्तस्वरां स्वयम् ॥ ६४ ॥ वसस्व मयि कल्याणि प्रीतिर्मे परमा त्वयि । मृगयिष्यन्ति ते भद्रे भर्त्तारं पुरुषा मम ॥ ६५ ॥ अपि वा स्वयमागच्छेत् परिधावन्नितस्ततः । इहैव वसती भद्रे भर्त्तारमुपलप्स्यसे ॥ ६६ ॥ राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत् । समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ॥ ६७ ॥ उच्छिष्टं नैव भुञ्जीयां न कुर्य्यां पादधावनम् । न चाहं पुरुषानन्यान् प्रभाषेयं कथञ्चन ॥ ६८ ॥ प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान् भवेत् । वध्यश्च तेऽसकृन्मन्द इति मे व्रतमाहितम् ॥ ६९ ॥ भर्त्तुरन्वेषणार्थन्तु पश्येयं ब्राह्मणानहम् । यद्येवमिह वत्स्यामि त्वत्सकाशे न संशयः ॥ ७० ॥ अतोऽन्यथा

न मे वासो वर्त्तते हृदये क्वचित्। तां प्रहृष्टेन मनसा राज-मातेदमब्रवीत् ॥ ७१ ॥ सर्व्वमेतत् करिष्यामि दिष्ट्या ते व्रतमीदृशम्। एवमुक्त्वा ततो भैमीं राजमाता विशाम्पते ॥ ७२ ॥ उवाचेदं दुहितरं सुनन्दां नाम भारत। सैरिन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ॥ ७३ ॥ वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम्। एतया सह मोदस्व निरुद्विग्नमनाः सदा ॥ ७४ ॥ ततः परमसंहृष्टा सुनन्दा गृहमागतत्। दमयन्तीमुपादाय सखीभिः परिवारिता ॥ ७५ ॥ सा तत्र पूज्यमाना वै दमयन्ती व्यनन्दत। सर्व्वकामैः सुविहितैर्निरुद्वेगावसत्तदा ॥ ७६ ॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि दमयन्ती-चेदिराजगृहवासे पञ्चषष्टोऽध्यायः ॥ ६५ ॥

---

वृहदश्व उवाच। उत्सृज्य दमयन्तीन्तु नलो राजा विशाम्पते। ददर्श दावं दह्यन्तं गहने वने ॥ १ ॥ तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित्। अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ २ ॥ माभैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम्। ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥ ३ ॥ स नागः प्राञ्जलिर्भूत्वा वेपमानो नलस्तदा। उवाच मां विद्धि राजन् नागं कर्कोटकं नृप ॥ ४ ॥ मया प्रलब्धो महर्षिर्नारदः सुमहातपाः। तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ॥ ५ ॥ तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित्। इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् ॥ ६ ॥ तस्य शापान्नशक्तोऽस्मि पदाद्विचलितुं पदम्। उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ७ ॥ सखा च ते भविष्यामो मत्समो नास्ति पन्नगः।

लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ॥ ८ ॥ एवमुक्त्वा
स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः। तं गृहीत्वा नलः प्रायाद्देशं
दावविवर्ज्जितम् ॥ ९ ॥ आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् ॥ १० ॥ पदानि
गणयन् गच्छ स्वानि नैषध कानिचित्। तत्र तेऽहं महाबाहो
श्रेयो धास्यामि यत्परम् ॥ ११ ॥ ततः संख्यातुमारब्धमदशद्दशमे
पदे। तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ १२ ॥ स दृष्ट्वा
विस्मितस्तस्थावात्मानं विकृतं नलः। स्वरूपधारिणं नागं ददर्श
स महीपतिः ॥ १३ ॥ ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत्।
मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति ॥ १४ ॥ यत्कृते
चासि निकृतो दुःखेन महता नल। विषेण स मदीयेन दुःखं
त्वयि निवत्स्यति ॥ १५ ॥ विषेण संवृतैर्गात्रैर्यावत्त्वां न विमो-
क्ष्यति। तावत्त्वयि महाराज दुःखं वै स निवत्स्यति ॥ १६ ॥
अनागा येन निकृतस्त्वमनर्हो जनाधिप। क्रोधादसूययित्वा तं
रक्षा मे भवतः कृता ॥ १७ ॥ न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रु-
तोऽपि वा। ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप ॥ १८ ॥
राजन् विषनिमित्ता च न ते पीड़ा भविष्यति। संग्रामेषु च
राजेन्द्र शश्वज्जयमवाप्स्यसि ॥ १९ ॥ गच्छ राजन्नितः सूतो
बाहुकोऽहमिति ब्रुवन्। समीपमृतुपर्णस्य स हि चैवाक्षनैपुणः
॥ २० ॥ अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर। स तेऽक्ष-
हृदयं दाता राजाश्वहृदयेन वै ॥ २१ ॥ इक्ष्वाकुकुलजः श्रीमान्
मित्रश्चैव भविष्यति। भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा
॥ २२ ॥ समेष्यसि दारैस्त्वं मास्म शोके मनः कृथाः। राज्येन
तनयाभ्याञ्च सत्यमेतद्ब्रवीमि ते ॥ २३ ॥ स्वं रूपञ्च यदा द्रष्टु-
मिच्छेथास्त्वं नराधिप। संस्मर्त्तव्यस्तदा तेऽहं वासश्चेदं निवा-
सयेः ॥ २४ ॥ अनेन वाससाच्छन्नः स्वरूपं प्रतिपत्स्यते। इत्युक्त्वा

प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥२५॥ एवं नलञ्च सन्दिश्य वासो दत्त्वा च कौरव। नागराजस्ततो राजंस्तत्रैवान्तरधीयत ॥ २६ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलकर्कोटक-
संवादे षट्षष्टोऽध्यायः ॥ ६६ ॥

---

वृहदश्व उवाच। तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः। ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि ॥ १ ॥ स राजानमुपातिष्ठ-द्बाहुकोऽहमिति ब्रुवन्। अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ २ ॥ अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च। अन्न-संस्कारमपि च जानाम्यन्यैर्विशेषतः ॥ ३ ॥ यानि शिल्पानि लोकेऽस्मिन् यच्चैवान्यत् सुदुष्करम्। सर्वं यतिष्ये तत्कर्त्तुमृतु-पर्ण भरस्व माम् ॥ ४ ॥

ऋतुपर्ण उवाच। वस बाहुक भद्रन्ते सर्वमेतत् करिष्यसि। शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ५ ॥ स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम। भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतंशताः ॥ ६ ॥ त्वामुपस्थास्यतश्चेत्र नित्यं वार्ष्णेयजीवलौ। एताभ्यां रंस्यसे सार्द्धं वस वै मयि बाहुक ॥ ७ ॥

वृहदश्व उवाच। एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः। ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ८ ॥ स वै तत्रावसद्राजा वैदर्भीमनुचिन्तयन्। सायं सायं सदा चेमं श्लोकमेकं जगाद ह ॥ ९ ॥ क्व नु सा क्षुत्पिपासार्त्ता श्रान्ता शेते तपस्विनी। स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति ॥ १० ॥ एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत्। कामेनां शोचसे नित्यं श्रोतु-मिच्छामि बाहुक ॥ ११ ॥ आयुष्मन् कस्य वा नारी यामेवमनु-

शोचसि । तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित् ॥ १२ ॥
आसीद्बहुमता नारी तस्या दृढ़तरं वचः । स वै केनचिदर्थेन
तथा मन्दो व्ययुज्यत ॥ १३ ॥ विप्रयुक्तः स मन्दात्मा भ्रमत्यसुख-
पीड़ितः । दह्यमानः स शोकेन दिवारात्रमतन्द्रितः ॥ १४ ॥
निशाकाले स्मरंस्तस्याः श्लोकमेवं स गायति । स विभ्रमन्महीं
सर्वां क्वचिदासाद्य किञ्चन ॥ १५ ॥ वसत्यनर्हस्तद्दुःखं भूय एवा-
नुसंस्मरन् । सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ॥ १६ ॥
त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति । एका बालानभिज्ञा
च मार्गाणामतथोचिता ॥ १७ ॥ क्षुत्पिपासापरीताङ्गी दुष्करं
यदि जीवति । श्वापदाचरिते नित्यं वने महति दारुणे ॥ १८ ॥
त्यक्ता तेनाल्पभाग्येन मन्दप्रज्ञेन मारिष । इत्येवं नैषधो राजा
दमयन्तीमनुस्मरन् । अज्ञातवासं न्यवसद्राज्ञस्तस्य निवेशने ॥१९॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलविलापे
सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

बृहदश्व उवाच । हृतराज्ये नले भीमः सभार्य्ये प्रेष्यतां गते ।
द्विजान् प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ १ ॥ सन्दिदेश च
तान् भीमो वसु दत्त्वा च पुष्कलम् । मृगयध्वं नलञ्चैव दम-
यन्तीञ्च मे सुताम् ॥ २ ॥ अस्मिन् कर्मणि सम्पन्ने विज्ञाते निष-
धाधिपे । गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ॥ ३ ॥
अग्रहारांश्च दास्यामि ग्रामं नगरसम्मितम् । नचेच्छक्याविहानेतुं
दमयन्ती नलोऽपि वा ॥ ४ ॥ ज्ञातमात्रेऽपि दास्यामि गवां
दशशतं धनम् । इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतो दिशम्
॥ ५ ॥ पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्य्यया । नैव क्वापि

प्रपश्यन्ति नलं वा भीमपुत्रिकाम् ॥ ६ ॥ ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः। विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ ७ ॥ पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम्। मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन ताम् ॥ ८ ॥ निबद्धां धूमजालेन प्रभामिव विभावसोः। तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम्। तर्कयामास भैमीति कारणैरुपपादयन् ॥ ९ ॥

सुदेव उवाच। यथेयं मे पुरा दृष्टा तथारूपमिदङ्गना। कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम्। पूर्णचन्द्रनिभां श्यामां चारुवृत्तपयोधराम् ॥ १० ॥ कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः। चारुपद्मविशालाक्षीं मन्मथस्य रतीमिव ॥ ११ ॥ दृष्टां समस्तलोकस्य पूर्णचन्द्रप्रभामिव। विदर्भसरसस्तस्माद्दैव-दोषादिवोद्धृताम् ॥ १२ ॥ मलपङ्कानुलिप्ताङ्गीं मृणालीमिव चोद्धृताम्। पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ॥ १३ ॥ पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव। विध्वस्तपर्णकमलां वित्रासितविहङ्गमाम् ॥ १४ ॥ हस्तिहस्तपरामृष्टां व्याकुलामिव पद्मिनीम्। सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ॥ १५ ॥ दह्यमानामिवार्केण मृणालीमिव चोद्धृताम्। रूपौदार्यगुणो-पेतां मण्डनार्हाममण्डिताम् ॥ १६ ॥ चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम्। कामभोगैः प्रियैर्हीनां हीनां बन्धु-जनेन च ॥ १७ ॥ देहं धारयतीं दीनं भर्तृदर्शनकाङ्क्षया। भर्ता नाम परं नार्या भूषणं भूषणैर्विना ॥ १८ ॥ एषा हि रहिता तेन शोभमाना न शोभते। दुष्करं कुरुतेऽत्यर्थं हीनो यदनया नलः ॥ १९ ॥ धारयत्यात्मनो देहं न शोकेनावसीदति। इमा-मसितकेशान्तां शतपत्रायतेक्षणाम् ॥ २० ॥ सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः। कदा नु खलु दुःखस्य पारं यास्यति वै शुभा ॥ २१ ॥ भर्तुः समागमात् साध्वी रोहिणी शशिनो

यथा। अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ॥ २२ ॥ राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वा च मेदिनीम्। तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृताम् ॥ २३ ॥ नैषधोऽर्हति वैदर्भीं तच्चेयमसितेक्षणा। युक्तन्तस्याप्रमेयस्य वीर्य्यसत्त्ववतो मया ॥ २४ ॥ समाश्वासयितुं भार्य्यां पतिदर्शनलालसाम्। अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम्। अदृष्टपूर्वां दुःखस्य दुःखार्त्तां ध्यानतत्पराम् ॥ २५ ॥

बृहदश्व उवाच। एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम्। उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ॥ २६ ॥ अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा। भीमस्य वचनाद्राज्ञि त्वामन्वेष्टुमिहागतः ॥ २७ ॥ कुशली ते पिता राज्ञि जननी भ्रातरश्च ते। आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च तौ ॥ २८ ॥ त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते। अन्वेष्टारो ब्राह्मणाश्च भ्रमन्ति शतशो महीम् ॥ २९ ॥

बृहदश्व उवाच। अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर। पर्य्यपृच्छत तान् सर्व्वान् क्रमशः सुहृदः स्वकान्। रुरोद च भृशं राजन् वैदर्भी शोककर्षिता ॥ ३० ॥ दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम्। ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्षिता ॥ ३१ ॥ सुदेवेन सहैकान्ते कथयन्तीञ्च भारत। जनित्र्याः कथयामास सैरिन्ध्री रुदती भृशम् ॥ ३२ ॥ ब्राह्मणेन सहागम्य तां वेद यदि मन्यसे। अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ॥ ३३ ॥ जगाम यत्र सा बाला ब्राह्मणेन सहाभवत्। ततः सुदेवमानाय्य राजमाता विशाम्पते ॥ ३४ ॥ पप्रच्छ भार्य्या कस्येयं सुता वा कस्य भाविनी। कथञ्च नष्टा ज्ञातिभ्यो भर्त्तुर्वा वामलोचना ॥ ३५ ॥ त्वया च विदिता विप्र कथमेवङ्गता सती। एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्व्वमशेषतः ॥ ३६ ॥ तत्त्वेन हि

ममाचष्ट्व पृच्छन्त्या दैवरूपिणीम्। एवमुक्तस्तया राजन् सुदेवो द्विजसत्तमः। सुखोपविष्ट आचष्ट दमयन्त्या यथातथम्॥ ३७॥

इति आरण्यपर्वणि नलोपाख्यानपर्व्वणि दमयन्तीसुदेव-संवादे अष्टषष्टोऽध्यायः॥ ६८॥

---

सुदेव उवाच। विदर्भराजो धर्मात्मा भीमो नाम महाद्युतिः। सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता॥ १॥ राजा तु नैषधो नाम वीरसेनसुतो नलः। भार्य्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः॥ २॥ स द्यूतेन जितो भ्रात्रा हृतराज्यो महीपतिः। दमयन्त्या गतः सार्द्धं न प्राज्ञायत कस्यचित्॥ ३॥ ते वयं दमयन्त्यर्थं चरामः पृथिवीमिमाम्। सेयमासादिता बाला तव पुत्रनिवेशने॥ ४॥ अस्या रूपेण सदृशी मानुषी न हि विद्यते। अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुसत्तमः॥ ५॥ श्यामायाः पद्मसङ्काशो लक्षितोऽन्तर्हितो मया। मलेन संवृतो ह्यस्याश्छन्नोऽभ्रेणेव चन्द्रमाः॥ ६॥ चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः। प्रतिपत्कलुषस्येन्दोर्लेखा नातिविराजते॥ ७॥ न चास्या दृश्यते रूपं वपुर्मलसमाचितम्। असंस्कृतमपि व्यक्तं भाति काञ्चनसन्निभम्॥ ८॥ अनेन वपुषा बाला पिप्लुनानेन सूचिता। लक्षितेयं मया देवी निभृतोऽग्निरिवोष्मणा॥ ९॥ तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशाम्पते। सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम्॥ १०॥ स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत। दमयन्त्या यथा व्यभ्रे नभसीव निशाकरः॥ ११॥ पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत। रुदन्त्यौ तां परिष्वज्य मुहूर्त्तमिव तस्थतुः॥ १२॥ उत्सृज्य वाष्पं शनकै राजमातेदमब्रवीत्। भगिन्या दुहिता मेऽसि पिप्लु-

नानेन सूचिता ॥ १३ ॥ अहञ्च तव माता च राज्ञस्तस्य महात्मनः । सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ १४ ॥ भीमस्य राज्ञः सा दत्ता वीरवाहोरहं पुनः । त्वन्तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ १५ ॥ यथैव ते पितुर्गेहं तथैव मम भाविनि । यथैव च ममैश्वर्य्यं दमयन्ति तथा तव ॥ १६ ॥ तां प्रहृष्टेन मनसा दमयन्ती विशाम्पते । प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ १७ ॥ अज्ञायमानापि सती सुखमस्म्युषिता त्वयि । सर्व्वकामैः सुविहिता रक्ष्यमाना सदा त्वया ॥ १८ ॥ सुखात् सुखतरं वासो भविष्यति न संशयः । चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ १९ ॥ दारकौ च हि मे नीतौ वसतस्तत्र बालकौ । पित्रा विहीनौ शोकार्त्तौ मया चैव कथं नु तौ ॥ २० ॥ यदि चापि प्रियं किञ्चिन्मयि कर्त्तुमिहेच्छसि । विदर्भान् यातुमिच्छामि शीघ्रं मे यानमादिश ॥ २१ ॥ बाढमित्येव तामुक्त्वा हृष्टा मातृस्वसा नृप । गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ २२ ॥ प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना । यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ २३ ॥ ततः सा नचिरादेव विदर्भानगमत् पुनः । तान्तु बन्धुजनः सर्व्वः प्रहृष्टः समपूजयत् ॥ २४ ॥ सर्व्वान् कुशलिनो दृष्ट्वा बान्धवान् दारकौ च तौ । मातरं पितरञ्चोभौ सर्व्वञ्चैव सखीजनम् ॥ २५ ॥ देवताः पूजयामास ब्राह्मणांश्च यशस्विनी । परेण विधिना देवि दमयन्ती विशाम्पते ॥ २६ ॥ अतर्पयत् सुदेवञ्च गोसहस्रेण पार्थिवः । प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ २७ ॥ सा व्युष्टा रजनीन्तत्र पितुर्व्वेश्मनि भाविनी । विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ २८ ॥

दमयन्त्युवाच । माञ्चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते । नरवीरस्य वै तस्य नलस्यानयने यत ॥ २९ ॥ दमयन्त्या

तथोक्ता तु सा देवी भृशदुःखिता। बाष्पेनापिहिता राज्ञी नोत्तरं किञ्चिदब्रवीत् ॥ ३० ॥ तदवस्थान्तु तां दृष्ट्वा सर्वमन्तःपुरं तदा। हाहाभूतमीवासीद्धि भृशञ्च प्ररुरोद ह ॥ ३१ ॥ ततो भीमं महाराजं भार्य्या वचनमब्रवीत्। दमयन्ती तव सुता भर्त्तारमनुशोचति ॥ ३२ ॥ अपकृष्य च लज्जां सा स्वयमुक्तवती नृप। प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे ॥ ३३ ॥ तया प्रचोदितो राजा ब्राह्मणान् वशवर्त्तिन। प्रास्थापयद्दिशः सर्वा यतध्वं नलमार्गणे ॥ ३४ ॥ ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा। दमयन्तीमथो दृष्ट्वा प्रस्थितास्ते तथाब्रुवन् ॥ ३५ ॥ अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः। ब्रुयास्तज्जनसंसत्सु तत्र तत्र पुनः पुन ॥ ३६ ॥ क्व नु त्वं कितव च्छित्वा वस्त्रार्द्धं प्रस्थितो मम। उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ३७ ॥ सा वै यथा त्वया दिष्टा तथास्ते त्वत्प्रतीक्षिणी। दह्यमाना भृशं बाला वस्त्रार्द्धेनाभिसंवृता ॥ ३८ ॥ तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव। प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ॥३९॥ एवमन्यच्च वक्तव्यं कृपां कुर्य्याद्यथा मयि। वायुना धूयमानो हि वनं दहति पावकः ॥ ४० ॥ भर्त्तव्या रक्षणीया च पत्नी हि पतिना सदा। तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ ४१ ॥ ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशो भवान् सदा। संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ ४२ ॥ तत् कुरुष्व नरव्याघ्र दयां मयि नरर्षभ। आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतः ॥ ४३ ॥ एवं ब्रुवाणान् यदि वः प्रतिब्रूयाद्धि कश्चन। स नरः सर्वथा ज्ञेयः कश्चासौ क्व नु वर्त्तते ॥ ४४ ॥ यश्चैवं वचनं श्रुत्वा ब्रूयात् प्रतिवचो नरः तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः ॥ ४५ ॥ यथा च वो न जानीयाद्ब्रूवतो मम शासनात्। पुनरागमनञ्चैव तथा कार्य्यमतन्द्रितैः ॥ ४६ ॥ यदि वासौ

समर्थः स्याद्यदि वाप्यधनो भवेत्। यदि वाप्यसमर्थं स्यात् ज्ञेयमस्य चिकीर्षितम् ॥ ४७ ॥ एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्व्वतो दिशः। नलं मृगयितुं राजंस्तदा व्यसनिनं तथा ॥ ४८ ॥ ते पुराणि सराष्ट्राणि ग्रामान् घोषांस्तथाश्रमान्। अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः ॥ ४९ ॥ तच्च वाक्यं तथा सर्व्वं तत्र तत्र विशाम्पते। श्रावयाञ्चक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ ५० ॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलान्वेषणे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

वृहदश्व उवाच। अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः। प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ १ ॥ नैषधं मृगयाणेन दमयन्ति मया नलम्। अयोध्यां नगरीं गत्वा भाङ्गासुरिरुपस्थितः ॥ २ ॥ श्रावितश्च मया वाक्यं त्वदीयं स महाजने। ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३ ॥ तच्छ्रुत्वा नाब्रवीत् किञ्चिदृतुपर्णो नराधिपः। न च पारिषदः कश्चिद्भाष्यमाणो मयासकृत् ॥ ४ ॥ अनुज्ञातन्तु मां राज्ञा विजने कश्चिदब्रवीत्। ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ५ ॥ सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः। शीघ्रयानेषु कुशलो मिष्टकर्त्ता च भोजने ॥ ६ ॥ स विनिश्वस्य बहुशो रुदित्वा च पुनः पुनः। कुशलञ्चैव मां दृष्ट्वा पश्चादिदमभाषत ॥ ७ ॥ वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः। आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ ८ ॥ रहिता भर्तृभिश्चैव न कुप्यन्ति कदाचन। प्राणांश्चारित्रकवचान् धारयन्ति वरस्त्रियः ॥ ९ ॥ विषमस्थेन मूढ़ेन परिभ्रष्टसुखेन तु। यत् सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ १० ॥ प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः। आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ११ ॥

सत्कृतासत्कृता वापि पतिं दृष्ट्वा यथागतम् । भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ १२ ॥ तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः । श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ १३ ॥ एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशाम्पते । दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥ १४ ॥ अयमर्थो न संवेद्यो भीमे मातः कदाचन । त्वत्सन्निधौ नियोक्ष्येऽहं सुदेवं द्विजसत्तमम् ॥ १५ ॥ यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् । तथा त्वया प्रयत्तव्यं मम चेत् प्रियमिच्छसि ॥ १६ ॥ तथा चाहं समानीता सुदेवेनाशु बान्धवान् । तेनैव मङ्गलेनाशु सुदेवो यातु माचिरम् ॥ १७ ॥ समानेतुं नलं मातरयोध्यां नगरीमितः । विश्रान्तन्तु ततः पश्चात् पर्णादं द्विजसत्तमम् ॥ १८ ॥ अर्चयामास वैदर्भी धनेनातीव भाविनी । नले चेहागते विप्र भूयो दास्यामि ते वसु ॥ १९ ॥ त्वया हि मे बहु कृतं यदन्यो न करिष्यति । यद्भर्त्राहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ २० ॥ स एवमुक्तोऽथाश्वास्य आशीर्वादैः सुमङ्गलैः । गृहानुपययौ चापि कृतार्थः स महामनाः ॥२१॥ ततः सुदेवमाभाष्य दमयन्ती युधिष्ठिर । अब्रवीत् सन्निधौ मातुर्दुःखशोकसमन्विता ॥१२॥ गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् । ऋतुपर्णं वचो ब्रूहि संपतन्निव कामगः ॥ २३ ॥ आस्थास्यति पुनर्भैमी दमयन्ती स्वयम्वरम् । तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २४ ॥ यथा च गणितः कालः श्वोभूते स भविष्यति । यदि सम्भावनीयन्ते गच्छ शीघ्रमरिन्दम ॥ २५ ॥ सूर्योदये द्वितीयं सा भर्त्तारं वरयिष्यति । न हि स ज्ञायते वीरो नलो जीवति वा न वा ॥ २६ ॥ एवं तया यथोक्तो वै गत्वा राजानमब्रवीत् । ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ २७ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि दमयन्तीपुनःस्वयम्वरकथने सप्ततितमोऽध्यायः ॥ ७० ॥

बृहदश्व उवाच। श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः। सान्त्वयन् श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ १ ॥ विदर्भं यातुमिच्छामि दमयन्त्याः स्वयम्बरम्। एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ २ ॥ एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह। व्यदीर्य्यत मनो दुःखात् प्रदध्यौ च महामनाः ॥ ३ ॥ दमयन्ती भवेदेतत् कुर्य्याद्दुःखेन मोहिता। अस्मदर्थे भवेद्वायमुपायश्चिन्तितो महान् ॥ ४ ॥ नृशंसं बत वैदर्भी कर्त्तुकामा तपस्विनी। मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ॥ ५ ॥ स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः। स्यादेवमपि कुर्य्यात् सा विवासाद्गतसौहृदा ॥ ६ ॥ मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा। नैवं सा कर्हिचित् कुर्य्यात् सापत्या च विशेषतः ॥ ७ ॥ यदत्र सत्यं वासत्यं गत्वा वेत्स्यामि निश्चयम्। ऋतुपर्णस्य वै काममात्मार्थञ्च करोम्यहम् ॥ ८ ॥ इति निश्चित्य मनसा बाहुको दीनमानसः। कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम् ॥ ९ ॥ प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप। एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ १० ॥ ततः परीक्षामश्वानाञ्चक्रे राजन् स बाहुकः। अश्वशालामुपागम्य भाङ्गास्वरिनृपाज्ञया ॥ ११ ॥ स त्वर्य्यमाणो बहुश ऋतुपर्णेन बाहुकः। अश्वान् जिज्ञासमानो वै विचार्य्य च पुनः पुनः ॥ १२ ॥ अध्यगच्छत् कृशानश्वान् समर्थानध्वनि क्षमान्। तेजोबलसमायुक्तान् कुलशीलसमन्वितान् ॥ १३ ॥ वर्जितान् लक्षणैर्हीनैः पृथुप्रोथान्महाहनून्। शुद्धान् दशभिरावर्त्तैः सिन्धुजान् वातरंहसः ॥ १४ ॥ दृष्ट्वा तानब्रवीद्राजा किञ्चित्कोपसमन्वितः। किमिदं प्रार्थितं कर्त्तुं प्रलब्धव्या न ते वयम् ॥ १५ ॥ कथमल्पबलप्राणा वक्ष्यन्तीमे हयामम। महदध्वानमपि च गन्तव्यं कथमीदृशैः ॥ १६ ॥

बाहुक उवाच। एको ललाटे द्वौ मूर्ध्नि द्वौ द्वौ पार्श्वोप-

पार्श्वयोः। द्वौ द्वौ वहन्ति विज्ञेयौ प्रयाणे चैक एव तु ॥ १७ ॥ एते हया गमिष्यन्ति विदर्भान्नात्र संशयः। यानन्यान्मन्यसे राजन् ब्रूहि तान् योजयामि ते ॥ १८ ॥

ऋतुपर्ण उवाच। त्वमेव हयतत्त्वज्ञ कुशलो ह्यसि बाहुक। यान् मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ १९ ॥ ततः सदश्वांश्चतुरः कुलशीलसमन्वितान्। योजयामास कुशलो जवयुक्तान्रथे नलः ॥ २० ॥ ततो युक्तं रथं राजा समारोहत्त्वरान्वितः। अथ पर्यपतन् भूमौ जानुभिस्ते हयोत्तमाः ॥ २१ ॥ ततो नरवरः श्रीमान्नलो राजा विशाम्पते। सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ २२ ॥ रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः। सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम ॥ २३ ॥ ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः। समुत्पेतुरथाकाशं रथिनं मोहयन्निव ॥ २४ ॥ तथा तु दृष्ट्वा तानश्वान् वहतो वातरंहसः। अयोध्याधिपतिः श्रीमान् विस्मयं परमं ययौ ॥ २५ ॥ रथघोषन्तु तं श्रुत्वा हयसंग्रहणञ्च तत्। वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ २६ ॥ किं नु स्यान्मातलिरयं देवराजस्य सारथिः। तथा तल्लक्षणं वीरे बाहुके दृश्यते महत् ॥ २७ ॥ शालिहोत्रोऽथ किन्नु स्याद्धयानां कुलतत्त्ववित्। मानुषं समनुप्राप्तो वपुः परमशोभनम् ॥ २८ ॥ उताहोस्विद्भवेद्राजा नलः परपुरञ्जयः। सोऽयं नृपतिरायात इत्येवं समचिन्तयत् ॥ २९ ॥ अथ चेह नलो विद्यां वेत्ति तामेव बाहुकः। तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ ३० ॥ अपि चेदं वयस्तुल्यं बाहुकस्य नलस्य च। नायं नलो महावीर्य्यस्तद्विद्यश्च भविष्यति ॥ ३१ ॥ प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम्। दैवेन विधिना युक्ताः शास्त्रोक्तैश्च निरूपणैः ॥ ३२ ॥ भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति। प्रमाणात् परिहीनस्तु भवेदिति मतिर्मम ॥ ३३ ॥

वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्य्ययः। नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ३४ ॥ एवं विचार्य्य बहुशो वार्ष्णेयः पर्य्यचिन्तयत्। हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ३५ ॥ ऋतुपर्णश्च राजेन्द्रो बाहुकस्य हयज्ञताम्। चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ३६ ॥ ऐकाग्र्यञ्च तथोत्साहं हयसंग्रहणं च तत्। परं यत्नञ्च संप्रेक्ष्य परां मुदमवाप ह ॥ ३७ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि ऋतुपर्णविदर्भगमने एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

वृहदश्व उवाच। स नदीः पर्वतांश्चैव वनानि च सरांसि च। अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ १ ॥ तथा प्रयाते तु रथे तदा भाङ्गासुरिर्नृपः। उत्तरीयमथोऽपश्यद्भ्रष्टं परपुरञ्जयः ॥ २ ॥ ततः स त्वरमाणस्तु पटे निपतिते तदा। ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ ३ ॥ निगृह्णीष्व महाबुद्धे हयानेतान् महाजवान्। वार्ष्णेयो यावदेतं मे पटमानयतामिह ॥ ४ ॥ नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव। योजनं समतिक्रान्तो नाहर्त्तुं शक्यते पुनः ॥ ५ ॥ एवमुक्तो नलेनाथ तदा भाङ्गासुरिर्नृपः। आससाद वने राजन् फलवन्तं विभीतकम् ॥ ६ ॥ तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत। ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ७ ॥ सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन। नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥ ८ ॥ वृक्षेऽस्मिन् यानि पर्णानि फलान्यपि च बाहुक। पतितान्यपि यान्यत्र तत्रैकमधिकं शतम् ॥ ९ ॥ एकमत्राधिकं पत्रं फलमेकञ्च बाहुक। पञ्चकोटयोऽथ पत्राणां द्वयोरपि च

शाखयोः ॥ १० ॥ अपिनु चास्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ ११ ॥ ततो रथमव-
स्थाप्य राजानं बाहुकोऽब्रवीत्। परोक्षमिव मे राजन् कत्थसे
शत्रुकर्षण ॥ १२ ॥ प्रत्यक्षमेतत् कर्त्तास्मि शातयित्वा विभीतकम्।
अथात्र गणिते राजन् विद्यते न परोक्षता ॥ १३ ॥ प्रत्यक्षं ते
महाराज शातयिष्ये विभीतकम्। अहं हि नाभिजानामि भवे-
देवं न वेति वा ॥ १४ ॥ संख्यास्यामि फलान्यस्य पश्यतस्ते जना-
धिप। मुहूर्त्तमपि वार्ष्णेयो रश्मीन् यच्छतु वाजिनाम् ॥ १५ ॥
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितम्। बाहुकस्त्वब्रवीदेनं
परं यत्नं समास्थितः ॥ १६ ॥ प्रतीक्षस्व मुहूर्त्तं त्वमथवा त्वरते
भवान्। एष याति शिवः पन्थाः याहि वार्ष्णेयसारथिः ॥ १७ ॥
अब्रवीदृतुपर्णस्तु सान्त्वयन् कुरुनन्दन। त्वमेव यन्ता नान्योऽस्ति
पृथिव्यामपि बाहुक ॥ १८ ॥ त्वत्कृते यातुमिच्छामि विदर्भान्
हयकोविद। शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्त्तुमर्हसि ॥ १९ ॥
कामञ्च ते करिष्यामि यन्मां वक्ष्यसि बाहुक। विदर्भान् यदि
यात्वाद्य सूर्य्यं दर्शयितासि मे ॥ २० ॥ अथाब्रवीद्बाहुकस्तं
संख्याय च विभीतकम्। ततो विदर्भान् यास्यामि कुरुष्वैवं वचो
मम ॥ २१ ॥ अकाम इव तं राजा गणयस्वेत्युवाच ह। एक-
देशञ्च शाखायाः समादिष्टं मतानघ ॥ २२ ॥ गणयस्वास्य तत्त्वज्ञ
ततस्त्वं प्रीतिमावह। सोऽवतीर्य्य रथात्तूर्णं शातयामास तं
द्रुमम् ॥ २३ ॥ ततः स विस्मयाविष्टो राजानमिदमब्रवीत्।
गणयित्वा यथोक्तानि तावन्त्येव फलानि च ॥ २४ ॥ अत्यद्भुत-
मिदं राजन् दृष्टवानस्मि ते बलम्। श्रोतुमिच्छामि ते विद्यां
ययैतज्ज्ञायते नृप ॥ २५ ॥ तमुवाच ततो राजा त्वरितो गमने
नृपः। विद्ध्यक्षहृदयज्ञं मां सङ्ख्याने च विशारदम् ॥ २६ ॥
बाहुकस्तमुवाचाथ देहि विद्यामिमां मम। मत्तोऽपि चाश्वहृदयं

महाराज पुरुषर्षभ ॥ २७ ॥ ऋतुपर्णस्ततो राजा वाहुकं कार्य्य-
गौरवात्। हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः ॥ २८ ॥
यथोक्तं त्वं मयाप्येदमक्षाणां हृदयं परम्। निक्षेपो मेऽश्व-
हृदयं त्वयि तिष्ठति वाहुक ॥ २९ ॥ एवमुक्त्वा ददौ विद्या-
मृतुपर्णो नलाय वै। तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः
॥ ३० ॥ कर्कोटकविषं तीक्ष्णं मुखात् सततमुद्वमन्। कलेस्तस्य
तदार्त्तस्य शापाग्निः स विनिःसृतः ॥ ३१ ॥ स तेन कर्षितो
राजा दीर्घकालमनात्मवान्। ततो विषविमुक्तात्मा स्वं रूप-
मकरोत् कलिः ॥ ३२ ॥ तं शप्तुमैच्छत् कुपितो निषधाधिपति-
र्नलः। तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ॥ ३३ ॥ कोपं
संयच्छ नृपते कीर्त्तिं दास्यामि ते पराम्। इन्द्रसेनस्य जननी
कुपिता माशपत् पुरा ॥ ३४ ॥ यदा त्वया परित्यक्ता ततोऽहं
भृशपीड़ितः। अवसं त्वयि राजेन्द्र सुदुःखमपराजित ॥ ३५ ॥
विषेण नागराजस्य दह्यमानो दिवानिशम्। शरणं त्वां प्रप-
न्नोऽस्मि शृणु चेदं वचो मम ॥ ३६ ॥ ये च त्वां मनुजा लोके
कीर्त्तयिष्यन्त्यतन्द्रिताः। मत्प्रसूतं भयं तेषां न कदाचिद्भवि-
ष्यति ॥ ३७ ॥ भयार्त्तं शरणं यातं यदि मां त्वं न शप्स्यसे।
एवमुक्तो नलो राजा न्ययच्छत् कोपमात्मनः ॥ ३८ ॥ ततो
भीतः कलिः क्षिप्रं प्रविवेश विभीतकम्। कलिस्त्वन्यैस्तदादृश्यः
कथयन्नैषधेन वै ॥ ३९ ॥ ततो गतज्वरो राजा नैषधः पर-
वीरहा। संप्रनष्टे कलौ राजन् संख्यायास्य फलान्युत ॥ ४० ॥
मुदा परमया युक्तस्तेजसाथ परेण वै। रथमारुह्य तेजस्वी
प्रययौ जवनैर्हयैः ॥ ४१ ॥ विभीतकश्चाप्रशस्तः संवृत्तः कलि-
संश्रयात्। हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ॥ ४२ ॥
नलः सञ्चोदयामास प्रहृष्टेनान्तरात्मना। विदर्भाभिमुखो राजा
प्रययौ स महायशाः ॥ ४३ ॥ नले तु समतिक्रान्ते कलिरप्य-

गमद्ध्रुवम्। ततो गतज्वरो राजा नलोऽभूत् पृथिवीपतिः। विमुक्तः कलिना राजन् रूपमात्रवियोजितः ॥ ४४ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलकलित्यागो द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

बृहदश्व उवाच। ततो विदर्भां संप्राप्तं सायाह्ने सत्यविक्रमम्। ऋतुपर्णं जना राज्ञे भीमाय प्रत्यपादयन् ॥ १ ॥ स भीमवचनाद्राजा कुण्डिनं प्राविशत् पुरम्। नादयन्रथघोषेण सर्वाः सविदिशो दिशः ॥ २ ॥ ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः। श्रुत्वा तु समहृष्यन्त पुरेव नलसन्निधौ ॥ ३ ॥ दमयन्ती तु शुश्राव रथघोषं नलस्य तम्। यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ४ ॥ परं विस्मयमापन्ना श्रुत्वा नादं महास्वनम्। नलेन संगृहीतेषु पुरेव नलवाजिषु ॥ ५ ॥ सदृशं रथनिर्घोषं मेने भैमी तथा हयाः। प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ॥ ६ ॥ हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः। ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा। प्रणेदुरुन्मुखा राजन् मेघनाद इवोत्सुकाः ॥ ७ ॥

दमयन्त्युवाच। यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम्। ममाह्लादयते चेतो नल एष महीपतिः ॥ ८ ॥ अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि। असंख्येयगुणं वीरं विनङ्क्ष्यामि न संशयः ॥ ९ ॥ यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम्। प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयम् ॥ १० ॥ यदि मां मेघनिर्घोषो नोपगच्छति नैषधः। अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ११ ॥ यदि मां सिंहविक्रान्तो मत्तवारणविक्रमः। नाभिगच्छति राजेन्द्रो विनङ्क्ष्यामि न संशयः ॥ १२ ॥ न स्मरा-

स्यनृतं किञ्चिन्न स्मराम्यपकारताम् । न च पर्य्युषितं वाक्यं स्वैरे-
ष्वपि कदाचन। प्रभुः क्षमावान् वीरश्च दाता चाप्यधिको नृपैः
॥ १३ ॥ रहोऽनीचानुवर्त्ती च क्लीववन्मम नैषधः। गुणांस्तस्य
स्मरन्त्या मे तत्पराया दिवानिशम् ॥ १४ ॥ हृदयं दीर्य्यत इदं
शोकात् प्रियविनाकृतम्। एवं विलपमाना सा नष्टसंज्ञेव भारत
॥ १५ ॥ आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया। ततो मध्यम-
कक्षायां ददर्श रथमास्थितम् ॥ १६ ॥ ऋतुपर्णं महीपालं सह-
वार्ष्णेयबाहुकम्। ततोऽवतीर्य्य वार्ष्णेयो बाहुकश्च रथोत्तमात्
॥ १७ ॥ हयांस्तानवमुच्याथ स्थापयामास वै रथम्। सोऽवतीर्य्य
रथोपस्थादृतुपर्णो नराधिपः ॥ १८ ॥ उपतस्थे महाराजं भीमं
भीमपराक्रमम्। तं भीमः प्रतिजग्राह पूजया परया ततः ॥१९॥
स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः। स तत्र कुण्डिने
रम्ये वसमानो महीपतिः ॥ २० ॥ न च किञ्चित्तदापश्यत् प्रेक्ष-
माणो मुहुर्मुहुः। स तु राज्ञा समागम्य विदर्भपतिना तदा
॥ २१ ॥ अकस्मात् सहसा प्राप्तं स्त्रीमन्तं न स्म विन्दति। किं
कार्य्यं स्वागतं तेऽस्तु राज्ञा पृष्टः स भारत ॥ २२ ॥ नाभिजज्ञे
स नृपतिर्दुहित्रर्थे समागतम्। ऋतुपर्णोऽपि राजा स धीमान्
सत्यपराक्रमः ॥ २३ ॥ राजानं राजपुत्रं वा न स्म पश्यति
कञ्चन। नैव स्वयम्वरकथां न च विप्रसमागमम् ॥ २४ ॥ ततो
विगणयन्राजा मनसा कोशलाधिपः। आगतोऽस्मीत्युवाचैनं
भवन्तमभिवादकः ॥ २५ ॥ राजापि च स्मयन् भीमो मनसा
समचिन्तयत्। अधिकं योजनशतं तस्यागमनकारणम् ॥ २६ ॥
ग्रामानन्यानतिक्रम्य प्राप्तोऽयमभिवादकः। ग्रामान् बहूनति-
क्रम्य नाभ्यगच्छद्यथातथम् ॥ २७ ॥ अल्पकार्य्यं विनिर्दिष्टं
तस्यागमनकारणम्। पश्चादुदर्के ज्ञास्यामि कारणं यद्भविष्यति
॥ २८ ॥ नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत्। विश्राम्यता-

मित्युवाच क्लान्तोऽस्मीति पुनः पुनः॥ २९ ॥ स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिव। राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत्॥ ३०॥ ऋतुपर्णे गते राजन् वार्ष्णेयसहिते नृपे। बाहुको रथमादाय रथशालामुपागमत्॥ ३१॥ स मोचयित्वा तानश्वाननुपचर्य्य च शास्त्रतः। स्वयञ्चैतान् समाश्वास्य रथोपस्थ उपाविशत्॥ ३२॥ दमयन्ती तु शोकार्त्ता दृष्ट्वा भाङ्गासुरिं नृपम्। सूतपुत्रञ्च वार्ष्णेयं बाहुकञ्च तथाविधम्॥ ३३॥ चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः। नलस्येव महानासीन्न च पश्यामि नैषधम्॥ ३४॥ वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता। तेनास्य रथनिर्घोषो नलस्येव महानभूत्॥ ३५॥ आहोस्विदृतुपर्णोऽपि यथा राजा नलस्तथा। तथायं रथनिर्घोषो नैषधस्येव लक्ष्यते॥३६॥ एवं सा तर्कयित्वा तु दमयन्ती विशाम्पते। दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा॥ ३७॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि भीमपुरप्रवेशे त्रिसप्ततोऽध्याय॥ ७३॥

---

दमयन्त्युवाच। गच्छ केशिनि जानीहि क एष रथवाहकः। उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः॥ १॥ अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता। पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते॥ २॥ अत्र मे महती शङ्का भवेदेष नलो नृपः। यथा च मनसस्तुष्टिर्हृदयस्य च निर्वृतिः॥ ३॥ ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा। प्रतिवाक्यञ्च सुश्रोणि बुध्येथास्त्वमनिन्दिते॥ ४॥ ततः समाहिता गत्वा दूती बाहुकमब्रवीत्। दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत॥ ५॥

केशिन्युवाच। स्वागतन्ते मनुष्येन्द्र कुशलन्ते ब्रवीम्यहम्। दमयन्त्या वचः साधु निबोध पुरुषर्षभ॥ ५॥ कदा वै प्रस्थिता यूयं किमर्थमिह चागताः। तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति॥ ७॥

वाहुक उवाच। श्रुतः स्वयम्वरो राज्ञा कौशलेन महात्मना। द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात्॥ ८॥ श्रुत्वैतत् प्रस्थितो राजा शतयोजनयायिभिः। हयैर्वातजवैर्मुख्यै-रहमस्य च सारथिः॥ ९॥

केशिन्युवाच। अथ योऽसौ तृतीयो वः स च कुतः कस्य वा पुनः। त्वञ्च कस्य कथञ्चेदं त्वयि कर्म समाहितम्॥ १०॥

वाहुक उवाच। पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः। स नले विद्रुते भद्रे भाङ्गासुरिमुपस्थितः॥ ११॥ अहमप्यश्वकुशलः सूतत्वे च प्रतिष्ठितः। ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम्॥ १२॥

केशिन्युवाच। अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः। कथञ्च त्वयि चैतेन कथितं स्यात्तु वाहुक॥ १३॥

वाहुक उवाच। इहैव पुत्रौ निक्षिप्य नलस्य शुभकर्म्मणः। गतस्ततो यथाकामं नैष जानाति नैषधम्॥ १४॥ न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि। गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः॥ १५॥ आत्मैव हि नलं वेद या चास्य तदनन्तरा। न हि वै स्वानि लिङ्गानि नलः शंसति कर्हिचित्॥ १६॥

केशिन्युवाच। योऽसावयोध्यां प्रथमं गतोऽसौ ब्राह्मणस्तदा। इमानि नारीवाक्यानि कथयानः पुनः पुनः॥ १७॥ क्व नु त्वं कितव च्छित्त्वा वस्त्रार्द्धं प्रस्थितो मम। उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय॥ १८॥ सा वै यथा समादिष्टा तथास्ते त्वत्प्रतीक्षिणी। दह्यमाना दिवारात्रौ वस्त्रार्द्धेनाभिसंवृता॥ १९॥

तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव । प्रसादं कुरु मे वीर
प्रतिवाक्यं वदस्व च ॥ २० ॥ तस्यास्तत् प्रियमाख्यानं प्रवदस्व
महामते । तदेव वाक्यं वैदर्भी श्रोतुमिच्छत्यनिन्दिता ॥ २१ ॥
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल । यत् पुरा तत् पुन-
स्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ २२ ॥

बृहदश्व उवाच । एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितञ्चासीदश्रुपूर्णे च लोचने ॥ २३ ॥ स निगृह्या-
त्मनो दुःखं दह्यमानो महीपतिः । वाष्पसन्दिग्धया वाचा पुन-
रेवेदमब्रवीत् ॥ २४ ॥

वाहुक उवाच । वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ २५ ॥ रहिता
भर्तृभिश्चापि न क्रुध्यन्ति कदाचन । प्राणांश्चारित्रकवचान् धार-
यन्ति वरस्त्रियः ॥ २६ ॥ विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत् सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ २७ ॥ प्राणयात्रां
परिप्रेप्सः शकुनैर्हृतवाससः । आधिभिर्दह्यमानस्य श्यामा न
क्रोद्धुमर्हति ॥ २८ ॥ सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथा-
विधम् । राज्यभ्रष्टं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ २९ ॥
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुर्मनाः । न वाष्पमशकत् सोढुं
प्ररुरोद स भारत ॥ ३० ॥ ततः सा केशिनी गत्वा दमयन्त्यै
न्यवेदयत् । तत्सर्वं कथितञ्चैव विकारन्तस्य चैव तम् ॥ ३१ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि केशिनीवाक्ये
चतुःसप्ततोऽध्यायः ॥ ७४ ॥

---

बृहदश्व उवाच । दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ १ ॥ गच्छ केशिनि

भूयस्त्वं परीक्षां कुरु वाहुके। अव्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ २ ॥ यदा च किञ्चित् कुर्य्यात् स कारणन्तत्र भाविनि। तत्र सञ्चेष्टमानस्य लक्षयन्ती विचेष्टितम् ॥ ३ ॥ न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि। याचते न जलं देयं सर्व्वथा त्वरमाणया ॥ ४ ॥ एतत् सर्व्वं समीक्ष्य त्वं चरितं मे निवेदय। निमित्तं यत्तया दृष्टं वाहुके दैवमानुषम् ॥ ५ ॥ यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम। दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी ॥ ६ ॥ निशम्याथ हयज्ञस्य लिङ्गानि पुनरागमत्। सा तत्सर्व्वं यथावृत्तं दमयन्त्यै न्यवेदयत्। निमित्तं यत्तया दृष्टं वाहुके दैवमानुषम् ॥ ७ ॥

केशिन्युवाच। दृढं शुच्युपचारोऽसौ न मया मानुषः कचित्। दृष्टपूर्व्वः श्रुतो वापि दमयन्ति तथाविधः। ह्रस्वमासाद्य सञ्चारं नासौ विनमते क्वचित् ॥ ८ ॥ तन्तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम्। सङ्कटोऽप्यस्य सुमहान् विवरो जायतेऽधिकः ॥ ९ ॥ ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः। प्रेषितं तत्र राज्ञा तु मांसं वहु च पाशवम् ॥ १० ॥ तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः। ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः ॥ ११ ॥ ततः प्रक्षालनं कृत्वा समधिश्रित्य वाहुकः। तृणमुष्टिं समादाय सवितुस्तं समादधत् ॥ १२ ॥ अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः। तदद्भुततमं दृष्ट्वा विस्मिताहमिहागता ॥ १३ ॥ अन्यच्च तस्मिन् सुमहदाश्चर्य्यं लक्षितं मया। यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे ॥ १४ ॥ छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम्। अतीव चान्यत् सुमहदाश्चर्य्यं दृष्टवत्यहम् ॥ १५ ॥ यत् स पुष्पाण्युपादाय हस्ताभ्यां ममर्द्द शनैः। मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा ॥ १६ ॥ भूय एव सुगन्धीनि हृषितानि भवन्ति हि। एतान्यद्भुतलिङ्गानि दृष्ट्वाहं द्रुतमागता ॥ १७ ॥

बृहदश्व उवाच। दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम्। अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ १८ ॥ सा शङ्कमाना भर्तारं बाहुकं पुनरिङ्गितैः। केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत् ॥ १९ ॥ पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम्। महानसाच्छ्रुतं मांसमानयस्वेह भाविनि ॥ २० ॥ सा गत्वा बाहुकस्याग्रे तन्मांसमपकृष्य च। अत्युष्णमेव त्वरिता तत्क्षणात् प्रियकारिणी ॥ २१ ॥ दमयन्त्यै ततः प्रादात् केशिनी कुरुनन्दन। सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा ॥ २२ ॥ प्राश्य मत्वा नलं सूतं प्राक्रोशद्भृशदुःखिता। वैक्लव्यं परमं गत्वा प्रक्षाल्य च मुखं ततः ॥ २३ ॥ मिथुनं प्रेषयामास केशिन्या सह भारत। इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ॥ २४ ॥ अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत्। बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ॥ २५ ॥ भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह। नैषधो दर्शयित्वा तु विकारमसकृत्तदा ॥ २६ ॥ उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत्। इदञ्च सदृशं भद्रे मिथुनं मम पुत्रयोः ॥ २७ ॥ ततो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम्। बहुशः सम्पतन्तीं त्वां जनः शङ्केत दोषतः। वयञ्च देशातिथयो गच्छ भद्रे नमोऽस्तु ते ॥ २८ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलकन्यापुत्रदर्शने पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

---

बृहदश्व उवाच। सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः। आगत्य केशिनी सर्वं दमयन्त्यै न्यवेदयत् ॥ १ ॥ दमयन्ती ततो भूयः प्रेषयामास केशिनीम्। मातुः सकाशं दुःखार्त्ता नलदर्शन-

काञ्चया ॥ २ ॥ परीक्षितो मे वद्गो वाहुको नलशङ्कया। रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ॥ ३ ॥ स वा प्रवेश्यतां मातर्मां वानुज्ञातुमर्हसि। विदितं वाथ वाज्ञातं पितुर्मे संविधीयताम् ॥ ४ ॥ एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत्। दुहितुस्तमभिप्रायमन्वजानात् स पार्थिवः ॥ ५ ॥ सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ। नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ६ ॥ तां स्म दृष्ट्वैव सहसा दमयन्तीं नलो नृपः। आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ७ ॥ तन्तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा। तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ८ ॥ ततः काषायवसना जटिला मलपङ्किनी। दमयन्ती महाराज वाहुकं वाक्यमब्रवीत् ॥ ९ ॥ पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम वाहुक। सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ १० ॥ अनागसं प्रियां भार्य्यां विजने श्रममोहिताम्। अपहाय तु को गच्छेत् पुण्यश्लोकमृते नलम् ॥ ११ ॥ किन्तु तस्य मया वाल्यादपराद्धं महीपतेः। यो मामुत्सृज्य विपिने गतवान्निद्रयार्दिताम् ॥ १२ ॥ साक्षाद्देवानपाहाय वृतो यः स पुरा मया। अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान् कथम् ॥ १३ ॥ अग्नौ पाणिं गृहीत्वा तु देवानामग्रतस्तथा। भविष्यामीति सत्यन्तु प्रतिश्रुत्य क्व तद्गतम् ॥ १४ ॥ दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिन्दम। शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ १५ ॥ अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलन्तु तत् परिस्रवन्नलो दृष्ट्वा शोकार्त्तामिदमब्रवीत् ॥ १६ ॥ मम राज्यं प्रनष्टं यन्नाहं तत् कृतवान् स्वयम्। कलिना तत् कृतं भीरु यच्च त्वामहमत्यजम् ॥ १७ ॥ यत्त्वयाधर्मकृच्छ्रे तु शापेनाभिहतः पुरा। वनस्थया दुःखितया शोचन्त्या मां दिवानिशम् ॥ १८ ॥ स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः। त्वच्छापदग्धः

सततं सोऽस्नावग्निरिवाहितः ॥ १९ ॥ मम च व्यवसायेन तपसा
चैव निर्जितः। दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥ २० ॥
विमुच्य मां गतः पापस्ततोऽहमिह चागतः। त्वदर्थं विपुलश्रोणि
न हि मेऽन्यत् प्रयोजनम् ॥ २१ ॥ कथं नु नारी भर्त्तारमनु-
रक्तमनुव्रतम्। उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित्
॥ २२ ॥ दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात्। भैमी
किल स्म भर्त्तारं द्वितीयं वरयिष्यति ॥ २३ ॥ स्वैरवृत्ता यथा-
काममनुरूपमिवात्मनः। श्रुत्वैव चैवं त्वरितो भाङ्गासुरिरुपस्थितः
॥ २४ ॥ दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम्। प्राञ्जलि-
र्वेपमाना च भीता वचनमब्रवीत् ॥ २५ ॥

दमयन्त्युवाच। न मामर्हसि कल्याण दोषेण परिशङ्कि-
तुम्। मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ २६ ॥
तवाभिगमनार्थन्तु सर्वतो ब्राह्मणा गताः। वाक्यानि मम गाथा-
भिर्गायमाना दिशो दश ॥ २७ ॥ ततस्त्वां ब्राह्मणो विद्वान्
पर्णादो नाम पार्थिव। अभ्यगच्छत् कोशलायामृतुपर्णनिवेशने
॥ २८ ॥ तेन वाक्ये कृते सम्यक् प्रतिवाक्ये तथाहृते। उपायोऽयं
मया दृष्टो नैषधानयने तव ॥ २९ ॥ त्वामृते न हि लोकेऽन्य
एकाह्ना पृथिवीपते। समर्थो योजनशतं गन्तुमश्वैर्नराधिप
॥ ३० ॥ स्पृशेयन्तेन सत्येन पादावेतौ महीपते। तथा नासत्
कृतं किञ्चिन्मनसापि चराम्यहम् ॥ ३१ ॥ अयञ्चरति लोकेऽस्मिन्
भूतसाक्षी सदागतिः। एष मे मुञ्चतु प्राणान् यदि पापं चरा-
म्यहम् ॥ ३२ ॥ तथा चरति तिग्मांशुः परेण भुवनं सदा। स
मुञ्चतु मम प्राणान् यदि पापं चराम्यहम् ॥ ३३ ॥ चन्द्रमाः
सर्वभूतानामन्तश्चरति साक्षिवत्। स मुञ्चतु मम प्राणान् यदि
पापं चराम्यहम् ॥ ३४ ॥ एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धार-
यन्ति वै। विब्रुवन्तु यथासत्यमेतद्देवास्त्यजन्तु माम् ॥ ३५ ॥

एवमुक्तस्ततो वायुरन्तरीक्षादभाषत । नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ३६ ॥ राजन् शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः । साक्षिणो रक्षिणश्चास्या वयं त्रीन् परिवत्सरान् ॥३७॥ उपायो विहितश्चायं त्वदर्थमतुलोऽनया । न ह्येकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह ॥ ३८ ॥ उपपन्ना त्वया भैमी त्वञ्च भैम्या महीपते । नात्र शङ्का त्वया कार्य्या सङ्गच्छ सह भार्य्यया ॥ ३९ ॥ ततो ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह । देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ ४० ॥ तदद्भुतमयं दृष्ट्वा नलो राजाथ भारत । दमयन्त्यां विशङ्कां तामुपाकर्षदरिन्दमः ॥४१॥ ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः । संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥ ४२ ॥ स्वरूपिणन्तु भर्त्तारं दृष्ट्वा भीमसुता तदा । प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥ ४३ ॥ भैमीमपि नलो राजा भ्राजमानो यथा पुरा । सस्वजे स्वसुतौ चापि यथावत् प्रत्यनन्दनत ॥ ४४ ॥ ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना । परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ४५ ॥ तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् । सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ४६ ॥ ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च । भीमायाकथयत् प्रीत्या वैदर्भीजननी नृप ॥ ४७ ॥ ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् । दमयन्त्या सहोपेतं कल्ये द्रष्टा सुखोषितम् ॥ ४८ ॥ ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् । वने विचरितं सर्वमूषतुर्मुदितौ नृप ॥ ४९ ॥ गृहे भीमस्य नृपतेः परस्परसुखैषिणौ । वसेतां हृष्टसङ्कल्पौ वैदर्भी च नलश्च ह ॥ ५० ॥ स चतुर्थे ततो वर्षे सङ्गम्य सह भार्य्यया । सर्वकामैः सुसिद्धार्थो लब्धवान् परमां मुदम् ॥ ५१ ॥ दमयन्त्यपि भर्त्तारमासाद्याप्यायिता भृशम् । अर्द्धसञ्जातशस्येव तोयं प्राप्य वसुन्धरा ॥ ५२ ॥ सैवं समेत्य व्यप-

नीय तन्द्रां शान्तज्वरा हर्षविवृद्धसत्त्वा । रराज भैमी समवाप्तकामा शीतांशुना रात्रिरिवोदितेन ॥ ५३ ॥

इति आरण्यपर्वणि नलोपाख्यानपर्वणि नलदमयन्तीमेलने षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

बृहदश्व उवाच । अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः । वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् ॥ १ ॥ ततोऽभिवादयामास प्रयतः श्वशुरं नलः । ततोऽनु दमयन्ती च ववन्दे पितरं शुभा ॥ २ ॥ तं भीमः प्रतिजग्राह पुत्रवत् परया मुदा । यथार्हं पूजयित्वा च समाश्वासयत प्रभुः ॥ ३ ॥ नलेन सहितान्तत्र दमयन्तीं पतिव्रताम् । तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ॥ ४ ॥ परिचर्य्यां स्वकां तस्मै यथावत् प्रत्यवेदयत् । ततो बभूव नगरे सुमहान् हर्षजः स्वनः ॥ ५ ॥ जनस्य सम्प्रहृष्टस्य नलं दृष्ट्वा तथागतम् । अशोभयच्च नगरं पताकाध्वजमालिनम् ॥ ६ ॥ सिक्ताः सुमृष्टपुष्पाढ्या राजमार्गाः स्वलंकृताः । द्वारि द्वारि च पौराणां पुष्पभङ्गोपकल्पिताः ॥ ७ ॥ अर्चितानि च सर्वाणि देवतायतनानि च । ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ॥ ८ ॥ दमयन्त्या समायुक्तं जहृषे च नराधिपः । तमानाय्य नलं राजा क्षमयामास पार्थिवम् ॥ ९ ॥ स च तं क्षमयामास हेतुभिर्बुद्धिसम्मतः । स सत्कृतो महीपालो नैषधं विस्मिताननः ॥ १० ॥ उवाच वाक्यं तत्त्वज्ञो नैषधं वदतांवरः । दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ ११ ॥ कच्चित्तु नापराधन्ते कृतवानस्मि नैषध । अज्ञातवासं वसतो मद्गृहे वसुधाधिप ॥ १२ ॥ यदि वा बुद्धिपूर्वाणि यद्यबुद्धानि वापि कानिचित् । मया कृतान्यकार्य्याणि तानि त्वं क्षन्तुमर्हसि ॥ १३ ॥

नल उवाच। न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव। कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ १४ ॥ पूर्वं ह्यपि सखा मेऽसि सम्बन्धी च जनाधिप। अत ऊर्द्धन्तु भूयस्त्वं प्रीतिमाहर्त्तुमर्हसि ॥ १५ ॥ सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि। न तथा स्वगृहे राजन् यथा तव गृहे सदा ॥ १६ ॥ इदञ्चैव हयज्ञानं त्वदीयं मयि तिष्ठति। तदुपाकर्त्तुमिच्छामि मन्यसे यदि पार्थिव ॥ १७ ॥ एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः। स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १८ ॥ गृहीत्वा चाक्षहृदयं राजन् भाङ्गासुरिर्नृपः। निषधाधिपतेश्चापि दत्त्वाश्वहृदयं नृप ॥ १९ ॥ सूतमन्यमुपादाय ययौ स्वपुरमेव ह। ऋतुपर्णे गते राजन् नलो राजा व्यभ्राजत। नगरे कुण्डिने कालं नातिदीर्घमिवाभवत् ॥ २० ॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि ऋतुपर्णस्वदेशगमने सप्तसप्ततोऽध्यायः ॥ ७७ ॥

---

बृहदश्व उवाच। स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः। पुरादल्पपरीवारो जगाम निषधान् प्रति ॥ १ ॥ रथेनैकेन शुभ्रेण दन्तिभिः परिषोड़शैः। पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः ॥ २ ॥ स कम्पयन्निव महीं त्वरमाणो महीपतिः। प्रविवेश सुसंरब्धस्तरसैव महामनाः ॥ ३ ॥ ततः पुष्करमासाद्य वीरसेनसुतो नलः। उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम् ॥ ४ ॥ दमयन्ती च यच्चान्यन्मम किञ्चन विद्यते। एष वै मम सन्न्यासस्तव राज्यन्तु पुष्कर ॥ ५ ॥ पुनः प्रवर्त्ततां द्यूतमिति मे निश्चिता मतिः। पणेनैकेन भद्रन्ते प्राणयोश्च पणावहे ॥ ६ ॥ जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु। प्रतिपाणः प्रदा-

तव्यः परमो धर्म उच्यते ॥ ७ ॥ न चेदाकाङ्क्षसि द्यूतं त्वं युद्धद्यूतं प्रवर्त्तताम्। द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ८ ॥ वंशभोज्यमिदं राज्यमर्थितव्यं यथा तथा। येन केनाप्युपायेन वृद्धानामिति शासनम् ॥ ९ ॥ द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर। कैतवेनाक्षवत्यान्तु युद्धे वा नाम्यतां धनुः ॥ १० ॥ नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव। ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम् ॥ ११ ॥ दिष्ट्या त्वयार्जितं वित्तं प्रतिपणार्थं नैषध। दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम् ॥ १२ ॥ दिष्ट्या च ध्रियसे राजन् सदारोऽद्य महाभुज। धनेनानेन वै भैमी जितेन समलंकृता ॥ १३ ॥ मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः। नित्यशो हि स्मरामि त्वां प्रतीक्षेऽपि च नैषध ॥ १४ ॥ देवनेन मम प्रीतिर्न भवत्यसुहृद्गणैः। जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम् ॥ १५ ॥ कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि। श्रुत्वा तस्य तु ता वाचो बह्वबद्धप्रलापिनः ॥ १६ ॥ इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः। स्मयंस्तु रोषताम्राक्षस्तमुवाच नलो नृपः ॥ १७ ॥ पणावः किं व्याहरसे जितो न व्याहरिष्यसि। ततः प्रावर्त्तत द्यूतं पुष्करस्य नलस्य च ॥ १८ ॥ एकपाणेन वीरेन स नलेन पराजितः। सरत्नकोषनिचयैः प्राणेन पणितोऽपि च ॥ १९ ॥ जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत्। मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् ॥ २० ॥ वैदर्भी न त्वया शक्या राजापसद वीक्षितुम्। तस्यास्त्वं सपरीवारो मूढ़ दासत्वमागतः ॥ २१ ॥ न त्वया तत् कृतं कर्म येनाहं विजितः पुरा। कलिना तत् कृतं कर्म त्वञ्च मूढ़ न बुध्यसे ॥ २२ ॥ नाहं परकृतं दोषं त्वय्याधास्ये कथञ्चन। यथासुखं वै जीव त्वं प्राणानवसृजामि ते ॥ २३ ॥ यथैव सर्वसम्भारं स्वमंशं वितरामि ते। तथैव च मम प्रीतिस्त्वयि वीर न

संशयः ॥ २४ ॥ सौहार्द्दञ्चापि मे त्वत्तो न कदाचित् प्रहास्यति । पुष्कर त्वं हि मे भ्राता सञ्जीव शरदः शतम् ॥ २५ ॥ एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः । स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः ॥ २६ ॥ सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम् । पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ २७ ॥ कीर्त्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी । यो मे वितरसि प्राणानधिष्ठानञ्च पार्थिव ॥ २८ ॥ स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः । प्रययौ स्वपुरं हृष्टः पुष्करः स्वजनावृतः ॥ २९ ॥ महत्या सेनया सार्द्धं विनीतैः परिचारकैः । भ्राजमानः इवादित्यो वपुषा पुरुषर्षभ ॥ ३० ॥ प्रस्थाप्य पुष्करं राजा वित्तमन्तमनामयम् । प्रविवेश पुरीं श्रीमानत्यर्थमुपशोभिताम् ॥ ३१ ॥ प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः । पौरजानपदाश्चापि सम्प्रहृष्टतनूरुहाः ॥ ३२ ॥ ऊचुः प्राञ्जलयः सर्व्वे सामात्यप्रमुखाजनाः । अद्य स्म निर्वृता राजन् पुरे जनपदेऽपि च । उपासितुं पुनः प्राप्ता देवा इव शतक्रतुम् ॥ ३३ ॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि पुष्कराश्वासने अष्टसप्ततोऽध्यायः ॥ ७८ ॥

---

वृहदश्व उवाच । प्रशान्ते तु पुरे हृष्टे सम्प्रवृत्ते महोत्सवे । महत्या सेनया राजा दमयन्तीमुपानयत् ॥ १ ॥ दमयन्तीमपि पिता सत्कृत्य परवीरहा । प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ २ ॥ आगतायान्तु वैदर्भ्यां सपुत्रायां नलो नृपः । वर्त्तयामास मुदितो देवराडिव नन्दने ॥ ३ ॥ ततः प्रकाशतां याती जम्बुद्वीपे रराज सः । पुनः शशास तद्राज्यं प्रत्याहृत्य महायशाः ॥ ४ ॥ इजे च विविधैर्यज्ञैर्विधिवच्चाप्तदक्षिणैः । यथा

त्वमपि राजेन्द्र ससुहृद्भ्रातृभिःऽचिरात् ॥ ५ ॥ दुःखमेतादृशं प्राप्तो नलः परपुरञ्जयः। देवनेन नरश्रेष्ठ सभार्य्यो भरतर्षभ ॥ ६ ॥ एकाकिनैव सुमहन्नलेन पृथिवीपते। दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ७ ॥ त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव। रमसेऽस्मिन्महारण्ये धर्ममेवानुचिन्तयन् ॥ ८ ॥ ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः। नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ९ ॥ कर्कोटकस्य नागस्य दमयन्त्या नलस्य च। ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥ १० ॥ इतिहासमिमं चापि कलिनाशनमच्युत। शक्यमाश्वसितुं श्रुत्वा त्वद्विधेन विशाम्पते ॥ ११ ॥ अस्थिरत्वञ्च सञ्चिन्त्य पुरुषार्थस्य नित्यदा। तस्योदये व्यये चापि न चिन्तयितुमर्हसि ॥ १२ ॥ श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुच। व्यसने त्वं महाराज न विषीदितुमर्हसि ॥ १३ ॥ विषमावस्थिते दैवे पौरुषेऽफलतां गते। विषादयन्ति नात्मानं सत्त्वोपाश्रयिणो नराः ॥ १४ ॥ ये चेदं कथयिष्यन्ति नलस्य चरितं महत्। श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान् भजिष्यति ॥ १५ ॥ अर्थास्तस्योपपत्स्यन्ते धन्यताञ्च गमिष्यति। इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ॥ १६ ॥ पुत्रान् पौत्रान् पशूंश्चापि लभते नृषु चाग्र्यताम्। आरोग्यः प्रीतिमांश्चैव भविष्यति न संशयः ॥ १७ ॥ भयं पश्यसि यच्च त्वमाह्वयिष्यति मां पुनः। अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ १८ ॥ वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम। उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ १९ ॥

वैशम्पायन उवाच। ततो हृष्टमना राजा बृहदश्वमुवाच ह। भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ॥ २० ॥ ततोऽक्षहृदयं प्रादात् पाण्डवाय महात्मने। दत्त्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ २१ ॥ बृहदश्वे गते पार्थमश्रौषीत् सव्य-

साचिनम् । वर्त्तमानं तपस्युग्रे वायुभक्षं मनीषिणाम् ॥ २२ ॥
ब्राह्मणेभ्यस्तपस्विभ्यः सम्पतद्भ्यस्ततस्ततः । तीर्थंशैलवनेभ्यश्च समे-
तेभ्यो दृढ़व्रतः ॥२३॥ इति पार्थो महाबाहुर्दुरापं तप आस्थितः ।
न तथा दृष्टपूर्व्वोऽन्यः कश्चिदुग्रतपा इति ॥ २४ ॥ यथा धनञ्जयः
पार्थस्तपस्वी नियतव्रतः । मुनिरेकचरः श्रीमान् धर्म्मो विग्रह-
वानिव ॥ २५ ॥ तं श्रुत्वा पाण्डवो राजंस्तप्यमानं महावने ।
अन्वशोचत कौन्तेयं प्रियं वै भ्रातरं जयम् ॥ २६ ॥ दह्यमानेन
हृदा शरणार्थी महावने । ब्राह्मणान् विविधज्ञानान् पर्य्य-
पृच्छद्युधिष्ठिरः ॥ २७ ॥

इति आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि बृहदश्वगमने
एकोनाशीतितमोऽध्यायः समाप्तञ्च नलोपाख्यानपर्व्व ॥ ७९ ॥

---

## तीर्थयात्रापर्व्व ॥

जनमेजय उवाच । भगवान् काम्यकात् पार्थे गते मे प्रपि-
तामहे । पाण्डवाः किमकुर्व्वंस्ते तमृते सव्यसाचिनम् ॥ १ ॥ स
हि तेषां महेष्वासो गतिरासीदनीकजित् । आदित्यानां यथा
विष्णुस्तथैव प्रतिभाति मे ॥ २ ॥ तेनेन्द्रसमवीर्य्येण संग्रामेष्वनि-
वर्त्तिना । विनाभूता वने वीराः कथमासन् पितामहाः ॥ ३ ॥

वैशम्पायन उवाच । गते तु पाण्डवे तात काम्यकात् सत्य-
विक्रमे । बभूवुः पाण्डवेयास्ते दुःखशोकपरायणाः ॥ ४ ॥ आक्षिप्त-
सूत्रा मणयश्छिन्नपक्षा इव द्विजाः । अप्रीतमनसः सर्व्वे बभुवुरथ
पाण्डवाः ॥ ५ ॥ वनन्तु तदभूत्तेन हीनमक्लिष्टकर्म्मणा । कुवे-
रेण यथा हीनं वनञ्चैत्ररथं तथा ॥ ६ ॥ तमृते ते नरव्याघ्राः
पाण्डवा जनमेजय । मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा
॥ ७ ॥ ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः । निघ्नन्तो

भरतश्रेष्ठ मेध्यान् बहुविधान् मृगान् ॥ ८ ॥ नित्यं हि पुरुष-व्याघ्रा वन्याहारमरिन्दमाः। उपाकृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन ॥ ९ ॥ सर्वे संन्यवसंस्तत्र सोत्कण्ठाः पुरुषर्षभाः। अहृष्टमनसः सर्वे गते राजन् धनञ्जये ॥ १० ॥ विशेषतस्तु पाञ्चाली स्मरन्ती मध्यमं पतिम्। उद्विग्नं पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥ ११ ॥ योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना। तमृते पाण्डवश्रेष्ठ वनं न प्रतिभाति मे ॥ १२ ॥ शून्यामिव प्रपश्यामि तत्र तत्र महीमिमाम्। बह्वाश्चर्यमिदञ्चापि वनं कुसुमितद्रुमम् ॥ १३ ॥ न तथा रमणीयं वै तमृते सव्यसाचिनम्। नीलाम्बुदसमप्रख्यं मत्तमातङ्गगामिनम् ॥ १४ ॥ तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे। तस्य स्म धनुषो घोषः श्रूयतेऽशनि-निस्वनः ॥ १५ ॥ न लभे शर्म वै राजन् स्मरन्ती सव्यसाचिनम्। तथा लालप्यमानानां निशम्य परवीरहा ॥ १६ ॥ भीमसेनो महाराज द्रौपदी मिदमब्रवीत्।

भीमसेन उवाच। मनःप्रीतिकरं भद्रे यद्ब्रवीषि सुमध्यमे। तन्मे प्रीणाति हृदयममृतप्राशनोपमम्। यस्य दीर्घौ समौ पीनौ भुजौ परिघसन्निभौ ॥ १७ ॥ मौर्वीकृतकिणौ वृत्तौ खड्गायुध-धनुर्धरौ। निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ ॥ १८ ॥ तमृते पुरुषव्याघ्रं नष्टसूर्यमिवाम्बरम्। यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा ॥ १९ ॥ सुराणामपि यत्तानां पृतनासु न बिभ्यति। यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ॥ २० ॥ मन्यामहे जितानाजौ परान् प्राप्तां च मेदिनीम्। तमृते फाल्गुनं वीरं न लभे काम्यके धृतिम्। ॥ २१ ॥ पश्यामि च दिशः सर्वास्तिमिरेणावृता इव। ततोऽब्रवीत् साश्रुकण्ठो नकुलः पाण्डु-नन्दनः ॥ २२ ॥

नकुल उवाच। यस्मिन् दिव्यानि कर्माणि कथयन्ति रणा-

जिरे । देवा अपि युधां श्रेष्ठं तमृते का रतिर्वने ॥ २४ ॥ उदीचीं यो दिशं गत्वा जित्वा युधि महाबलान् । गन्धर्वमुख्यांश्छतशो हयान् लेभे महाद्युतिः ॥ २५ ॥ राज्ञे तित्तिरिकल्माषान् श्रीमतोऽनिलरंहसः । प्रादाद्भ्राते प्रियः प्रेम्णा राजसूये महाक्रतौ ॥ २६ ॥ तमृते भीमधन्वानं भीमादवरजं वने । कामये काम्यके वासं नेदानीममरोपमम् ॥ २७ ॥

सहदेव उवाच । यो धनानि च कन्याश्च युधि जित्वा महारथः । आजहार पुरा राज्ञो राजसूये महाक्रतौ ॥ २८ ॥ यः समेतान् मृधे जित्वा यादवानमितद्युतिः । सुभद्रामाजहारैको वासुदेवस्य सम्मते ॥ २९ ॥ तस्य जिष्णोर्वृषीं दृष्ट्वा शून्यां मम निवेशने । हृदयं मे महाराज न शाम्यति कदाचन ॥ ३० ॥ वनादस्माद्विवासन्तु रोचयेऽहमरिन्दम । न हि नस्तमृते वीरं रमणीयमिदं वनम् ॥ ३१ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि अर्जुनानुशोचने अशीतितमोऽध्यायः ॥ ८० ॥

---

वैशम्पायन उवाच । धनञ्जयोत्सुकानान्तु भ्रातॄणां कृष्णया सह । श्रुत्वा वाक्यानि विमना धर्मराजोऽभ्यजायत ॥ १ ॥ अथापश्यन्महात्मानं देवर्षिन्तत्र नारदम् । दीप्यमानं श्रिया ब्राह्म्या हुतार्चिषमिवानलम् ॥ २ ॥ तमागतमभिप्रेक्ष्य भ्रातृभिः सह धर्मराट् प्रत्युत्थाय यथान्यायं पूजाञ्चक्रे महात्मने ॥ ३ ॥ स तैः परिवृतः श्रीमान् भ्रातृभिः कुरुसत्तमः । विबभावतिदीप्तौजा देवैरिव शतक्रतुः ॥ ४ ॥ यथा च वेदान् सावित्री याज्ञसेनी तथा पतीन् । न जहौ धर्मतः पार्थान् मेरुमर्कप्रभा यथा ॥ ५ ॥ प्रतिगृह्य च तां पूजां नारदो भगवानृषिः । आश्वासयद्धर्मसुतं युक्तरूपमिवानघ ॥ ६ ॥ उवाच च महात्मानं धर्मराजं युधिष्ठिरम् ।

ब्रूहि धर्मभृतां श्रेष्ठ केनार्थः किं ददानि ते ॥ ७ ॥ अथ धर्म-
भृतो राजा प्रणम्य भ्रातृभिः सह। उवाच प्राञ्जलिर्भूत्वा नारदं
देवसम्मतम् ॥ ८ ॥ त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते।
कृतमित्येव मन्येऽहं प्रसादात्तव सुव्रत ॥ ९ ॥ यदि त्वहमनु-
ग्राह्यो भ्रातृभिः सहितोऽनघ। सन्देहं मे मुनिश्रेष्ठ तत्त्वतः
छेत्तुमर्हसि ॥ १० ॥ प्रदक्षिणां यः कुरुते पृथिवीं तीर्थतत्परः।
किं फलं तस्य कार्त्स्न्येन तद्भवान् वक्तुमर्हति ॥ ११ ॥

नारद उवाच। शृणु राजन्नवहितो यथा भीष्मेण धीमता।
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ॥ १२ ॥ पुरा भागीरथी-
तीरे भीष्मो धर्मभृतांवरः। पित्र्यं व्रतं समास्थाय न्यवसन्
मुनिभिः सह ॥ १३ ॥ शुभे देशे तथा राजन् पुण्ये देवर्षि-
सेविते। गङ्गाद्वारे महाभाग देवगन्धर्वसेविते ॥ १४ ॥ स पितॄं-
स्तर्पयामास देवांश्च परमद्युतिः। ऋषींश्च तर्पयामास विधिदृष्टेन
कर्मणा ॥ १५ ॥ कस्यचित्त्वथ कालस्य जपन्नेव महायशाः।
ददर्शाद्भुतसङ्काशं पुलस्त्यमृषिसत्तमम् ॥ १६ ॥ स तं दृष्ट्वोग्रतपसं
दीप्यमानमिव श्रिया। प्रहर्षमतुलं लेभे विस्मयं परमं ययौ ॥ १७ ॥
उपस्थितं महाभागं पूजयामास भारत। भीष्मो धर्मभृतां श्रेष्ठो
विधिदृष्टेन कर्मणा ॥ १८ ॥ शिरसा चार्घ्यमादाय शुचिः प्रयत-
मानसः। नाम सङ्कीर्त्तयामास तस्मिन् ब्रह्मर्षिसत्तमे ॥ १९ ॥
भीष्मोऽहमिति भद्रन्ते दासोऽस्मि तव सुव्रत। तव सन्दर्शनादेव
मुक्तोऽहं सर्वकिल्बिषैः ॥ २० ॥ एवमुक्त्वा महाराज भीष्मो धर्म-
भृतांवरः। वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ॥ २१ ॥
तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितम्। भीष्मं कुरुकुल-
श्रेष्ठं मुनिः प्रीतमनाभवत् ॥ २२ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि पार्थनारदसंवादे
एकाशीतोऽध्यायः ॥ ८१ ॥

पुलस्त्य उवाच। अनेन तव धर्म्मज्ञ प्रश्रयेण दमेन च। सत्येन च महाभाग तुष्टोऽस्मि तव सुव्रत ॥ १ ॥ यस्येदृशस्ते धर्म्मोऽयं पितृभक्त्याश्रितोऽनघ। तेन पश्यसि मां पुत्र प्रीतिश्च परमा त्वयि ॥ २ ॥ अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते। यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दातास्मि तेऽनघ ॥ ३ ॥

भीष्म उवाच। प्रीते त्वयि महाभाग, सर्व्वलोकाभिपूजिते। कृतमेतावता मन्ये यदहं दृष्टवान् प्रभुम् ॥ ४ ॥ यदि त्वहमनुग्राह्यस्तव धर्म्मभृताम्वर। सन्देहन्ते प्रवक्ष्यामि तन्मे त्वं छेत्तुमर्हसि ॥ ५ ॥ अस्ति मे हृदये कश्चित्तीर्थेभ्यो धर्म्मसंशयः। तमहं श्रोतुमिच्छामि तद्भवान् वक्तुमर्हति ॥ ६ ॥ प्रदक्षिणां यः पृथिवीं करोत्यमरसन्निभ। किं फलं तस्य विप्रर्षे तन्मे ब्रूहि सुनिश्चितं ॥ ७ ॥

पुलस्त्य उवाच। हन्त ते कथयिष्यामि यदृषीणां परायणम्। तदेकाग्रमनाः पुत्र शृणु तीर्थेषु यत् फलम् ॥ ८ ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्। विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ ९ ॥ प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित्। अहङ्कारनिवृत्तश्च स तीर्थफलमश्नुते ॥ १० ॥ अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः। विमुक्तः सर्व्वपापेभ्यः स तीर्थफलमश्नुते ॥ ॥ ११ ॥ अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः। आत्मोपमश्च भूतेषु च तीर्थफलमश्नुते ॥ १२ ॥ ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम्। फलञ्चैव यथातथ्यं प्रेत्य चेह च सर्व्वशः ॥ १३ ॥ न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते। बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥ १४ ॥ प्राप्यन्ते पार्थिवैरेतैः समृद्धैर्वा नरैः क्वचित्। नार्थन्यूनैर्नावगणैरेकात्मभिरसाधनैः ॥ १५ ॥ यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर। तुल्यो यज्ञफलैः पुण्यैस्तन्निबोध युधाम्वर ॥ १६ ॥ ऋषीणां परमं गुह्यमिदं भरतसत्तम। तीर्थाभिगमनं पुण्यं यज्ञैरपि विशि-

ष्यते ॥ १७ ॥ अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ १८ ॥ अग्निष्टो-
मादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत् फलमवाप्नोति तीर्था-
भिगमनेन तत् ॥ १९ ॥ नृलोके देवदेवस्य तीर्थं त्रैलोक्यविश्रु-
तम् । पुष्करं नाम विख्यातं महाभागः समाविशेत् ॥ २० ॥
दशकोटिसहस्राणि तीर्थानां वै महामते । सान्निध्यं पुष्करे
येषां त्रिसन्ध्यं कुरुनन्दन ॥ २१ ॥ आदित्या वसवो रुद्राः साध्याश्च
समरुद्‌गणाः । गन्धर्वाप्सरसश्चैव नित्यं सन्निहिता विभो ॥ २२ ॥
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा । दिव्ययोगा महाराज
पुण्येन महतान्विताः ॥ २३ ॥ मनसाप्यभिकाम्यस्य पुष्कराणि
मनस्विनः । धूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥ २४ ॥
अस्मिंस्तीर्थे महाराज नित्यमेव पितामहः । उवास परमप्रीतो
भगवान् कमलासनः ॥ २५ ॥ पुष्करेषु महाभाग देवाः सर्षि-
गणाः पुरा । सिद्धिं परमिकां प्राप्ताः पुण्येन महतान्विताः ॥ २६ ॥
तत्राभिषेकं यः कुर्य्यात् पितृदेवार्चने रतः । अश्वमेधाद्दशगुणं
फलं प्राहुर्मनीषिणः ॥ २७ ॥ अप्येकं भोजयेद्विप्रं पुष्करारण्य-
माश्रितः । तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते ॥ २८ ॥
शाकैर्मूलैः फलैर्वापि येन वर्त्तयते स्वयम् । तद्दद्याद्‌ब्राह्मणाय
श्रद्धावाननसूयकः ॥ २९ ॥ तेनैव प्राप्नुयात् प्राज्ञो हयमेधफलं
नरः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा राजसत्तम ॥ ३० ॥
न वै योनौ प्रजायन्ते स्नातास्तीर्थे महात्मनः । कार्त्तिकीन्तु विशे-
षेण योऽभिगच्छति पुष्करम् ॥ ३१ ॥ प्राप्नुयात् स नरो लोकान्
ब्रह्मनः सदनेऽक्षयान् । सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृता-
ञ्जलिः ॥ ३२ ॥ उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत । जन्म-
प्रभृति यत् पापं स्त्रिया वा पुरुषस्य वा ॥ ३३ ॥ पुष्करे स्नात-
मात्रस्य सर्वमेव प्रणश्यति । यथा सुराणां सर्वेषामादिस्तु मधु-

सूदनः ॥ ३४ ॥ तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते । उष्य
द्वादशवर्षाणि पुष्करे नियतः शुचिः ॥ ३५ ॥ क्रतून् सर्वानवा-
प्नोति ब्रह्मलोके स गच्छति । यस्तु वर्षशतं पूर्णमग्निहोत्रमुपा-
सते ॥ ३६ ॥ कार्त्तिकीं वा वसेदेकां पुष्करे सममेव तत् ।
त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च ॥ ३७ ॥ पुष्क-
राण्यादिसिद्धानि न विद्मस्तत्र कारणम् । दुष्करं पुष्करे गन्तुं
दुष्करं पुष्करे तपः ॥ ३८ ॥ दुष्करं पुष्करे दानं वस्तुञ्चैव सुदु-
ष्करम् । उष्य द्वादशरात्रन्तु नियतो नियताशनः ॥ ३९ ॥
प्रदक्षिणमुपावृत्य जम्बुमार्गं समाविशत् । जम्बुमार्गं समा-
विश्य देवर्षिपितृसेवितम् ॥ ४० ॥ अश्वमेधमवाप्नोति सर्वकाम-
समन्वितः । तत्रोष्य रजनीः पञ्च पूतात्मा जायते नरः ॥ ४१ ॥
न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमाम् । जम्बुमार्गा-
दुपावृत्य गच्छेत्तण्डुलिकाश्रमम् ॥ ४२ ॥ न दुर्गतिमवाप्नोति
ब्रह्मलोकञ्च गच्छति । आगस्तं सर आसाद्य पितृदेवार्चने रतः
॥ ४३ ॥ त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् । शाक-
वृत्तिः फलैर्वापि कौमारं विन्दते पदम् ॥ ४४ ॥ कण्वाश्रमं ततो
गच्छेत् श्रीजुष्टं लोकपूजितम् । धर्मारण्यं हि तत् पुण्यमाद्यञ्च
भरतर्षभ ॥ ४५ ॥ यत्र प्रविष्टमात्रो वै सर्वपापैः प्रमुच्यते । अर्च्च-
यित्वा पितॄन् देवान् नियतो नियताशनः ॥ ४६ ॥ सर्वकाम-
समृद्धस्य यज्ञस्य फलमश्नुते । प्रदक्षिणं ततः कृत्वा ययातिपतनं
व्रजेत् ॥ ४७ ॥ हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै । महा-
कालं ततो गच्छेन्नियतो नियताशनः ॥ ४८ ॥ कोटितीर्थमुप-
स्पृश्य हयमेधफलं लभेत् । ततो गच्छेत धर्मज्ञः स्थाणोस्तीर्थ-
मुमापतेः ॥ ४९ ॥ नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ।
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् ॥ ५० ॥ महादेवप्रसा-
दाच्च गाणपत्यञ्च विन्दति । समृद्धमसपत्नञ्च श्रिया युक्तं नरोत्तमः

॥ ५१ ॥ नर्मदां च समासाद्य नदीं त्रैलोक्यविश्रुताम्। तर्पयित्वा पितॄन् देवानग्निष्टोमफलं लभेत् ॥ ५२ ॥ दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः। अग्निष्टोममवाप्नोति विमानञ्चाधिरोहति ॥ ५३ ॥ चर्मण्वतीं समासाद्य नियतो नियताशनः। रन्तिदेवाभ्यनुज्ञातो अग्निष्टोमफलं लभेत् ॥ ५४ ॥ ततो गच्छेत धर्मज्ञ हिमवत्सुतमर्वुदम्। पृथिव्यां यत्र वै छिद्रं पूर्वमासीद्युधिष्ठिर ॥ ५५ ॥ तत्राश्रमो वशिष्ठस्य त्रिषु लोकेषु विश्रुतः। तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ५६ ॥ पिङ्गतीर्थमुपस्पृश्य ब्रह्मचारी जितेन्द्रियः। कपिलानां नरश्रेष्ठ शतस्य फलमश्नुते ॥ ५७ ॥ ततो गच्छेत राजेन्द्र प्रभासं तीर्थमुत्तमम्। तत्र सन्निहितो नित्यं स्वयमेव हुताशनः ॥ ५८ ॥ देवतानां मुखं वीर ज्वलनोऽनिलसारथिः। तस्मिंस्तीर्थे नरः स्नात्वा शुचिः प्रयतमानसः ॥ ५९ ॥ अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः। ततो गत्वा सरस्वत्याः सागरस्य च सङ्गमे ॥ ६० ॥ गोसहस्रफलं तस्य स्वर्गलोकञ्च विन्दति। प्रभया दीप्यते नित्यमग्निवद्भरतर्षभ ॥ ६१ ॥ तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः। त्रिरात्रमुषितः स्नातस्तर्पयेत् पितृदेवताः ॥ ६२ ॥ प्रभासते यथा सोमः सोऽश्वमेधञ्च विन्दति। वरदानं ततो गच्छेत्तीर्थं भरतसत्तम ॥ ६३ ॥ विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर। वरदाने नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ६४ ॥ ततो द्वारवतीं गच्छेन्नियतो नियताशनः। पिण्डारके नरः स्नात्वा लभेद्बहुसुवर्णकम् ॥ ६५ ॥ तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः। अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिन्दम ॥ ६६ ॥ त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन। महादेवस्य सान्निध्यं तत्र वै पुरुषर्षभ ॥ ६७ ॥ सागरस्य च सिन्धोश्च सङ्गमं प्राप्य भारत। तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ॥ ६८ ॥ तर्प-

यित्वा पितॄन्देवानृषींश्च भरतर्षभ। प्राप्नोति वारुणं लोकं दीप्यमानं स्वतेजसा ॥ ६९ ॥ मङ्कर्णेश्वरं देवमर्च्चयित्वा युधिष्ठिर। अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ ७० ॥ प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ। तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ॥ ७१ ॥ द्विमीति नाम्ना विख्यातं सर्व्वपापप्रणाशनम्। यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ॥ ७२ ॥ तत्र स्नात्वार्च्चयित्वा च रुद्रं देवगणैर्वृतम्। जन्मप्रभृति यत् पापं तत् स्नातस्य प्रणश्यति ॥ ७३ ॥ द्विमी चात्र नरश्रेष्ठ सर्व्वदेवैरभिष्टुतः। तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् ॥ ७४ ॥ गत्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना। पुरा शौचं कृतं राजन् हत्वा दैतेयदानवान् ॥ ७५ ॥ ततो गच्छेत धर्मज्ञ वसोर्धारामभिष्टुताम्। गमनादेव तस्यां हि हयमेधफलं लभेत् ॥ ७६ ॥ स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा समाहितः। तर्प्य देवान् पितॄंश्चैव विष्णुलोके महीयते ॥ ७७ ॥ तीर्थं चात्र सरः पुण्यं वसूनां भरतर्षभ। तत्र स्नात्वा च पीत्वा च वसूनां सम्मतो भवेत् ॥ ७८ ॥ सिन्धूत्तममिति ख्यातं सर्व्वपापप्रणाशनम्। तत्र स्नात्वा नरश्रेष्ठ लभेद्बहुसुवर्णकम् ॥ ७९ ॥ भद्रतुङ्गं समासाद्य शुचिः शीलसमन्वितः। ब्रह्मलोकमवाप्नोति गतिञ्च परमां व्रजेत् ॥ ८० ॥ कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम्। तत्र स्नात्वा नरः क्षिप्रं स्वर्गलोकमवाप्नुयात् ॥ ८१ ॥ रेणुकायाश्च तत्रैव तीर्थं सिद्धनिषेवितम्। तत्र स्नात्वा भवेद्विप्रो निर्म्मलश्चन्द्रमा यथा ॥ ८२ ॥ अथ पञ्चनदं गत्वा नियतो नियताशनः। पञ्चयज्ञानवाप्नोति क्रमशो येऽनुकीर्त्तिताः ॥ ८३ ॥ ततो गच्छेत राजेन्द्र भीमायाः स्थानमुत्तमम्। तत्र स्नात्वा तु योन्यां वै नरो भरतसत्तम ॥ ८४ ॥ देव्याः पुत्रो भवेद्राजंस्तप्तकुण्डलविग्रहः। गवां शतसहस्रस्य फलं प्राप्नोति मानवः ॥ ८५ ॥ श्रीकुण्डन्तु समासाद्य त्रिषु लोकेषु

वश्रुतम्। पितामहं नमस्कृत्य गोसहस्रफलं लभेत् ॥ ८६ ॥
ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम्। अद्यापि यत्र दृश्यन्ते
मत्स्याः सौवर्णराजताः ॥ ८७ ॥ तत्र स्नात्वा नरः चिप्रं वासवं
लोकमाप्नुयात्। सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥८८॥
वितस्ताञ्च समसाद्य सन्तर्प्य पितृदेवताः। नरः फलमवाप्नोति
वाजपेयस्य भारत ॥ ८९ ॥ काश्मीरेष्वेव नागस्य भवनं तक्ष-
कस्य च। वितस्ताख्यमिति ख्यातं सर्वपापप्रमोचनम् ॥ ९० ॥
तत्र स्नात्वा नरो नूनं वाजपेयमवाप्नुयात्। सर्वपापविशुद्धात्मा
गच्छेच्च परमां गतिम् ॥ ९१ ॥ ततो गच्छेत वड़वां त्रिषु लोकेषु
विश्रुताम्। पश्चिमायान्तु सन्ध्यायामुपस्पृश्य यथाविधि ॥ ९२ ॥
चरुं सप्तार्चिषे राजन् यथाशक्ति निवेदयेत्। पितृणामक्षयं दानं
प्रवदन्ति मनीषिणः ॥ ९३ ॥ ऋषयः पितरो देवा गन्धर्वाप्सरसां
गणाः गुह्यकाः किन्नरा यक्षाः सिद्धा विद्याधरा नराः ॥ ९४ ॥
राक्षसा दितिजा रुद्रा ब्रह्मा च मनुजाधिप। नियतः परमां
दीक्षामास्थायाब्दसहस्रकीम् ॥ ९५ ॥ विष्णोः प्रसादनं कुर्वं
श्चरुञ्च श्रपयंस्तथा। सप्तभिः सप्तभिश्चैव ऋग्भिस्तुष्टाव केशवम्
॥ ९६ ॥ ददावष्टगुणैश्वर्य्यं तेषां तुष्टस्तु केशवः। यथाभिल-
षितानन्यान् कामान् दत्त्वा महीपते ॥ ९७ ॥ तत्रैवान्तर्दधे
देवो विद्युदभ्रेषु वै यथा। नाम्ना सप्तचरुं तेन ख्यातं लोकेषु
भारत ॥ ९८ ॥ गवां शतसहस्रेण राजसूयशतेन च। अश्व-
मेधसहस्रेण श्रेयान् सप्तार्चिषश्चरुः ॥ ९९ ॥ ततो निवृत्तो
राजेन्द्र रौद्रं पदमथाविशेत्। अर्चयित्वा महादेवमश्वमेधफलं
लभेत् ॥ १०० ॥ मणिमन्तं समासाद्य ब्रह्मचारी समाहितः।
एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत् ॥ १०१ ॥ अथ गच्छेत
राजेन्द्र देविकां लोमविश्रुताम्। प्रसूतिर्यत्र विप्राणां श्रूयते
भरतर्षभ ॥ १०२ ॥ त्रिशूलपाणेः स्थानञ्च त्रिषु लोकेषु विश्रुतम्।

देविकायां नरः स्नात्वा समभ्यर्च्य महेश्वरम् ॥ १०३ ॥ यथाशक्ति चरुं तत्र निवेद्य भरतर्षभ। सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥ १०४ ॥ कामाख्यं तत्र रुद्रस्य तीर्थं देवनिषेवितम्। तत्र स्नात्वा नरः क्षिप्रं सिद्धिं प्राप्नोति मानवः ॥ १०५ ॥ यजनं याजनञ्चैव तथैव ब्रह्मवालुकम्। पुष्पाम्भश्च उपस्पृश्य न शोचेन्मरणं गतः ॥ १०६ ॥ अर्द्धयोजनविस्तारा पञ्चयोजनमायता। एतावती देविका तु पुण्या देवर्षिसेविता ॥ १०७ ॥ ततो गच्छेत धर्मज्ञ दीर्घसत्रं यथाक्रमम्। तत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः ॥ १०८ ॥ दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः। गमनादेव राजेन्द्र दीर्घसत्रमरिन्दम ॥ १०९ ॥ राजसूयाश्वमेधाभ्यां फलं प्राप्नोति भारत। ततो विनशनं गच्छेन्नियतो नियताशनः ॥ ११० ॥ गच्छत्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती। चमसे च शिवोद्भेदे नागोद्भेदे च दृश्यते ॥ १११ ॥ स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत्। शिवोद्भेदे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ११२ ॥ नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात्। शशयानञ्च राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥ ११३ ॥ शशरूपप्रतिच्छन्नाः पुष्करा यत्र भारत। सरस्वत्यां महाराज अनुसंवत्सरञ्च ते ॥ ११४ ॥ दृश्यन्ते भरतश्रेष्ठ वृत्तां वै कार्त्तिकीं सदा। तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत् सदा ॥ ११५ ॥ गोसहस्रफलञ्चैव प्राप्नुयाद्भरतर्षभ। कुमारकोटीमासाद्य नियतः कुरुनन्दन ॥ ११६ ॥ तत्राभिषेकं कुर्वीत पितृदेवार्च्चने रतः। गवामयुतमाप्नोति कुलञ्चैव समुद्धरेत् ॥ १२७ ॥ ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः। पुरा यत्र महाराज मुनिकोटिः समागता ॥ ११८ ॥ हर्षेण महताविष्टा रुद्रदर्शनकाङ्क्षया। अहं पूर्वमहं पूर्वं द्रक्ष्यामि वृषभध्वजम् ॥ ११९ ॥ एवं संप्रस्थिता राजन्नृषयः किल भारत। ततो योगीश्वरेणापि

योगमास्थाय भूपते ॥ १२० ॥ तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनाम् । सृष्टा कोटीति रुद्राणामृषीणामग्रतः स्थिता ॥ १२१ ॥ मया पूर्वतरं दृष्ट इति ते मेनिरे पृथक् । तेषां तुष्टो महादेवो मुनीनां भावितात्मनाम् ॥ १२२ ॥ भक्त्या परमया राजन् वरं तेषां प्रदिष्टवान् । अद्यप्रभृति युष्माकं धर्मवृद्धिर्भविष्यति ॥ १२३ ॥ तत्र स्नात्वा नरव्याघ्र रुद्रकोट्यां नरः शुचिः । अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत् ॥ १२४ ॥ ततो गच्छेत राजेन्द्र सङ्गमं लोकविश्रुतम् । सरस्वत्या महापुण्यं केशवं समुपासते ॥ १२५ ॥ यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः । अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् ॥ १२६ ॥ तत्र स्नात्वा नरव्याघ्र विन्देद्बहुसुवर्णकम् । सर्वपापविशुद्धात्मा ब्रह्मलोकञ्च गच्छति ॥ १२७ ॥ ऋषीणां यत्र सत्राणि समाप्तानि नराधिप । सत्रावसानमासाद्य गोसहस्रफलं लभेत् ॥ १२८ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि नानातीर्थकथने द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

पुलस्त्य उवाच । ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् । पापेभ्यो यत्र मुच्यन्ते दर्शनात् सर्वजन्तवः ॥ १ ॥ कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् । य एवं सततं ब्रूयात् सर्वपापैः प्रमुच्यते ॥ २ ॥ पांशवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः । अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ ३ ॥ दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च । ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे ॥ ४ ॥ तत्र मासं वसेद्धीर सरस्वत्यां युधिष्ठिर । यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ ५ ॥ गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते । ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥ ६ ॥

अनाप्यभिक्रामस्य कुरुक्षेत्रं युधिष्ठिर। पापानि विप्रणश्यन्ति ब्रह्मलोकञ्च गच्छति ॥ ७ ॥ गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह। फलं प्राप्नोति च तदा राजसूयाश्वमेधयोः ॥ ८ ॥ ततो मचक्रुकं नाम द्वारपालं महाबलम्। यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ९ ॥ ततो गच्छेत धर्मज्ञ विष्णोः स्थानमनुत्तमम्। सततं नाम राजेन्द्र यत्र सन्निहितो हरिः ॥ १० ॥ तत्र स्नात्वा च नत्वा च त्रिलोकप्रभवं हरिम्। अश्वमेधमवाप्नोति विष्णुलोकञ्च गच्छति ॥ ११ ॥ ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम्। अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति भारत ॥ १२ ॥ पृथिवीतीर्थमासाद्य गोसहस्रफलं लभेत्। ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ॥ १३ ॥ दशाश्वमेधे स्नात्वा च तदेव फलमाप्नुयात्। सर्पदेवीं समासाद्य नागानां तीर्थमुत्तमम् ॥ १४ ॥ अग्निष्टोममवाप्नोति नागलोकञ्च विन्दति। ततो गच्छेत धर्मज्ञ द्वारपालं तरन्तुकम् ॥ १५ ॥ तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्। ततः पञ्चनदं गत्वा नियतो नियताशनः ॥ १६ ॥ कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्। अश्विनोस्तीर्थमासाद्य रूपवानभिजायते ॥ १७ ॥ ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम्। विष्णुर्वराहरूपेण पूर्वं यत्र स्थितोऽभवत् ॥ १८ ॥ तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत्। ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत् ॥ १९ ॥ स्नात्वा फलमवाप्नोति राजसूयस्य मानवः। एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ २० ॥ कृतशौचं समासाद्य तीर्थसेवी नराधिप। पुण्डरीकमवाप्नोति कृतशौचो भवेच्च सः ॥ २१ ॥ ततो मुञ्जवटं नाम स्थाणोः स्थानं महात्मनः। उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥ २२ ॥ तत्रैव च महाराज यक्षिणीं लोकविश्रुताम्। स्नात्वाभिगम्य राजेन्द्र सर्वान् कामानवाप्नुयात् ॥ २३ ॥ कुरुक्षेत्रस्य तद्द्वारं

विश्रुतं भरतर्षभ। प्रदक्षिणमुपावृत्त तीर्थसेवी समाहितः॥ २४॥
रक्षितं पुष्कराणाञ्च स्नात्वार्च्य पितृदेवताः। जामदग्न्येन रामेण
कृतन्तत् सुमहात्मना ॥ २५॥ कृतकृत्यो भवेद्राजन्नश्वमेधञ्च
विन्दति। ततो रामह्रदान् गच्छेत्तीर्थसेवी समाहितः॥ २६॥
तत्र रामेण राजेन्द्र तरसा दीप्ततेजसा। क्षत्रमुत्साद्य वीरेण
ह्रदाः पञ्च निवेशिताः ॥ २७॥ पूरयित्वा नरव्याघ्र रुधिरेणेति
विश्रुतम्। पितरस्तर्पिताः सर्वे तथैव प्रपितामहाः। ततस्ते
पितरः प्रीता राममूचुर्नराधिप॥ २८॥

पितर ऊचुः। राम राम महाभाग प्रीताः स्म तव भार्गव।
अनया पितृभक्त्या च विक्रमेण च ते विभो। वरं वृणीष्व भद्रं
ते किमिच्छसि महाद्युते॥ २९॥ एवमुक्तः स राजेन्द्र रामः
प्रहरतांवरः। अब्रवीत् प्राञ्जलिर्वाक्यं पितॄन् स गगने स्थितान्
॥ ३०॥ भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि। पितृ-
प्रसादमिच्छेयं तप आप्यायनं पुनः॥ ३१॥ यच्च रोषाभिभूतेन
क्षत्रमुत्सादितं मया। ततश्च पापान्मुच्येयं युष्माकं तेजसाप्यहम्
॥ ३२॥ ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः। एतच्छ्रुत्वा
शुभं वाक्यं रामस्य पितरस्तदा ॥ ३३॥ प्रत्यूचुः परमप्रीता
रामं हर्षसमन्विताः। तपस्ते वर्द्धतां भूयः पितृभक्त्या विशेषतः
॥ ३४॥ यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया। ततश्च
पापान्मुक्तस्त्वं पातितास्ते स्वकर्मभिः॥ ३५॥ ह्रदाश्च तव तीर्थत्वं
गमिष्यन्ति न संशयः। ह्रदेषु तेषु यः स्नात्वा पितॄन् सन्तर्पयि-
ष्यति ॥ ३६॥ पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम्।
ईप्सितञ्च मनःकामं स्वर्गलोकञ्च शाश्वतम्॥ ३७॥ एवं दत्त्वा
वरान्राजन्रामस्य पितरस्तदा। आमन्त्र्य भार्गवं प्रीत्या तत्रैवान्त-
र्हितास्ततः॥ ३८॥ एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः।
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः॥ ३९॥ राममभ्यर्च्य

राजेन्द्र लभेद्दहुसुवर्णकम्। वंशमूलकमासाद्य तीर्थसेवी कुरु-
द्वह ॥ ४० ॥ स्ववंशमुद्धरेद्राजन् स्नात्वा वै वंशमूलके। काय-
शोधनमासाद्य तीर्थं भरतसत्तम ॥ ४१ ॥ शरीरशुद्धिः स्नातस्य
तस्मिंस्तीर्थे न संशयः। शुद्धदेहश्च संयाति शुभाल्लोकाननुत्तमान्
॥ ४२ ॥ ततो गच्छेत धर्म्मज्ञ तीर्थं त्रैलोक्यविश्रुतम्। लोका
यत्रोद्धृताः पूर्व्वं विष्णुना प्रभविष्णुना ॥ ४३ ॥ लोकोद्धारं
समासाद्य तीर्थं त्रैलोक्यपूजितम्। स्नात्वा तीर्थवरे राजन्
लोकानुद्धरते स्वकान् ॥ ४४ ॥ श्रीतीर्थञ्च समासाद्य स्नात्वा
नियतमानसः। अर्च्चयित्वा पितॄन् देवान् विन्दते श्रियमुत्तमाम्
॥ ४५ ॥ कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः। तत्र स्नात्वा-
र्च्चयित्वा च पितॄन् स्वान् दैवतान्यपि ॥ ४६ ॥ कपिलानां सह-
स्रस्य फलं विन्दति मानवः। सूर्य्यतीर्थं समासाद्य स्नात्वा
नियतमानसः ॥ ४७ ॥ अर्च्चयित्वा पितॄन् देवानुपवासपरायणः।
अग्निष्टोममवाप्नोति सूर्य्यलोकञ्च गच्छति ॥ ४८ ॥ गवां भवन-
मासाद्य तीर्थसेवी यथाक्रमम्। तत्राभिषेकं कुर्व्वाणो गोसहस्र-
फलं लभेत ॥ ४९ ॥ शङ्खिनीं तत्र आसाद्य तीर्थसेवी कुरुद्वह।
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् ॥ ५० ॥ ततो गच्छेत
राजेन्द्र द्वारपालं तरन्तुकम्। तच्च तीर्थं सरस्वत्यां यक्षेन्द्रस्य
महात्मनः ॥ ५१ ॥ तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत।
ततो गच्छेत राजेन्द्र ब्रह्मावर्त्तं नरोत्तमः ॥ ५२ ॥ ब्रह्मावर्त्ते
नरः स्नात्वा ब्रह्मलोकमवाप्नुयात्। ततो गच्छेत राजेन्द्र सुती-
र्थकमनुत्तमम् ॥ ५३ ॥ तत्र सन्निहिता नित्यं पितरो दैवतैः
सह। तत्राभिषेकं कुर्व्वीत पितृदेवार्च्चने रतः ॥ ५४ ॥ अश्व-
मेधमवाप्नोति पितृलोकञ्च गच्छति। ततोऽम्बुमत्यां धर्म्मज्ञ सुती-
र्थकमनुत्तमम् ॥ ५५ ॥ काशीश्वरस्य तीर्थे च स्नात्वा भरतसत्तम।
सर्व्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ५६ ॥ मातृतीर्थञ्च

तत्रैव यत्र स्नातस्य भारत। प्रजा विवर्द्धते राजन्ननन्तां श्रियमश्नुते ॥ ५७ ॥ ततः शीतवनं गच्छेन्नियतो नियताशनः। तीर्थं तत्र महाराज महदन्यत्र दुर्लभम् ॥ ५८ ॥ पुनाति गमनादेव दृष्टमेकं नराधिप। केशानभ्युक्ष्य वै तस्मिन् पूतो भवति भारत ॥ ५९ ॥ तीर्थं तत्र महाराज श्वाविल्लोमापहं स्मृतम्। यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ॥ ६० ॥ प्रीतिं गच्छन्ति परमां स्नात्वा भरतसत्तम। श्वाविल्लोमापनयने तीर्थे भरतसत्तम ॥ ६१ ॥ प्राणायामैर्निर्हरन्ति स्वलोमानि द्विजोत्तमाः। पूतात्मानश्च राजेन्द्र प्रयान्ति परमाङ्गतिम् ॥ ६२ ॥ दशाश्वमेधिकञ्चैव तस्मिंस्तीर्थे महीपते। तत्र स्नात्वा नरव्याघ्र गच्छेत परमाङ्गतिम् ॥ ६३ ॥ ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम्। यत्र कृष्णमृगा राजन् व्याधेन शरपीड़िताः ॥ ६४ ॥ विगाह्य तस्मिन् सरसि मानुषत्वमुपागताः। तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी समाहितः ॥ ६५ ॥ सर्वपापविशुद्धात्मा स्वर्गलोके महीयते। मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते ॥ ६६ ॥ आपगा नाम विख्याता नदी सिद्धनिषेविता। श्यामाकं भोजनं तत्र यः प्रयच्छति मानवः ॥ ६७ ॥ देवान् पितॄन् समुद्दिश्य तस्य धर्मफलं महत्। एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥ ६८ ॥ तत्र स्नात्वार्च्चयित्वाच पितॄन् वै दैवतानि च। उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् ॥ ६९ ॥ ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम्। ब्रह्मोडुम्बरमित्येवं प्रकाशं भुवि भारत ॥ ७० ॥ तत्र सप्तर्षिकुण्डेषु स्नातस्य नरपुङ्गव। केदारे चैव राजेन्द्र कपिलस्य महात्मनः ॥ ७१ ॥ ब्रह्माणमधिगत्वा च शुचिः प्रयतमानसः। सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ ७२ ॥ कपिलस्य च केदारं समासाद्य सुदुर्लभम्। अन्तर्द्धानमवाप्नोति तपसा दग्धकिल्बिषः ॥ ७३ ॥ ततो

गच्छेत राजेन्द्र सरकं लोकविश्रुतम्। कृष्णपक्षे चतुर्द्दश्यामभि-
गम्य वृषध्वजम् ॥ ७४ ॥ लभेत सर्व्वकामान् हि स्वर्गलोकञ्च
गच्छति। तिस्रः कोट्यस्तु तीर्थानां सरके कुरुनन्दन ॥ ७५ ॥
रुद्रकोट्यां तथा कूपे ह्रदेषु च महीपते। इलास्पदञ्च तत्रैव
तीर्थं भरतसत्तम ॥ ७६ ॥ तत्र स्नात्वार्च्चयित्वा च दैवतानि
पितॄनथ। न दुर्गतिमवाप्नोति वाजपेयञ्च विन्दति ॥ ७७ ॥
किन्दाने च नरः स्नात्वा किंजप्ये च महीपते। अप्रमेयमवा-
प्नोति दानं जप्यञ्च भारत ॥ ७८ ॥ कलश्यां वार्य्युपस्पृश्य श्रद्द-
धानो जितेन्द्रियः। अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः
॥ ७९ ॥ सरकस्य तु पूर्व्वेण नारदस्य महात्मनः। तीर्थं कुरु-
कुलश्रेष्ठ अम्बाजन्मेति विश्रुतम् ॥ ८० ॥ तत्र तीर्थे नरः स्नात्वा
प्राणानुत्सृज्य भारत। नारदेनाभ्यनुज्ञातो लोकान् प्राप्नोत्यनु-
त्तमान् ॥ ८१ ॥ शुक्लपक्षे दशम्याञ्च पुण्डरीकं समाविशेत्।
यत्र स्नात्वा नरो राजन् पुण्डरीकफलं लभेत् ॥ ८२ ॥ तत-
स्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम्। तत्र वैतरणी पुण्या
नदी पापप्रणाशिनी ॥ ८३ ॥ तत्र स्नात्वार्च्चयित्वा च शूलपाणिं
वृषध्वजम्। सर्व्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ८४ ॥
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम्। तत्र देवाः सदा
राजन् फलकीवनमाश्रिताः। ॥ ८५ ॥ तपश्चरन्ति विपुलं बहु-
वर्षसहस्रकम्। दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ॥८६॥
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत। तीर्थे च सर्व्व-
देवानां स्नात्वा भरतसत्तम ॥ ८७ ॥ गोसहस्रस्य राजेन्द्र फलं
विन्दति मानवः पाणिखाते नरः स्नात्वा तर्पयित्वा च देवताः
॥ ८८ ॥ अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत। राज-
सूयमवाप्नोति ऋषिलोकञ्च विन्दति ॥ ८९ ॥ ततो गच्छेत
राजेन्द्र मिश्रकं तीर्थमुत्तमम्। तत्र तीर्थानि राजेन्द्र मिश्रि-

तानि महात्मना ॥ ९० ॥ व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम्। सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ९१ ॥ ततो व्यासवनं गच्छेन्नियतो नियताशनः। मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९२ ॥ गत्वा मधुवटीञ्चैव देव्यास्तीर्थे नरः शुचिः। तत्र स्नात्वार्च्चयित्वाच पितॄन् देवांश्च पूरुषः ॥ ९३ ॥ स देव्या समनुज्ञातो गोसहस्रफलं लभेत्। कौशिक्याः सङ्गमे यस्तु दृषद्वत्याश्च भारत ॥ ९४ ॥ स्नाति वै नियताहारः सर्वपापैः प्रमुच्यते। ततो व्यासस्थली नाम यत्र व्यासेन धीमता ॥ ९५ ॥ पुत्रशोकाभितप्तेन देहत्यागे कृता मतिः। ततो देवैस्तु राजेन्द्र पुनरुत्थापितस्तदा ॥ ९६ ॥ अभिगम्य स्थलीं तस्य गोसहस्रफलं लभेत्। किन्दत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ॥ ९७ ॥ गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह। वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९८ ॥ अहश्च सुदिनञ्चैव द्वे तीर्थे लोकविश्रुते। तयो स्नात्वा नरव्याघ्र सूर्य्यलोकमवाप्नुयात् ॥ ९९ ॥ मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम्। तत्राभिषेकं कुर्वीत गङ्गायां नृपसत्तम ॥ १०० ॥ अर्च्चयित्वा महादेवमश्वमेधफलं लभेत्। देव्यास्तीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ १०१ ॥ ततो वामनकं गच्छेत्त्रिषु लोकेषु विश्रुतम्। तत्र विष्णुपदे स्नात्वा अर्च्चयित्वा च वामनम् ॥ १०२ ॥ सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति। कुलम्पुने नरः स्नात्वा पुनाति स्वकुलं ततः ॥ १०३ ॥ पवनस्य ह्रदे स्नात्वा मरुतां तीर्थमुत्तमम्। तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते ॥ १०४ ॥ अमराणां ह्रदे स्नात्वा समभ्यर्च्यामराधिपम्। अमराणां प्रभावेण स्वर्गलोके महीयते ॥ १०५ ॥ शालिहोत्रस्य तीर्थञ्च शालिसूर्य्ये यथाविधि। स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ॥ १०६ ॥ श्रीकुञ्जञ्च सरस्वत्यां तीर्थं भरतसत्तम। तत्र स्नात्वा नरश्रेष्ठ

अग्निष्टोमफलं लभेत् ॥ १०७ ॥ ततो नैमिषकुञ्जञ्च समासाद्य कुरूद्वह। ऋषयः किल राजेन्द्र नैमिषेयास्तपस्विनः ॥ १०८ ॥ तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा। ततः कुञ्जः सरस्वत्याः कृतो भरतसत्तम ॥ १०९ ॥ ऋषीणामवकाशः स्याद्यथा तुष्टिकरो महान्। तस्मिन् कुञ्जे नरः स्नात्वा अग्निष्टोमफलं लभेत् ॥ ११० ॥ ततो गच्छेत धर्मज्ञ कन्यातीर्थमनुत्तमम्। कन्यातीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ १११ ॥ ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम्। तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ॥ ११२ ॥ ब्राह्मणश्च विशुद्धात्मा गच्छेत परमाङ्गतिम्। ततो गच्छेन्नरश्रेष्ठ सोमतीर्थमनुत्तमम् ॥ ११३ ॥ तत्र स्नात्वा नरो राजन् सोमलोकमवाप्नुयात्। सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप ॥ ११४ ॥ यत्र मङ्कणकः सिद्धो महर्षिर्लोकविश्रुतः। पुरा मङ्कणको राजन् कुशाग्रेणेति नः श्रुतम् ॥ ११५ ॥ क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत्। स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्यवान् ॥ ११६ ॥ ततस्तस्मिन् प्रनृत्ते तु स्थावरं जङ्गमञ्च यत्। प्रनृत्यमुभयं वीर तेजसा तस्य मोहितम् ॥ ११७ ॥ ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः। विज्ञप्तो वै महादेव ऋषिरर्थे नराधिप ॥ ११८ ॥ नायं नृत्येद्यथा देव तथा त्वं कर्त्तुमर्हसि। तं प्रनृत्तं समासाद्य हर्षाविष्टेन चेतसा ॥ ११९ ॥ सुराणां हितकामार्थमृषिं देवोऽभ्यभाषत। भो भो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान्। हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव ॥ १२० ॥

ऋषिरुवाच। तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम। किन्न पश्यसि मे ब्रह्मन् कराच्छाकरसं स्रुतम्। यं दृष्ट्वा संप्रनृत्तोऽहं हर्षेण महतान्वितः ॥ १२१ ॥ तं प्रहस्याब्रवीद्देव ऋषिं रागेण मोहितम्। अहन्तु विस्मयं विप्र न गच्छामीति पश्य

माम् ॥ १२२ ॥ एवमुक्त्वा नरश्रेष्ठ महादेवेन धीमता । अङ्गु-
ल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽनघ ॥ १२३ ॥ ततो भस्म
क्षताद्राजन्निर्गतं हिमसन्निभम् । तं दृष्ट्वा व्रीडितो राजन् स
मुनिः पादयोर्गतः ॥ १२४ ॥ नान्यद्देवात् परं मेने रुद्रात् पर-
तरं महत् । सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् ॥ १२५ ॥
त्वया सर्वमिदं सृष्टं त्रैलोक्यं सचराचरम् । त्वमेव सर्वान् ग्रससि
पुनरेव युगक्षये ॥ १२६ ॥ देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो
मया । त्वयि सर्वे प्रदृश्यन्ते सुरा ब्रह्मादयोऽनघ ॥ १२७ ॥ सर्व-
स्त्वमसि लोकानां कर्त्ता कारयिता च ह । त्वत्प्रसादात् सुराः
सर्वे मोदयन्तीहाकुतोभयाः ॥ १२८ ॥ एवं स्तुत्वा महादेवमृषिः
र्वचनमब्रवीत् । त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै ॥ १२९ ॥
ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत् । तपस्ते वर्द्धतां विप्र
मत्प्रसादात् सहस्रधा ॥ १३० ॥ आश्रमे चेह वत्स्यामि त्वया
सह महामुने । सप्तसारस्वते स्नात्वा अर्चयिष्यन्ति ये तु माम्
॥ १३१ ॥ न तेषां दुर्लभं किञ्चिदिह लोके परत्र च । सारस्वतञ्च
ते लोकं गमिष्यन्ति न संशयः ॥ १३२ ॥ एवमुक्त्वा महादेवस्तत्रै-
वान्तरधीयत । ततस्त्वौशनसं गच्छेत् त्रिषु लोकेषु विश्रुतम् । १३३ ॥
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कार्त्तिकेयश्च भगवान्
त्रिसन्ध्यं किल भारत ॥ १३४ ॥ सान्निध्यमकरोन्नित्यं भार्गव-
प्रियकाम्यया । कपालमोचनं तीर्थं सर्वपापप्रमोचनम् ॥ १३५ ॥
तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते । अग्नितीर्थं ततो गच्छे-
त्तत्र स्नात्वा नरर्षभ ॥ १३६ ॥ अग्निलोकमवाप्नोति कुलञ्चैव
समुद्धरेत् । विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम ॥ १३७ ॥
तत्र स्नात्वा नरश्रेष्ठ ब्राह्मण्यमभिगच्छति । ब्रह्मयोनिं समासाद्य
शुचिः प्रयतमानसः ॥ १३८ ॥ तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं
प्रपद्यते । पुनात्यासप्तमञ्चैव कुलं नास्त्यत्र संशयः ॥ १३९ ॥

ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् । पृथूदकमिति ख्यातं कार्त्तिकेयस्य वै नृप ॥ १४० ॥ तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः । अज्ञानाज्ज्ञानतो वापि स्त्रिया वा पुरुषेण वा ॥ १४१ ॥ यत्किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना । तत्सर्वं नश्यते तत्र स्नातमात्रस्य भारत ॥ १४२ ॥ अश्वमेधफलञ्चास्य स्वर्गलोकञ्च गच्छति । पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात् सरस्वती ॥ १४३ ॥ सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् । उत्तमं सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ॥ १४४ ॥ पृथूदके जप्यपरो न तस्य मरणं भवेत् । गीतं सनत्कुमारेण व्यासेन च महात्मना ॥ १४५ ॥ एवं स नियतं राजन्नधिगच्छेत् पृथूदकम् । पृथूदकात्तीर्थतमं नान्यत्तीर्थं कुरूद्वह ॥ १४६ ॥ तन्मेध्यं तत्पवित्रञ्च पावनञ्च न संशयः । तत्र स्नात्वा दिवं यान्ति येऽपि पापकृतो नराः ॥ १४७ ॥ पृथूदके नरश्रेष्ठ एवमाहुर्मनीषिणः । मधुस्रवञ्च तत्रैव तीर्थं भरतसत्तम ॥ १४८ ॥ तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् । ततो गच्छेत राजेन्द्र तीर्थं मेध्यं यथाक्रमम् ॥ १४९ ॥ सरस्वत्या अरुणायाश्च सङ्गमं लोकविश्रुतम् । त्रिरात्रोपषितः स्नात्वा मुच्यते ब्रह्महत्यया ॥ १५० ॥ अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः । आसप्तमं कुलञ्चैव पुनाति भरतर्षभ ॥ १५१ ॥ अवकीर्णञ्च तत्रैव तीर्थं कुरुकुलोद्वह । विप्राणामनुकम्पार्थं दर्भिणा निर्म्मितं पुरा ॥ १५२ ॥ व्रतोपनयनाभ्यां वाप्युपवासेन वाप्युत । क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः ॥ १५३ ॥ क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ । चीर्णव्रतो भवेद्विद्वान् दृष्टमेतत् पुरातनैः ॥ १५४ ॥ समुद्राश्चापि चत्वारः समानीताश्च दर्भिणा । तेषु स्नातो नरश्रेष्ठ न दुर्गतिमवाप्नुयात् ॥ १५५ ॥ फलानि गोसहस्राणां चतुर्णां विन्दते तु सः । ततो गच्छेत धर्मज्ञ तीर्थं शतसहस्रकम् ॥ १५६ ॥ साहस्रकञ्च

तत्रैव द्वे तीर्थे लोकविश्रुते। उभयोर्हि नरः स्नात्वा गोसहस्र-
फलं लभेत् ॥ १५७ ॥ स्नानञ्चाप्युपवासो वा सहस्रगुणितो भवेत्।
ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमम् ॥ १५८ ॥ तीर्था-
भिषेकं कुर्वीत पितृदेवार्चने रतः। सर्वपापविशुद्धात्मा अग्नि-
ष्टोमफलं लभेत् ॥ १५९ ॥ विमोचनमुपस्पृश्य जितमन्युर्जिते-
न्द्रियः। प्रतिग्रहकृतैर्दोषैः सर्वैः स परिमुच्यते ॥ १६० ॥ ततः
पञ्चवटीं गत्वा ब्रह्मचारी जितेन्द्रियः। पुण्येन महता युक्तः सतां
लोके महीयते ॥ १६१ ॥ यत्र योगीश्वरः स्थाणुः स्वयमेव वृष-
ध्वजः। तमर्चयित्वा देवेशं गमनादेव सिध्यति ॥ १६२॥ तैजसं
वारुणं तीर्थं दीप्यमानं स्वतेजसा। यत्र ब्रह्मादिभिर्देवैर्ऋषि-
भिश्च तपोधनैः ॥ १६४ ॥ सैनापत्येन देवानामभिषिक्तो गुह-
स्तदा। तैजसस्य तु पूर्वेण कुरुतीर्थं कुरूद्वह ॥ १६५ ॥ कुरु-
तीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः। सर्वपापविशुद्धात्मा
ब्रह्मलोकं प्रपद्यते ॥ १६७ ॥ स्वर्गद्वारं ततो गच्छेन्नियतो निय-
तात्मनः। स्वर्गलोकमवाप्नोति ब्रह्मलोकं स गच्छति ॥ १६८ ॥
ततो गच्छेत नरकं तीर्थसेवी नराधिप। तत्र स्नात्वा नरो
राजन्न दुर्गतिमवाप्नुयात् ॥ १५९॥ तत्र ब्रह्मा स्वयं नित्यं देवैः
सह महीपते। अन्वास्ते पुरुषव्याघ्र नारायणपुरोगमैः ॥ १७० ॥
सान्निध्यं तत्र राजेन्द्र रुद्रपत्न्याः कुरूद्वह। अभिगम्य च तां
देवीं न दुर्गतिमवाप्नुयात् ॥ १७१ ॥ तत्रैव च महाराज विश्वे-
श्वरमुमापतिम्। अभिगम्य महादेवं मुच्यते सर्वकिल्बिषैः ॥ १७२॥
नारायणञ्चाभिगम्य पद्मनाभमरिन्दम। रोचमानो महाराज
विष्णुलोकञ्च गच्छति ॥ १७३ ॥ तीर्थेषु सर्वदेवानां स्नातः स
पुरुषर्षभ। सर्वदुःखैः परित्यक्तो द्योतते शशिवन्नरः ॥ १७४ ॥
ततः स्वस्तिपुरं गच्छेत्तीर्थसेवी नराधिप। प्रदक्षिणमुपावृत्य
गोसहस्रफलं लभेत् ॥ १७५ ॥ पावनं तीर्थमासाद्य तर्पयेत् पितृ-

दैवताः । अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति भारत ॥ १७६ ॥ गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ । तिस्रः कोट्यस्तु तीर्थानां तस्मिन् कूपे महीपते ॥ १७७ ॥ तत्र स्नात्वा नरो राजन् स्वर्गलोकं प्रपद्यते । आपगानां नरः स्नात्वा अर्चयित्वा महेश्वरम् ॥ १७८ ॥ गाणपत्यमवाप्नोति कुलञ्चैव समुद्धरेत् । ततः स्थाणुवटं गच्छेत्त्रिषु लोकेषु विश्रुतम् ॥ १७९ ॥ तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नुयात् । बदरीपाचनं गच्छेद्वशिष्ठस्याश्रमं गतः ॥ १८० ॥ बदरीं भक्षयेत्तत्र त्रिरात्रोपोषितो नरः । सम्यग्द्वादशवर्षाणि बदरीं भक्षयेत्तु यः ॥ १८१ ॥ त्रिरात्रोपोषितस्तेन भवेत्तुल्यो नराधिप । इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप ॥ १८२ ॥ अहोरात्रोपवासेन शक्रलोके महीयते । एकरात्रं समासाद्य एकरात्रोषितः नरः । नियतः सत्यवादी च ब्रह्मलोके महीयते ॥ १८३ ॥ ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् । आदित्यस्याश्रमो यत्र तेजोराशेर्महात्मनः ॥ १८४ ॥ तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा विभावसुम् । आदित्यलोकं व्रजति कुलञ्चैव समुद्धरेत् ॥ १८५ ॥ सोमतीर्थे नरः स्नात्वा तीर्थसेवी नराधिप । सोमलोकमवाप्नोति नरो नात्रत्र संशयः ॥ १८६ ॥ ततो गच्छेत धर्मज्ञ दधीचस्य महात्मनः । तीर्थं पुण्यतमं राजन् पावनं लोकविश्रुतम् ॥ १८७ ॥ यत्र सारस्वतो जातः सोऽङ्गिरास्तपसो निधिः । तस्मिंस्तीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ॥ १८८ ॥ सारस्वतीं गतिञ्चैव लभते नात्र संशयः । ततः कन्याश्रमं गच्छेन्नियतो ब्रह्मचर्य्यवान् ॥ १८९ ॥ त्रिरात्रोपोषितो राजन्नियतो नियताशनः । लभेत् कन्याशतं दिव्यं स्वर्गलोकञ्च गच्छति ॥ १९० ॥ ततो गच्छेत धर्मज्ञ तीर्थं सन्निहतीमपि । तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ १९१ ॥

मासि मासि समायान्ति पुण्येन महतान्विताः। सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ॥ १९२॥ अश्वमेधशतं तेन तत्रेष्टं शाश्वतं भवेत्। पृथिव्यां यानि तीर्थानि अन्तरीक्षचराणि च ॥ १९३ ॥ नद्यो ह्रदास्तडागाश्च सर्वप्रस्रवणानि च। उदपानानि वाप्यश्च तीर्थान्यायतनानि च ॥ १९४ ॥ निःसंशयममावस्यां समेष्यन्ति नराधिप। मासि मासि नरव्याघ्र सन्निहत्यां न संशयः ॥ १९५ ॥ तीर्थसन्निहनादेव सन्निहत्येति विश्रुता। तत्र स्नात्वा च पीत्वा च स्वर्गलोके महीयते ॥ १९६ ॥ अमावस्यान्तु तत्रैव राहुग्रस्ते दिवाकरे। यः श्राद्धं कुरुते मर्त्यस्तस्य पुण्यफलं शृणु ॥ १९७ ॥ अश्वमेधसहस्रस्य सम्यगिष्टस्य यत् फलम्। स्नात एव समाप्नोति कृत्वा श्राद्धञ्च मानवः ॥ १९८ ॥ यत्किञ्चिदुष्कृतं कर्म स्त्रिया वा पुरुषस्य वा। स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः ॥ १९९ ॥ पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते। अभिवाद्य ततो यक्षं द्वारपालं मचक्रुकम् ॥ २०० ॥ कोटितीर्थमुपस्पृश्य लभेद्बहु सुवर्णकम्। गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ॥ २०१ ॥ तत्र स्नायीत धर्मज्ञ ब्रह्मचारी समाहितः। राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ॥ २०२ ॥ पृथिव्यां नैमिषं तीर्थमन्तरीक्षे च पुष्करम्। त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ॥ २०३ ॥ पांशवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः। अपि दुष्कृतकर्माणं नयन्ति परमाङ्गतिम् ॥ २०४ ॥ उत्तरेण दृषद्वत्या दक्षिणेन सरस्वतीम्। ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे ॥ २०५ ॥ कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम्। अप्येकां वाचमुत्सृज्य सर्वपापैः प्रमुच्यते ॥ २०६ ॥ ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम्। तस्मिन् वसन्ति ये मर्त्या न ते शोच्याः कथञ्चन ॥ २०७ ॥ तरन्तुकारन्तुकयोर्यद-

न्तरं रामह्रदानाञ्च मचक्रुकस्य च। एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते ॥ २०८ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि नानातीर्थकथने त्र्यशीतोऽध्यायः ॥ ८३ ॥

---

पुलस्त्य उवाच। ततो गच्छेन्महाराज धर्म्मतीर्थं मनुत्तमम्। यत्र धर्म्मो महाभागस्तप्तवानुत्तमं तपः ॥ १ ॥ तेन तीर्थं कृतं पुण्यं स्वेन नाम्ना च विश्रुतम्। तत्र स्नात्वा नरो राजन् धर्म्मशीलः समाहितः ॥ २ ॥ आसप्तमं कुलञ्चैव पुनीते नात्र संशयः। ततो गच्छेत राजेन्द्र ज्ञानपावनमुत्तमम् ॥ ३ ॥ अग्निष्टोममवाप्नोति मुनिलोकञ्च गच्छति। सौगन्धिकवनं राजंस्ततो गच्छेत मानवः ॥ ४ ॥ तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः। सिद्धचारणगन्धर्व्वाः किन्नराश्च महोरगाः ॥ ५ ॥ तद्वनं प्रविशन्नेव सर्व्वपापैः प्रमुच्यते। ततश्चापि सरिच्छ्रेष्ठा नदीनामुत्तमा नदी ॥६॥ प्लक्षा देवी स्मृता राजन् पुण्या देवी सरस्वती। तत्राभिषेकं कुर्व्वीत वल्मीकान्निःसृते जले ॥ ७ ॥ अर्च्चयित्वा पितॄन् देवानश्वमेधफलं लभेत्। ईशानाध्युषितं नाम तत्र तीर्थं सुदुर्लभम् ॥ ८ ॥ षट्सु शम्यानिपातेषु वल्मीकादिति निश्चयः। कपिलानां सहस्रन्तु वाजिमेधञ्च विन्दति ॥ ९ ॥ तत्र स्नात्वा नरव्याघ्र दृष्टमेतत् पुरातनैः। सुगन्धां शतकुम्भाञ्च पञ्चयज्ञाञ्च भारत ॥ १० ॥ अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते। त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत ॥ ११ ॥ तत्राभिषेकं कुर्व्वीत पितृदेवार्च्चने रतः। गाणपत्यञ्च लभते देहं त्यक्त्वा न संशयः ॥ १२ ॥ ततो गच्छेत राजेन्द्र देव्याः स्थानं सुदुर्लभम्। शाकम्भरीति विख्याता त्रिषु लोकेषु विश्रुता ॥ १३ ॥ दिव्यं वर्षसहस्रं हि

शाकेन किल सुव्रता। आहारं सा कृतवती मासि मासि नराधिप ॥ १४ ॥ ऋषयोऽस्यागतास्तत्र देव्या भक्त्या तपोधनाः। आतिथ्यञ्च कृतं तेषां शाकेन किल भारत ॥ १५ ॥ ततः शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितम्। शाकम्भरीं समासाद्य ब्रह्मचारी समाहितः ॥ १६ ॥ त्रिरात्रमुषितः शाकं भक्षयित्वा नरः शुचिः। शाकाहारस्य यत्किञ्चिद्वर्षैर्द्वादशभिः कृतम् ॥ १७ ॥ तत् फलं तस्य भवति देव्याश्छन्देन भारत। ततो गच्छेत् सुवर्णाख्यं त्रिषु लोकेषु विश्रुतम् ॥ १८ ॥ तत्र विष्णुः प्रसादार्थं रुद्रमाराधयत् पुरा। वरांश्च सुबहून् लेभे दैवतेषु सुदुर्लभान् ॥ १९ ॥ उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत। अपि च त्वं प्रियतरो लोके कृष्ण भविष्यसि ॥ २० ॥ त्वन्मुखञ्च जगत् सर्वं भविष्यति न संशयः। तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजम् ॥२१॥ अश्वमेधमवाप्नोति गाणपत्यञ्च विन्दति। धूमवतीं ततो गच्छेत्त्रिरात्रोपोषितो नरः ॥ २२ ॥ मनसा प्रार्थितान् कामाल्लभते नात्र संशयः। देव्यास्तु दक्षिणार्द्धेन रथावर्त्तो नराधिप ॥२३॥ तत्रारोहेत धर्मज्ञ श्रद्दधानो जितेन्द्रियः। महादेवप्रसादाद्धि गच्छेत परमाङ्गतिम् ॥ २४ ॥ प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ। धारां नाम महाप्राज्ञ सर्वपापप्रमोचनीम् ॥ २५ ॥ तत्र स्नात्वा नरव्याघ्र न शोचति नराधिप। ततो गच्छेत धर्मज्ञ नमस्कृत्य महागिरिम् ॥ २६ ॥ स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः। तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः ॥ २७ ॥ पुण्डरीकमवाप्नोति कुलं चैव समुद्धरेत्। उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् ॥ २८ ॥ सप्तगङ्गे त्रिगङ्गे च शक्रावर्त्ते च तर्पयन्। देवान् पितॄंश्च विधिवत् पुण्यलोके महीयते ॥ २९ ॥ ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः। अश्वमेधमवाप्नोति स्वर्गलोकञ्च विन्दति ॥ ३० ॥ कपिलावटं ततो गच्छेत्तीर्थसेवी

नराधिप। उपोष्य रजनीं तत्र गोसहस्रफलं लभेत् ॥ ३१ ॥ नागराजस्य राजेन्द्र कपिलस्य महात्मनः। तीर्थं कुरुवरश्रेष्ठ सर्व्वलोकेषु विश्रुतम् ॥ ३२ ॥ तत्राभिषेकं कुर्व्वीत नागतीर्थे नराधिप। कपिलानां सहस्रस्य फलं विन्दति मानवः ॥ ३३ ॥ ततो ललितकं गच्छेत् शान्तनोस्तीर्थमुत्तमम्। तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ ३४ ॥ गङ्गायमुनयोर्मध्ये स्नाति यः सङ्गमे नरः। दशाश्वमेधानाप्नोति कुलञ्चैव समुद्धरेत् ॥ ३५ ॥ ततो गच्छेत राजेन्द्र सुगन्धं लोकविश्रुतम्। सर्व्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ ३६ ॥ रुद्रावर्त्तं ततो गच्छेत्तीर्थसेवी नराधिप। तत्र स्नात्वा नरो राजन् स्वर्गलोके च गच्छति ॥ ३७ ॥ गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च सङ्गमे। स्नात्वाश्वमेधं प्राप्नोति स्वर्गलोकञ्च गच्छति ॥ ३८ ॥ भद्रकर्णेश्वरं गत्वा देवमर्च्य यथाविधि। न दुर्गतिमवाप्नोति नाकपृष्ठे च पूज्यते ॥ ३९ ॥ ततः कुब्जाम्रकं गच्छेत्तीर्थसेवी नराधिप। गोसहस्रमवाप्नोति स्वर्गलोकञ्च गच्छति ॥ ४० ॥ अरुन्धतीवटं गच्छेत्तीर्थसेवी नराधिप। सामुद्रकमुपस्पृश्य ब्रह्मचारी समाहितः ॥ ४१ ॥ अश्वमेधमवाप्नोति त्रिरात्रोपषितो नरः। गोसहस्रफलं विन्देत् कुलञ्चैव समुद्धरेत् ॥ ४२ ॥ ब्रह्मावर्त्तं ततो गच्छेद्ब्रह्मचारी समाहितः। अश्वमेधमवाप्नोति सोमलोकञ्च गच्छति ॥ ४३ ॥ यमुनाप्रभवं गत्वा समुपस्पृश्य यामुनम्। अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ॥ ४४ ॥ दर्व्वीसंक्रमणं प्राप्य तीर्थं त्रैलोक्यपूजितम्। अश्वमेधमवाप्नोति स्वर्गलोकञ्च गच्छति ॥ ४५ ॥ सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्व्वसेवितम्। तत्रोष्य रजनीः पञ्च विन्देद्बहुसुवर्णकम् ॥ ४६ ॥ अथ वेदीं समासाद्य नरः परमदुर्गमाम्। अश्वमेधमवाप्नोति स्वर्गलोकञ्च गच्छति ॥ ४७ ॥ ऋषिकुल्यां समासाद्य वाशिष्ठञ्चैव भारत। वाशिष्ठीं समतिक्रम्य सर्व्वे वर्णा द्विजा-

ततः ॥ ४८ ॥ ऋषिकुल्यां समासाद्य नरः स्नात्वा विकल्मषः ।
देवान् पितॄंश्चार्चयित्वा ऋषिलोकं प्रपद्यते ॥ ४९ ॥ यदि तत्र
वसेन्मासं शाकाहारो नराधिप । भृगुतुङ्गं समासाद्य वाजिमेध-
फलं लभेत् ॥ ५० ॥ गत्वा वीरप्रमोक्षञ्च सर्वपापैः प्रमुच्यते ।
कृत्तिकामघयोश्चैव तीर्थमासाद्य भारत ॥ ५१ ॥ अग्निष्टोमाति-
रात्राभ्यां फलमाप्नोति मानवः । तत्र सन्ध्यां समासाद्य विद्या-
तीर्थमनुत्तमम् ॥ ५२ ॥ उपस्पृश्य च वै विद्यां यत्र तत्रोपपद्यते ।
महाश्रमे वसेद्रात्रिं सर्वपापप्रमोचने ॥ ५३ ॥ एककालं निरा-
हारो लोकानावसते शुभान् । षष्ठकालोपवासेन मासमुष्य महा-
लये ॥ ५४ ॥ सर्वपापविशुद्धात्मा विन्देद्बहुसुवर्णकम् । दशापरान्
दशपूर्वान् नरानुद्धरते कुलम् ॥ ५५ ॥ अथ वेतसिकां, गत्वा
पितामहनिषेविताम् । अश्वमेधमवाप्नोति गच्छेदौशनसीं गतिम्
॥ ५६ ॥ अथ सुन्दरिकातीर्थं प्राप्य सिद्धनिषेवितम् । रूपस्य
भागी भवति दृष्टमेतत् पुरातनैः ॥ ५७ ॥ ततो वै ब्राह्मणीं गत्वा
ब्रह्मचारी जितेन्द्रियः । पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ ५८ ॥
ततस्तु नैमिषं गच्छेत् पुण्यं सिद्धनिषेवितम् । तत्र नित्यं निव-
सति ब्रह्मा देवगणैः सह ॥ ५९ ॥ नैमिषं मृगयानस्य पापस्यार्द्धं
प्रणश्यति । प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥ ६० ॥ तत्र
मासं वसेद्धीर नैमिषे तीर्थतत्परः । पृथिव्यां यानि तीर्थानि
तानि तीर्थानि नैमिषे ॥ ६१ ॥ कृताभिषेकस्तत्रैव नियतो निय-
ताशनः । गवां मेधस्य यज्ञस्य फलं प्राप्नोति भारत ॥ ६२ ॥
पुनात्यासप्तमञ्चैव कुलं भरतसत्तम । यस्त्यजेन्नैमिषे प्राणानुप-
वासपरायणः ॥ ६३ ॥ स मोदेत् सर्वलोकेषु एवमाहुर्मनीषिणः ।
नित्यं मेध्यञ्च पुण्यञ्च नैमिषं नृपसत्तम ॥ ६४ ॥ गङ्गोद्भेदं समा-
साद्य त्रिरात्रोपषितो नरः । वाजपेयमवाप्नोति ब्रह्मभूतो भवेत्
सदा ॥ ६५ ॥ सरस्वतीं समासाद्य तर्पयेत् पितृदेवताः । सार-

स्वेतेषु लोकेषु मोदते नात्र संशयः ॥ ६६ ॥ ततश्च वाहुदां गच्छेद्
ब्रह्मचारी समाहितः। तत्रोष्य रजनीमेकां स्वर्गलोके महीयते
॥ ६७ ॥ देवसत्रस्य यज्ञस्य फलं प्राप्नोति कौरव। ततः चीर-
वतीं गच्छेत् पुण्यां पुण्यतरैर्वृताम् ॥ ६८ ॥ पितृदेवार्च्चनपरो
वाजपेयमवाप्नुयात्। विमलाशोकमासाद्य ब्रह्मचारी समाहितः
॥ ६९ ॥ तत्रोष्य रजनीमेकां स्वर्गलोके महीयते। गोप्रतारं
ततो गच्छेत् सरय्वास्तीर्थमुत्तमम् ॥ ७० ॥ यत्र रामो गतः स्वर्गं
सभृत्यबलवाहनः। देहं त्यक्त्वा महाराज तस्य तीर्थस्य तेजसा
॥ ७१ ॥ रामस्य च प्रसादेन व्यवसायाच्च भारत। तस्मिंस्तीर्थे
नरः स्नात्वा गोप्रतारे नराधिप ॥ ७२ ॥ सर्व्वपापविशुद्धात्मा
स्वर्गलोके महीयते। रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन
॥ ७३ ॥ अश्वमेधमवाप्नोति पुनाति च कुलं नरः। शतसाहस्रकं
तीर्थं तत्रैव भरतर्षभ ॥ ७४ ॥ तत्रोपस्पर्शनं कृत्वा नियतो
नियताशनः। गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ ॥ ७५ ॥
ततो गच्छेत राजेन्द्र भर्त्तृस्थानमनुत्तमम्। अश्वमेधस्य यज्ञस्य
फलं प्राप्नोति मानवः ॥ ७६ ॥ कोटितीर्थे नरः स्नात्वा अर्च्च-
यित्वा गुहं नृप। गोसहस्रफलं विन्द्यात्तेजस्वी च भवेन्नरः॥ ७७॥
ततो वाराणसीं गत्वा अर्च्चयित्वा वृषध्वजम्। कपिलाह्रदे नरः
स्नात्वा राजसूयमवाप्नुयात् ॥ ७८ ॥ अविमुक्तं समासाद्य तीर्थ-
सेवी कुरूद्वह। दर्शनाद्देवदेवस्य मुच्यते ब्रह्महत्यया ॥ ७९ ॥
प्राणानुत्सृज्य तत्रैव मोक्षं प्राप्नोति मानवः। मार्कण्डेयस्य
राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥ ८० ॥ गोमतीगङ्गयोश्चैव सङ्गमे
लोकविश्रुते। अग्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत् ॥ ८१ ॥
ततो गयां समासाद्य ब्रह्मचारी समाहितः। अश्वमेधमवाप्नोति
गमनादेव भारत ॥ ८२ ॥ तत्राक्षयवटो नाम त्रिषु लोकेषु
विश्रुतः। तत्र दत्तं पितृभ्यस्तु भवत्यक्षयमुच्यते ॥ ८३ ॥ महा-

नद्यामुपस्पृश्य च तर्पयेत् पितृदेवताः । अक्षयान् प्राप्नुयात् लोकान् कुलञ्चैव समुद्धरेत् ॥ ८४ ॥ ततो ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् । ब्रह्मलोकमवाप्नोति प्रभातामेव शर्वरीम् ॥ ८५ ॥ ब्रह्मणा तत्र सरसि यूपः श्रेष्ठः समुच्छ्रितः । यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ॥ ८६ ॥ ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम् । एकरात्रोषितो राजन् प्रयच्छेत्तिलधेनुकाम् ॥ ८७ ॥ सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् । तत्र चिह्नं महद्राजन्नद्यापि सुमहद्भृशम् ॥ ८८ ॥ कपिलायाः सवत्सायाश्चरन्त्याः पर्वते कृतम् । सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि भारत ॥ ८९ ॥ तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम । यत्किञ्चिदशुभं कर्म तत् प्रणश्यति भारत ॥ ९० ॥ ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः । स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥ ९१ ॥ ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् । इतरेषान्तु वर्णानां सर्वपापं प्रणश्यति ॥ ९२ ॥ उद्यन्तञ्च ततो गच्छेत् पर्वतं गीतनादितम् । सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ॥ ९३ ॥ तत्र सन्ध्यामुपासीत ब्राह्मणः संशितव्रतः । तेन ह्युपास्ता भवति सन्ध्या द्वादशवार्षिकी ॥ ९४ ॥ योनिद्वारञ्च तत्रैव विश्रुतं भरतर्षभ । तत्राभिगम्य मुच्येत पुरुषो योनिसङ्कटात् ॥ ९५ ॥ कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नरः । पुनात्यासप्तमं राजन् कुलं नास्त्यत्र संशयः ॥ ९६ ॥ एष्टव्या बहवः पुत्रा यद्यप्येको गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ९७ ॥ ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप । अश्वमेधमवाप्नोति सिद्धिञ्च महतीं व्रजेत् ॥ ९८ ॥ ततो गच्छेत राजेन्द्र धर्मप्रस्थं समाहितः । तत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥ ९९ ॥ तत्र कूपोदकं पीत्वा ततः स्नातः शुचिस्तथा । पितॄन्देवांस्तु सन्तर्प्य मुक्तपापो दिवं व्रजेत् ॥ १०० ॥ मतङ्गस्याश्रमस्तत्र महर्षेर्भाविता-

त्मनः। तं प्रविश्याश्रमं श्रीमच्छ्रमशोकविनाशनम्॥ १०२॥ गवामयनयज्ञस्य फलं प्राप्नोति मानवः। धर्म्मन्तत्राभिसंस्पृश्य वाजिमेधमवाप्नुयात्॥ १०३॥ ततो गच्छेत राजेन्द्र ब्रह्मस्थानमनुत्तमम्। तत्राभिगम्य राजेन्द्र ब्रह्माणं पुरुषर्षभम्॥ १०४॥ राजसूयाश्वमेधाभ्यां फलं विन्दति मानव। ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप॥ १०५॥ उपस्पृश्य ततस्तत्र काक्षीवानिव मोदते। यक्षिण्या नैत्यकं तत्र प्राश्नीत पुरुषः शुचिः॥ १०६॥ यक्षिण्यास्तु प्रसादेन मुच्यते ब्रह्महत्यया। मणिनागं ततो गत्वा गोसहस्रफलं लभेत्॥ १०७॥ तैर्थिकं भुञ्जते यस्तु मणिनागस्य भारत। दष्टस्याशीविषेणापि न तस्य क्रमते विषम्॥ १०८॥ तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्। ततो गच्छेत ब्रह्मर्षेर्गौतमस्य वनं प्रियम्॥ १०९॥ अहल्याया ह्रदे स्नात्वा व्रजेत परमाङ्गतिम्। अभिगत्वाश्रमं राजन् विन्दते श्रियमात्मनः॥ ११०॥ तत्रोदपानं धर्म्मज्ञ त्रिषु लोकेषु विश्रुतम्। तत्राभिषेकं कृत्वा तु वाजिमेधमवाप्नुयात्॥ १११॥ जनकस्य तु राजर्षेः कूपस्त्रिदशपूजितः। तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात्॥ ११२॥ ततो विनशनं गच्छेत् सर्व्वपापप्रमोचनम्। वाजपेयमवाप्नोति सोमलोकञ्च गच्छति॥ ११३॥ गण्डकीन्तु समासाद्य सर्व्वतीर्थजलोद्भवाम्। वाजपेयमवाप्नोति सूर्य्यलोकञ्च गच्छति॥ ११४॥ ततो विशल्यामासाद्य नदीं त्रैलोक्यविश्रुताम्। अग्निष्टोममवाप्नोति स्वर्गलोकञ्च गच्छति॥ ११५॥ ततोऽधिवङ्गं धर्म्मज्ञ समाविश्य तपोवनम्। गुह्यकेषु महाराज मोदते नात्र संशयः॥ ११६॥ कम्पनान्तु समासाद्य नदीं सिद्धनिषेविताम्। पुण्डरीकमवाप्नोति स्वर्गलोकञ्च गच्छति॥ ११७॥ अथ माहेश्वरीं धारां समासाद्य धराधिप। अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत्॥ ११८॥ दिवौकसां पुष्करिणीं समासाद्य

नराधिप। न दुर्गतिमवाप्नोति वाजिमेधञ्च विन्दति ॥ ११९ ॥
अथ सोमपदं गच्छेत् ब्रह्मचारी समाहितः। महेश्वरपदे स्नात्वा
वाजिमेधफलं लभेत् ॥ १२० ॥ तत्र कोटी तु तीर्थानां विश्रुता
भरतर्षभ। कूर्मरूपेण राजेन्द्र ह्यसुरेण दुरात्मना ॥ १२१ ॥
ह्रियमाणा हृता राजन् विष्णुना प्रभविष्णुना। तत्राभिषेकं
कुर्वीत तीर्थकोट्यां नराधिप ॥ १२२ ॥ पुण्डरीकमवाप्नोति
विष्णुलोकञ्च गच्छति। ततो गच्छेत राजेन्द्र स्थानं नारायणस्य
च ॥ १२३ ॥ सदा सन्निहितो यत्र विष्णुर्वसति भारत। यत्र
ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ १२४ ॥ आदित्या वसवो
रुद्रा जनार्द्दनमुपासते। शालग्राम इति ख्यातो विष्णुरद्भुत
कर्मकः ॥ १२५ ॥ अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम्।
अश्वमेधमवाप्नोति विष्णुलोकञ्च गच्छति ॥ १२६ ॥ तत्रोदपानं
धर्मज्ञ सर्वपापप्रमोचनम्। समुद्रास्तत्र चत्वारः कूपे सन्निहिताः
सदा ॥ १२७ ॥ तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात्।
अभिगम्य महादेवं वरदं रुद्रमव्ययम् ॥ १२८ ॥ विराजति यथा
सोमो मेघैर्मुक्तो नराधिप। जातिस्मरमुपस्पृश्य शुचिः प्रयत-
मानसः ॥ १२९ ॥ जातिस्मरत्वमाप्नोति स्नात्वा तत्र न संशयः।
माहेश्वरपुरं गत्वा अर्च्चयित्वा वृषध्वजम् ॥ १३० ॥ ईप्सिता-
ल्लभते कामानुपवासान्न संशयः। ततस्तु वामनं गत्वा सर्वपाप-
प्रमोचनम् ॥ १३१ ॥ अभिगम्य हरिं देवं न दुर्गतिमवाप्नुयात्।
कुशिकस्याश्रमं गच्छेत् सर्वपापप्रमोचनम् ॥ १३२ ॥ कौशिकीं
तत्र गच्छेत महापापप्रणाशिनीम्। राजसूयस्य यज्ञस्य फलं
प्राप्नोति मानवः ॥ १३३ ॥ ततो गच्छेत राजेन्द्र चम्पकारण्य-
मुत्तमम्। तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १३४ ॥
अथ ज्येष्ठिलमासाद्य तीर्थं परमदुर्लभम्। तत्रोष्य रजनीमेकां
गोसहस्रफलं लभेत् ॥ १३५ ॥ तत्र विश्वेश्वरं दृष्ट्वा देव्या सह

महाद्युतिम् । मित्रावरुणयोर्लोकानाप्नोति पुरुषर्षभ ॥ १३६ ॥
विरात्रोपषितस्तत्र अग्निष्टोमफलं लभेत् । कन्याश्रव्यमासाद्य
नियतो नियतात्मनः ॥ १३७ ॥ मनोः प्रजापतेर्लोकानाप्नोति
पुरुषर्षभ । कन्यायां ये प्रयच्छन्ति दानमण्वपि भारत ॥ १३८ ॥
तदक्षयमिति प्राहुर्ऋषयः संशितव्रताः । ततो निर्वीरमासाद्य
त्रिषु लोकेषु विश्रुतम् ॥ १३९ ॥ अश्वमेधमवाप्नोति विष्णुलोकञ्च
गच्छति । ये तु दानं प्रयच्छन्ति निर्वीरासङ्गमे नराः ॥ १४० ॥
ते यान्ति नरशार्दूल शक्रलोकमनामयम् । तत्राश्रमो वशिष्ठस्य
त्रिषु लोकेषु विश्रुतः ॥ १४१ ॥ तत्राभिषेकं कुर्वाणो वाजपेय-
मवाप्नुयात् । देवकूटं समासाद्य देवर्षिगणसेवितम् ॥ १४२ ॥
अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत् । ततो गच्छेत राजेन्द्र
कौशिकस्य मुनेर्ह्रदम् ॥ १४३ ॥ यत्र सिद्धिं परां प्राप्तो विश्वा-
मित्रोथ कौशिकः । तत्र मासं वसेद्वीर कौशिक्यां भरतर्षभ
॥ १४४ ॥ अश्वमेधस्य यत् पुण्यं तन्मासेनाधिगच्छति । सर्व्व-
तीर्थवरे चैव यो वसेत महाह्रदे ॥ १४५ ॥ न दुर्गतिमवाप्नोति
विन्देद्बहुसुवर्णकम् । कुमारमभिगम्याथ वीराश्रमनिवासिनम्
॥ १४६ ॥ अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः । अग्निधारां
समासाद्य त्रिषु लोकेषु विश्रुताम् ॥ १४७ ॥ तत्राभिषेकं कुर्वाणो
अग्निष्टोममवाप्नुयात् । अभिगम्य महादेवं वरदं विष्णुमव्ययम्
॥ १४८ ॥ पितामहसरो गत्वा शैलराजसमीपतः । तत्राभिषेकं
कुर्वाणो अग्निष्टोममवाप्नुयात् ॥ १४९ ॥ पितामहस्य सरसः
प्रस्नुता लोकपावनी । कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता
॥ १५० ॥ यत्र स्नात्वा कृतार्थोऽस्मीत्यात्मानमवगच्छति । षष्ठ-
कालोपवासेन मुच्यते ब्रह्महत्यया ॥ १५१ ॥ ततो गच्छेत धर्म्मज्ञ
तीर्थसेवनतत्परः । शिखरं वै महादेव्या गौर्य्यास्त्रैलोक्यविश्रुतम्
॥ १५२ ॥ समारुह्य नरश्रेष्ठ स्तनकुण्डेषु संविशेत् । स्तनकुण्ड-

मुपस्पृश्य वाजपेयफलं लभेत् ॥ १५२ ॥ तत्राभिषेकं कुर्वाणः पितृदेवार्च्चने रतः। हयमेधमवाप्नोति शक्रलोकञ्च गच्छति ॥ १५४ ॥ ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः। अश्वमेधमवाप्नोति ब्रह्मलोकञ्च गच्छति ॥ १५५ ॥ नन्दिन्याञ्च समासाद्य कूपं देवनिषेवितम्। नरमेधस्य यत् पुण्यं तदाप्नोति नराधिप ॥ १५६ ॥ कालिकासङ्गमे स्नात्वा कौशिकारुणयोर्गतः। त्रिरात्रोपोषितो राजन् सर्वपापैः प्रमुच्यते ॥ १५७ ॥ उर्वशीतीर्थमासाद्य ततः सोमाश्रमं बुधः। कुम्भकर्णाश्रमं गत्वा पूज्यते भुवि मानवः ॥ १८५ ॥ कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः। जातिस्मरत्वमाप्नोति दृष्टमेतत् पुरातनैः ॥ १५९ ॥ सकृन्नन्दां समासाद्य कृतात्मा भवति द्विजः। सर्वपापविशुद्धात्मा शक्रलोकञ्च गच्छति ॥ १६० ॥ ऋषभद्वीपमासाद्य सेव्यं क्रौञ्चनिसूदनम्। सरस्वत्यामुपस्पृश्य विमानस्थो विराजते ॥ १६१ ॥ औद्दालकं महाराज तीर्थं मुनिनिषेवितम्। तत्राभिषेकं कृत्वा वै सर्वपापैः प्रमुच्यते ॥ १६२ ॥ धर्मतीर्थं समासाद्य पुण्यं ब्रह्मर्षिसेवितम्। वाजपेयमवाप्नोति विमानस्थश्च पूज्यते ॥ १६३॥ अथ चम्पां समासाद्य भागीरथ्यां कृतोदकः। दण्डार्कमभिगत्वा तु गोसहस्रफलं लभेत् ॥ १६४ ॥ ललीतिकां ततो गच्छेत् पुण्यां पुण्योपशोभिताम्। राजसूयमवाप्नोति विमानस्थश्च पूज्यते ॥ १६५ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि नानातीर्थकथने चतुरशीतोऽध्यायः ॥ ८४ ॥

पुलस्त्य उवाच। अथ सन्ध्यां समासाद्य सम्बेद्यं तीर्थमुत्तमम्। उपस्पृश्य नरो विद्यां लभते नात्र संशयः ॥ १ ॥ रामस्य च प्रभावेण तीर्थं राजन् कृतं पुरा। तल्लौहित्यं समासाद्य विन्द्याद्बहुसुवर्णकम् ॥ २ ॥ करतोयां समासाद्य त्रिरात्रोपषितो नरः। अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः ॥ ३ ॥ गङ्गायास्तत्र राजेन्द्र सागरस्य च सङ्गमे। अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ४ ॥ गङ्गायास्त्वपरं पारं प्राप्य यः स्नाति मानवः। त्रिरात्रमुषितो राजन् सर्वपापैः प्रमुच्यते ॥ ५ ॥ ततो वैतरणीं गच्छेत् सर्वपापप्रमोचनीम्। विरजं तीर्थमासाद्य विराजति यथा शशी ॥ ६ ॥ प्रतरेच्च कुलं पुण्यं सर्वपापं व्यपोहति। गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नरः ॥ ७ ॥ शोणस्य ज्योतिरथ्यायाः सङ्गमे नियतः शुचिः। तर्पयित्वा पितॄन् देवानग्निष्टोमफलं लभेत् ॥ ८ ॥ शोणस्य नर्मदायाश्च प्रभवे कुरुनन्दन। वंशगुल्म उपस्पृश्य वाजिमेधफलं लभेत् ॥ ९ ॥ ऋषभं तीर्थमासाद्य कोशलायां नराधिप। वाजपेयमवाप्नोति त्रिरात्रोपोषितो नरः ॥ १० ॥ गोसहस्रफलं विन्द्यात् कुलं चैव समुद्धरेत्। कोशलान्तु समासाद्य कालतीर्थमुपस्पृशेत् ॥ ११ ॥ वृषभैकादशफलं लभते नात्र संशयः। पुष्पवत्यामुपस्पृश्य त्रिरात्रोपषितो नरः ॥ १२ ॥ गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नृप। ततो बदरिकातीर्थे स्नात्वा भरतसत्तम ॥ १३ ॥ दीर्घमायुरवाप्नोति स्वर्गलोकञ्च गच्छति। तथा चम्पां समासाद्य भागीरथ्यां कृतोदकः ॥ १४ ॥ दण्डाख्यमभिगम्यैव गोसहस्रफलं लभेत्। लपेटिकां ततो गच्छेत् पुण्यां पुण्योपशोभिताम् ॥ १५ ॥ वाजपेयमवाप्नोति देवैः सर्वैश्च पूज्यते। ततो महेन्द्रमासाद्य जामदग्न्यनिषेवितम् ॥ १६ ॥ रामतीर्थे नरः स्नात्वा अश्वमेधफलं लभेत्। मतङ्गस्य तु केदारस्तत्रैव कुरुनन्दन ॥ १७ ॥ तत्र स्नात्वा कुरुश्रेष्ठ गोसहस्रफलं

लभेत्। श्रीपर्वतं समासाद्य नदीतीरमुपस्पृशेत् ॥ १८ ॥ अश्व-
मेधमवाप्नोति पूजयित्वा वृषध्वजम्। श्रीपर्वते महादेवो देव्या
सह महाद्युतिः ॥ १९ ॥ न्यवसत् परमप्रीतो ब्रह्मा च त्रिदशैः
सह। तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ॥ २० ॥ अश्व-
मेधमवाप्नोति परां सिद्धिञ्च गच्छति। ऋषभं पर्वतं गत्वा पाण्ड्येषु
देवपूजितम् ॥ २१ ॥ वाजपेयमवाप्नोति नाकपृष्ठे च मोदते।
ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ॥ २२ ॥ तत्र स्नात्वा
नदीं राजन् गोसहस्रफलं लभेत्। ततस्तीरे समुद्रस्य कन्या-
तीर्थमुपस्पृशेत् ॥ २३ ॥ तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते।
अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम् ॥ २४ ॥ समुद्रमध्ये
राजेन्द्र सर्वलोकनमस्कृतम्। यत्र ब्रह्मादयो देवा ऋषयश्च तपो-
धनाः ॥ २५ ॥ भूतयक्षपिशाचाश्च किन्नराः समहोरगाः। सिद्ध-
चारणगन्धर्वमानुषाः पन्नगास्तथा ॥ २६ ॥ सरितः सागराः शैला
उपासन्त उमापतिम्। तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः
॥ २७ ॥ अश्वमेधमवाप्नोति गाणपत्यञ्च विन्दति। उष्य द्वादश-
रात्रन्तु पूतात्मा च भवेन्नरः ॥ २८ ॥ तत एव च गायत्र्याः स्थानं
त्रैलोक्यपूजितम्। त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत् ॥२९॥
निदर्शनञ्च प्रत्यक्षं ब्राह्मणानां नराधिप। गायत्रीं पठते यस्तु
योनिसङ्करजस्तथा ॥ ३० ॥ गाथा च गीतिका चापि तस्य सम्प-
द्यते नृप। अब्राह्मणस्य सावित्रीं पठतस्तु प्रणश्यति ॥ ३१ ॥
संवर्त्तस्य तु विप्रर्षेर्वापीमासाद्य दुर्लभाम्। रूपस्य भागी
भवति सुभगश्च प्रजायते ॥ ३२ ॥ ततो वेणां समासाद्य त्रिरात्रो-
पोषितो नरः। मयूरहंससंयुक्तं विमानं लभते नरः ॥ ३३ ॥
ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम्। गवामयमवा-
प्नोति वासुकेर्लोकमुत्तमम् ॥ ३४ ॥ वेणायाः सङ्गमे स्नात्वा वाजि-
मेधक्रतं लभेत्। वरदासङ्गमे स्नात्वा गोसहस्रफलं लभेत् ॥३५॥

ब्रह्मस्थूणां समासाद्य त्रिरात्रोपषितो नरः । गोसहस्रफलं
विन्द्यात् स्वर्गलोकञ्च गच्छति ॥ ३६ ॥ कुशप्लवनमासाद्य ब्रह्म-
चारी समाहितः । त्रिरात्रोमुषितः स्नात्वा अश्वमेधफलं लभेत् ॥ ३७ ॥
ततो देवह्रदे रम्ये कृष्णवेण्वाजलोद्भवे । जातिस्मरह्रदे स्नात्वा
भवेज्जातिस्मरो नरः ॥ ३८ ॥ यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं
गतः । अग्निष्टोमफलं विन्द्याद्गमनादेव भारत ॥ ३९ ॥ ततः
सर्वह्रदे स्नात्वा गोसहस्रफलं लभेत् । ततो वापीं महापुण्यां
पयोष्णीं सरिताम्वराम् ॥ ४० ॥ पितृदेवार्च्चनरतो गोसहस्रफलं
लभेत् । दण्डकारण्यमासाद्य पुण्यं राजन्नुपस्पृशेत् ॥ ४१ ॥
गोसहस्रफलं तस्य स्नातमात्रस्य भारत । शरभङ्गाश्रमं गत्वा
शुक्रस्य च महात्मनः ॥ ४२ ॥ न दुर्गतिमवाप्नोति पुनाति च
कुलं नरः । ततः शूर्पारकं गच्छेज्जामदग्न्यनिषेवितम् ॥ ४३ ॥
रामतीर्थे नरः स्नात्वा विन्द्याद्बहुसुवर्णकम् । सप्तगोदावरे स्नात्वा
नियतो नियताशनः ॥ ४४ ॥ महत्पुण्यमवाप्नोति देवलोकञ्च
गच्छति । ततो देवपथं गत्वा नियतो नियताशनः ॥ ४५ ॥
देवसत्रस्य यत्पुण्यं तदेवाप्नोति मानवः । तुङ्गकारण्यमासाद्य
ब्रह्मचारी जितेन्द्रियः ॥ ४६ ॥ वेदानध्यापयत्तत्र ऋषिः सार-
स्वतः पुरा । तत्र वेदेषु नष्टेषु मुनेराङ्गिरसः सुतः ॥ ४७ ॥
ऋषीणामुत्तरीयेषु सूपविष्टो यथासुखम् । ओंकारेण यथा-
न्यायं सम्यगुच्चारितेन ह ॥ ४८ ॥ येन यत् पूर्व्वमभ्यस्तं तत्सर्व्वं
समुपस्थितम् । ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ॥ ४९ ॥
हरिर्नारायणस्तत्र महादेवस्तथैव च । पितामहश्च भगवान् देवैः
सह महाद्युतिः ॥ ५० ॥ भृगुं नियोजयामास याजनार्थं महा-
द्युतिम् । ततः स चक्रे भगवानृषीणां विधिवत्तदा ॥ ५१ ॥
सर्व्वेषां पुनराधानं विधिदृष्टेन कर्म्मणा । आज्यभागेन तत्राग्निं
तर्पयित्वा यथाविधि ॥ ५२ ॥ देवाः स्वभवनं याता ऋषयश्च

यथाक्रमम्। तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ॥ ५३ ॥ पार्थ प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा। तत्र मासं वसेद्धीरो नियतो नियताशनः ॥ ५४ ॥ ब्रह्मलोकं व्रजेद्राजन् कुलञ्चैव समुद्धरेत्। मेधाविकं समासाद्य पितॄन् देवांश्च तर्पयेत् ॥ ५५ ॥ अग्निष्टोममवाप्नोति स्मृतिं मेधाञ्च विन्दति। अत्र कालञ्जरं नाम पर्वतं लोकविश्रुतम् ॥ ५६ ॥ तत्र देवह्रदे स्नात्वा गोसहस्र फलं लभेत्। यः स्नातस्तर्पयेत्तत्र गिरौ कालञ्जरे नृप ॥ ५७ ॥ स्वर्गलोके महीयते नरो नास्त्यत्र संशयः। ततो गिरिवरश्रेष्ठे चित्रकूटे विशाम्पते ॥ ५८ ॥ मन्दाकिनीं समासाद्य सर्वपाप-प्रणाशिनीम्। तत्राभिषेकं कुर्वाणः पितृदेवार्च्चने रतः ॥ ५९ ॥ अश्वमेधमवाप्नोति गतिञ्च परमां व्रजेत्। ततो गच्छेत धर्मज्ञ भर्तृस्थानमनुत्तमम् ॥ ६० ॥ यत्र नित्यं महासेनो गुहः सन्निहितो नृप। तत्र गत्वा नृपश्रेष्ठ गमनादेव सिध्यति ॥ ६१ ॥ कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्। प्रदक्षिणमुपावृत्य ज्येष्ठस्थानं व्रजेन्नरः ॥ ६२ ॥ अभिगम्य महादेवं विराजति यथा शशी। तत्र कूपो महाराज विश्रुतो भरतर्षभ ॥ ६३ ॥ समुद्रास्तत्र चत्वारो निवसन्ति युधिष्ठिर। तत्रोपस्पृश्य राजेन्द्र पितृदेवार्च्चने रतः ॥ ६४ ॥ नियतात्मा नरः पूतो गच्छेत परमां गतिम्। ततो गच्छेत राजेन्द्र शृङ्गवेरपुरं महत् ॥ ६५ ॥ यत्र तीर्णो महाराज रामो दाशरथिः पुरा। तस्मिंस्तीर्थे महाबाहो स्नात्वा पापैः प्रमुच्यते ॥ ६६ ॥ गङ्गायान्तु नरः स्नात्वा ब्रह्मचारी समाहितः। विधूतपाप्मा भवति वाजपेयञ्च विन्दति ॥ ६७ ॥ ततो मुञ्जवटं गच्छेत् स्थानं देवस्य धीमतः। अभिगम्य महादेवमभिवाद्य च भारत ॥ ६८ ॥ प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात्। तस्मिंस्तीर्थे तु जाह्नव्यां स्नात्वा पापैः प्रमुच्यते ॥ ६९ ॥ ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुताम्।

यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥ ७० ॥ लोकपालाश्च साध्याश्च पितरो लोकसंमताः । सनत्कुमारप्रमुखास्तथैव परमर्षयः ॥ ७१ ॥ अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽमलाः । तथा नागाः सुपर्णाश्च सिद्धाश्चक्रधरास्तथा ॥ ७२ ॥ सरितः सागराश्चैव गन्धर्वाप्सरसोऽपि च । हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥ ७३ ॥ तत्र त्रीण्यग्निकुण्डानि येषां मध्येन जाह्नवी । वेगेन समतिक्रान्ता सर्वतीर्थपुरस्कृता ॥ ७४ ॥ तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता । यमुना गङ्गया सार्द्धं सङ्गता लोकपावनी ॥ ७५ ॥ गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् । प्रयागं जघनस्थानमुपस्थमृषयो विदुः ॥ ७६ ॥ प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा । तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः ॥ ७७ ॥ तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तो युधिष्ठिर । प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः ॥ ७८ ॥ यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः । ततः पुण्यतमं नाम त्रिषु लोकेषु भारत ॥ ७९ ॥ प्रयागं सर्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो । श्रवणात्तस्य तीर्थस्य नामसङ्कीर्त्तनादपि ॥ ८० ॥ मृत्तिकालम्भनाच्चापि नरः पापात् प्रमुच्यते । तत्राभिषेकं यः कुर्य्यात् सङ्गमे लोकविश्रुते ॥ ८१ ॥ पुण्यं स फलमाप्नोति राजसूयाश्वमेधयोः । एषा यजनभूमिर्हि देवानामपि सत्कृता ॥ तत्र दत्तं सूक्ष्ममपि महद्भवति भारत । न वेदवचनात्तात न लोकवचनादपि ॥ ८३ ॥ मतिरुत्क्रमणीया ते प्रयागमरणं प्रति । दशतीर्थसहस्राणि षष्टिकोट्यस्तथा पराः ॥ ८४ ॥ येषां सान्निध्यमत्रैव कीर्त्तितं कुरुनन्दन । चातुर्विद्ये च यत् पुण्यं सत्यवादिषु चैव यत् ॥८५॥ स्नात एव तदाप्नोति गङ्गायमुनसङ्गमे । तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम् ॥ ८६ ॥ तत्राभिषेकं यः कुर्य्यात् सोऽश्वमेधफलं लभेत् । तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम् ॥ ८७ ॥

दशाश्वमेधिकञ्च व गङ्गायां कुरुनन्दन। कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता ॥ ८८ ॥ विशेषो वै कनखले प्रयागे परमं महत्। यद्यकार्यशतं कृत्वा कृतं गङ्गावसेचनम् ॥ ८९ ॥ सर्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनम्। सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम् ॥ ९० ॥ द्वापरेऽपि कुरुक्षेत्रं गङ्गा कलियुगे स्मृता। पुष्करे तु तपस्तप्येद्दानं दद्यान्महालये ॥ ९१ ॥ मलयेत्वग्निमारोहेद्भृगुतुङ्गे त्वनाशनम्। पुष्करे तु कुरुक्षेत्रे गङ्गायां मगधेषु च ॥ ९२ ॥ स्नात्वा तारयते जन्तुः सप्त सप्तवरांस्तथा। पुनाति कीर्त्तिता पापं दृष्टा भद्रं प्रयच्छति ॥ ९३ ॥ अवगाढ़ा च पीता च पुनात्यासप्तमं कुलम्। यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम् ॥ ९४ ॥ तावत् स पुरुषो राजन् स्वर्गलोके महीयते। यथा पुण्यानि तीर्थानि पुण्यान्यायतनानि च ॥ ९५ ॥ उपास्य पुण्यं लब्ध्वा च भवत्यमरलोकभाक्। न गङ्गासदृशं तीर्थं न देवः केशवात् परः ॥ ९६ ॥ ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः। यत्र गङ्गा महाराज स देशस्तत्तपोवनम् ॥ ९७ ॥ सिद्धक्षेत्रञ्च तज्ज्ञेयं गङ्गातीरसमाश्रितम्। इदं सत्यं द्विजातीनां साधूनामात्मजस्य च ॥ ९८ ॥ सुहृदाञ्च जपेत् कर्णे शिष्यस्यानुगतस्य च। इदं धन्यमिदं मेध्यमिदं स्वर्ग्यमनुत्तमम् ॥ ९९ ॥ इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमम्। महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् ॥ १०० ॥ अधीत्य द्विजमध्ये च निर्मलः स्वर्गमाप्नुयात्। श्रीमत् स्वर्ग्यं तथा पुण्यं सपत्नशमनं शिवम् ॥ १०१ ॥ मेधाजननमग्र्यं वै तीर्थवंशानुकीर्त्तनम्। अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ॥ १०२ ॥ महीं विजयते राजा वैश्यो धनमवाप्नुयात्। शूद्रो यथेप्सितान् कामान् ब्राह्मणः पारगः पठन् ॥ १०३ ॥ यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं नरः शुचिः। जातीः स स्मरते बह्वीर्नाकपृष्ठे च मोदते ॥ १०४ ॥ गम्यान्यपि च

तीर्थानि कीर्त्तितान्यगमानि च। मनसा तानि गच्छेत सर्व-
तीर्थसमीक्षया ॥ १०५ ॥ एतानि वसुभिः साध्यैरादित्यैर्मरुद्-
श्विभिः। ऋषिभिर्देवकल्पैश्च स्नातानि सुकृतैषिभिः ॥ १०६ ॥
एवं त्वमपि कौरव्य विधिनानेन सुव्रत। व्रज तीर्थानि नियतः
पुण्यं पुण्येन वर्द्धयन् ॥ १०७ ॥ भावितैः करणैः पूर्वमास्तिक्या-
च्छ्रुतिदर्शनात्। प्राप्यन्ते तानि तीर्थानि सद्भिः शास्त्रानुदर्शिभिः
॥ १०८ ॥ नाव्रती नाकृतात्मा च नाशुचिर्न च तस्करः। स्नाति
तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ १०९ ॥ त्वया तु सम्यग्वृत्तेन
नित्यं धर्मार्थदर्शिना। पिता पितामहश्चैव सर्वे च प्रपिता-
महाः ॥ ११० ॥ पितामहपुरोगाश्च देवाः सर्षिगणा नृप। तव
धर्मेण धर्मज्ञ नित्यमेवाभितोषिताः ॥ १११ ॥ अवाप्स्यसि त्वं
लोकान् वै वसूनां वासवोपम। कीर्त्तिञ्च महतीं भीष्म प्राप्स्यसे
भुवि शाश्वतीम् ॥ ११२ ॥

नारद उवाच। एवमुक्त्वाभ्यनुज्ञाय पुलस्त्यो भगवानृषिः।
प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत ॥ ११३ ॥ भीष्मश्च कुरु-
शार्दूल शास्त्रतत्त्वार्थदर्शिवान्। पुलस्त्यवचनाच्चैव पृथिवीं परि-
चक्रमे ॥ ११४ ॥ एवमेषा महाभागा प्रतिष्ठाने प्रतिष्ठिता।
तीर्थयात्रा महापुण्या सर्वपापप्रमोचनी ॥ ११५ ॥ अनेन विधिना
यस्तु पृथिवीं सञ्चरिष्यति। अश्वमेधशतस्याग्र्यं फलं प्रेत्य स
भोक्ष्यति ॥ ११६ ॥ ततश्चाष्टगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम्।
भीष्मः कुरूणां प्रवरो यथा पूर्वमवाप्तवान् ॥ ११७ ॥ नेता च
त्वमृषीन् यस्मात्तेन तेऽष्टगुणं फलम्। रक्षोगणविकीर्णानि
तीर्थान्येतानि भारत ॥ ११८ ॥ न गतिर्विद्यतेऽन्यस्य त्वामृते
कुरुनन्दन। इदं देवर्षिचरितं सर्वतीर्थाभिसंवृतम् ॥ ११९ ॥
यः पठेत् कल्यमुत्थाय सर्वपापैः प्रमुच्यते। ऋषिमुख्याः सदा
यत्र वाल्मीकिस्त्वथ काश्यपः ॥ १२० ॥ आत्रेयः कुण्डजठरो विश्वा-

मित्रोऽथ गौतमः। अचितो देवशर्मा च मार्कण्डेयोऽथ गालवः ॥ १२१ ॥ भरद्वाजो वसिष्ठश्च मुनिरुद्दालकस्तथा। शौनकः सह पुत्रेण व्यासश्च तपतांवरः ॥ १२२ ॥ दुर्वासाश्च मुनिश्रेष्ठो जावालिश्च महातपाः। एते ऋषिवराः सर्वे त्वत्प्रतीक्षास्तपोधनाः ॥ १२३ ॥ एभिः सह महाराज तीर्थान्येतान्यनुव्रज। एष ते लोमशो नाम महर्षिरमितद्युतिः ॥ १२४ ॥ समेष्यति महाराज तेन सार्द्धमनुव्रज। मयापि सह धर्मज्ञ तीर्थान्येतान्यनुक्रमात् ॥ १२५ ॥ प्राप्स्यसे महतीं कीर्त्तिं यथा राजा महाभिषः। यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ॥ १२६ ॥ यथा त्वं राजशार्दूल स्वेन धर्मेण शोभसे। यथा भगीरथो राजा यथा रामश्च विश्रुतः ॥ १२७ ॥ तथा त्वं सर्वराजेभ्यो भ्राजसे रश्मिवानिव। यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः ॥ १२८ ॥ यथा वैन्यो महाराज यथा त्वमपि विश्रुतः। यथा च वृत्रहा सर्वान् सपत्नान्निर्दहन् पुरा ॥ १२९ ॥ त्रैलोक्यं पालयामास देवराड्विगतज्वरः। तथा शत्रुक्षयं कृत्वा त्वं प्रजाः पालयिष्यसि ॥ १३० ॥ स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन। ख्यातिं यास्यसि धर्मेण कार्त्तवीर्य्यार्जुनो यथा ॥ १३१ ॥

वैशम्पायन उवाच। एवमाश्वास्य राजानं नारदो भगवानृषिः। अनुज्ञाप्य महाराज तत्रैवान्तरधीयत ॥ १३२ ॥ युधिष्ठिरोऽपि धर्मात्मा तमेवार्थं विचिन्तयन्। तीर्थयात्राश्रितं पुण्यमृषीणां प्रत्यवेदयत् ॥ १३३ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि तीर्थयात्रायां नारदवाक्ये पञ्चाशीतोऽध्यायः ॥ ८५ ॥

---

वैशम्पायन उवाच। भ्रातृणां मतमाज्ञाय नारदस्य च धीमतः। पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः॥ १॥ मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः। अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः॥ २॥ स हि वीरोऽनुरक्तश्च समर्थश्च तपोधन। कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः॥ ३॥ अहं ह्येतावुभौ ब्रह्मन् कृष्णावरिविघातिनौ। अभिजानामि विक्रान्तौ तथा व्यासः प्रतापवान्॥ ४॥ त्रियुगौ पुण्डरीकाक्षौ वासुदेव-धनञ्जयौ। नारदोऽपि तथा वेद योऽप्यशंसत् सदा मम॥ ५॥ तथाहमपि जानामि नरनारायणावृषी। शक्तोऽयमित्यतो मत्वा मया स प्रेषितोऽर्जुनः॥ ६॥ इन्द्रादनवरः शक्तः सुरसूनुः सुराधिपम्। द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः॥ ७॥ भीष्मद्रोणावतीरथौ कृपो द्रौणिश्च दुर्जयः। धृतराष्ट्रस्य पुत्रेण वृता युधि महारथाः॥ ८॥ सर्व्वे वेदविदः शूराः सर्व्वास्त्रविदुषस्तथा। योद्धुकामाश्च पार्थेन सततं ते महाबलाः॥ ९॥ स च दिव्यास्त्रवित् कर्णः सूतपुत्रो महारथः। सोऽस्त्रवेगानिलबलः शरार्च्चितलनिस्वनः॥ १०॥ रजोधूमोऽस्त्रसम्पातो धार्त्तराष्ट्रानिलोद्धतः। निसृष्ट इव कालेन युगान्ते ज्वलनो महान्॥ ११॥ मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः। तं स कृष्णानिलोद्धूतो दिव्यास्त्रज्वलनो महान्॥ १२॥ श्वेतवाजिबलाकाभृद्गाण्डीवेन्द्रायुधोल्बणः। संरब्धः शरधाराभिः सुदीप्तं कर्णपावकम्॥ १३॥ अर्ज्जुनोदीरितो मेघः शमयिष्यति संयुगे। स साक्षादेव सर्व्वाणि शक्रात् परपुरञ्जयः॥ १४॥ दिव्यान्यस्त्राणि बीभत्सुस्तत्त्वतः प्रतिपत्स्यते। अलं स तेषां सर्व्वेषामिति मे धीयते मतिः॥ १५॥ नास्ति त्वतिकृतार्थानां रणेऽरीणां प्रतिक्रिया। तं वयं पाण्डवं सर्व्वं गृहीतास्त्रमरिन्दमम्॥ १६॥ द्रष्टारो न हि बीभत्सुर्भारमुद्यम्य सीदति। वयन्तु तमृते वीरं वनेऽस्मिन् द्विपदाम्वरम्॥ १७॥

अवधानं न गच्छामः काम्यके बहु कुर्वताम् । अवामन्यहनं साधु वहन्नं फलवच्छुचि ॥ १८ ॥ आख्यातु रमणीयञ्च सेवितं पुण्यकर्मभिः । यत्र कश्चिदयं कालं वसन्तः सत्यविक्रमम् ॥ १९ ॥ प्रतीक्षामोऽर्जुनं वीरं वृष्टिकामा इवाम्बुदम् । विविधानाश्रमान् कांश्चिद्द्विजातिभ्यः प्रतिश्रुतान् ॥ २० ॥ सरांसि सरितश्चैव रमणीयांश्च पर्वतान् । आचक्ष्व न हि मे ब्रह्मन् रोचते तमृतेऽर्जुनम् । वनेऽस्मिन् काम्यके वासो गच्छामोऽन्यां दिशं प्रति ॥ २१ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि धौम्ययुधिष्ठिर-
कथायां षडशीतोऽध्यायः ॥ ८६ ॥

---

वैशम्पायन उवाच । तान् सर्वानुत्सुकान् दृष्ट्वा पाण्डवान् दीनचेतसः । आश्वासयंस्तथा धौम्यो बृहस्पतिसमोऽब्रवीत् ॥ १ ॥ ब्राह्मणानुमतान् पुण्यानाश्रमान् भरतर्षभ । दिशस्तीर्थानि शैलांश्च शृणु मे वदतोऽनघ ॥ २ ॥ यान् श्रुत्वा गदतो राजन् विशोको भवितासि च । द्रौपद्या चानया सार्द्धं भ्रातृभिश्च नरेश्वर ॥ ३ ॥ श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव । गत्वा शतगुणञ्चैव तेभ्य एव नरोत्तम ॥ ४ ॥ पूर्वं प्राचीं दिशं राजन् राजर्षिगणसेविताम् । रम्यां ते कथयिष्यामि युधिष्ठिर यथास्मृति ॥ ५ ॥ तस्यां देवर्षिजुष्टायां नैमिषं नाम भारत । यत्र तीर्थानि देवानां पुण्यानि च पृथक् पृथक् ॥ ६ ॥ यत्र सा गोमती पुण्या रम्या देवर्षिसेविता । यज्ञभूमिश्च देवानां शामित्रञ्च विवस्वतः ॥ ७ ॥ तस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः । शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥ ८ ॥ यदर्थं पुरुषव्याघ्र कीर्त्तयन्ति पुरातनाः । एष्टव्या बहवः पुत्रा यद्यप्येको गयां व्रजेत् ॥ ९ ॥ यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् । उत्तारयति सन्तत्या

इह पूर्वान् इहापरान् ॥ १० ॥ महानदीं च तत्रैव तथा गय-
शिरो नृप । यत्रासौ कीर्त्त्यते विप्रैरक्षय्यकरणो वटः ॥ ११ ॥
यत्र दत्तं पितृभ्योऽन्नमक्षयं भवति प्रभो । सा च पुण्यजला तत्र
फल्गुनामा महानदी ॥ १२ ॥ बहुमूलफला चापि कौशिकी
भरतर्षभ । विश्वामित्रोऽभ्यगाद्यत्र ब्राह्मणत्वं तपोधनः ॥ १३ ॥
गङ्गा यत्र नदी पुण्या यस्यास्तीरे भगीरथः । अयजत्तत्र बहुभिः
क्रतुभिर्भूरिदक्षिणैः ॥ १४ ॥ पाञ्चालेषु च कौरव्य कथयन्त्युत्-
पलावनम् । विश्वामित्रोऽयजद्यत्र पुत्रेण सह कौशिकः ॥ १५ ॥
यत्रानुवंशं भगवान् जामदग्न्यस्तथा जगौ । विश्वामित्रस्य तां
दृष्ट्वा विभूतिमतिमानुषीम् ॥ १६ ॥ काम्यकुब्जेऽपिबत्सोममिन्द्रेण
सह कौशिकः । ततः क्षत्रादपाक्रामद्ब्राह्मणोऽस्मीति चाब्रवीत्
॥ १७ ॥ पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् । गङ्गायमुनयो-
र्वीर सङ्गमं लोकविश्रुतम् ॥ १८ ॥ यत्रायजत भूतात्मा पूर्वमेव
पितामहः । प्रयागमिति विख्यातं तस्माद्भरतसत्तम ॥ १९ ॥
अगस्त्यस्य तु राजेन्द्र तत्राश्रमवरो नृप । तत्तथा तापसारण्यं
तापसैरुपशोभितम् ॥ २० ॥ हिरण्यबिन्दुः कथितो गिरौ काल-
ञ्जरे महान् । अगस्त्यपर्वतो रम्यः पुण्यो गिरिवरः शिवः ॥२१॥
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः । अयजत्तत्र कौन्तेय
पूर्वमेव पितामहः ॥ २२ ॥ यत्र भागीरथी पुण्या सदस्यासी-
द्युधिष्ठिर । यत्र सा ब्रह्मशालेति पुण्या ख्याता विशाम्पते ॥ २३॥
भूतपाप्मभिराकीर्णा पुण्यं तस्याश्च दर्शनम् । पवित्रो मङ्गलीयश्च
ख्यातो लोके महात्मनः ॥ २४ ॥ केदारश्च मतङ्गस्य महानाश्रम
उत्तमः । कुण्डोदः पर्वतो रम्यो बहुमूलफलोदकः ॥ २५ ॥
नैषधस्तृषितो यत्र जलं शर्म च लब्धवान् । यत्र देववनं रम्यं
तापसैरुपशोभितम् ॥ २६ ॥ बाहुदा च नदी यत्र नन्दा च
गिरिमूर्द्धनि । तीर्थानि सरितः शैलाः पुण्यान्यायतनानि च ॥२७॥

प्राच्यां दिशि महाराज कीर्त्तितानि मया तव। तिसृष्वन्यासु पुण्यानि दिक्षु तीर्थानि मे शृणु। सरितः पर्वतांश्चैव पुण्यान्यायतनानि च ॥ २८ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि धौम्यतीर्थकथने सप्ताशीतोऽध्यायः ॥ ८७ ॥

---

धौम्य उवाच। दक्षिणस्यान्तु पुण्यानि शृणु तीर्थानि भारत। विस्तरेण यथाबुद्धि कीर्त्त्यमानानि तानि वै ॥ १ ॥ यस्यामाख्यायते पुण्या दिशि गोदावरी नदी। बह्वारामा बहुजला तापसाचरिता शिवा ॥ २ ॥ वेण्या भीमरथी चैव नद्यौ पापभयापहे। मृगद्विजसमाकीर्णे तापसालयभूषिते ॥ ३ ॥ राजर्षेस्तस्य च सरिन्नृगस्य भरतर्षभ। रम्यतीर्था बहुजला पयोष्णी द्विजसेविता ॥ ४ ॥ अपि चात्र महायोगी मार्कण्डेयो महायशाः। अनुवंश्यां जगौ गाथां नृगस्य धरणीपते ॥ ५ ॥ नृगस्य यजमानस्य प्रत्यक्षमिति नः श्रुतम्। अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ६ ॥ पयोष्ण्यां यजमानस्य वाराहे तीर्थ उत्तमे। उद्धृतं भूतलस्थं वा वायुना समुदीरितम् ॥ ७ ॥ पयोष्ण्या हरते तोयं पापमामरणान्तिकम्। स्वर्गादुत्तुङ्गममलं विषाणं यत्र शूलिनः ॥ ८ ॥ स्वमात्मविहितं दृष्ट्वा मर्त्त्यः शिवपुरं व्रजेत्। एकतः सरितः सर्वाः गङ्गाद्याः सलिलोच्चयाः ॥ ९ ॥ पयोष्णी चैकतः पुण्या तीर्थेभ्यो हि मता मम। माठरस्य वनं पुण्यं बहुमूलफलं शिवम् ॥ १० ॥ यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ। प्रवेण्युत्तरमार्गे तु पुण्ये कण्वाश्रमे तथा ॥ ११ ॥ तापसानामरण्यानि कीर्त्तितानि यथाश्रुति। वेदी शूर्पारके तात जामदग्न्येर्महात्मनः ॥ १२ ॥ रम्या पाषाणतीर्था च पुनश्चन्द्रा

च भारत। अशोकतीर्थं तत्रैव कौन्तेय बहुलाश्रमम् ॥ १३ ॥
अगस्त्यतीर्थं पाण्ड्येषु वारुणञ्च युधिष्ठिर। कुमार्य्यः कथिताः
पुण्याः पाण्ड्येष्वेव नरर्षभ ॥ १४ ॥ ताम्रपर्णीन्तु कौन्तेय कीर्त्त-
यिष्यामि तां शृणु। यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ॥१५॥
गोकर्ण इति विख्यातस्त्रिषु लोकेषु विश्रुतः। शीततोयो बहु-
जलः पुण्यस्तात शिवः शुभः ॥ १६ ॥ ह्रदः परमदुष्प्रापो मानुषै-
रकृतात्मभिः। तत्र वृक्षतृणाद्यैश्च सम्पन्नफलमूलवान् ॥ १७ ॥
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसमो गिरिः। वैदूर्य्य पर्वतस्तत्र
श्रीमान्मणिमयः शिवः ॥ १८ ॥ अगस्त्यस्याश्रमश्चैव बहुमूलफलो-
दकः। सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च ॥ १९ ॥
आश्रमान् सरितश्चैव सरांसि च नराधिप। चमसोद्भेदनं विप्रा-
स्तत्रापि कथयन्त्युत ॥ २० ॥ प्रभासञ्चोदधौ तीर्थं त्रिदशानां
युधिष्ठिर। तत्र पिण्डारकं नाम तापसाचरितं शिवम् ॥ २१ ॥
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान्। तत्र देवर्षि-
वर्य्येण नारदेनानुकीर्त्तितः ॥ २२ ॥ पुराणः श्रूयते श्लोकस्त-
न्निबोध युधिष्ठिर। पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ॥२३॥
उज्जयन्ते स्म तप्ताङ्गो नाकपृष्ठे महीयते। पुण्या द्वारवती तत्र
यत्रासौ मधुसूदनः ॥ २४ ॥ साक्षाद्देवः पुराणोऽसौ स हि धर्मः
सनातनः। ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ॥ २५ ॥
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्। पवित्राणां हि
गोविन्दः पवित्रं परमुच्यते ॥ २६ ॥ पुण्यानामपि पुण्योऽसौ
मङ्गलानाञ्च मङ्गलम्। त्रैलोक्ये पुण्डरीकाक्षो देवदेवः सनातनः
॥ २७ ॥ अव्ययात्मा व्ययात्मा च क्षेत्रज्ञः परमेश्वरः। आस्ते
हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ २८ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि धौम्यतीर्थकथने
अष्टाशीतोऽध्यायः ॥ ८८ ॥

धौम्य उवाच। अवन्तिषु प्रतीच्यां वै कीर्तयिष्यामि ते दिशि। यानि तत्र पवित्राणि पुण्यान्यायतनानि च॥ १॥ प्रियङ्ग्वाम्रवनोपेता वानीरफलमालिनी। प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत॥ २॥ त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च। सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः॥ ३॥ नर्मदायां कुरुश्रेष्ठ सह सिद्धर्षिचारणैः। स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत॥ ४॥ निकेतः श्रूयते पुण्यो यत्र विश्रवसो मुनेः। जज्ञे धनपतिर्यत्र कुवेरो नरवाहनः॥ ५॥ वैदूर्य्यशिखरो नाम पुण्यो गिरिवरः शिवः। नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः॥ ६॥ तस्य शैलस्य शिखरे सरः पुण्यं महीपते। फुल्लपद्मं महाराज देवगन्धर्वसेवितम्॥७॥ बह्वाश्चर्य्यं महाराज दृश्यते तत्र पर्वते। पुण्ये स्वर्गोपमे चैव देवर्षिगणसेविते॥ ८॥ ह्रदिनी पुण्यतीर्था च राजर्षेस्तत्र वै सरित्। विश्वामित्रनदी राजन् पुण्या परपुरञ्जय॥ ९॥ यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः। पपात स पुनर्लोकांल्लेभे धर्मान् सनातनान्॥ १०॥ तत्र पुण्यो ह्रदः ख्यातो मैनाकश्चैव पर्वतः। बहुमूलफलोपेतस्त्वसितो नाम पर्वतः॥ ११॥ आश्रमः कक्षसेनस्य पुण्यस्तत्र युधिष्ठिर। च्यवनस्याश्रमश्चैव विख्यातस्तत्र पाण्डव॥ १२॥ तत्राल्पेनैव सिध्यन्ति मानवास्तपसा विभो। जम्बुमार्गो महाराज ऋषीणां भावितात्मनाम्॥ १३॥ आश्रमः शाम्यतां श्रेष्ठ मृगद्विजनिषेवितः। ततः पुण्यतमा राजन् सततं तापसैर्युता॥ १४॥ केतुमाला च मेध्या च गङ्गाद्वारञ्च भूमिप। ख्यातञ्च सैन्धवारण्यं पुण्यं द्विजनिषेवितम्॥१५॥ पितामहसरः पुण्यं पुष्करं नाम नामतः। वैखानसानां सिद्धानामृषीणामाश्रमः प्रियः॥ १६॥ अप्यत्र संश्रयार्थाय प्रजापतिरथो जगौ। पुष्करेषु कुरुश्रेष्ठ गाथां सुकृतिनाम्वर॥ १७॥

मनसाप्यभिकामस्य पुष्कराणि मनस्विनः। विप्रणश्यन्ति पापानि नाकपृष्ठे च मोदते ॥ १८ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि धौम्यतीर्थकथने एकोननवतोऽध्यायः ॥ ८९ ॥

---

धौम्य उवाच। उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै। तानि ते कीर्त्तयिष्यामि पुण्यान्यायतनानि च ॥ १ ॥ शृणुष्वावहितो भूत्वा मम मन्त्रयतः प्रभो। कथाप्रतिग्रहो वीर श्रद्धां जनयते शुभाम् ॥ २ ॥ सरस्वती महापुण्या ह्रदिनी तीर्थमालिनी। समुद्रगा महावेगा यमुना यत्र पाण्डव ॥ ३ ॥ यत्र पुण्यतमं तीर्थं प्लक्षावतरणं शुभम्। यत्र सारस्वतैरिष्ट्वा गच्छन्त्यवभृथैर्द्विजाः ॥ ४ ॥ पुण्यञ्चाख्यायते दिव्यं शिवमग्निशिरोऽनघ। सहदेवोऽयजद्यत्र शम्याक्षेपेण भारत ॥ ५ ॥ एतस्मिन्नेव चार्थेऽसौ इन्द्रगीता युधिष्ठिर। गाथा चरति लोकेऽस्मिन् गीयमाना द्विजातिभिः ॥ ६ ॥ अग्नयः सह देवेन येऽचिता यमुनामनु। ते तस्य कुरुशार्दूल सहस्रशतदक्षिणाः ॥ ७ ॥ तत्रैव भरतो राजा चक्रवर्त्ती महायशाः। विंशतिः सप्त चाष्टौ च हयमेधानुपाहरत् ॥ ८ ॥ कामकृद्यो द्विजातीनां श्रुतस्तात यथा पुरा। अत्यन्तमाश्रमः पुण्यः शरभङ्गस्य विश्रुतः ॥ ९ ॥ सरस्वती नदी सद्भिः सततं पार्थ पूजिता। वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ॥ १० ॥ दृषद्वती महापुण्या यत्र ख्याता युधिष्ठिर। न्यग्रोधाख्यस्तु पुण्याख्यः पाञ्चाल्यो द्विपदाम्बर ॥ ११ ॥ दाल्भ्यघोषश्च दाल्भ्यश्च धरणीस्थो महात्मनः। कौन्तेयानन्तयशसः सुव्रतस्यामितौजसः ॥ १२ ॥ आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः। एतावर्णाववर्णौ च विश्रुतौ मनुजाधिप ॥ १३ ॥

वेदज्ञौ वेदविद्वांसौ वेदविद्याविदावुभौ। ईजाते क्रतुभिर्मुख्यैः पुण्यैर्भरतसत्तम ॥ १४ ॥ समेत्य बहुशो देवाः सेन्द्राः सवरुणाः पुरा। विशाखयूपेऽतप्यन्त तेन पुण्यतमश्च सः ॥ १५ ॥ ऋषिर्महान् महाभागो जमदग्निर्महायशाः। पलाशकेषु पुण्येषु रम्येष्वयजत प्रभुः ॥ १६ ॥ यत्र सर्वाः सरिच्छ्रेष्ठाः साक्षात्तमृषिसत्तमम्। स्वं स्वं तोयमुपादाय परिवार्य्योपतस्थिरे ॥ १७ ॥ अपि चात्र महाराज स्वयं विश्वावसुर्जगौ। इमं श्लोकं तदा वीर प्रेक्ष्य दीक्षां महात्मनः ॥ १८ ॥ यजमानस्य वै देवान् जमदग्नेर्महात्मनः। आगम्य सरितो विप्रान् मधुना समतर्पयन् ॥ १९ ॥ गन्धर्वयक्षरक्षोभिरप्सरोभिश्च सेवितम्। किरातकिन्नरावासं शैलं शिखरिणाम्वरम् ॥ २० ॥ बिभेद तरसा गङ्गा गङ्गाद्वारं युधिष्ठिर। पुण्यं तत्ख्यायते राजन् ब्रह्मर्षिगणसेवितम् ॥ २१ ॥ सनत्कुमारः कौरव्य पुण्यं कनखलं तथा। पर्वतश्च पुरुर्नाम यत्र यातः पुरूरवा ॥ २२ ॥ भृगुर्यत्र तपस्तेपे महर्षिगणसेविते। राजन् स आश्रमः ख्यातो भृगुतुङ्गो महागिरिः ॥ २३ ॥ यः स भूतं भविष्यच्च भवच्च भरतर्षभ। नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः ॥ २४ ॥ तस्यातियशसः पुण्यां विशालां बदरीमनु। आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ॥ २५ ॥ उष्णतोयवहा गङ्गा शीततोयावहा पुरा। सुवर्णसिकता राजन् विशालां बदरीमनु ॥ २६ ॥ ऋषयो यत्र देवाश्च महाभाग महौजसः। प्राप्य नित्यं नमस्यन्ति देवं नारायणं प्रभुम् ॥ २७ ॥ यत्र नारायणो देवः परमात्मा सनातनः। तत्र कृत्स्नं जगत् सर्वं तीर्थान्यायतनानि च ॥ २८ ॥ तत् पुण्यं परमं ब्रह्म तत्तीर्थं तत्तपोवनम्। तत्परं परमं देवं भूतानां परमेश्वरम् ॥ २९ ॥ शाश्वतं परमञ्चैव धातारं परमं पदम्। यं विदित्वा न शोचन्ति विद्वांसः शास्त्रदृष्टयः ॥ ३० ॥ तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः।

आदिदेव महायोगी यत्रास्ते मधुसूदनः ॥ ३१ ॥ पुण्यानामपि तत्पुण्यमत्र ते संशयोऽस्तु मा । एतानि राजन् पुण्यानि पृथिव्यां पृथिवीपते ॥ ३२ ॥ कीर्त्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च । एतानि वसुभिः साध्यै रादित्यैर्मरुदश्विभिः ॥ ३३ ॥ ऋषिभिर्देवकल्पैश्च सेवितानि महात्मभिः । चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः । भ्रातृभिश्च महाभागैरुत्कण्ठां विजहिष्यसि ॥३४॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि धौम्यतीर्थकथने नवतितमोऽध्यायः ॥ ९० ॥

---

वैशम्पायन उवाच । एवं सम्भाषमाणे तु धौम्ये कौरवनन्दन । लोमशः स महातेजा ऋषिस्तत्राजगाम ह ॥ १ ॥ तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते । उपातिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ २ ॥ समभ्यर्च्य यथान्यायं धर्मपुत्रो युधिष्ठिरः । पप्रच्छागमने हेतुमटने च प्रयोजनम् ॥ ३ ॥ स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः । उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान् ॥ ४ ॥ सञ्चरन्नस्मि कौन्तेय सर्वान् लोकान् यदृच्छया । गतः शक्रस्य भवनं तत्रापश्यं सुरेश्वरम् ॥ ५ ॥ तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् । शक्रस्यार्द्धासनगतं तत्र मे विस्मयो महान् ॥ ६ ॥ आसीत् पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् । आह मां तत्र देवेशो गच्छ पाण्डुसुतान् प्रति ॥ ७ ॥ सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् । वचनात् पुरुहूतस्य पार्थस्य च महात्मनः ॥ ८ ॥ आख्यास्ये ते प्रियं तात सुमहत् पाण्डुनन्दन । भ्रातृभिः सहितो राजन् कृष्णया चैव तच्छृणु ॥ ९ ॥ यत्त्वयोक्तो महाबाहुरस्त्रार्थं भरतर्षभ । तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं प्रभो ॥ १० ॥ यत्तद्ब्रह्मशिरो नाम

तपसा रुद्रमागमत्। अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना
॥ ११ ॥ तत् समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम्। वज्रमस्त्राणि
चान्यानि दण्डादीनि युधिष्ठिर ॥ १२ ॥ यमात् कुवेराद्वरुणा-
दिन्द्राच्च कुरुनन्दन। अस्त्राण्यवाप्तवान् पार्थो दिव्यान्यमित-
विक्रमः ॥ १३ ॥ विश्वावसोस्तु तनयाद्गीतं नृत्यञ्च साम च।
वादित्रञ्च यथान्यायं प्रत्यविन्दद्यथाविधि ॥ १४ ॥ एवं कृतास्त्रः
कौन्तेयो गान्धर्वं वेदमाप्तवान्। सुखं वसति बीभत्सुरनुजस्या-
नुजस्तव ॥ १५ ॥ यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत्। तच्च
ते कथयिष्यामि युधिष्ठिर निबोध मे ॥ १६ ॥ भवान् मनुष्य-
लोकेऽपि गमिष्यति न संशयः। ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे
द्विजोत्तम ॥ १७ ॥ आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः।
सुरकार्य्यं महत् कृत्वा यदशक्यं दिवौकसैः ॥ १८ ॥ तपसापि
त्वमात्मानं योजय भ्रातृभिः सह। तपसो हि परं नास्ति तपसा
विन्दते महत् ॥ १९ ॥ अहञ्च कर्णं जानामि यथावद्भरतर्षभ।
सत्यसन्धं महोत्साहं महावीर्य्यं महाबलम् ॥ २० ॥ महाहवे-
ष्वप्रतिमं महायुद्धविशारदम्। महाधनुर्द्धरं वीरं महास्त्रं वर-
वर्णिनम् ॥ २१ ॥ महेश्वरसुतप्रख्यमादित्यतनयं प्रभुम्। तथा-
र्ज्जुनमतिस्कन्धं सहजोत्थनपौरुषम् ॥ २२ ॥ न स पार्थस्य
संग्रामे कलामर्हति षोड़शीम्। यच्चापि ते भयं कर्णान्मनसिस्थ-
मरिन्दम ॥ २३ ॥ तच्चाप्यपहरिष्यामि सव्यसाचिन्यतो गते। यच्च
ते मानसं वीर तीर्थयात्रामिमां प्रति ॥ २४ ॥ स महर्षिर्लोमशस्ते
कथयिष्यत्यसंशयम्। यच्च किञ्चित्तपोयुक्तं फलं तीर्थेषु भारत।
ब्रह्मर्षिरेष ब्रूयात्ते न तच्छ्रद्धेयमन्यथा ॥ २५ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि लोमशसंवादे
एकनवतोध्यायः ॥ ९१ ॥

---

लोमश उवाच। धनञ्जयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर। युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया श्रिया ॥ १ ॥ त्वं हि धर्मान् परान् वेत्थ तपांसि च तपोधन। श्रीमताञ्चापि जानासि धर्मं राज्ञां सनातनम् ॥ २ ॥ स भवान् परमं वेद पावनं पुरुषं प्रति। तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवान् ॥ ३ ॥ यथा तीर्थानि गच्छेत गाश्च दद्यात् स पार्थिवः। तथा सर्वात्मना कार्यमिति मामर्जुनोऽब्रवीत् ॥ ४ ॥ भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः। रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ ५ ॥ दधीच इव देवेन्द्रं यथा चाप्यङ्गिरा रविम्। तथा रक्षस्व कौन्तेया-न्राक्षसेभ्यो द्विजोत्तम ॥ ६ ॥ यातुधाना हि बहवो राक्षसाः पर्वतोपमाः। त्वयाभिगुप्तान् कौन्तेयान् न विवर्त्तेयुरन्तिकम् ॥ ७ ॥ सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च। रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ८ ॥ द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन। इदं तृतीयं द्रक्ष्यामि नान्येव भवता सह ॥ ९ ॥ इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर। मन्वादिभिर्महा-राज तीर्थयात्रा भयापहा ॥ १० ॥ नानृजुर्नाकृतात्मा च नाविद्यो न च पापकृत्। स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ११ ॥ त्वन्तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसङ्गरः। विमुक्तः सर्वसङ्गेभ्यो भूय एव भविष्यसि ॥ १२ ॥ यथा भगीरथो राजा राजानश्च गयादयः। यथा ययातिं कौन्तेय तथा त्वमपि पाण्डव ॥ १३ ॥

युधिष्ठिर उवाच। न हर्षात् सम्प्रपश्यामि वाक्यस्यास्योत्तरं क्वचित्। स्मरेद्धि देवराजोऽयं को नामाभ्यधिकस्ततः ॥ १४ ॥ भवता सङ्गमो यस्य भ्राता चैव धनञ्जयः। वासवः स्मरते यस्य को नामा-भ्यधिकस्ततः ॥ १५ ॥ यच्च मां भगवानाह तीर्थानां दर्शनं प्रति। धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ॥ १६ ॥ तद्यदा मन्यसे ब्रह्मन् गमनन्तीर्थदर्शने। तदैव गन्तास्मि तीर्थान्येष मे निश्चयः परः ॥ १७

वैशम्पायन उवाच। गमने कृतबुद्धिन्तं पाण्डवं लोमशोऽब्रवीत्। लघुर्भव महाराज लघुः स्वैरं गमिष्यसि ॥ १८॥
युधिष्ठिर उवाच। भिक्षाभुजो निवर्त्तन्तां ब्राह्मणा यतयश्च ये। क्षुत्तृष्णाध्वश्रमायासशीतार्त्तिमसहिष्णवः ॥ १९ ॥ ते सर्वे विनिवर्त्तन्तां ये च मिष्टभुजो द्विजाः। पक्वान्नलेह्यपानानां मांसानाञ्च विकल्पकाः ॥ २० ॥ तेऽपि सर्वे निवर्त्तन्तां येऽपि सूदानुयायिनः। मया यथोचिताजीव्यैः संविभक्ताश्च वृत्तिभिः ॥ २१ ॥ ये चाप्यनुगताः पौरा राजभक्तिपुरःसराः धृतराष्ट्रं महाराजमभिगच्छन्तु ते च वै ॥ २२ ॥ स दास्यति यथाकालमुचिता यस्य या भृतिः। स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः। अस्मत् प्रियहितार्थाय पाञ्चाल्यो वः प्रदास्यति ॥ २३॥
वैशम्पायन उवाच: ततो भूयिष्ठशः पौरा गुरुभारप्रपीड़िताः। विप्राश्च यतयो मुख्या जग्मुर्नागपुरं प्रति ॥ २४ ॥ तान् सर्वान् धर्मराजस्य प्रेम्णा राजाम्बिकासुतः। प्रतिजग्राह विधिवद्धनैश्च समतर्पयत् ॥ २५ ॥ ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैः सह। लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ॥ २६ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि युधिष्ठिरतीर्थयात्रायां द्विनवतोऽध्यायः ॥ ९२ ॥

---

वैशम्पायन उवाच। ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः। अभिगम्य तदा राजन्निदं वचनमब्रुवन् ॥ १ ॥ राजंस्तीर्थानि गन्तासि पुण्यानि भ्रातृभिः सह। देवर्षिणा चैव सहितो लोमशेन महात्मना ॥ २ ॥ अस्मानपि महाराज नेतुमर्हसि पाण्डव। अस्माभिर्हि न शक्यानि त्वदृते तानि कौरव ॥ ३ ॥ श्वापदैरुपसृष्टानि दुर्गाणि विषमाणि च। अगम्यानि

नरैरल्पैस्तीर्थानि मनुजेश्वर ॥ ४ ॥ भवतो भ्रातरः शूरा धनुर्द्धरवराः सदा। भवद्भिः पालिता शूरैर्गच्छामो वयमच्युत ॥ ५ ॥ भवत्प्रसादाद्धि वयं प्राप्नुयामः सुखं फलम्। तीर्थानां पृथिवीपाल वनानाञ्च विशाम्पते ॥ ६ ॥ तव वीर्य्यपरित्राताः शुद्धास्तीर्थपरिप्लुताः। भवेम धूतपाप्मानस्तीर्थसन्दर्शनान्नृप ॥ ७ ॥ भवानपि नरेन्द्रस्य कार्त्तवीर्य्यस्य भारत। अष्टकस्य च राजर्षेर्लोमपादस्य चैव ह ॥ ८ ॥ भरतस्य च वीरस्य सार्व्वभौमस्य पार्थिव। ध्रुवं प्राप्स्यति दुष्प्रापान् लोकांस्तीर्थपरिप्लुतः ॥ ९ ॥ प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्व्वतान्। गङ्गाद्याः सरितश्चैव प्लक्षादींश्च वनस्पतीन् ॥ १० ॥ त्वया सह महीपाल द्रष्टुमिच्छामहे वयम्। यदि ते ब्राह्मणेष्वस्ति काचित् प्रीतिर्जनाधिप ॥ ११ ॥ कुरु क्षिप्रं वचोऽस्माकं ततः श्रेयोऽभिपत्स्यसे। तीर्थानि हि महाबाहो तपोविघ्नकरैः सदा ॥ १२ ॥ अनुकीर्णानि रक्षोभिस्तेभ्यो नस्त्रातुमर्हसि। तीर्थान्युक्तानि धौम्येन नारदेन च धीमता ॥ १३ ॥ यान्युवाच च देवर्षिर्लोमशः सुमहातपाः। विधिवत्तानि सर्व्वाणि पर्य्यटस्व नराधिप ॥ १४ ॥ धूतपाप्मा सहास्माभिर्लोमशेनाभिपालितः। स राजा पूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः ॥ १५ ॥ भीमसेनादिभिर्वीरैर्भ्रातृभिः परिवारितः। बाढ़मित्यब्रवीत् सर्व्वांस्तानृषीन् पाण्डवर्षभः ॥ १६ ॥ लोमशं समनुज्ञाप्य धौम्यञ्चैव पुरोहितम्। ततः स पाण्डवश्रेष्ठो भ्रातृभिः सहितो वशी ॥ १७ ॥ द्रौपद्या चानवद्याङ्ग्या गमनाय मनो दधे। अथ व्यासो महाभागस्तथा पर्व्वतनारदौ ॥ १८ ॥ काम्यके पाण्डवं द्रष्टुं समाजग्मुर्मनीषिणः। तेषां युधिष्ठिरो राजा पूजाञ्चक्रे यथाविधि। सत्कृतास्ते महाभागा युधिष्ठिरमथाब्रुवन् ॥ १९ ॥

ऋषय ऊचुः। युधिष्ठिर यमौ भीम मनसा कुरुतार्जवम्। मनसा कृतशौचा वै शुद्धास्तीर्थानि यास्यथ ॥ २० ॥ शरीरनियमं

प्राङ्ब्राह्मणा मानुषं व्रतम्। मनोविशुद्धां बुद्धिञ्च दैवमाहुर्व्रतं द्विजाः ॥ २१ ॥ मनो ह्यदुष्टं शौचाय पर्य्याप्तं वै नराधिप। मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि द्रक्ष्यथ ॥ २२ ॥ ते यूयं मानसैः शुद्धाः शरीरनियमव्रतैः। दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ ॥ २३ ॥ ते तथेति प्रतिज्ञाय कृष्णया सह पाण्डवाः। कृतस्वस्त्ययनाः सर्वे मुनिभिर्दिव्यमानुषैः ॥ २४ ॥ लोमशस्योप-संगृह्य पादौ द्वैपायनस्य च। नारदस्य च राजेन्द्र देवर्षेः पर्व-तस्य च ॥ २५ ॥ धौम्येन सहिता वीरास्तथा तैर्वनवासिभिः। मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥ २६ ॥ कठिनानि समादाय चीराजिनजटाधराः। अभेद्यैः कवचैर्युक्तास्तीर्था-न्यनुचरंस्ततः ॥ २७ ॥ इन्द्रसेनादिभिर्भृत्यैरथैः परिचतुर्दशैः। महानसव्यापृतैश्च तथान्यैः परिचारकैः ॥ २८ ॥ सायुधा बद्ध-निस्त्रिंशास्तूणवन्तः समार्गणाः। प्राङ्मुखाः प्रययुर्वीराः पाण्डवा जनमेजय ॥ २९ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि युधिष्ठिरतीर्थयात्रायां त्रिनवतोऽध्यायः ॥ ९३ ॥

---

युधिष्ठिर उवाच। न वै निर्गुणमात्मानं मन्ये देवर्षिसत्तम। तथास्मि दुःखसन्तप्तो यथा नान्यो महीपतिः ॥ १ ॥ परांश्च निर्गुणान्मन्ये न च धर्मगतानपि। ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन हेतुना ॥ २ ॥

लोमश उवाच। न च दुःखं त्वया राजन् कार्य्यं पार्थ कथञ्चन। यदधर्मेण वर्द्धेयुरधर्मरुचयो जनाः ॥ ३ ॥ वर्द्धत्यधर्मेण नरस्ततो भद्राणि पश्यति। ततः सपत्नान् जयति समूलस्तु विन-श्यति ॥ ४ ॥ मया हि दृष्टा दैतेया दानवाश्च महीक्षित्। वर्द्ध-

माना स्वधर्मेण स्वयञ्चोपगताः पुनः ॥ ५ ॥ पुरा देवयुगे चैव
दृष्टं सर्वं मया विभो। अरोचयन् सुरा धर्मं धर्मं तत्यजिरे-
ऽसुराः ॥ ६ ॥ तीर्थानि देवा विविशुर्नाविशन् भारतासुराः।
तानधर्मकृतो दर्पः पूर्वमेव समाविशत् ॥ ७ ॥ दर्पान्मानः सम-
भवन्मानात् क्रोधो व्यजायत। क्रोधादह्रीस्ततोऽलज्जा वृत्तं
तेषां ततोऽनशत् ॥ ८ ॥ तानलज्जान् गतह्रीकान् हीनवृत्तान्
वृथाव्रतान्। क्षमा लक्ष्मीश्च धर्मश्च नचिरात् प्रजहुस्ततः ॥ ९ ॥
लक्ष्मीस्तु देवानगमदलक्ष्मीरसुरान्नृप। तानलक्ष्म्यासमाविष्टान्
दर्पोपहतचेतसः ॥ १० ॥ दैतेयान् दानवांश्चैव कलिरप्याविश-
त्ततः। तानलक्ष्मीसमाविष्टान् दानवान् कलिना हतान् ॥ ११ ॥
दर्पाभिभूतान् कौन्तेय क्रियाहीनानचेतसः। मानाभिभूता-
नचिराद्विनाशः समपद्यत ॥ १२ ॥ निर्यशस्कास्तथा दैत्याः कृत-
स्नशो विलयं गताः। देवास्तु सागरांश्चैव सरितश्च सरांसि च
॥ १३ ॥ अभ्यगच्छन् धर्मशीलाः पुण्यान्यायतनानि च। तपोभिः
क्रतुभिर्दानैराशीर्वादैश्च पाण्डव ॥ १४ ॥ प्रजहुः सर्वपापानि
श्रेयश्च प्रतिपेदिरे। एवमादानवन्तश्च निरादानाश्च सर्वशः ॥१५॥
तीर्थान्यगच्छन् विबुधास्तेनापुर्भूतिमुत्तमम्। तथा त्वमपि राजेन्द्र
स्नात्वा तीर्थेषु सानुजः ॥ १६ ॥ पुनर्वेत्स्यसि तां लक्ष्मीमेष पन्थाः
सनातनः। यथैव हि नृगो राजा शिबिरौशीनरो यथा ॥ १७ ॥
भगीरथो वसुमना गयः पुरुः पुरूरवाः। चरमाणास्तपो नित्यं
स्पर्शनादम्भसश्च ते ॥ १८ ॥ तीर्थाभिगमनात् पूता दर्शनाच्च
महात्मनाम्। अलभन्त यशः पुण्यं धनानि च विशाम्पते ॥ १९ ॥
तथा त्वमपि राजेन्द्र लब्धा सुविपुलां श्रियम्। यथा चेक्ष्वाकु-
रभवत् सपुत्रजनबान्धवः ॥ २० ॥ मुचुकुन्दोऽथ मान्धाता मरुत्तश्च
महीपतिः। कीर्त्तिं पुण्यामविन्दन्त यथा देवास्तपोबलात् ॥२१॥
देवर्षयश्च कार्त्स्न्येन तथा त्वमपि वेत्स्यसि। धार्त्तराष्ट्रास्त्वध-

र्मेण मोहेन च वशीकृताः। न चिराद्वै विनङ्क्ष्यन्ति दैत्या इव न संशयः॥ २२॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि युधिष्ठिरतीर्थगमने चतुर्नवतोऽध्यायः॥ ९४॥

---

वैशम्पायन उवाच। ते तथा सहिता वीरा वसन्तस्तत्र तत्र ह। क्रमेण पृथिवीपाल नैमिषारण्यमागताः॥ १॥ ततस्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप। कृताभिषेकाः प्रददुर्गाश्च वित्तञ्च भारत॥ २॥ तत्र देवान् पितॄन् विप्रांस्तर्पयित्वा पुनः पुनः कन्यातीर्थे च तीर्थे च गवां तीर्थे च भारत॥ ३॥ कालकोट्यां विषप्रस्थे गिरावुष्य च कौरवाः। बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम्॥ ४॥ प्रयागे देवयजने देवानां पृथिवीपते। ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम्॥ ५॥ गङ्गायमुनयोश्चैव सङ्गमे सत्यसङ्गराः। विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्वसु॥ ६॥ तपस्विजनजुष्टाञ्च ततो वेदीं प्रजापतेः। जग्मुः पाण्डुसुता राजन् ब्राह्मणैः सह भारत॥ ७॥ तत्र ते न्यवसन् वीरास्तपश्चातस्थुरुत्तमम्। सन्तर्पयन्तः सततं वन्येन हविषा द्विजान्॥ ८॥ ततो महेश्वरं जग्मुर्धर्मज्ञेनाभिसंस्कृतम्। राजर्षिणा पुण्यकृता गयेनानुपमद्युते॥ ९॥ नगो गयशिरो यत्र पुण्या चैव महानदी। वानीरमालिनी रम्या नदी पुलिनशोभिता॥ १०॥ दिव्यं पवित्रकूटञ्च पवित्रधरणीधरम्। ऋषिजुष्टं सुपुण्यन्तत्तीर्थं ब्रह्मसरोत्तमम्॥ ११॥ अगस्त्यो भगवान् यत्र गतो वैवस्वतं प्रति। उवास च स्वयं तत्र धर्मराजः सनातनः॥ १२॥ सर्वासां सरिताञ्चैव समुद्भेदो विशाम्पते। यत्र सन्निहितो नित्यं महादेवः पिनाकधृक्॥ १३॥ तत्र ते पाण्डवा-

वीरास्चातुर्मास्यैस्तदेजिरे। ऋषियज्ञेन महता यत्राक्षयवटो
महान् ॥ १४ ॥ अक्षये देवयजने अक्षयं यत्र वै फलम्। ते तु
तत्रोपवासांस्तु चक्रुर्निश्चितमानसाः ॥ १५ ॥ ब्राह्मणास्तत्र शतशः
समाजग्मुस्तपोधनाः। चातुर्मास्येनायजन्त आर्षेण विधिना
तदा ॥ १६ ॥ तत्र विद्यातपोवृद्धा ब्राह्मणा वेदपारगाः। कथां
प्रचक्रिरे पुण्यां सदसिस्था महात्मनाम् ॥ १७ ॥ तत्र विद्याव्रत-
स्नातः कौमारं व्रतमास्थितः। शमठोऽकथयद्राजन्नामूर्त्तरयसं
गयम् ॥ १८ ॥

शमठ उवाच। अमूर्त्तरयसः पुत्रो गयो राजर्षिसत्तमः।
पुण्यानि यस्य कर्माणि तानि मे शृणु भारत ॥ १९ ॥ यस्य यज्ञो
बभूवेह बह्वन्नो बहुदक्षिणः। यत्रान्नपर्व्वता राजन् शतशोऽथ
सहस्रशः ॥ २० ॥ घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा।
व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः ॥ २१ ॥ अहन्यहनि
चाप्येवं याचतां संप्रदीयते। अन्ये च ब्राह्मणा राजन् भुञ्जतेऽन्नं
सुसंस्कृतम् ॥ २२ ॥ तत्र वै दक्षिणाकाले ब्रह्मघोषो दिवं गतः।
न च प्रज्ञायते किञ्चिद्ब्रह्मशब्देन भारत ॥ २३ ॥ पुण्येन चरता
राजन् भूर्द्दिशः खं नभस्तथा। आपूर्णमासीच्छब्देन तदाप्यासी-
न्महाद्भुतम् ॥ २४ ॥ तत्र स्म गाथा गायन्ति मनुष्या भरतर्षभ।
अन्नपानैः शुभैस्तृप्ता देशे देशे सुवर्च्चसः ॥ २५ ॥ गयस्य यज्ञे
केऽन्वद्य प्राणिनो भोक्तुमप्सवः। तत्र भोजनशिष्टस्य पर्व्वताः
पञ्चविंशतिः ॥ २५ ॥ न तत्पूर्व्वे जनाश्चक्रुर्न करिष्यन्ति चापरे।
गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः ॥ २७ ॥ कथन्तु देवा
हविषा गयेन परितर्पिताः। पुनः शक्ष्यन्त्युपादातुमन्यैर्दत्तानि
कानिचित् ॥ २८ ॥ सिकता वा यथा लोके यथा वा दिवि
तारकाः। यथा वा वर्षतो धारा असङ्ख्येयाः स्म केनचित्
॥ २९ ॥ तथा गणयितुं शक्या गययज्ञे न दक्षिणाः। एवं-

विधाः सुवहवस्तस्य यज्ञा महीपते। बभूवुरस्य सरसः समीपे कुरुनन्दन ॥ ३० ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि गययज्ञकथने पञ्चनवतोऽध्यायः ॥ ९५ ॥

---

वैशम्पायन उवाच। ततः संप्रस्थितो राजा कौन्तेयो भूरिदक्षिणः। अगस्त्याश्रममासाद्य दुर्जयामामुवास च ॥ १ ॥ तत्रैव लोमशं राजा पप्रच्छ वदतांवरः। अगस्त्येनेह वातापिः किमर्थमुपशामितः ॥ २ ॥ आसीद्वा किम्प्रभावश्च स दैत्यो मानवान्तकः। किमर्थञ्चोद्दितो मन्युरगस्त्यस्य महात्मनः ॥ ३ ॥

लोमश उवाच। इल्वलो नाम दैतेय आसीत् कौरवनन्दन। मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ ४ ॥ स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः। पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु ॥ ५ ॥ तस्मिन् स ब्राह्मणो नादात् पुत्रं वासवसम्मितम्। चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् ॥ ६ ॥ तदाप्रभृति राजेन्द्र इल्वलो ब्रह्महासुरः। मन्युमान् भ्रातरं छागं मायावी चकरोत्ततः ॥ ७ ॥ मेषरूपी च वातापिः कामरूप्यभवत् क्षणात्। संस्कृत्य च भोजयति ततो विप्रं जिघांसति ॥ ८ ॥ स चाह्वयति यं वाचा गतं वैवस्वतक्षयम्। स पुनर्देहमास्थाय जीवन् संप्रत्यदृश्यत ॥ ९ ॥ ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम्। तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् ॥ १० ॥ तामिल्वलेन महता स्वरेण वाचमीरिताम्। श्रुत्वातिमायो बलवान् क्षिप्रं ब्राह्मणकण्टकः ॥ ११ ॥ तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः। वातापिः प्रहसन्राजन्निश्चक्राम विशाम्पते ॥ १२ ॥

एवं स ब्राह्मणान्राजन् भोजयित्वा पुनः पुनः । हिंसयामास
दैतेय इल्वलो दुष्टचेतसः ॥ १३ ॥ अगस्त्यश्चापि भगवानेतस्मिन्
काल एव तु । पितॄन् ददर्श गर्त्ते वै लम्बमानानधोमुखान् ॥ १४ ॥
सोऽपृच्छल्लम्बमानांस्तान् भवन्त इह किम्पराः । सन्तानहेतो-
रिति ते प्रत्यूचुर्ब्रह्मवादिनः ॥ १५ ॥ ते तस्मै कथयामासुर्वयन्ते
पितरः स्वकाः । गर्त्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः ॥ १६ ॥
यदि नो जनयेथास्त्वमगस्त्यापत्यमुत्तमम् । स्यान्नोऽस्मान्निरया-
न्मोक्षस्त्वञ्च पुत्राप्नुया गतिम् ॥ १७ ॥ स तानुवाच तेजस्वी सत्य-
धर्म्मपरायणः । करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः
॥ १८ ॥ ततः प्रसवसन्तानं चिन्तयन् भगवानृषिः । आत्मनः
प्रसवस्यार्थे नापश्यत् सदृशीं स्त्रियम् ॥ १९ ॥ स तस्य तस्य
सत्त्वस्य तत्तदङ्गमनुत्तमम् । संभृत्य तत्समैरङ्गैर्निर्म्ममे स्त्रियमुत्त-
माम् ॥ २० ॥ स तां विदर्भराजस्य पुत्रार्थं तप्यतस्तपः । निर्म्मि-
तामात्मनोऽर्थाय मुनिः प्रादान्महातपाः ॥ २१ ॥ सा तत्र जज्ञे
सुभगा विद्युत्सौदामिनी यथा । विभ्राजमाना वपुषा व्यवर्द्धत
शुभानना ॥ २२ ॥ जातमात्रान्तु तां दृष्ट्वा वैदर्भः पृथिवीपतिः ।
प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत ॥ २३ ॥ अभ्यनन्दन्त तां
सर्व्वे ब्राह्मणा वसुधाधिप । लोपामुद्रेति तस्याश्च चक्रिरे नाम ते
द्विजाः ॥ २४ ॥ ववृधे सा महाराज बिभ्रती रूपमुत्तमम् ।
अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा ॥ २५ ॥ तां यौव-
नस्थां राजेन्द्र शतं कन्याः स्वलंकृताः । दासीशतञ्च कल्याणी-
मुपतस्थुर्वशानुगाः ॥ २६ ॥ सा स्म दासीशतवृता मध्ये कन्या-
शतस्य च । आस्ते तेजस्विनी कन्या रोहिणीव दिवि प्रभा ॥ २७ ॥
यौवनस्थामपि च तां शीलाचारसमन्विताम् । न वव्रे पुरुषः
कश्चिद्भयात्तस्य महात्मनः ॥ २८ ॥ सा तु सत्यवती कन्या रूपे-
णाप्सरसोऽप्यति । तोषयामास पितरं शीलेन स्वजनं तथा ॥ २९ ॥

वैदर्भीन्तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता। मनसा चिन्तयामास कस्मै दद्यामिमां सुताम्॥ ३०॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि अगस्त्योपाख्याने षण्णवतोऽध्यायः॥ ९६॥

---

लोमश उवाच। यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति। तदाभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम्॥ १॥ राजन्निवेशे बुद्धिर्मे वर्त्तते पुत्रकारणात्। वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे॥ २॥ एवमुक्तः स मुनिना महीपालो विचेतनः। प्रत्याख्यानाय चाशक्तः प्रदातुमपि नैच्छत॥ ३॥ ततः स भार्य्यामभ्येत्य प्रोवाच पृथिवीपतिः। महर्षिर्वीर्य्यवानेष क्रुद्धः शापाग्निना दहेत्॥ ४॥ तं तथा दुःखितं दृष्ट्वा सभार्य्यं पृथिवीपतिम्। लोपामुद्राभिगम्येदं काले वचनमब्रवीत्॥ ५॥ न मत्कृते महीपाल पीड़ामभ्येतुमर्हसि। प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः॥ ६॥ दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने। लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशाम्पते॥ ७॥ प्राप्य भार्य्यामगस्त्यस्तु लोपामुद्रामभाषत। महार्हाण्युत्सृजैतानि वासांस्याभरणानि च॥ ८॥ ततः सा दर्शनीयानि महार्हाणि तनूनि च। समुत्ससर्ज रम्भोरुर्वसनान्यायतेक्षणा॥ ९॥ तपश्चीराणि जग्राह वल्कलान्यजिनानि च। समानव्रतचर्य्या च बभूवायतलोचना॥ १०॥ गङ्गाद्वारमथागम्य भगवानृषिसत्तमः। उग्रमातिष्ठत तपः सह पत्न्यानुकूलया॥ ११॥ सा प्रीता बहुमानाच्च पतिं पर्य्यचरत्तदा। अगस्त्यश्च परां प्रीतिं भार्य्यायामाचरत् प्रभुः॥ १२॥ ततो बहुतिथे काले लोपामुद्रां विशाम्पते। तपसा द्योतितां स्नातां ददर्श भगवानृषिः॥ १३॥ स

तस्याः परिचारेण शौचेन च दमेन च। श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् ॥ १४ ॥ ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भाविनी। सा तदा प्रणयं वाक्यं भगवन्तमथाब्रवीत् ॥ १५ ॥ असंशयं प्रजाहेतोर्भार्य्यां पतिरविन्दत। या तु त्वयि मम प्रीतिस्तामृषे कर्त्तुमर्हसि ॥ १६ ॥ यथा पितुर्गृहे विप्र प्रासादे शयनं मम। तथाविधे त्वं शयने मामुपैतुमिहार्हसि ॥ १७ ॥ इच्छामि त्वां स्रग्विनञ्च भूषणैश्च विभूषितम्। उपसर्त्तुं यथाकामं दिव्याभरणभूषिता ॥ १८ ॥ अन्यथा नोपतिष्ठेयं चीरकाषायवासिनी। नैवापवित्रो विप्रर्षे भूषणोऽयं कथञ्चन ॥ १९ ॥

अगस्त्य उवाच। न ते धनानि विद्यन्ते लोपामुद्रे तथा मम। यथाविधानि कल्याणि पितुस्तव सुमध्यमे ॥ २० ॥

लोपामुद्रोवाच। ईशोऽसि तपसा सर्वं समाहर्त्तुं तपोधन। क्षणेन जीवलोके यद्वसु किञ्चन विद्यते ॥ २१ ॥

अगस्त्य उवाच। एवमेतद्यथात्थ त्वं तपोव्ययकरन्तु तत्। यथा तु मे न नश्येत तपस्तन्मां प्रचोदय ॥ २२ ॥

लोपामुद्रोवाच। अल्पावशिष्टः कालोऽयमृतौ मम तपोधन। न चान्यथाहमिच्छामि त्वामुपैतुं कथञ्चन ॥ २४ ॥ न चापि धर्म्ममिच्छामि विलोप्तुन्ते कथञ्चन। एवन्तु मे यथाकामं सम्पादयितुमर्हसि ॥ २४ ॥

अगस्त्य उवाच। यद्येष कामः सुभगे तव बुद्ध्या विनिश्चितः। हर्त्तुं गच्छाम्यहं भद्रे चर काममिह स्थिता ॥ २५ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अगस्त्योपाख्याने सप्तनवतोऽध्यायः ॥ ९७ ॥

---

लोमश उवाच। ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु। श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥ १ ॥ स विदित्वा तु नृपतिः कुम्भयोनिमुपागतम्। विषयान्ते सहामात्यः प्रत्यगृह्णात् सुसत्कृतम् ॥ २ ॥ तस्मै चार्घ्यं यथान्यायमानीय पृथिवीपतिः। प्राञ्जलिः प्रयतो भूत्वा पप्रच्छागमनेऽर्थिताम् ॥ ३ ॥

अगस्त्य उवाच। वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते। यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ मे ॥ ३ ॥

लोमशः उवाच। तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत्। अतो विद्वन्नुपादत्स्व यदत्र वसु मन्यसे ॥ ४ ॥ तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः। सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ५ ॥ स श्रुतर्वाणमादाय ब्रध्नश्वमगमत्ततः। स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि ॥ ६ ॥ तयोरर्घ्यं च पाद्यञ्च ब्रध्नश्वः प्रत्यवेदयत्। अनुज्ञाप्य च पप्रच्छ प्रयोजनमुपक्रमे ॥ ७ ॥

अगस्त्य उवाच। वित्तकामाविह प्राप्तौ विद्ध्यावां पृथिवीपते। यथाशक्त्यविहिंस्यान्यान् संविभागौ प्रयच्छ नौ ॥ ८ ॥

लोमश उवाच। तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत्। अतो ज्ञात्वा तु गृह्णीतं यदत्र व्यतिरिच्यते ॥ ९ ॥ तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः। सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ १० ॥ पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम्। अगस्त्यश्च श्रुतर्वा च ब्रध्नश्वश्च महीपतिः ॥ ११ ॥ त्रसदस्युस्तु तान् दृष्ट्वा प्रत्यगृह्णाद्यथाविधि। अभिगम्य महाराज विषयान्ते महामनाः ॥ १२ ॥ अर्चयित्वा यथान्यायमिक्ष्वाकुराजसत्तमः। समस्तांश्च ततोऽपृच्छत् प्रयोजनमुपक्रमे ॥ १३ ॥

अगस्त्य उवाच। वित्तकामानिह प्राप्तान् विद्धि नः पृथिवीपते। यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नः ॥ १५ ॥

लोमश उवाच। तत आयव्ययौ पूर्णौ तेषां राजा न्यवे-
दयत्। एतज्ज्ञात्वा ह्युपादद्ध्वं यदत्र व्यतिरिच्यते॥ १५ ॥
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः। सर्व्वथा प्राणिनां
पीड़ामुपादानादमन्यत ॥ १६ ॥ ततः सर्व्वे समेत्याथ ते नृपास्तं
महामुनिम्। इदमूचुर्म्महाराज समवेक्ष्य परस्परम् ॥ १७ ॥ अयं
वै दानवो ब्रह्मन्निल्वलो वसुमान् भुवि। तमभिक्रम्य सर्व्वेऽद्य
वयञ्चार्थामहे वसु ॥ १८ ॥

लोमश उवाच। तेषां तदासीदुचितमिल्वलस्यैव भिक्षणम्।
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ॥ १९ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अगस्त्योपाख्याने
अष्टनवतोध्यायः ॥ ९८ ॥

---

लोमश उवाच। इल्वलस्तान् विदित्वा तु महर्षिसहिता-
न्नृपान्। उपस्थितान् सहामात्यो विषयान्ते ह्यपूजयत ॥ १ ॥
तेषां ततोऽसुरश्रेष्ठ आतिथ्यमकरोत्तदा। सुसंस्कृतेव कौरव्य
भ्रात्रा वातापिना तदा ॥ २ ॥ ततो राजर्षयः सर्व्वे विषण्णा गत-
चेतसः। वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ॥ ३ ॥ अथा-
ब्रवीदगस्त्यस्तान्राजर्षीनृषिसत्तमः। विषादो वो न कर्त्तव्यो
ह्यहं भोक्ष्ये महासुरम् ॥ ४ ॥ धुर्य्यासनमथासाद्य निषसाद
महानृषिः। तं पर्य्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ॥ ५ ॥ अगस्त्य
एव कृत्स्नन्तु वातापिं बुभुजे ततः। भुक्तवत्यसुरो ह्वानमकरो-
त्तस्य चेल्वलः ॥ ६ ॥ ततो वायुःप्रादुरभूदधस्तस्य महात्मनः।
शब्देन महता तात गर्ज्जन्निव यथा घनः ॥ ७ ॥ वातापे निष्क्रम-
स्वेति पुनः पुनरुवाच ह। तं प्रहस्याब्रवीद्राजन्नगस्त्यो मुनि-
सत्तमः ॥ ८ ॥ कुतो निष्क्रमितुं शक्तो मया जीर्णस्तु सोऽसुरः।

इल्वलस्तु विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम् ॥ ९ ॥ प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत्। किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः ॥ १० ॥ प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा। ईशं ह्यसुरविद्मस्त्वां वयं सर्वे धनेश्वरम् ॥ ११ ॥ एते च नातिधनिनो धनार्थश्च महान्मम। यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नः ॥ १२ ॥ ततोऽभिवाद्य तमृषिमिल्वलो वाक्यमब्रवीत्। दित्सितं यदि वेत्सि त्वं ततो दास्यामि ते वसु ॥ १३ ॥

अगस्त्य उवाच। गवां दशसहस्राणि राज्ञामेकैकशोऽसुर। तावदेव सुवर्णस्य दित्सितं ते महासुर ॥ १४ ॥ मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः। मनोजवौ वाजिनौ च दित्सितं ते महासुर ॥ १५ ॥ जिज्ञास्यतां रथः सद्यो व्यक्त एष हिरण्मयः। जिज्ञास्यमानः स रथः कौन्तेयासीद्धिरण्मयः ॥ १५ ॥ ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु। विरावश्च सुरावश्च तस्मिन् युक्तौ रथे हयौ ॥ १७ ॥ ऊहतुः स्म वसून्याशु तावगस्त्याश्रमं प्रति। सर्वान्राज्ञः सहागस्त्यान्निमेषादिव भारत ॥ १८ ॥ अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा। कृतवांश्च मुनिः सर्वं लोपामुद्राचिकीर्षितम् ॥ १९ ॥

लोपामुद्रोवाच। कृतवानसि तत्सर्वं भगवन्मम काङ्क्षितम्। उत्पादय सकृन्मह्यमपत्यं वीर्यवत्तरम् ॥ २० ॥

अगस्त्य उवाच। तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने। विचारणामपत्ये तु तव वक्ष्यामि तां शृणु ॥ २१ ॥ सहस्रन्तेऽस्तु पुत्राणां शतं वा दशसम्मितम्। दश वा शततुल्याः स्युरेको वापि सहस्रजित् ॥ २२ ॥

लोपामुद्रोवाच। सहस्रसम्मितः पुत्र एकोऽप्यस्तु तपोधन। एको हि बहुभिः श्रेयान् विद्वान् साधुरसाधुभिः ॥ २३ ॥ स तथेति प्रतिज्ञाय तया समभवन्मुनिः। समये समशीलिन्याः

श्रद्धावान् श्रद्धधानया ॥ २४ ॥ तत आधाय गर्भन्तमगमद्दनमेव सः। तस्मिन् वनगते गर्भो ववृधे सप्त भारदान् ॥ २५ ॥ सप्तमेऽब्दे गते चापि प्राच्यवत् स महाकविः। ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत ॥ २६ ॥ साङ्गोपनिषदान् वेदान् जपन्निव महातपाः। तस्य पुत्रोऽभवदृषिः स तेजस्वी महाद्विजः ॥ २७ ॥ स वाल एव तेजस्वी पितुस्तस्य निवेशने। इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ॥ २८ ॥ तथायुक्तन्तु तं दृष्ट्वा मुमुदे स मुनिस्तदा। एवं स जनयामास भारतापत्यमुत्तमम् ॥ २९ ॥ लेभिरे पितरश्चास्य लोकान्राजन् यथेप्सितान्। तत ऊर्द्ध्वमयं ख्यातस्त्वगस्त्यस्याश्रमो भुवि ॥ ३० ॥ प्राङ्क्रादेरेवं वातापिरगस्त्येनोपशोभितः। तस्यायमाश्रमो राजन्नमणीयैर्गुणैर्युतः ॥ ३१ ॥ एषा भागीरथी पुण्या देवगन्धर्वसेविता। वातेरिता पताकेव विराजति नभस्तले ॥ ३२ ॥ प्रताय्यमाणा कूटेषु यथानिम्नेषु नित्यशः। शिलातलेषु संत्रस्ता पन्नगेन्द्रवधूरिव ॥ ३३ ॥ दक्षिणां वै दिशं सर्वां प्लावयन्ती च मातृवत्। पूर्वं शम्भोर्जटाभ्रष्टा समुद्रमहिषी प्रिया। अस्यां नद्यां सुपुण्यायां यथेष्टमवगाह्यताम् ॥ ३४ ॥

लोमश उवाच। युधिष्ठिर निवोधेदं त्रिषु लोकेषु विश्रुतम्। भृगोस्तीर्थं महाराज महर्षिगणसेवितम् ॥ ३५ ॥ यत्रोपस्पृष्टवान्रामो हृतं तेजस्तदाप्तवान्। अत्र त्वं भ्रातृभिः सार्द्धं कृष्णया चैव पाण्डव ॥ ३६ ॥ दुर्योधनहृतं तेजः पुनरादातुमर्हसि। कृतवैरेण रामेण यथा चोपहृतं पुनः ॥ ३७ ॥

वैशम्पायन उवाच। स तत्र भ्रातृभिश्चैव कृष्णया चैव पाण्डवः। स्नात्वा देवान् पितॄंश्चैव तर्पयामास भारत। तस्य तीर्थस्य रूपं वै दीप्ताद्दीप्ततरं वभौ ॥ ३८ ॥ अप्रधृष्यतरश्चासीच्छात्रवाणां नरर्षभ। अपृच्छच्चैव राजेन्द्र लोमशं पाण्डुनन्दनः

॥ ३९ ॥ भगवन् किमर्थं रामस्य हृतमासीद्वपुः प्रभो। कथं प्रत्याहृतञ्चैव एतदाचक्ष्व पृच्छतः ॥ ४० ॥

लोमश उवाच। शृणु रामस्य राजेन्द्र भार्गवस्य च धीमतः। जातो दशरथस्यासीत् पुत्त्रो रामो महात्मनः ॥ ४१ ॥ विष्णुः स्वेन शरीरेण रावणस्य वधाय वै। पश्यामस्तमयोध्यायां जातं दाशरथिं ततः ॥ ४२ ॥ ऋचीकनन्दनो रामो भार्गवो रेणुकासुतः। तस्य दाशरथेः श्रुत्वा रामस्याक्लिष्टकर्म्मणः ॥ ४३ ॥ कौतूहलान्वितो रामस्त्वयोध्यामगमत् पुनः। धनुरादाय तद्दिव्यं क्षत्त्रियाणां निवर्हणम् ॥ ४४ ॥ जिज्ञासमानो रामस्य वीर्य्यं दाशरथेस्तदा। तं वै दशरथः श्रुत्वा विषयान्तमुपागतम् ॥ ४५ ॥ प्रेषयामास रामस्य रामं पुत्त्रं पुरस्कृतम्। स तमभ्यागतं दृष्ट्वा उद्यतास्त्रमवस्थितम् ॥ ४६ ॥ प्रहसन्निव कौन्तेय रामो वचनमब्रवीत्। कृतकालं हि राजेन्द्र धनुरेतन्मया विभो ॥ ४७ ॥ समारोपय यत्नेन यदि शक्तोऽसि पार्थिव। इत्युक्तस्त्वाह भगवंस्त्वन्नाधिक्षेप्तुमर्हसि ॥ ४८ ॥ नाहमप्यधमो धर्म्मे क्षत्त्रियाणां द्विजातिषु। इक्ष्वाकूणां विशेषेण बाहुवीर्य्येण कत्थनम् ॥ ४९ ॥ तमेवं वादिनं तत्र रामो वचनमब्रवीत्। अलं वै व्यपदेशेन धनुरायच्छ राघव ॥ ५० ॥ ततो जग्राह रोषेण क्षत्त्रियर्षभसूदनम्। रामो दाशरथिर्दिव्यं हस्ताद्रामस्य कार्म्मुकम् ॥ ५१ ॥ धनुरारोपयामास सलील इव भारत। ज्याशब्दमकरोच्चैव स्मयमानः स वीर्य्यवान् ॥ ५२ ॥ तस्य शब्दस्य भूतानि वित्रसन्त्यशनेरिव। अथाब्रवीत्तदा रामो रामं दाशरथिस्तदा ॥ ५३ ॥ इदमारोपितं ब्रह्मन् किमन्यत् करवाणि ते। तस्य रामो ददौ दिव्यं जामदग्न्यो महात्मनः। शरमाकर्णदेशान्तमयमाकृष्यतामिति ॥ ५४ ॥

लोमश उवाच। एतच्छ्रुत्वाब्रवीद्रामः प्रदीप्त इव मन्युना।

श्रूयते ह्ययते चैव दर्पपूर्णोऽसि भार्गव। त्वया ह्यधिगतं तेजः क्षत्रियेभ्यो विशेषतः ॥ ५५ ॥ पितामहप्रसादेन तेन मां क्षिपसि ध्रुवम्। पश्य मां स्वेन रूपेण चक्षुस्ते वितराम्यहम् ॥ ५६ ॥ ततो रामशरीरे वै रामः पश्यति भार्गवः। आदित्यान् सवसून् रुद्रान् साध्यांश्च समरुद्गणान् ॥ ५७ ॥ पितरो हुताशनश्च नक्षत्राणि ग्रहास्तथा। गन्धर्व्वा राक्षसा यक्षा नद्यस्तीर्थानि यानि च ॥ ५८ ॥ ऋषयो वालिखिल्याश्च ब्रह्मभूताः सनातनाः देवर्षयश्च कार्त्स्न्येन समुद्राः पर्व्वतास्तथा ॥ ५९ ॥ वेदाश्च सोपनिषदो वषट्कारैः सहाध्वरैः। चेतोमन्ति च सामानि धनुर्वेदश्च भारत ॥ ६० ॥ मेघवृन्दानि वर्षाणि विद्युतश्च युधिष्ठिर। ततः स भगवान् विष्णुस्तं वै वाणं मुमोच ह ॥ ६१ ॥ शुष्काशनिसमाकीर्णं महोल्काभिश्च भारत। पांशुवर्षेण महता मेघवर्षैश्च भूतलम् ॥ ६२ ॥ भूमिकम्पैश्च निर्घातैर्नादैश्च विपुलैरपि। स रामं विह्वलं कृत्वा तेजश्चाक्षिप्य केवलम् ॥ ६३ ॥ आगच्छज्ज्वलितो वाणो रामवाहुप्रचोदितः। स तु विह्वलतां गत्वा प्रतिलभ्य च चेतनाम् ॥ ६४ ॥ रामः प्रत्यागतप्राणः प्राणमद्विष्णुतेजसम्। विष्णुना सोऽभ्यनुज्ञातो महेन्द्रमगमत् पुनः ॥ ६५ ॥ भीतस्तु तत्र न्यवसत् व्रीड़ितस्तु महातपाः। ततः संवत्सरेऽतीते हृतौजसमवस्थितम्। निर्मदं दुःखितं दृष्ट्वा पितरो राममब्रुवन् ॥ ६६ ॥

पितर ऊचुः। न वै सम्यगिदं पुत्त्र विष्णुमासाद्य वै कृतम्। स हि पूज्यश्च मान्यश्च त्रिषु लोकेषु सर्व्वदा ॥ ६७ ॥ गच्छ पुत्त्र नदीं पुण्यां वधूसरकृताह्वयाम्। तत्रोपस्पृश्य तीर्थेषु पुनर्वपुरवाप्स्यसि ॥ ६८ ॥ दीप्तोदं नाम तत्तीर्थं यत्र ते प्रपितामहः। भृगुर्देवयुगे राम तप्तवानुत्तमं तपः ॥ ६९ ॥ तत्तथा कृतवान्नामः कौन्तेय वचनात् पितुः। प्राप्तवांश्च पुनस्तेजस्तीर्थेऽस्मिन् पाण्डु-

नन्दन ॥ ७० ॥ एतदीदृशकं तात रामेणाक्लिष्टकर्मणा। प्राप्त-
मासीन्महाराज विष्णुमासाद्य वै पुरा ॥ ७१ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि जामदग्न्यतेजोहानि-
कथने एकोनशततमोऽध्यायः ॥ ९९ ॥

---

युधिष्ठिर उवाच। भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः।
कर्मणां विस्तरं श्रोतुमगस्त्यस्य द्विजोत्तम ॥ १ ॥

लोमश उवाच। शृणु राजन् कथां दिव्यामद्भुतामति-
मानुषीम्। अगस्त्यस्य महाराज प्रभावममितौजसः ॥ २ ॥ आसन्
कृतयुगे घोरा दानवा युद्धदुर्मदाः। कालकेया इति ख्याता गणाः
परमदारुणाः ॥ ३ ॥ ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः।
समन्तात् पर्य्यधावन्त महेन्द्रप्रमुखान् सुरान् ॥ ४ ॥ ततो वृत्र-
वधे यत्नमकुर्वंस्त्रिदशाः पुरा। पुरन्दरं पुरस्कृत्य ब्रह्माणमुप-
तस्थिरे ॥ ५ ॥ कृताञ्जलींस्तु तान् सर्वान् परमेष्ठीत्युवाच ह।
विदितं मे सुराः सर्वं यद्वः कार्य्यं चिकीर्षितम् ॥ ६ ॥ तमुपायं
प्रवक्ष्यामि यथा वृत्रं वधिष्यथ। दधीच इति विख्यातो महा-
नृषिरुदारधीः ॥ ७ ॥ तं गत्वा सहिताः सर्वे वरं वै सम्प्रयाचत।
स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना ॥ ८ ॥ स वाच्यः
सहितैः सर्वैर्भवद्भिर्जयकाङ्क्षिभिः। स्वान्यस्थीनि प्रयच्छेति त्रै-
लोक्यस्य हिताय वै ॥ ९ ॥ स शरीरं समुत्सृज्य स्वान्यस्थीनि
प्रदास्यति। तस्यास्थिभिर्महाघोरं वज्रं संक्रियतां दृढम् ॥ १० ॥
महच्छत्रुहनं घोरं षड्स्रि भीमनिस्वनम्। तेन वज्रेण वै वृत्रं
वधिष्यति शतक्रतुः ॥ ११ ॥ एतद्वः सर्वमाख्यातं तस्माच्छीघ्रं
विधीयताम्। एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम् ॥ १२ ॥
नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः। सरस्वत्याः परे पारे

नानाद्रुमलतावृतम् ॥ १३ ॥ षट्पदाद्गीतनिनदैर्विघुष्टं सामगैरिव । पुंस्कोकिलस्वनोन्मिश्रं जीवं जीवकनादितम् ॥ १४ ॥ महिषैश्च वराहैश्च सृमरैश्चमरैरपि । तत्र तत्रानुचरितं शार्दूलभयवर्जितैः ॥ १५ ॥ करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः । सरोऽवगाढैः क्रीड़द्भिः समन्तादनुनादितम् ॥ १६ ॥ सिंहैर्व्याघ्रैर्महानादन्नदद्भिरनुनादितम् । अपरैश्चापि संलीनैर्गुहाकन्दरशायिभिः ॥ १७ ॥ तेषु तेष्ववकाशेषु शोभितं सुमनोरमम् । त्रिपिष्टपसमप्रख्यं दधीचाश्रममागमन् ॥ १८ ॥ तत्रापश्यन् दधीचन्ते दिवाकरसमद्युतिम् । जाज्वल्यमानं वपुषा यथा लक्ष्म्या पितामहम् ॥ १९ ॥ तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च । अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना ॥ २० ॥ ततो दधीचः परमः प्रतीतः सुरोत्तमांस्तानिदमभ्युवाच । करोमि यद्वो हितमद्य देवाः स्वञ्चापि देहं स्वयमुत्सृजामि ॥ २१ ॥ स एवमुक्त्वा द्विपदां वरिष्ठः प्राणान् वशी स्वान् सहसोत्ससर्ज । ततः सुरास्ते जगृहुः परासोरस्थीनि तस्याथ यथोपदेशम् ॥ २२ ॥ प्रहृष्टरूपाश्च जयाय देवास्त्वष्टारमागम्य तमर्थमूचुः । त्वष्टा तु तेषां वचनं निशम्य प्रहृष्टरूपः प्रयतः प्रयत्नात् ॥ २३ ॥ चकार वज्रं भृशमुग्ररूपं कृत्वा च शक्रं स उवाच हृष्टः । अनेन वज्रप्रवरेण देव भस्मीकुरुष्वाद्य सुरारिमुग्रम् ॥ २४ ॥ ततो हतारिः सगणः सुखं वै प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः । त्वष्ट्रा तथोक्तस्तु पुरन्दरस्तद्वज्रं प्रहृष्टः प्रयतो ह्यगृह्णात् ॥ २५ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि वज्रनिर्माणकथने शतोऽध्यायः ॥ १०० ॥

---

लोमश उवाच । ततः स वज्री बलिभिर्दैवतैरभिरक्षितः ।
आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥ १ ॥ कालकेयैर्महा-
कायैः समन्तादभिरक्षितम् । समुद्यतप्रहरणैः सशृङ्गैरिव पर्वतैः
॥ २ ॥ ततो युद्धं समभवद्देवानां दानवैः सह । मुहूर्तं भरत-
श्रेष्ठ लोकत्रासकरं महत् ॥ ३ ॥ उद्यतप्रतिपिष्टानां खड्गानां
वीरबाहुभिः । आसीत् सुतुमुलः शब्दः शरीरेष्वभिपात्यताम् ॥ ४ ॥
शिरोभिः प्रपतद्भिश्चाप्यन्तरीक्षान्महीतलम् । तालैरिव महाराज
वृन्ताद्भ्रष्टैरदृश्यत ॥ ५ ॥ ते हेमकवचा भूत्वा कालेयाः परिघा-
युधाः । त्रिदशानभ्यवर्षन्त दावदग्धा इवाद्रयः ॥ ६ ॥ तेषां वेग-
वतां वेगं साभिमानं प्रधावताम् । न शेकुस्त्रिदशाः सोढुं ते
भग्नाः प्राद्रवन् भयात् ॥ ७ ॥ तान् दृष्ट्वा द्रवतो भीतान् सह-
स्राक्षः पुरन्दरः । वृत्रे विवर्द्धमाने च कश्मलं महदाविशत् ॥ ८ ॥
कालेन भयसन्त्रस्तो देवः साक्षात् पुरन्दरः । जगाम शरणं शीघ्रं
तन्तु नारायणं प्रभुम् ॥ ९ ॥ तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णु-
सनातनः । स्वतेजो व्यदधच्छक्रे बलमस्य विवर्द्धयन् ॥ १० ॥
विष्णुना गोपितं शक्रं दृष्ट्वा देवगणास्ततः । सर्वे तेजः समा-
दध्युस्तथा ब्रह्मर्षयोऽमलाः ॥ ११ ॥ स समाप्यायितः शक्रो
विष्णुना दैवतैः सह । ऋषिभिश्च महाभागैर्बलवान् समपद्यत
॥ १२ ॥ ज्ञात्वा बलस्थं त्रिदशाधिपन्तु ननाद वृत्रो महतो निना-
दान् । तस्य प्रणादेन धरा दिशश्च खं द्यौर्नगाश्चापि चचाल
सर्वम् ॥ १३ ॥ ततो महेन्द्रः परमाभितप्तः श्रुत्वा रवं घोररूपं
महान्तम् । भये निमग्नस्त्वरितो मुमोच वज्रं महत्तस्य वधाय
राजन् ॥ १४ ॥ स शक्रवज्राभिहतः पपात महासुरः काञ्चन-
माल्यधारी । यथा महाशैलवरः पुरस्तात् स मन्दरो विष्णुकरा-
द्विमुक्तः ॥ १५ ॥ तस्मिन् हते दैत्यवरे भयार्त्तः शक्रः प्रदुद्राव
सरः प्रवेष्टुम् । वज्रं स मेने न कराद्विमुक्तं वृत्रं भयाच्चापि हतं

न मेने ॥ १६ ॥ सर्व्वे च देवा मुदिताः प्रहृष्टा महर्षयश्चेन्द्रमभि-
ष्टुवन्तः । सर्व्वांश्च दैत्यांस्त्वरिताः समेत्य जघ्नुः सुरा वृत्रवधाभि-
तप्तम् ॥ १७ ॥ तैस्त्रास्यमानांस्त्रिदशैः समेतैः समुद्रमेवाविविशु-
र्महार्त्ताः । प्रविश्य चैवोदधिमप्रमेयं भयाकुलं नक्रसमाकुलञ्च
॥ १८ ॥ तदा स्म मन्त्रं सहिताः प्रचक्रुस्त्रैलोक्यनाशार्थमभि-
स्मयन्तः । तत्र स्म केचिन्मतिनिश्चयज्ञास्तांस्तानुपायाननुवर्णयन्ति
॥ १९ ॥ तेषान्तु तत्र क्रमकालयोगाद्घोरा मतिश्चिन्तयतां बभूव ।
ये सन्ति विद्यातपसोपपन्नास्तेषां विनाशः प्रथमन्तु कार्य्यः ॥ २० ॥
लोका हि सर्व्वे तपसा ध्रियन्ते तस्मात्त्वरध्वं तपसः क्षयाय । ये
सन्ति केचिच्च वसुन्धरायां तपस्विनो धर्म्मविदश्च तज्ज्ञाः ॥ २१ ॥
तेषां वधः क्रियतां क्षिप्रमेव तेषु प्रनष्टेषु जगत् प्रनष्टम् । एवं
हि सर्व्वे गतबुद्धिभावा जगद्विनाशे परमप्रहृष्टाः । दुर्गं समा-
श्रित्य महोर्म्मिमन्तं रत्नाकरं वरुणस्यालयं स्म ॥ २२ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि वृत्रवधोपाख्याने
एकाधिकशततोऽध्यायः ॥ ९५ ॥

---

लोमश उवाच । समुद्रन्ते समाश्रित्य वारुणं निधिमम्भसः ।
कालेयाः सम्प्रवर्त्तन्त त्रैलोक्यस्य विनाशने ॥ १ ॥ ते रात्रौ सम-
भिक्रुद्धा भक्षयन्ति सदा मुनीन् । आश्रमेषु च ये सन्ति पुण्ये-
ष्वायतनेषु च ॥ २ ॥ वशिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः ।
अशीति शतमष्टौ च नव चान्ये तपस्विनः ॥ ३ ॥ च्यवनस्याश्रमं
गत्वा पुण्यं द्विजनिषेवितम् । फलमूलाशनानां हि मुनीनां
भक्षितं शतम् ॥ ४ ॥ एवं रात्रौ स्म कुर्व्वन्ति विविशुश्चार्णवं दिवा ।
भरद्वाजाश्रमे चैव नियतब्रह्मचारिणः ॥ ५ ॥ वाय्वाहाराम्बु-
भक्षाश्च विंशतिः संनिसूदिताः । एवं क्रमेण सर्व्वांस्तानाश्रमा-

दानवास्तदा ॥ ६ ॥ निशायां परिबाधन्ते मत्ता भुजबलाश्रयात् ।
कालोपसृष्टाः कालेया घ्नन्तो द्विजगणान् बहून् ॥ ७ ॥ न चैना-
नन्वबुध्यन्त मनुजा मनुजोत्तम । एवं प्रवृत्तान् दैत्यांस्तांस्तापसेषु
तपस्विषु ॥ ८ ॥ प्रभाते समदृश्यन्त नियमाहारकर्षिताः । महीत-
तलस्था मुनयः शरीरैर्गतजीवितैः ॥ ९ ॥ क्षीणमांसैर्विरुधिरै-
र्विमज्जान्त्रैर्विसन्धिभिः । आकीर्णैराबभौ भूमिः शङ्खानामिव
राशिभिः ॥ १० ॥ कलशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च । विकीर्णै-
रग्निहोत्रैश्च भूर्बभूव समावृता ॥ ११ ॥ निःस्वाध्यायवषट्कारं
नष्टयज्ञोत्सवक्रियम् । जगदासीन्निरुत्साहं कालेयभयपीडितम्
॥ १२ ॥ एवं संक्षीयमाणाश्च मानवा मनुजेश्वर । आत्मत्राणपरा
भीताः प्राद्रवन्त दिशो भयात् ॥ १३ ॥ केचिद्गुहाः प्रविविशु-
र्निर्झरांश्चापरे तथा । अपरे मरणोद्विग्ना भयात् प्राणान्
समुत्सृजन् ॥ १५ ॥ केचिदत्र महेष्वासाः शूराः परमदर्पिताः ।
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे ॥ १५ ॥ न चैता-
नधिजग्मुस्ते समुद्रं समुपाश्रितान् । श्रमं जग्मुश्च परममाजग्मुः
क्षयमेव च ॥ १६ ॥ जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये ।
आजग्मुः परमामार्त्तिं त्रिदशा मनुजेश्वर ॥ १७ ॥ समेत्य स-
महेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे । शरण्यं शरणं देवं नारायण-
मजं विभुम् ॥ १८ ॥ तेऽभिगम्य नमस्कृत्य वैकुण्ठमपराजितम् ।
ततो देवाः समस्तास्ते तदोचुर्मधुसूदनम् ॥ १९ ॥ त्वं नः स्रष्टा
च कर्त्ता च हर्त्ता च जगतः प्रभो । त्वया सृष्टमिदं विश्वं यच्चेङ्गं
यच्च नेङ्गति ॥ २० ॥ त्वया भूमिः पुरा नष्टा समुद्रात् पुष्करे-
क्षण । वाराहं वपुराश्रित्य जगदर्थे समुद्धृता ॥ २१ ॥ आदिदैत्यो
महावीर्यो हिरण्यकशिपुः पुरा । नारसिंहं वपुः कृत्वा सूदितः
पुरुषोत्तम ॥ २२ ॥ अवध्यः सर्वभूतानां बलिश्चापि महासुरः ।
वामनं वपुराश्रित्य त्रैलोक्याद्भ्रंशितस्त्वया ॥ २३ ॥ असुरश्च

महेष्वासो जम्भ इत्यभिविश्रुतः। यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः ॥ २४ ॥ एवमादीनि कर्माणि येषां संख्या न विद्यते। अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ॥ २५ ॥ तस्मात्त्वां देवदेवेश लोकार्थं ज्ञापयामहे। रक्ष लोकांश्च देवांश्च शक्रञ्च महतो भयात् ॥ २६ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि विष्णुस्तवे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

देवा ऊचुः। तव प्रसादाद्वर्द्धन्ते प्रजाः सर्व्वाश्चतुर्व्विधाः। ता भाविता भावयन्ति हव्यकव्यैर्दिवौकसः ॥ १ ॥ लोका ह्येवं विवर्द्धन्ते ह्यन्योन्यं समुपाश्रिताः। त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः ॥ २ ॥ इदञ्च समनुप्राप्तं लोकानां भयमुत्तमम्। न च जानीम केनेमे रात्रौ वध्यन्ति ब्राह्मणाः ॥ ३ ॥ क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति। ततः पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति ॥ ४ ॥ त्वत्प्रसादान्महाबाहो लोकाः सर्व्वे जगत्पते। विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ॥ ५ ॥

विष्णुरुवाच। विदितं मे सुराः सर्व्वं प्रजानां क्षयकारणम्। भवताञ्चापि वक्ष्यामि शृणुध्वं विगतज्वराः ॥ ६ ॥ कालेय इति विख्यातो गणः परमदारुणः। तैश्च वृत्रं समाश्रित्य जगत् सर्व्वं प्रमाथितम् ॥ ७ ॥ ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता। जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ॥ ८ ॥ ते प्रविश्योदधिं घोरं नक्रग्राहसमाकुलम्। उत्सादनार्थं लोकानां रात्रौ घ्नन्ति ऋषीनिह ॥ ९ ॥ न तु शक्याः क्षयं नेतुं समुद्राश्रयगा हि ते। समुद्रस्य क्षये बुद्धिर्भवद्भिः सम्प्रधार्य्यताम् ॥ १० ॥ अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोषणे। अन्यथा हि न शक्यास्ते

विना सागरशोषणम् ॥ ११ ॥ एतच्छ्रुत्वा तदा देवा विष्णुना समुदाहृतम् । परमेष्ठिनमाज्ञाप्य अगस्त्यस्याश्रमं ययुः ॥ १२ ॥ तत्रापश्यन्महात्मानं वारुणिं दीप्ततेजसम् । उपास्यमानमृषिभि-र्देवैरिव पितामहम् ॥ १३ ॥ तेऽभिगम्य महात्मानं मैत्रावरुणि-मच्युतम् । आश्रमस्थं तपोराशिं कर्मभिः स्वैरभिष्टुवन् ॥ १४ ॥

देवा ऊचुः । नहुषेनाभितप्तानां त्वं लोकानां गतिः पुरा । भ्रंशितश्च सुरैश्वर्य्यात् स्वर्लोकाल्लोककण्टकः ॥ १५ ॥ क्रोधात् प्रवृद्धः सहसा भास्करस्य नगोत्तमः । वचस्तवानतिक्रामन् विन्ध्यः शैलो न वर्द्धते ॥ १६ ॥ तमसा चावृते लोके मृत्युनाभ्यर्द्दिताः प्रजाः । त्वामेव नाथमासाद्य निर्वृतिं परमाङ्गताः ॥ १७ ॥ अस्माकं भयभीतानां नित्यशो भगवान् गतिः । ततस्त्वार्त्ताः प्रयाचामो वरं त्वां वरदो ह्यसि ॥ १८ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि अगस्त्यमाहात्म्यकथने त्र्यधिकशततोऽध्यायः ॥ १०३ ॥

---

युधिष्ठिर उवाच । किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्च्छितः । एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने ॥ १ ॥

लोमश उवाच । अद्रिराजं महाशैलं मेरुं कनकपर्वतम् । उदयास्तमने भानुः प्रदक्षिणमवर्त्तत ॥२॥ तन्तु दृष्ट्वा तथा विन्ध्यः शैलः सूर्य्यमथाब्रवीत् । यथा हि मेरुर्भवता नित्यशः परि-गम्यते ॥ ३ ॥ प्रदक्षिणश्च क्रियते मामेवं कुरु भास्कर । एवमुक्त-स्ततः सूर्य्यः शैलेन्द्रं प्रत्यभाषत ॥ ४ ॥ नाहमात्मेच्छया शैल करोम्येनं प्रदक्षिणम् । एष मार्गः प्रदिष्टो मे यैरिदं निर्मितं जगत् ॥ ५ ॥ एवमुक्तस्ततः क्रोधात् प्रवृद्धः सहसाचलः । सूर्य्या-चन्द्रमसोर्मार्गं रोद्धुमिच्छन् परन्तप ॥ ६ ॥ ततो देवाः सहिताः

सर्वं एव विन्ध्यं समागम्य महाद्रिराजम्। निवारयामासुरुपाय-
तस्तं न च स्म तेषां वचनञ्चकार ॥ ७ ॥ अथाभिजग्मुर्मुनिमाश्र-
मस्थं तपस्विनं धर्मभृताम्वरिष्ठम्। अगस्त्यमत्यद्भुतवीर्य्यवन्तं
तञ्चार्थमूचुः सहिताः सुरास्ते ॥ ८ ॥

देवा ऊचुः। सूर्य्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिस्तथा।
शैलराजो वृणोत्येष विन्ध्यः क्रोधवशानुगः ॥ ९ ॥ तं निवारयितुं
शक्तो नान्यः कश्चिद्द्विजोत्तम। ऋते त्वां हि महाभाग तस्मादेनं
निवारय ॥ १० ॥ तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमभ्यगात्।
सोऽभिगम्याब्रवीद्विन्ध्यं सदारः समुपस्थितम् ॥ ११ ॥ मार्ग-
मिच्छाम्यहं दत्तं भवता पर्वतोत्तम। दक्षिणामभिगन्तास्मि
दिशं कार्य्येण केनचित् ॥ १२ ॥ यावदागमनं मह्यं तावत्त्वं
प्रतिपालय। निवृत्ते मयि शैलेन्द्र ततो वर्द्धस्व कामतः ॥ १३ ॥
एवं स समयं कृत्वा विन्ध्येनामित्रकर्षण। अद्यापि दक्षिणा-
द्देशाद्वारुणिर्न निवर्त्तते ॥ १४ ॥ एतत्ते सर्वमाख्यातं यथा
विन्ध्यो न वर्द्धते। अगस्त्यस्य प्रभावेन यन्मां त्वं परिपृच्छसि ॥१५॥
कालेयास्तु यथा राजन् सुरैः सर्वैर्निसूदिताः। अगस्त्याद्वर-
मासाद्य तन्मे निगदतः शृणु ॥ १६ ॥ त्रिदशानां वचः श्रुत्वा
मैत्रावरुणिरब्रवीत्। किमर्थमभियाताः स्थ वरं मत्तः किमिच्छथ।
एवमुक्तास्ततस्तेन देवता मुनिमब्रुवन् ॥ १७ ॥ एवं त्वयेच्छाम
कृतं हि कार्य्यं महार्णवं पीयमानं महात्मन्। ततो वधिष्याम
सहानुबन्धान् कालेयसंज्ञान् सुरविद्विषस्तान् ॥ १८ ॥ त्रिदशानां
वचः श्रुत्वा तथेति मुनिरब्रवीत्। करिष्ये भवतां कामं लोका-
नाञ्च महत् सुखम् ॥ १९ ॥ एवमुक्त्वा ततोऽगच्छत् समुद्रं सरि-
ताम्पतिम्। ऋषिभिश्च तपःसिद्धैः सार्द्धं देवैश्च सुव्रत ॥ २० ॥
मनुष्योरगगन्धर्वयक्षकिम्पुरुषास्तथा। अनुजग्मुर्महात्मानं द्रष्टु-
कामास्तदद्भुतम् ॥ २१ ॥ ततोऽभ्यगच्छन् सहिताः समुद्रं भीम-

निःस्वनम्। नृत्यन्तमिव चोर्मीभिर्वल्गन्तमिव वायुना ॥ २२ ॥
हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च। नानाग्राहसमाकीर्णं
नानाद्विजगणान्वितम् ॥ २३ ॥ अगस्त्यसहिता देवाः सगन्धर्व-
महोरगाः। ऋषयश्च महाभागाः समासेदुर्महोदधिम् ॥ २४ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि अगस्त्यमाहात्म्यकथने
चतुरधिकशततोऽध्यायः ॥ १०४ ॥

---

लोमश उवाच। समुद्रं स समासाद्य वारुणिर्भगवानृषिः।
उवाच सहितान् देवानृषींश्चैव समागतान् ॥ १ ॥ अहं लोक-
हितार्थं वै पिबामि वरुणालयम्। भवद्भिर्यदनुष्ठेयं तच्छीघ्रं
संविधीयताम् ॥ २ ॥ एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः।
समुद्रमपिबत् क्रुद्धः सर्वलोकस्य पश्यतः ॥ ३ ॥ पीयमानं समु-
द्रन्तु दृष्ट्वा सेन्द्रास्तदामराः। विस्मयं परमं जग्मुः स्तुतिभिश्चाप्य-
पूजयन् ॥ ४ ॥ त्वं नस्त्राता विधाता च लोकानां लोकभावन।
त्वत्प्रसादात् समुच्छेदं न गच्छेत् सामरं जगत् ॥ ५ ॥ स
पूज्यमानस्त्रिदशैर्महात्मा गन्धर्वतूर्य्येषु नदत्सु सर्वशः। दिव्यैश्च
पुष्पैरवकीर्य्यमाणो महार्णवं निःसलिलञ्चकार ॥ ६ ॥ दृष्ट्वा
कृतं निःसलिलं महार्णवं सुराः समस्ताः परमप्रहृष्टाः। प्रगृह्य
दिव्यानि वरायुधानि तान् दानवान् जघ्नुरदीनसत्त्वाः ॥ ७ ॥ ते
बध्यमानास्त्रिदशैर्महात्मभिर्महाबलैर्वेगिभिरुन्नदद्भिः। न सेहिरे
वेगवतां महात्मनां वेगं तदा धारयितुं दिवौकसाम् ॥ ८ ॥ ते
बध्यमानास्त्रिदशैर्दानवा भीमनिस्वनाः। चक्रुः सुतुमुलं युद्धं
मुहूर्त्तमिव भारत ॥ ९ ॥ ते पूर्वं तपसा दग्धा मुनिभिर्भावि-
तात्मभिः। यतमानाः परं शक्त्या त्रिदशैर्विनिसूदिताः ॥ १० ॥
ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः। निहता बह्वशोभन्त

पुष्पिता इव किंशुकाः ॥ ११ ॥ हतशेषास्ततः केचित् कालेया मनुजोत्तम । विदार्य्य वसुधां देवीं पातालतलमाश्रिताः ॥१२॥ निहतान् दानवान् दृष्ट्वा त्रिदशा मुनिपुङ्गवम् । तुष्टुवुर्विविधै-र्वाक्यैरिदं वचनमब्रुवन् ॥ १३ ॥ त्वत्प्रसादान्महाबाहो लोकैः प्राप्तं महत् सुखम् । त्वत्तेजसा च निहताः कालेयाः क्रूर-विक्रमाः ॥ १४ ॥ पूरयस्व महाबाहो समुद्रं लोकभावन । यत्त्वया सलिलं पीतं तदस्मिन् पुनरुत्सृज ॥ १५ ॥ एवमुक्तः प्रत्युवाच भगवान् मुनिपुङ्गवः । जीर्णं तद्धि मया तोयमुपा-योऽन्यः प्रचिन्त्यताम् ॥ १६ ॥ पूरणार्थं समुद्रस्य भवद्भिर्यत्न-मास्थितैः । एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः ॥ १७ ॥ विस्मिताश्च विषण्णाश्च बभूवुः सहिता सुराः । परस्परमनुज्ञाप्य प्रणम्य मुनिपुङ्गवम् ॥ १८ ॥ प्रजाः सर्वा महाराज विप्रजग्मु-र्यथागतम् । त्रिदशा विष्णुना सार्द्धमुपजग्मुः पितामहम् ॥१९॥ पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः । ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् ॥ २० ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि समुद्रपूरणमन्त्रणे पञ्चाधिकशततोऽध्यायः ॥ १०५ ॥

---

लोमश उवाच । तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः । गच्छध्वं विबुधाः सर्वे यथाकामं यथेप्सितम् ॥ १ ॥ महता काल-योगेन प्रकृतिं यास्यतेऽर्णवः । ज्ञातीन् वै कारणं कृत्वा महा-राज्ञो भगीरथात् ॥ २ ॥ पितामहवचः श्रुत्वा सर्वे विबुधसत्तमाः । कालयोगं प्रतीक्षन्तो जग्मुश्चापि यथागतम् ॥ ३ ॥

युधिष्ठिर उवाच । कथं वै ज्ञातयो ब्रह्मन् कारणञ्चात्र किं मुने । कथं समुद्रः पूर्णश्च भगीरथप्रतिश्रयात् ॥ ४ ॥ एत-

दिच्छाम्यहं श्रोतुं विस्तरेण तपोधन। कथ्यमानं त्वया विप्र राज्ञश्चरितमुत्तमम् ॥ ५ ॥

वैशम्पायन उवाच। एवमुक्तस्तु विप्रेन्द्रो धर्मराज्ञा महात्मना। कथयामास माहात्म्यं सगरस्य महात्मनः ॥ ६ ॥

लोमश उवाच। इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः। रूपसत्त्वबलोपेतः स चापुत्रः प्रतापवान् ॥ ७ ॥ स हैहयान् समुत्साद्य तालजङ्घांश्च भारत। वशे च कृत्वा राजन्यान् स्वराज्यमन्वशासत ॥ ८ ॥ तस्य भार्य्ये त्वभवतां रूपयौवनदर्पिते। वैदर्भी भरतश्रेष्ठ शैब्या च भरतर्षभ ॥ ९ ॥ स पुत्रकामो नृपतिस्तताप सुमहत्तपः। पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥ १० ॥ स तप्यमानः सुमहत्तपोयोगसमन्वितः। आससाद महात्मानं त्र्यक्षं त्रिपुरमर्द्दनम् ॥ ११ ॥ शङ्करं भवमीशानं पिनाकिं शूलपाणिनम्। त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम् ॥ १२ ॥ स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः। प्रणिपत्य महाबाहुः पुत्रार्थं समयाचत ॥ १३ ॥ तं प्रीतिमान् हरः प्राह सभार्य्यं नृपसत्तमम्। यस्मिन् वृतो मुहूर्त्तेऽहं त्वयेह नृपते वरम् ॥ १४ ॥ षष्टिः पुत्रसहस्राणि शूराः परमदर्पिताः। एकस्यां सम्भविष्यन्ति पत्न्यां नरवरोत्तम ॥ १५ ॥ ते चैव सर्व्वे सहिताः क्षयं यास्यन्ति पार्थिव। एको वंशधरः शूरः एकस्यां सम्भविष्यति ॥ १६ ॥ एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत। स चापि सगरो राजा जगाम स्वं निवेशनम् ॥ १७ ॥ पत्नीभ्यां सहितस्तत्र सोऽतिहृष्टमनास्तदा। तस्य ते मनुजश्रेष्ठ भार्य्ये कमललोचने ॥ १८ ॥ वैदर्भी चैव शैब्या च गर्भिण्यौ सम्बभूवतुः। ततः कालेन वैदर्भी गर्भालाबुं व्यजायत ॥ १९ ॥ शैब्या च सुषुवे पुत्रं कुमारं देवरूपिणम्। तदालाबुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ॥ २० ॥ अथान्तरीक्षाच्छुश्राव वाचं गम्भीरनिस्वनाम्। राजन् मा

साहसज्ञार्षीः पुत्रान् त्यक्तुमर्हसि ॥ २१ ॥ अलावुमध्यान्निष्कृष्य वीजं यत्नेन गोप्यताम् । स्वोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ॥ २२ ॥ ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि भारत । महादेवेन दिष्टं ते पुत्रजन्म नराधिप । अनेन क्रमयोगेन मा ते वुद्धिरतोऽन्यथा ॥ २३ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सगरसन्ततिकथने षड़धिकशतोऽध्यायः ॥ १०६ ॥

---

लोमश उवाच । एतच्छ्रुत्वान्तरीचाच्च स राजा राजसत्तम । यथोक्तं तच्चकाराथ श्रद्दधद्भरतर्षभ ॥ १ ॥ एकैकशस्ततः कृत्वा वीजं वीजं नराधिपः । घृतपूर्णेषु कुम्भेषु तान् भागान् विदधे ततः ॥ २ ॥ धात्रीश्चैकैकशः प्रादात् पुत्ररक्षणतत्परः । ततः कालेन महता समुत्तस्थुर्महावलाः ॥ ३ ॥ षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः । रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव ॥४॥ ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः । बहुत्वाच्चावजानन्तः सर्वान् लोकान् सहामरान् ॥ ५ ॥ त्रिदशांश्चाप्यधावन्त तथा गन्धर्वराक्षसान् । सर्वाणि चैव भूतानि शूराः समरशालिनः ॥ ६ ॥ वाध्यमानास्ततो लोकाः सागरैर्मन्दवुद्धिभिः । ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ॥ ७ ॥ तानुवाच महाभागः सर्वलोकपितामहः । गच्छध्वं त्रिदशाः सर्वे लोकैः सार्द्धं यथागतम् ॥ ८ ॥ नातिदीर्घेण कालेन सागराणां क्षयो महान् । भविष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ॥ ९ ॥ एवमुक्तास्तु ते देवा लोकाश्च मनुजेश्वर । पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ॥ १० ॥ ततः काले वहुतिथे व्यतीते भरतर्षभ । दीक्षितः सगरो राजा हयमेधेन वीर्य्यवान् ॥ ११ ॥ तस्याश्वो व्यचरद्भूमिं

पुत्रैः सुपरिरक्षितः। समुद्रं स समासाद्य निस्तोयं भीमदर्श-
नम् ॥ १२ ॥ रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत। ततस्ते
सागरास्तात हृतं मत्वा हयोत्तमम् ॥ १३ ॥ आगम्य पितु-
राचख्युरदृश्यं तुरगं हृतम्। तेनोक्ता दिक्षु सर्वासु सर्वे मार्गत
वाजिनम् ॥ १४ ॥ ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम्।
अमार्गन्त महाराज सर्वञ्च पृथिवीतलम् ॥ १५ ॥ ततस्ते सागराः
सर्वे समुपेत्य परस्परम्। नाध्यगच्छन्त तुरगमश्वहर्त्तारमेव च
॥ १६ ॥ आगम्य पितरञ्चोचुस्ततः प्राञ्जलयोऽग्रतः। ससमुद्र-
वनद्वीपा सनदीनदकन्दरा ॥ १७ ॥ सपर्वतवनोद्देशा निखिलेन
मही नृप। अस्माभिर्विचिता राजन् शासनात्तव पार्थिव ॥१८॥
न चाश्वमधिगच्छामो नाश्वहर्त्तारमेव च। श्रुत्वा तु वचनं
तेषां स राजा क्रोधमूर्च्छितः ॥ १९ ॥ उवाच वचनं सर्वांस्तदा
दैववशान्नृप। अनागमाय गच्छध्वं भूयो मार्गत वाजिनम् ॥२०॥
यज्ञीयं तं विना ह्यश्वं नागन्तव्यं हि पुत्रकाः। प्रतिगृह्य तु
सन्देशं पितुस्ते सगरात्मजाः ॥ २१ ॥ भूय एव महीं कृत्स्नां
विचेतुमुपचक्रमुः। अथापश्यन्त ते वीराः पृथिवीमवदारिताम्
॥ २२ ॥ समासाद्य बिलं तच्चाप्यखनन् सगरात्मजाः। कुद्दालै-
र्ह्रेषुकैश्चैव समुद्रं यत्नमाश्रिताः ॥ २३ ॥ स खन्यमानः सहितैः
सागरैर्वरुणालयः। अगच्छत् परमामार्त्तिं दीर्य्यमाणः सम-
न्ततः ॥ २३ ॥ असुरोरगरक्षांसि सत्त्वानि विविधानि च। आर्त्त-
नादमकुर्वन्त वध्यमानानि सागरैः ॥ २५ ॥ छिन्नशीर्षा विदे-
हाश्च भिन्नत्वगस्थिसन्धयः। प्राणिनः समदृश्यन्त शतशोऽथ
सहस्रशः ॥ २६ ॥ एवं हि खनतां तेषां समुद्रं वरुणालयम्।
व्यतीतः सुमहान् कालो न चाश्वः समदृश्यत ॥ २७ ॥ ततः
पूर्वोत्तरे देशे समुद्रस्य महीपते। विदार्य्य पातालमथ संक्रुद्धाः
सगरात्मजाः ॥ २८ ॥ अपश्यन्त हयं तत्र विचरन्तं महीतले।

कपिलञ्च महात्मानं तेजोराशिमनुत्तमम् ॥ २९ ॥ तेजसा दीप्य-
मानन्तु ज्वालाभिरिव पावकम्। ते तं दृष्ट्वा हयं राजन् संप्र-
हृष्टतनूरुहाः ॥ ३० ॥ अनादृत्य महात्मानं कपिलं कालचोदिताः।
संक्रुद्धाः समधावन्त अश्वग्रहणकाङ्क्षिणः ॥ ३१ ॥ ततः क्रुद्धो
महाराज कपिलो मुनिसत्तमः। वासुदेवेति यं प्राहुः कपिलं
मुनिपुङ्गवाः ॥ ३२ ॥ स चक्षुर्विकृतं कृत्वा तेजस्तेषु समुत्सृजन्।
ददाह सुमहातेजा मन्दबुद्धीन् स सागरान् ॥ ३३ ॥ तान् दृष्ट्वा
भस्मसाद्भूतान्नारदः सुमहातपाः। सगरान्तिकमागच्छत्तच्च तस्मै
न्यवेदयत् ॥३४॥ स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम।
मुहूर्त्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ॥ ३५ ॥ अंशुमन्तं
समाहूय असमञ्जःसुतं तदा। पौत्रं भरतशार्दूल इदं वचन-
मब्रवीत् ॥ ३६ ॥ षष्टिस्तानि सहस्राणि पुत्राणाममितौजसाम्।
कापिलं तेज आसाद्य मत्कृते निधनं गताः ॥ ३७ ॥ तव चापि
पिता तात परित्यक्तो मयानघ। धर्मं स्वं रक्षमाणेन पौराणां
हितमिच्छता ॥ ३८ ॥

युधिष्ठिर उवाच। किमर्थं राजशार्दूलः सगरः पुत्रमात्म-
जम्। त्यक्तवान् दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ॥ ३९ ॥

लोमश उवाच। असमञ्जा इति ख्यातः सगरस्य सुतो ह्यभूत्।
यं शैव्या जनयामास पौराणां स हि दारकान् ॥ ४० ॥ गलेषु
क्रोशतो गृह्य नद्यान्चिक्षेप दुर्बलान्। ततः पौराः समाजग्मु-
र्भयशोकपरिप्लुताः ॥ ४१ ॥ सगरञ्चाभ्ययाचन्त सर्वे प्राञ्जलयः
स्थिताः। त्वं नस्त्राता महाराज परचक्रादिभिर्भयात् ॥ ४२ ॥
असमञ्जोभयाद्घोरात्ततो नस्त्रातुमर्हसि। पौराणां वचनं श्रुत्वा
घोरं नृपतिसत्तमः ॥ ४३ ॥ मुहूर्त्तं विमना भूत्वा सचिवानिद-
मब्रवीत्। असमञ्जाः पुरादद्य सुतो मे विप्रवास्यताम् ॥ ४४ ॥
यदि वो मत्प्रियं कार्य्यमेतच्छीघ्रं विधीयताम्। एवमुक्ता नरे-

न्द्रेण सचिवास्ते नराधिप ॥ ४५ ॥ यथोक्तं त्वरितास्ते च यथा-ज्ञापितवान्नृपः । एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना ॥ ४६ ॥ पौराणां हितकामेन सगरेण विवासितः । अंशुमांस्तु महेष्वासो यदुक्तः सगरेण हि । तत्ते सर्वं प्रवक्ष्यामि कीर्त्तयमानं निबोध मे ॥ ४७ ॥

सगर उवाच । पितुश्च तेऽहं त्यागेन पुत्राणां निधनेन च । अलाभेन तथाश्वस्य परितप्यामि पुत्रक । तस्माद्दुःखाभिसन्तप्तं यज्ञविघ्नाच्च मोहितम् ॥ ४८ ॥ हयस्यानयनात् पौत्र नरकान्मां समुद्धर । अंशुमानेवमुक्तस्तु सगरेण महात्मना ॥ ४९ ॥ जगाम दुःखात्तं देशं यत्र वै दारिता मही । स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ॥ ५० ॥ अपश्यच्च महात्मानं कपिलन्तुरगञ्च तम् । स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम् ॥ ५१ ॥ प्रणम्य शिरसा भूमौ कार्य्यमस्मै न्यवेदयत् । ततः प्रीतो महाराज कपिलोऽंशुमतोऽभवत् ॥ ५२ ॥ उवाच चैनं धर्म्मात्मा वरदोऽस्मीति भारत । स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ॥ ५३ ॥ द्वितीयं वरकं वव्रे पितॄणां पावनेच्छया । तमुवाच महातेजाः कपिलो मुनि-पुङ्गवः ॥ ५४ ॥ ददानि तव भद्रन्ते यद्यत् प्रार्थयसेऽनघ । त्वयि क्षमा च धर्म्मश्च सत्यञ्चापि प्रतिष्ठितम् ॥ ५५ ॥ त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता । तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ॥ ५६ ॥ पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति । पावनार्थं सागराणां तोषयित्वा महेश्वरम् ॥ ५७ ॥ हयं नयस्व भद्रन्ते यज्ञियं नरपुङ्गव । यज्ञः समाप्यतां तात सगरस्य महा-त्मनः ॥ ५८ ॥ अंशुमानेवमुक्तस्तु कपिलेन महात्मना । आज-गाम हयं गृह्य यज्ञवाटं महात्मनः ॥ ५९ ॥ सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः । मूर्द्धि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवे-दयत् ॥ ६० ॥ यथा दृष्टं श्रुतञ्चापि सागराणां क्षयं तथा ।

तस्मात्स्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥ ६१ ॥ तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत्। अंशुमन्तञ्च सम्पूज्य समापयत तं क्रतुम् ॥ ६२ ॥ समाप्तयज्ञः सगरो देवैः सर्व्वैः सभाजितः। पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥ ६३ ॥ प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः। पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ॥ ६४ ॥ अंशुमानपि धर्म्मात्मा महीं सागरमेखलाम्। प्रशशास महाराज यथैवास्य पितामहः ॥ ६५ ॥ तस्य पुत्रः समभवद्दिलीपो नाम धर्म्मवित्। तस्मै राज्यं समाधाय अंशुमानपि संस्थितः ॥ ६६ ॥ दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत्। पर्य्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥ ६७ ॥ गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः। न चावतारयामास चेष्टमानो यथाबलम् ॥ ६८ ॥ तस्य पुत्रः समभवत् श्रीमान् धर्म्मपरायणः। भगीरथ इति ख्यातः सत्यवागनसूयकः ॥६९॥ अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः। तपःसिद्धिसमायोगात् स राजा भरतर्षभ। वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥७०

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गङ्गावतरणकथने सप्ताधिकशततोऽध्यायः ॥ १०७ ॥

---

लोमश उवाच। स तु राजा महेष्वासश्चक्रवर्त्ती महारथः। बभूव सर्व्वलोकस्य मनोनयननन्दनः ॥ १ ॥ स शुश्राव महाबाहुः कपिलेन महात्मना। पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥ २ ॥ स राज्यं सचिवे न्यस्य हृदयेन विदूयता। जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वर ॥ ३ ॥ आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः। सोऽपश्यत नरश्रेष्ठ हिमवन्तं नगोत्तमम् ॥ ४ ॥ शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलङ्कृतम्। पवनालम्बिभिर्मेघैः परि-

षिक्तं समन्ततः ॥ ५ ॥ नदीकुञ्जनितम्बैश्च प्रासादैरुपशोभितम्। गुहाकन्दरसंलीनसिंहव्याघ्रनिषेवितम् ॥ ६ ॥ शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः। भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ॥ ७ ॥ मयूरैः शतपत्रैश्च जीवञ्जीवककोकिलैः। चकोरैरसितापाङ्गैस्तथा पुत्रप्रियैरपि ॥ ८ ॥ जलस्थानेषु रम्येषु पद्मिनीभिश्च संकुलम्। सारसानाञ्च मधुरैर्व्याहृतैः समलङ्कृतम् ॥९॥ किन्नरैरप्सरोभिश्च निषेवितशिलातलम्। दिग्वारणविषाणाग्रैः समन्ताद्धृष्टपादपम् ॥ १० ॥ विद्याधरानुचरितं नानारत्नसमाकुलम्। विषोल्बणभुजङ्गैश्च दीप्तजिह्वैर्निषेवितम् ॥ ११ ॥ क्वचित् कनकसङ्काशं क्वचिद्रजतसन्निभम्। क्वचिदञ्जनपुञ्जाभं हिमवन्तमुपागमत् ॥ १२ ॥ स तु तत्र नरश्रेष्ठस्तपो घोरं समाश्रितः। फलमूलाम्बुभक्षः सहस्रं परिवत्सरान् ॥ १३ ॥ सम्वत्सरसहस्रे तु गते दिव्ये महानदी। दर्शयामास तं गङ्गा तदा मूर्त्तिमती स्वयम् ॥ १४ ॥

गङ्गोवाच। किमिच्छसि महाराज मत्तः किञ्च ददानि ते। तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ॥ १५ ॥ एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा। पितामहा मे वरदे कपिलेन महानदि ॥ १६ ॥ अन्वेषमानास्तुरगं नीता वैवस्वतक्षयम्। षष्टिस्तानि सहस्राणि सागराणां महात्मनाम् ॥ १७ ॥ कपिलं देवमासाद्य क्षणेन निधनं गताः। तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते ॥ १८ ॥ यावत्तानि शरीराणि त्वं जलैर्नाभिषिञ्चसि। तावत्तेषां गतिर्नास्ति सागराणां महानदि ॥ १९ ॥ स्वर्गं नय महाभागे मत्पितॄन् सगरात्मजान्। तेषामर्थेन याचामि त्वामहं वै महानदि ॥ २० ॥

लोमश उवाच। एवच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता। भगीरथमिदं वाक्यं सुप्रीता समभाषत ॥ २१ ॥

करिष्यामि महाराज वचस्ते नात्र संशयः। वेगन्तु मम दुर्द्धर्यं पतन्त्या गगनाद्भुवम् ॥ २२ ॥ न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप। अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ २३ ॥ तं तोषय महाबाहो तपसा वरदं हरम्। स तु मां प्रच्युतां देवः शिरसा धारयिष्यति ॥ २४ ॥ स करिष्यति ते कामं पितॄणां हितकाम्यया। एतच्छ्रुत्वा ततो राजन् महाराजो भगीरथः ॥ २५ ॥ कैलासं पर्वतं गत्वा तोषयामास शङ्करम्। तपस्तीव्रमुपागम्य कालयोगेन केनचित् ॥२६॥ अगृह्णाच्च वरं तस्माद्गङ्गाया धारणे नृप। स्वर्गे वासं समुद्दिश्य पितॄणां स नरोत्तमः ॥२७॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि गङ्गावतरणकथने अष्टाधिकशततोऽध्यायः ॥ १०८ ॥

---

लोमश उवाच। भगीरथवचः श्रुत्वा प्रियार्थञ्च दिवौकसाम्। एवमस्त्विति राजानं भगवान् प्रत्यभाषत ॥ १ ॥ धारयिष्ये महाबाहो गगनात् प्रच्युतां शिवाम्। दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥ २ ॥ एवमुक्त्वा महाबाहो हिमवन्तमुपागमत्। वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ३ ॥ तत्र स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह। प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ॥ ४ ॥ पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात्। एतच्छ्रुत्वा वचो राजा शर्वेण समुदाहृतम् ॥ ५ ॥ प्रयतः प्रणतो भूत्वा गङ्गां समनुचिन्तयत्। ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ॥ ६ ॥ ईशानञ्च स्थितं दृष्ट्वा गगनात् सहसा च्युता। तां प्रच्युतामथो दृष्ट्वा देवाः सार्द्धं महर्षिभिः ॥ ७ ॥ गन्धर्वोरगयक्षाश्च समाजग्मुर्द्दिदृक्षवः। ततः पपात गगनाद्गङ्गा हिमवतः सुता ॥ ८ ॥ समुद्धतमहावर्त्ता मीनग्राहसमाकुला। तां

दधार हरो राजन् गङ्गां गगनमेखलाम् ॥ ९ ॥ ललाटदेशे पतितां मालां मुक्तामयीमिव । सा बभूव विसर्पन्ती त्रिधा राजन् समुद्रगा ॥ १० ॥ फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः । क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित् क्वचित् ॥ ११ ॥ सा फेन-पटसंवीता मत्तेव प्रमदाव्रजत् । क्वचित् सा तोयनिनदैर्नदन्ती नादमुत्तमम् ॥ १२ ॥ एवं प्रकारान् सुबहून् कुर्वन्ती गगनाच्युता । पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ १३ ॥ दर्शयस्व महाराज मार्गं केन व्रजाम्यहम् । त्वदर्थमवतीर्णास्मि पृथिवीं पृथिवीपते ॥ १४ ॥ एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः । यत्र तानि शरीराणि सागराणां महात्मनाम् ॥ १५ ॥ प्लावनार्थं नरश्रेष्ठ पुण्येन सलिलेन च । गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः ॥ १६ ॥ कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैः सह । समासाद्य समुद्रञ्च गङ्गया सहितो नृपः ॥ १७ ॥ पूरयामास वेगेन समुद्रं वरुणालयम् । दुहितृत्वे च नृपतिर्गङ्गां समकल्पयत् ॥ १८ ॥ पितॄणाञ्चोदकं तत्र ददौ पूर्णमनोरथः । एतत्ते सर्वमाख्यातं गङ्गा त्रिपथगा यथा ॥ १९ ॥ पूरणार्थं समुद्रस्य पृथिवीमवतारिता । समुद्रश्च यथा पीतः कारणार्थं महात्मना ॥ २० ॥ वातापिश्च यथा नीतः क्षयं स ब्रह्महा प्रभो । अगस्त्येन महाराज यन्मां त्वं परिपृच्छसि ॥ २१ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि गङ्गावतरणकथने नवाधिकशततोऽध्यायः ॥ १०९ ॥

---

वैशम्पायन उवाच । ततः प्रयातः कौन्तेयः क्रमेण भरतर्षभ । नन्दामपरनन्दाञ्च नद्यौ पापभयापहे ॥ १ ॥ पर्वतं स समासाद्य हेमकूटमनामयम् । अचिन्त्यान्यद्भुतान् भावान् ददर्श

स्रुवहस्तं नृपः ॥ २ ॥ वागायत्रा भवन्मेघा उपलाश्च सहस्रशः। नाशक्नुवंस्तमारोढुं विषण्णमनसो जनाः ॥ ३ ॥ वायुर्नित्यं ववौ तत्र नित्यं देवश्च वर्षति। स्वाध्यायघोषश्च तथा श्रूयते न च दृश्यते ॥ ४ ॥ सायं प्रातश्च भगवान् दृश्यते हव्यवाहनः। मक्षिकाश्चादशंस्तत्र तपसः प्रतिघातिकाः ॥ ५ ॥ निर्व्वेदो जायते तत्र गृहाणि स्मरते जनः। एवं बहुविधान् भावानद्भुतान् वीक्ष्य पाण्डवः। लोमशं पुनरेवाथ पर्य्यपृच्छत्तदद्भुतम् ॥ ६ ॥

लोमश उवाच। यथाश्रुतमिदं पूर्व्वमस्माभिररिकर्षण। तदेकाग्रमना राजन् निबोध गदतो मम। अस्मिन्नृषभकूटेऽभूदृषभो नाम तापसः ॥ ७ ॥ अनेकशतवर्षायुस्तपस्वी कोपनो भृशम्। स वै सम्भाष्यमाणोऽन्यैः कोपाद्गिरिमुवाच ह ॥ ८ ॥ य इह व्याहरेत् कश्चिदुपलानुत्सृजेस्तथा। वातञ्चाहूय मा शब्दमित्युवाच स तापसः ॥ ९ ॥ व्याहरंश्चेह पुरुषो मेघशब्देन वार्य्यते। एवमेतानि कर्म्माणि राजंस्तेन महर्षिणा ॥ १० ॥ कृतानि कानिचित् क्रोधात् प्रतिषिद्धानि कानिचित्। नन्दां त्वभिगता देवा पुरा राजन्निति श्रुतिः ॥ ११ ॥ अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः। ते दर्शनं त्वनिच्छन्तो देवाः शक्रपुरोगमाः ॥ १२ ॥ दुर्गञ्चक्रुरिमं देशं गिरिप्रत्यूहरूपकम्। तदाप्रभृति कौन्तेय नरा गिरिसमं सदा ॥ १३ ॥ नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम्। नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः ॥१४॥ आरोढुं वापि कौन्तेय तस्मान्नियतवाग्भव। इह देवास्तदा सर्व्वे यज्ञानाजह्रुरुत्तमान् ॥ १५ ॥ तेषामेतानि लिङ्गानि दृश्यन्तेऽद्यापि भारत। कुशाकारेव दूर्व्वेयं संस्तीर्णेव च भूरियम् ॥१६॥ यूपप्रकारा बहवो वृक्षाश्चेमे विशाम्पते। देवाश्च ऋषयश्चैव वसन्त्यद्यापि भारत ॥ १७ ॥ तेषां सायं तथा प्रातर्दृश्यते हव्यवाहनः। इहाप्लुतानां कौन्तेय सद्यः पाप्माभिहन्यते ॥ १८ ॥

कुरुश्रेष्ठाभिषिक्तं वै तस्मात् कुरु सहानुजः। ततो नन्दामुताङ्गस्त्वं कौशिकीमभियास्यसि ॥ १९ ॥ विश्वामित्रेण यत्रोग्रं तपस्तप्तमनुत्तमम्। ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः। जगाम कौशिकीं पुण्यां रम्यां शीतजलां शुभाम् ॥ २० ॥

लोमश उवाच। एषा देवनदी पुण्या कौशिकी भरतर्षभ। विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते ॥ २१ ॥ आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः। ऋष्यशृङ्गः सुतो यस्य तपस्वी संयतेन्द्रियः ॥ २२ ॥ तपसा यः प्रभावेन वर्षयामास वासवम्। अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा ॥ २३ ॥ मृग्यां जातः स तेजस्वी काश्यपस्य सुतः प्रभुः। विषये लोमपादस्य यश्चकाराद्भुतं महत् ॥ २४ ॥ निर्वर्त्तितेषु शस्येषु यस्मै शान्ता ददौ नृपः। लोमपादो दुहितरं सावित्रीं सविता यथा ॥ २५ ॥

युधिष्ठिर उवाच। ऋष्यशृङ्गः कथं मृग्यामुत्पन्नः काश्यपात्मजः। विरुद्धे योनिसंसर्गे कथञ्च तपसा युतः ॥ २६ ॥ किमर्थञ्च भयाच्छक्रस्तस्य बालस्य धीमतः। अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा ॥ २७ ॥ कथं रूपा च सा शान्ता राजपुत्री यतव्रता। लोभयामास या चेतो मृगभूतस्य तस्य वै ॥ २८ ॥ लोमपादश्च राजर्षिर्यदाश्रूयत धार्मिकः। कथं वै विषये तस्य नावर्षत् पाकशासनः ॥ २९ ॥ एतन्मे भगवन् सर्वं विस्तरेण यथातथम्। वक्तुमर्हसि शुश्रूषोर्ऋष्यशृङ्गस्य चेष्टितम् ॥ ३० ॥

लोमश उवाच। विभाण्डकस्य विप्रर्षेस्तपसा भावितात्मनः। अमोघवीर्य्यस्य सतः प्रजापतिसमद्युतेः। शृणु पुत्रो यथा जात ऋष्यशृङ्गः प्रतापवान् ॥ ३१ ॥ महाहृदस्य महातेजा बालः स्थविरसम्मतः। महाह्रदं समासाद्य काश्यपस्तपसि स्थितः ॥ ३२ ॥ दीर्घकालं परिश्रान्त ऋषिः स देवसम्मितः। तस्य रेतः प्रचस्कन्द दृष्ट्वाप्सरसमुर्वशीम् ॥ ३३ ॥ अप्सूपस्पृशतो राजन् मृगी

तच्चापिवत्तदा । सह तोयेन तृषिता गर्भिणी चाभवत्ततः ॥३३॥ सा पुरोक्ता भगवता ब्रह्मणा लोककर्त्तृणा । देवकन्या मृगी भूत्वा मुनिं सूय विमोच्यसे ॥ ३४ ॥ अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात् । तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः ॥ ३५ ॥ ऋष्यशृङ्गस्तपोनित्यो वन एवाभ्यवर्त्तत । तस्यर्षेः शृङ्गं शिरसि राजन्नासीन्महात्मनः ॥ ३६ ॥ तेनर्ष्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत् । न तेन दृष्टपूर्वोऽन्यः पितुरन्यत्र मानुषः ॥३७॥ तस्मात्तस्य मनो नित्यं ब्रह्मचर्य्येऽभवन्नृप । एतस्मिन्नेव काले तु सखा दशरथस्य वै ॥ ३८ ॥ लोमपाद इति ख्यातो अङ्गानामीश्वरोऽभवत् । तेन कामात् कृतं मिथ्या ब्राह्मणस्येति नः श्रुतिः ॥ ३९ ॥ स ब्राह्मणैः परित्यक्तस्तदा वै जगतः पतिः । पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया ॥ ४० ॥ न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः । स ब्राह्मणान् पर्य्यपृच्छत्तपोयुक्तान् मनीषिणः ॥ ४१ ॥ प्रवर्षणे सुरेन्द्रस्य समर्थान् पृथिवीपते । कथं प्रवर्षेत् पर्ज्जन्य उपायः परिदृश्यताम् ॥ ४२ ॥ तमूचुश्चोदितास्ते तु स्वमतानि मनीषिणः । तत्र त्वेको मुनिवरस्तं राजानमुवाच ह ॥ ४३ ॥ कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिश्चर । ऋष्यशृङ्गं मुनिसुतमानयस्व च पार्थिव ॥ ४४ ॥ वानेयमनभिज्ञञ्च नारीणामार्ज्जवे रतम् । स चेदवतरेद्राजन् विषयन्ते महातपाः ॥ ४५ ॥ सद्यः प्रवर्षेत् पर्ज्जन्य इति मे नात्र संशयः । एतच्छ्रुत्वा वचो राजन् कृत्वा निष्कृतिमात्मनः ॥ ४६ ॥ स गत्वा पुनरागच्छत् प्रसन्नेषु द्विजातिषु । राजानमागतं श्रुत्वा प्रतिसञ्जहृषुः प्रजाः ॥ ४७ ॥ ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान् । ऋष्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चये ॥ ४८ ॥ सोऽध्यगच्छदुपायन्तु तैरमात्यैः सहाच्युत । शास्त्रज्ञैरलमर्थज्ञैर्नित्यञ्च परिनिष्ठितैः ॥ ४९ ॥ ततश्चानाययामास वारमुख्या महीपतिः ।

वेश्याः सर्वत्र मिथ्यातास्ता उवाच स पार्थिवः ॥ ५० ॥ ऋष्यशृङ्ग-मृषेः पुत्रमानयध्वमुपायतः। लोभयित्वाभिविश्वास्य विषयं मम शोभनाः ॥ ५१ ॥ ता राजभयभीताश्च शापभीताश्च योषितः। न शक्यमूचुस्तत्कार्य्यं विवर्णा गतचेतसः ॥ ५२ ॥ तत्र लेका जरद्योषा राजानमिदमब्रवीत्। प्रयतिष्ये महाराज तमानेतुं तपोधनं ॥ ५३ ॥ अभिप्रेतांस्तु मे कामांस्त्वमनुज्ञातुमर्हसि। ततः शक्ष्याम्यानयितुमृष्यशृङ्गमृषेः सुतम् ॥ ५४ ॥ तस्याः सर्व-मभिप्रेतमन्वजानात् स पार्थिवः। धनञ्च प्रददौ भूरि रत्नानि विविधानि च ॥ ५५ ॥ ततो रूपेण सम्पन्ना वयसा च महीपते। स्त्रिय आदाय काश्चित् सा जगाम वनमञ्जसा ॥ ५६ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि ऋष्यशृङ्गोपाख्याने दशाधिकशततोऽध्यायः ॥ ११० ॥

---

लोमश उवाच। सा तु नाव्याश्रमञ्चक्रे राजकार्य्यार्थसिद्धये। सन्देशाच्चैव नृपतेः स्वबुद्ध्या चैव भारत ॥ १ ॥ नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितैः। नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः ॥२॥ अतीव रमणीयन्तदतीव च मनोहरम्। चक्रे नाव्याश्रमं रम्यमद्भुतोपमदर्शनम् ॥ ३ ॥ ततो निबध्य तां नावमदूरे काश्यपाश्रमात्। चारयामास पुरुषैर्विहारं तस्य वै मुनेः ॥ ४ ॥ ततो दुहितरं वेश्यां समाधायेतिकार्य्यताम्। दृष्ट्वान्तरं काश्यपस्य प्राहिणोद्बुद्धिसम्मताम् ॥ ५ ॥ सा तत्र गत्वा कुशला तपोनित्यस्य सन्निधौ। आश्रमं तं समासाद्य ददर्श तमृषेः सुतम् ॥ ६ ॥

वेश्योवाच। कच्चिन्मुने कुशलं तापसानां कच्चिच्च वो मूल-

फलं प्रभूतम् । कच्चिद्भवान्नमते चाश्रमेऽस्मिंस्त्वां वै द्रष्टुं साम्प्रतमागतोऽस्मि ॥ ७ ॥ कच्चित्तपो वर्द्धते तापसानां पिता च ते कच्चिदहीनतेजाः । कच्चित्त्वया प्रीयते चैव विप्र कच्चित् स्वाध्यायः क्रियते चर्ष्यशृङ्ग ॥ ८ ॥

ऋष्यशृङ्ग उवाच । ऋद्धो भवान् ज्योतिरिव प्रकाशते मन्ये चाहं त्वामभिवादनीयम् । पाद्यं वै ते संप्रदास्यामि कामाद्यथाधर्मं फलमूलानि चैव ॥ ९ ॥ कौश्यां बृष्यामास्स्व यथोपजोषं कृष्णाजिनेनावृतायां सुखायाम् । क्व चाश्रमस्तव किं नाम चेदं व्रतं ब्रह्मंश्चरसि हि देववत्त्वम् ॥ १० ॥

वेश्योवाच । ममाश्रमः काश्यपपुत्र रम्यस्त्रियोजनं शैलमिमं परेण । तत्र स्वधर्मोऽनभिवादनं मे न चोदकं पाद्यमुपस्पृशामि ॥११॥ भवता नाभिवाद्योऽहमभिवाद्यो भवान्मया । व्रतमेतादृशं ब्रह्मन् परिष्वज्यो भवान् मया ॥ १२ ॥

ऋष्यशृङ्ग उवाच । फलानि पक्वानि ददानि तेऽहं भल्लातकान्यामलकानि चैव । करूषकाणीङ्गुदधन्वनानि पिप्पलानां कामकारं कुरुष्व ॥ १३ ॥

लोमश उवाच । सा तानि सर्वाणि विवर्ज्जयित्वा भक्ष्याण्यनर्हाणि ददौ ततोऽस्य ॥ १४ ॥ तान्यृष्यशृङ्गस्य महारसानि भृशं सुरूपाणि रुचिं ददुर्हि । ददौ च माल्यानि सुगन्धवन्ति चित्राणि वासांसि च भानुमन्ति ॥ १५ ॥ पेयानि चाग्र्याणि ततो मुमोद चिक्रीड़ चैव प्रजहास चैव । सा कन्दुकेनारमतस्य मूले विभज्यमाना फलिता लतेव ॥१६॥ गात्रैश्च गात्राणि निषेवमाणा समाश्लिषच्चासकृदृष्यशृङ्गम् । सर्जानशोकांस्तिलकांश्च वृक्षान् सुपुष्पितानवनाम्यावभज्य ॥ १७ ॥ विलज्जमानेव मदाभिभूता प्रलोभयामास सुतं महर्षेः । अथर्ष्यशृङ्गं विकृतं समीक्ष्य पुनः पुनः पीड्य च कायमस्य ॥ १८ ॥ अवेक्षमाणा शनकैर्जगाम

कृत्वाग्निहोत्रस्य तदापहरणम्। तस्यां गतायां मदनेन मत्तो विचेतनश्चाभवदृष्यशृङ्गः। तामेव भावेन गतेन शून्ये विनिश्वसन्नार्त्तरूपो बभूव ॥ १९ ॥ ततो मुहूर्त्ताद्धरिपिङ्गलाक्षः प्रवेष्टितो रोमभिरानखाग्रात्। स्वाध्यायवान् वृत्तसमाधियुक्तो विभाण्डकः काश्यपः प्रादुरासीत् ॥ २० ॥ सोऽपश्यदासीनमुपेत्य पुत्रं ध्यायन्तमेकं विपरीतचित्तम्। विनिश्वसन्तं मुहुरूर्द्ध्वदृष्टिं विभाण्डकः पुत्रमुवाच दीनम् ॥ २१ ॥ न कल्प्यन्ते समिधः किं नु तात कच्चिद्धुतञ्चाग्निहोत्रं त्वयाद्य। सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः कच्चित्सवत्साद्य कृता त्वया च ॥ २२ ॥ न वै यथापूर्वमिवासि पुत्र चिन्तापरश्चापि विचेतनश्च। दीनोऽतिमात्रं त्वमिहाद्य किं नु पृच्छामि त्वां क इहाद्यागतोऽभूत् ॥ २३ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि ऋष्यशृङ्गोपाख्याने एकादशाधिकशततोऽध्यायः ॥ १११ ॥

---

ऋष्यशृङ्ग उवाच। इहागतो जटिलो ब्रह्मचारी न वै ह्रस्वो नातिदीर्घो मनस्वी। सुवर्णवर्णः कमलायताक्षः सुतः सुराणामिव शोभमानः ॥ १ ॥ समृद्धरूपः सवितेव दीप्तः सुशुक्लकृष्णाक्षिरतीव गौरः। नीलाः प्रसन्नाश्च जटाः सुगन्धा हिरण्यरज्जुग्रथिताः सुदीर्घाः ॥ २ ॥ आधाररूपा पुनरस्य कण्ठे विभ्राजते विद्युदिवान्तरीक्षे। द्वौ चास्य पिण्डावधरेण कण्ठादजातरोमौ सुमनोहरौ च ॥ ३ ॥ विलग्नमध्यश्च स नाभिदेशे कटिश्च तस्यातिकृतप्रमाणा। तथास्य चीरान्तरतः प्रभाति हिरण्मयी मेखला मे यथेयम् ॥ ४ ॥ अन्यच्च तस्याद्भुतदर्शनीयं विकूजितं पादयोः संप्रभाति। पाण्योश्च तद्वत् स्वनवन्निबद्धौ कलापका-

वक्षमाला यथेयम् ॥ ५ ॥ विचेष्टमानस्य च तस्य तानि कूजन्ति हंसाः सरसीव मत्ताः । चीराणि तस्याङ्गुतदर्शनानि नेमानि तद्वन्मम रूपवन्ति ॥ ६ ॥ वक्त्रञ्च तस्याङ्गुतदर्शनीयं प्रव्याहृतं ह्लादयतीव चेतः । पुंस्कोकिलस्येव च तस्य वाणी तां शृण्वतो मे व्यथितोऽन्तरात्मा ॥ ७ ॥ यथा वनं माधवमासि मध्ये समीरितं श्वसनेनैव भाति । तथा स भात्युत्तमपुण्यगन्धी निषेव्यमाणः पवनेन तात ॥ ८ ॥ सुसंयताश्चापि जटा विभक्ता द्वैधीकृता नातिसमा ललाटे । कर्णौ च चित्रैरिव चक्रवाकैः समावृतौ तस्य सुरूपवद्भिः ॥ ९ ॥ तथा फलं वृत्तमथो विचित्रं समाहरत् पाणिना दक्षिणेन । तद्भूमिमासाद्य पुनः पुनश्च समुत्पतत्यङ्गुतरूपमुच्चैः ॥ १० ॥ तच्चाभिहत्वा परिवर्त्ततेऽसौ वातेरितो वृक्ष इवाथ घूर्णन् । तं प्रेक्षतः पुत्रमिवामराणां प्रीतिः परा तात रतिश्च जाता ॥ ११ ॥ स मे समाश्लिष्य पुनः शरीरं जटासु गृह्याभ्यवनाम्य वक्त्रम् । वक्त्रेण वक्त्रं प्रणिधाय शब्दञ्चकार तन्मेजनयत् प्रहर्षम् ॥ १२ ॥ न चापि पाद्यं बहुमन्यतेऽसौ फलानि चेमानि मया हृतानि । एवंव्रतोऽस्मीति च मामवोचत् फलानि चान्यानि स चाददन्मे ॥ १३ ॥ मयोपयुक्तानि फलानि यानि नेमानि तुल्यानि रसेन तेषाम् । न चापि तेषां त्वगियं यथैषां साराणि नैषामिव सन्ति तेषाम् ॥ १४ ॥ तोयानि चैवातिरसानि मह्यं प्रादात् स वै पातुमुदाररूपः । पीत्वैव यान्यभ्यधिकः प्रहर्षो ममाभवद्भूश्चलितेव चासीत् ॥ १५ ॥ इमानि चित्राणि च गन्धवन्ति माल्यानि तस्योद्ग्रथितानि पट्टैः । यानि प्रकीर्य्येह गतः स्वमेव स आश्रमं तपसा द्योतमानः ॥ १६ ॥ गतेन तेनास्मि कृतो विचेता गात्रञ्च मे संपरिदह्यतीव । इच्छामि तस्यान्तिकमाशु गन्तुं तञ्चेह नित्यं परिवर्त्तमानम् ॥ १७ ॥ गच्छामि तस्यान्तिकमेव तात का नाम सा व्रतचर्य्या च तस्य ।

इच्छाम्यहं चरितुं तेन सार्द्धं यथा तपः स चरत्यार्य्यधर्मा। चर्त्तुं तथेच्छा हृदये ममास्ति दुनोति चित्तं यदि तं न पश्ये॥ १८॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि ऋष्यशृङ्गोपाख्याने द्वादशाधिकशततोऽध्यायः॥ ११२॥

---

विभाण्डक उवाच। रक्षांसि चैतानि चरन्ति पुत्र रूपेण तेनाद्भुतदर्शनेन। अतुल्यवीर्य्याण्यभिरूपवन्ति विघ्नं सदा तपसश्चिन्तयन्ति॥ १॥ सुरूपरूपाणि च तानि तात प्रलोभयन्ते विविधैरुपायैः। सुखाच्च लोकाच्च निपातयन्ति तान्युग्ररूपाणि मुनीन् वनेषु॥ २॥ न तानि सेवेत मुनिर्यतात्मा सतां लोकान् प्रार्थयानः कथञ्चित्। कृत्वा विघ्नं तापसानां रमन्ते पापाचारास्तापसस्तान्न पश्येत्॥ ३॥ असज्जनेनाचरितानि पुत्र पानान्यपेयानि मधूनि तानि। माल्यानि चैतानि न वै मुनीनां स्मृतानि चित्रोज्ज्वलगन्धवन्ति॥ ४॥

लोमश उवाच। रक्षांसि तानीति निवार्य्य पुत्रं विभाण्डकस्तां मृगयाम्बभूव। नासादयामास यदा त्र्यहेण तदा स पर्य्यावव्रते आश्रमाय॥ ५॥ यदा पुनः काश्यपो वै जगाम फलान्याहर्त्तुं विधिना श्रावणेन। तदा पुनर्लोभयितुं जगाम सा वेशयोषा मुनिमृष्यशृङ्गम्॥ ६॥ दृष्ट्वैव तामृष्यशृङ्गः प्रहृष्टः संभ्रान्तरूपोऽभ्यपतत्तदानीम्। प्रोवाच चैनां भवतोऽश्रमाय गच्छाव यावन्न पिता ममेति॥ ७॥ ततो राजन् काश्यपस्यैकपुत्रं प्रवेश्य योगेन विमुच्य नावम्। प्रमोदयन्त्यो विविधैरुपायैराजग्मुरङ्गाधिपतेः समीपम्॥ ८॥ संस्थाप्य तामाश्रमदर्शने तु सन्तारितां नावमथातिशुभ्राम्। तीरादुपादाय तथैव चक्रे नाव्याश्रमं नाम वनं विचित्रम्॥ ९॥ अन्तःपुरे तन्तु निवेश्य राजा विभाण्डकस्यात्मजमेकपुत्रम्। ददर्श देवं सहसा प्रवृष्ट-

मापूर्य्यमाणञ्च जगज्जलेन ॥ १० ॥ स लोमपादः परिपूर्णकामः सुतां ददावृष्यश्रृङ्गाय शान्ताम्। क्रोधप्रतीकारकरञ्च चक्रे गाश्चैव मार्गेषु च कर्षणानि ॥ ११ ॥ विभाण्डकस्याव्रजतः स राजा पशून् प्रभूतान् पशुपांश्च वीरान्। समादिशत् पुत्रगृद्धी महर्षि-र्विभाण्डकः परिपृच्छेद्यदा वः ॥ १२ ॥ स वक्तव्यः प्राञ्जलिभि-र्भवद्भिः पुत्रस्य ते पशवः कर्षणञ्च। किन्ते प्रियं वै क्रियतां महर्षे दासाः स सर्व्वे तव वाचि बद्धाः ॥ १३ ॥ अथोपायात् स मुनिश्चण्डकोपः स्वमाश्रमं मूलफलं गृहीत्वा। अन्वेषमाणश्च न तत्र पुत्रं ददर्श चुक्रोध ततो भृशं सः ॥ १४ ॥ ततः स कोपेन विदार्य्यमाण आशङ्कमानो नृपतेर्विधानम्। जगाम चम्पां प्रति धक्ष्यमाणस्तमङ्गराजं सपुरं सराष्ट्रम् ॥ १५ ॥ स वै श्रान्तः क्षुधितः काश्यपस्तान् घोषान् समासादितवान् समृद्धान्। गोपैश्च तै-र्विधिवत् पूज्यमानो राजेव तां रात्रिमुवास तत्र ॥ १६ ॥ अवाप्य सत्कारमतीव तेभ्यः प्रोवाच कस्य प्रथिताः स्थ गोपाः। ऊचु-स्ततस्तेऽभ्युपगम्य सर्व्वे धनं तवेदं विहितं सुतस्य ॥ १७ ॥ देशेषु देशेषु स पूज्यमानस्तांश्चैव शृण्वन् मधुरान् प्रलापान्। प्रशान्त-भूयिष्ठरजाः प्रहृष्टः समाससादाङ्गपतिं पुरस्थम् ॥ १८ ॥ स पूजितस्तेन नरर्षभेण ददर्श पुत्रं दिवि देवं यथेन्द्रम्। शान्तां स्नुषाञ्चैव ददर्श तत्र सौदामिनीमुच्चरन्तीं यथैव ॥ १९ ॥ ग्रामांश्च घोषांश्च सुतस्य दृष्ट्वा शान्ताञ्च शान्तोऽस्य परः स कोपः। चकार तस्यैव परं प्रसादं विभाण्डको भूमिपतेर्नरेन्द्र ॥ २० ॥ स तत्र निक्षिप्य सुतं महर्षिरुवाच सूर्य्याग्निसमप्रभावः। जाते तु पुत्रे वनमेवाव्रजेथा राज्ञः प्रियाण्यस्य सर्व्वाणि कृत्वा ॥ २१ ॥ स तद्वचः कृतवानृष्यशृङ्गो ययौ च यत्रास्य पिता बभूव। शान्ता चैनं पर्य्यचरन्नरेन्द्र खे रोहिणी सोममिवानुकूला ॥ २२ ॥ अरु-न्धती वा सुभगा वशिष्ठं लोपामुद्रा वापि यथा ह्यगस्त्यम्। नलस्य

वाद्मयन्ती यथाभूद्यथा शची वज्रधरस्य चैव ॥२३॥ नारायणी-
चन्द्रसेना बभूव वश्या नित्यं मुद्गलस्याजमीढ़। तथा शान्ता
ऋष्यशृङ्गं वनस्थं प्रीत्या युक्ता पर्य्यचरन्नरेन्द्र ॥ २४ ॥ तस्याश्रमः
पुण्य एषोऽवभाति महाह्रदं शोभयन् पुण्यकीर्त्तिः। अत्र स्नातः
कृतकृत्यो विशुद्धस्तीर्थान्यन्यान्यनुसंयाहि राजन् ॥ २५ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि ऋष्यशृङ्गोपाख्याने
त्रयोदशाधिकशततोऽध्यायः ॥ ११३ ॥

---

वैशम्पायन उवाच। ततः प्रयातः कौशिक्याः पाण्डवो जन-
मेजय। आनुपूर्व्वेण सर्वाणि जगामायतनान्यथ ॥ १ ॥ स
सागरं समासाद्य गङ्गायाः सङ्गमे नृप। नदीशतानां पञ्चानां
मध्ये चक्रे समाप्लवम् ॥२॥ ततः समुद्रतीरेण जगाम वसुधाधिपः।
भ्रातृभिः सहितो वीरः कलिङ्गान् प्रति भारत ॥ ३ ॥

लोमश उवाच। एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी।
यत्रायजत धर्मोऽपि देवाञ्छरणमेत्य वै ॥ ४ ॥ ऋषिभिः समु-
पायुक्तं यज्ञियं गिरिशोभितम्। उत्तरं तीरमेतद्धि सततं द्विज-
सेवितम् ॥ ५ ॥ समानं देवयानेन पथा स्वर्गमुपेयुषः। अत्र वै
ऋषयोन्येऽपि पुरा क्रतुभिरीजिरे ॥ ६ ॥ अत्रैव रुद्रो राजेन्द्र
पशुमादत्तवान्मखे। पशुमादाय राजेन्द्र भागोऽयमिति चाब्र-
वीत् ॥ ७ ॥ हृते पशौ तदा देवास्तमूचुर्भरतर्षभ। मा परस्व-
मभिद्रोग्धा मा धर्मान् सकलान् वशीः ॥ ८ ॥ ततः कल्याण-
रूपाभिर्वाग्भिस्ते रुद्रमस्तुवन्। इष्ट्या चैनं तर्पयित्वा मानया-
ञ्चक्रिरे तदा ॥ ९ ॥ ततः स पशुमुत्सृज्य देवयानेन जग्मिवान्।
तत्रानुवंशो रुद्रस्य तन्निबोध युधिष्ठिर ॥ १० ॥ अयातयामं
सर्वेभ्यो भागिभ्यो भागमुत्तमम्। देवाः सङ्कल्पयामासुर्भयाद्रुद्रस्य

शाश्वतम् ॥ ११ ॥ इमां गाथामत्र गायन्नृपः स्पृशति यो नरः । देवयानोऽस्य पन्थाश्च चक्षुषाभिप्रकाशते ॥ १२ ॥

वैशम्पायन उवाच । ततो वैतरणीं सर्वे पाण्डवा द्रौपदी तथा । अवतीर्य्य महाभागास्तर्पयाञ्चक्रिरे पितॄन् ॥ १३ ॥

युधिष्ठिर उवाच । उपस्पृश्येह विधिवदस्यां नद्यां तपोबलात् । मानुषादस्मि विषयादपेतः पश्य लोमश ॥ १४ ॥ सर्वान् लोकान् प्रपश्यामि प्रसादात्तव सुव्रत । वैखानसानां जपतामेष शब्दो महात्मनाम् ॥ १५ ॥

लोमश उवाच । त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर । यत्र ध्वनिं शृणोष्येनं तूष्णीमास्व विशाम्पते ॥ १६ ॥ एतत् स्वयम्भुवो राजन् वनं दिव्यं प्रकाशते । यत्रायजत राजेन्द्र विश्वकर्म्मा प्रतापवान् ॥ १७ ॥ यस्मिन् यज्ञे हि भूर्द्दत्ता कश्यपाय महात्मने । सपर्वतवनोद्देशा दक्षिणार्थं स्वयम्भुवा ॥ १८ ॥ अवासीदच्च कौन्तेय दत्तमात्रा मही तदा । उवाच चापि कुपिता लोकेश्वरमिदं प्रभुम् ॥ १९ ॥ न मां मर्त्याय भगवन् कस्मैचिद्दातुमर्हसि । प्रदानं मोघमेतत्ते यास्याम्येषा रसातलम् ॥२०॥ विषीदन्तीन्तु तां दृष्ट्वा कश्यपो भगवानृषिः । प्रसादयाम्बभूवाथ ततो भूमिं विशाम्पते ॥ २१ ॥ ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव । पुनरुन्मज्य सलिलाद्वेदीरूपा स्थिता बभौ ॥ २२ ॥ सैषा प्रकाशते राजन् वेदी संस्थानलक्षणा । आरुह्यात्र महाराज वीर्य्यवान् वै भविष्यसि ॥ २३ ॥ सैषा सागरमासाद्य राजन् वेदी समाश्रिता । एतामारुह्य भद्रन्ते त्वमेकस्तर सागरम् ॥ २४ ॥ अहञ्च ते स्वस्त्ययनं प्रयोक्ष्ये यथा त्वमेनामधिरोहसेऽद्य । स्पृष्टा हि मर्त्त्येन ततः समुद्रमेषा वेदी प्रविशत्याजमीढ़ ॥ २५ ॥ ओँ नमो विश्वगुप्ताय नमो विश्वपराय ते । सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ॥ २६ ॥ अग्निर्मित्रो योनिरापोऽथ देव्यो

विष्णोरेतस्त्वममृतस्याच्य नाभिः । एवं ब्रुवन् पाण्डव सत्यवाक्यं वेदी-
मिमां त्वं तरसाधिरोह ॥ २७ ॥ अग्निश्च ते योनिरिड़ा च देहो
रेतोधा विष्णोरमृतस्य नाभिः । एवं जपन् पाण्डव सत्यवाक्यं ततो-
ऽवगाहेत पतिं नदीनाम् ॥ २८ ॥ अन्यथा हि कुरुश्रेष्ठ देवयोनि-
रपाम्पतिः । कुशाग्रेणापि कौन्तेय न प्रष्टव्यो महोदधिः ॥ २८ ॥

वैशम्पायन उवाच । ततः कृतस्वस्त्ययनो महात्मा युधिष्ठिरः
सागरमभ्यगच्छत् । कृत्वा च तच्छासनमस्य सर्वं महेन्द्रमासाद्य
निशामुवास ॥ २९ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि महेन्द्राचलगमने
चतुर्द्दशाधिकशतोऽध्यायः ॥ ११४ ॥

---

वैशम्पायन उवाच । स तत्र तामुषित्वैकां रजनीं पृथिवी-
पतिः । तापसानां परञ्चक्रे सत्कारं भ्रातृभिः सह ॥ १ ॥ लोमश-
स्तस्य तान् सर्वानाचख्यौ तत्र तापसान् । भृगूनङ्गिरसश्चैव
वाशिष्ठानथ काश्यपान् ॥ २ ॥ तान् समेत्य स राजर्षिरभिवाद्य
कृताञ्जलिः । रामस्यानुचरं वीरमपृच्छदकृतव्रणम् ॥ ३ ॥ कदा
तु रामो भगवांस्तापसान्दर्शयिष्यति । तेनैवाहं प्रसङ्गेन द्रष्टु-
मिच्छामि भार्गवम् ॥ ४ ॥

अकृतव्रण उवाच । आयानेवासि विदितो रामस्य विदिता-
त्मनः । प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ॥ ५ ॥
चतुर्द्दशीमष्टमीञ्च रामं पश्यन्ति तापसाः । अस्यां रात्र्यां व्यती-
तायां भवित्री श्वश्चतुर्द्दशी । तत्र द्रक्ष्यसि रामं त्वं कृष्णाजिन-
जटाधरम् ॥ ६ ॥

युधिष्ठिर उवाच । भवाननुगतो रामं जामदग्न्यं महा-
बलम् । प्रत्यक्षदर्शी सर्वस्य पूर्ववृत्तस्य कर्मणः ॥ ७ ॥ स भवान्

कथयत्वद्य यथा रामेण निर्जिताः । आहवे क्षत्रियाः सर्व्वे कथं केन च हेतुना ॥ ८ ॥

अकृतव्रण उवाच । हन्त ते कथयिष्यामि महदाख्यानमुत्तमम् । भृगूणां राजशार्दूल वंशे जातस्य भारत ॥ ९ ॥ रामस्य जामदग्न्यस्य चरितं देवसम्मितम् । हैहयाधिपतेश्चैव कार्त्तवीर्य्यस्य भारत ॥ १० ॥ रामेण चार्ज्जुनो नाम हैहयाधिपतिर्हतः । तस्य बाहुशतान्यासंस्त्रीणि सप्त च पाण्डव ॥ ११ ॥ दत्तात्रेयप्रसादेन विमानं काञ्चनं तथा । ऐश्वर्य्यं सर्व्वभूतेषु पृथिव्यां पृथिवीपते ॥ १२ ॥ अव्याहतगतिश्चैव रथस्तस्य महात्मनः । रथेन तेन तु सदा वरदानेन वीर्य्यवान् ॥ १३ ॥ ममर्द्द देवान् यक्षांश्च ऋषींश्चैव समन्ततः । भूतांश्चैव स सर्व्वांस्तु पीड़यामास सर्व्वतः ॥ १४ ॥ ततो देवाः समेत्याहुर्ऋषयश्च महाव्रताः । देवदेवं सुरारिघ्नं विष्णुं सत्यपराक्रमम् ॥ १५ ॥ भगवन् भूतरक्षार्थमर्ज्जुनं जहि वै प्रभो । विमानेन च दिव्येन हैहयाधिपतिः प्रभुः ॥ १६ ॥ शचीसहायं क्रीड़न्तं धर्षयामास वासवम् । ततस्तु भगवान् देवः शक्रेण सहितस्तदा ॥ १७ ॥ कार्त्तवीर्य्यविनाशार्थं मन्त्रयामास भारत । यत्तद्भूतहितं कार्य्यं सुरेन्द्रेण निवेदितम् ॥ १८ ॥ स प्रतिश्रुत्य तत् सर्व्वं भगवान् लोकपूजितः । जगाम बदरीं रम्यां स्वमेवाश्रममण्डलम् ॥ १९ ॥ एतस्मिन्नेव काले तु पृथिव्यां पृथिवीपतिः । कान्यकुब्जे महानासीत् पार्थिवः सुमहाबलः ॥ २० ॥ गाधीति विश्रुतो लोके वनवासं जगाम ह । वने तु तस्य वसतः कन्या जज्ञेऽप्सरःसमा ॥ २१ ॥ ऋचीको भार्गवस्ताञ्च वरयामास भारत । तमुवाच ततो गाधिर्ब्राह्मणं संशितव्रतम् ॥ २२ ॥ उचितं नः कुले किञ्चित् पूर्व्वैर्यत् सम्प्रवर्त्तितम् । एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ॥ २३ ॥ सहस्रं वाजिनां शुल्कमिति विद्धि द्विजोत्तम । न चापि भग-

वान् वाच्यो दीयतामिति भार्गव। देया मे दुहिता चैव त्वद्विधाय महात्मने॥ २४॥

ऋचीक उवाच। एकतः श्यामकर्णानां पाण्डराणां तरस्विनाम्। दास्याम्यश्वसहस्रं ते मम भार्य्या सुतास्तु ते॥ २५॥

अकृतव्रण उवाच। स तथेति प्रतिज्ञाय राजन् वरुणमब्रवीत्। एकतः श्यामकर्णानां पाण्डराणां तरस्विनाम्॥ २६॥ सहस्रं वाजिनामेकं शुल्कार्थं मे प्रदीयताम्। तस्मै प्रादात् सहस्रं वै वाजिनां वरुणस्तदा॥ २७॥ तदश्वतीर्थं विख्यातमुत्थिता यत्र ते हयाः। गङ्गायां कान्यकुब्जे वै ददौ सत्यवतीं तदा॥ २८॥ ततो गाधिः सुताञ्चास्मै जन्याश्चासन् सुरास्तदा। लब्धा हयसहस्रन्तु तांश्च दृष्ट्वा दिवौकसः॥ २९॥ धर्मेण लब्धा तां भार्य्यामृचीको द्विजसत्तमः। यथाकामं यथाजोषं तया रेमे सुमध्यया॥ ३०॥ तं विवाहे कृते राजन् सभार्य्यमवलोककः। आजगाम भृगुः श्रेष्ठं पुत्रं दृष्ट्वा ननन्द च॥ ३१॥ भार्य्यापती तमासीनं गुरुं सुरगणार्च्चितम्। अर्च्चित्वा पर्य्युपासीनौ प्राञ्जली तस्थतुस्तदा॥ ३२॥ ततः स्नुषां स भगवान् प्रहृष्टो भृगुरब्रवीत्। वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम्॥ ३३॥ सा वै प्रसादयामास तं गुरुं पुत्रकारणात्। आत्मनश्चैव मातुश्च प्रसादञ्च चकार सः॥ ३४॥

भृगुरुवाच। ऋतौ त्वञ्चैव माता च स्नाते पुंसवनाय वै। आलिङ्गेतां पृथग्वृक्षौ साश्वत्थं त्वमुदुम्बरम्॥ ३५॥ चरुद्वयमिदं भद्रे जनन्याश्च तवैव च। विश्वमावर्त्तयित्वा तु मया यत्नेन साधितम्॥ ३६॥ प्राशितव्यं प्रयत्नेन चेत्युक्त्वादर्शनं गतः। आलिङ्गने चरौ चैव चक्रतुस्ते विपर्य्ययम्॥ ३७॥ ततः पुनः स भगवान् काले बहुतिथे गते। दिव्यज्ञानाद्विदित्वा तु भगवानागतः पुनः॥ ३८॥ अथोवाच महातेजा भृगुः सत्यवतीं स्नुषाम्।

उपयुक्तश्चरुर्भद्रे वृच्चे चालिङ्गनं कृतम् ॥ ३९ ॥ विपरीतेन ते सुभ्रु माता चैवासि वञ्चिता। ब्राह्मणः चत्रवृत्तिर्वै तव पुत्रो भविष्यति ॥ ४० ॥ चत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान्। भविष्यति महावीर्य्यः साधूनां मार्गमाश्रितः ॥ ४१ ॥ ततः प्रसादयामास श्वशुरं सा पुनः पुनः। न मे पुत्रो भवेदीदृक् कामं पौत्रो भवेदिति ॥ ४२ ॥ एवमस्त्विति सा तेन पाण्डव-प्रतिनन्दिता। जमदग्निं ततः पुत्रं जज्ञे सा काल आगते ॥ ४३ ॥ तेजसा वर्च्चसा चैव युक्तं भार्गवनन्दनम्। स वर्द्धमानस्तेजस्वी वेदस्याध्ययनेन च ॥ ४४ ॥ बहूनृषीन्महातेजाः पाण्डवेयात्यवर्त्तत। तन्तु कृत्स्नो धनुर्व्वेदः प्रत्यभाद्भरतर्षभ। चतुर्व्विधानि चास्त्राणि भास्करोपमवर्च्चसम् ॥ ४५ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि जमदग्न्युत्पत्तौ पञ्चदशाधिकशततोऽध्यायः ॥ ११५ ॥

---

अकृतव्रण उवाच। स वेदाध्ययने युक्तो जमदग्निर्महातपाः। तपस्तेपे ततो वेदान्नियमाद्वशमानयत् ॥ १ ॥ स प्रसेनजितं राजन्नधिगम्य नराधिपम्। रेणुकां वरयामास स च तस्मै ददौ नृपः ॥ २ ॥ रेणुकान्त्वथ सम्प्राप्य भार्य्यां भार्गवनन्दनः। आश्रमस्थस्तया सार्द्धं तपस्तेपेऽनुकूलया ॥ ३ ॥ तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः। सर्व्वेषामजघन्यस्तु राम आसीज्जघन्यजः ॥ ४ ॥ फलाहारेषु सर्व्वेषु गतेष्वथ सुतेषु वै। रेणुका स्नातुमगमत् कदाचिन्नियतव्रता ॥ ५ ॥ सा तु चित्ररथं नाम मार्त्तिकावतकं नृपम्। ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥ ६ ॥ क्रीड़न्तं सलिले दृष्ट्वा सभार्य्यं पद्ममालिनम्। ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥ ७ ॥ व्यभिचाराच्च

तस्मात् सा छिन्नाम्भसि विचेतना। प्रविवेशाश्रमं त्रस्ता तां वै भर्त्ताऽभ्यबुध्यत ॥ ८ ॥ स तां दृष्ट्वा च्युतां धैर्य्याद्ब्राह्म्या लक्ष्म्या विवर्ज्जिताम् । धिक्शब्देन महातेजा गर्हयामास वीर्य्यवान् ॥९॥ ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः। आजगाम सुषेणश्च वसुर्विश्वावसुस्तथा ॥ १० ॥ तानानुपूर्व्या भगवान् वधे मातुरचोदयत् । न च ते जातसम्मोहाः किञ्चिदूचुर्विचेतसः ॥११॥ ततः शशाप तान् क्रोधात्ते शप्ताश्चेतनां जहुः । मृगपक्षिसधर्माणः क्षिप्रमासन् जडोपमाः ॥ १२ ॥ ततो रामोऽभ्ययात् पश्चादाश्रमं परवीरहा। तमुवाच महाबाहुर्जमदग्निर्महातपाः ॥ १३ ॥ जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः। तत आदाय परशुं रामो मातुः शिरोऽहरत् ॥ १४ ॥ ततस्तस्य महाराज जमदग्नेर्महात्मनः। कोपोऽभ्यगच्छत् सहसा प्रसन्नश्चाब्रवीदिदम् ॥ १५ ॥ ममेदं वचनात्तात कृतन्ते कर्म्म दुष्करम् । वृणीष्व कामान् धर्मज्ञ यावतो वाञ्छसे हृदा ॥ १६ ॥ स वव्रे मातुरुत्थानमस्मृतिञ्च वधस्य वै। पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा ॥ १७ ॥ अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत। ददौ च सर्वान् कामांस्तान् जमदग्निर्महातपाः ॥ १८ ॥ कदाचित्तु तथैवास्य विनिष्क्रान्ताः सुताः प्रभो। अथानूपपतिर्वीर कार्त्तवीर्य्योऽभ्यवर्त्तत ॥ १९ ॥ तमाश्रमपदं प्राप्तमृषेर्भार्य्या समार्चयत् । स युद्धमदसम्मत्तो नाभ्यनन्दत्तथार्चनम् ॥ २० ॥ प्रमथ्य चाश्रमात्तस्माद्धोमधेनोस्तथा बलात् । जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥ २२ ॥ आगताय च रामाय तदाचष्ट पिता स्वयम् । गाञ्च रोरुदतीं दृष्ट्वा कोपो रामं समाविशत् ॥२२॥ स मृत्युवशमापन्नं कार्त्तवीर्य्यमुपाद्रवत् । तस्याथ युधि विक्रम्य भार्गवः परवीरहा ॥ २३ ॥ चिच्छेद निशितैर्भल्लैर्बाहून् परिघसन्निभान्। सहस्रसम्मितान्राजन् प्रगृह्य रुचिरं धनुः ॥ २४ ॥

अभिभूतः स रामेण संयुक्तः कालधर्मणा । अर्जुनस्याथ दायादा रामेण कृतमन्यवः ॥ २५ ॥ आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् । ते तं जघ्नुर्महावीर्य्यमयुध्यन्तं तपस्विनम् ॥ २६ ॥ असकृद्रामरामेति विक्रोशन्तमनाथवत् । कार्त्तवीर्य्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर ॥ २७ ॥ पीड़यित्वा शरैर्जग्मुर्यथागतमरिन्दमाः । अपक्रान्तेषु चैतेषु जमदग्नौ तथा गते ॥ २८ ॥ समित्पाणिरुपागच्छदाश्रमं भृगुनन्दनः । स दृष्ट्वा पितरं वीरस्तथामृत्युवशङ्गतम् । अनर्हं तं तथाभूतं विललाप सुदुःखितः ॥ २९ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि जामदग्निवधे षोड़शाधिकशतोऽध्यायः ॥ ११६ ॥

---

राम उवाच । मम पराधात्तैः क्षुद्रैर्हतस्त्वं तात बालिशैः । कार्त्तवीर्य्यस्य दायादैर्वने मृग इवेषुभिः ॥ १ ॥ धर्मज्ञस्य कथं तात वर्त्तमानस्य सत्पथे । मृत्युरेवंविधो युक्तः सर्वभूतेष्वनागसः ॥ २ ॥ किन्नु तैर्न कृतं पापं यैर्भवांस्तपसि स्थितः । अयुध्यमानो वृद्धः सन् हतः शरशतैः शितैः ॥ ३ ॥ किन्नु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च । अयुध्यमानं धर्मज्ञमेकं हत्वानपत्रपाः ॥ ४ ॥ लालप्यैवं सकरुणं बहु नानाविधं नृप । प्रेतकार्य्याणि सर्वाणि पितुश्चक्रे महातपाः ॥ ५ ॥ ददाह पितरञ्चाग्नौ रामः परपुरञ्जयः । प्रतिजज्ञे वधञ्चापि सर्वक्षत्रस्य भारत ॥ [६] ॥ स क्रुद्धोऽतिबलः सङ्ख्ये शस्त्रमादाय वीर्य्यवान् । ज[घ्]निवान् कार्त्तवीर्य्यस्य सुतानेकोऽन्तकोपमः ॥ ७ ॥ तेषाञ्चानुगता ये च क्षत्रियाः क्षत्रियर्षभ । तांश्च सर्वानवामृद्नाद्रामः प्रहरताम्वरः ॥ ८ ॥ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः । समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् ॥ ९ ॥ स तेषु तर्पयामास भृगून्

भृगुकुलोद्वहः । साक्षाद्दर्श वर्चीकं स च रामं न्यवेदयत् ॥१०॥
ततो यज्ञेन महता जामदग्न्यः प्रतापवान् । तर्पयामास देवेन्द्र-
मृत्विग्भ्यः प्रददौ महीम् ॥ ११ ॥ वेदीञ्चाप्यददद्धैमीं कश्यपाय
महात्मने । दशव्यामायतां कृत्वा नवोत्सेधां विशाम्पते ॥ १२ ॥
तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा । व्यभजंस्ते तदा राजन्
प्रख्याताः खाण्डवायनाः ॥ १३ ॥ स प्रदाय महीं तस्मै कश्यपाय
महात्मने । तपः सुमहदास्थाय क्षत्रियान्तकरो नृप । अस्मिन्महेन्द्रे
शैलेन्द्रे वसत्यमितविक्रमः ॥ १४ ॥ एवं वैरमभूत्तस्य क्षत्रियैर्लोक-
वासिभिः । पृथिवी चापि विजिता रामेणामिततेजसा ॥ १५ ॥
वैशम्पायन उवाच । ततश्चतुर्दश्यां रामः समयेन महामनाः ।
दर्शयामास तान् विप्रान् धर्मराजञ्च सानुजम् ॥ १६ ॥ स तमा-
नर्च राजेन्द्र भ्रातृभिः सहितः प्रभुः । द्विजानाञ्च परां पूजां
चक्रे नृपतिसत्तमः ॥ १७ ॥ अर्चित्वा जामदग्न्यं स पूजितस्तेन
चोदितः । महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः ॥ १८ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि जामदग्न्योपाख्याने
सप्तदशाधिकशतोऽध्यायः ॥ ११७ ॥

---

वैशम्पायन उवाच । गच्छन् स तीर्थानि महानुभावः पुण्यानि
रम्याणि ददर्श राजा । सर्वाणि विप्रैरुपशोभितानि क्वचित्
क्वचिद्भारत सागरस्य ॥ १ ॥ स वृत्तवांस्तेषु कृताभिषेकः सहा-
नुजः पार्थिवपुत्रपौत्रः । समुद्रगां पुण्यतमां प्रशस्तां जगाम
पारिक्षित पाण्डुपुत्रः ॥ २ ॥ तत्रापि चाप्लुत्य महानुभावः सन्त-
र्पयामास पितॄन् सुरांश्च । द्विजातिमुख्येषु धनं विसृज्य गोदा-
वरीं सागरगामगच्छत् ॥ ३ ॥ ततो विपाप्मा द्रविड़ेषु राजन्
समुद्रमासाद्य च लोकपुण्यम् । अगस्त्यतीर्थञ्च महापवित्रं नारी-

तीर्थान्यथ वीरो ददर्श ॥ ४ ॥ तत्रार्ज्जुनस्याग्र्यधनुर्धरस्य निशम्य तत् कर्म नरैरशक्यम् । संपूज्यमानः परमर्षिसंघैः परां मुदं पाण्डुसुतः स लेभे ॥ ५ ॥ स तेषु तीर्थेष्वभिषिक्तगात्रः कृष्णासहायः सहितोऽनुजैश्च । सम्पूजयन् विक्रममर्ज्जुनस्य रेमे महीपाल पतिः पृथिव्याः ॥ ६ ॥ ततः सहस्राणि गवां प्रदाय तीर्थेषु तेष्वम्बुधरोत्तमस्य । हृष्टः सह भ्रातृभिरर्ज्जुनस्य सङ्कीर्त्तयामास गवां प्रदानम् ॥ ७ ॥ स तानि तीर्थानि च सागरस्य पुण्यानि चान्यानि बहूनि राजन् । क्रमेण गच्छन् परिपूर्णकामः शूर्पारकं पुण्यतमं ददर्श ॥ ८ ॥ तत्रोदधेः कञ्चिदतीत्य देशं ख्यातं पृथिव्यां वनमाससाद । तप्तं सुरैर्यत्र तपः पुरस्तादिष्टं तथा पुण्यपरैर्नरेन्द्रैः ॥ ९ ॥ स तत्र तामग्र्यधनुर्द्धरस्य वेदीं ददर्शायतपीनबाहुः । ऋचीकपुत्रस्य तपस्विसङ्घैः समावृतां पुण्यकृदर्चनीयाम् ॥ १० ॥ ततो वसूनां वसुधाधिपः स मरुद्गणानाञ्च तथाश्विनोश्च । वैवस्वतादित्यधनेश्वराणामिन्द्रस्य विष्णोः सवितुर्विभोश्च ॥ ११ ॥ भवस्य चन्द्रस्य दिवाकरस्य पतेरपां साध्यगणस्य चैव । धातुः पितॄणाञ्च तथा महात्मा रुद्रस्य राजन् सगणस्य चैव ॥ १२ ॥ सरस्वत्याः सिद्धगणस्य चैव पुण्याश्च ये चाप्यमरास्तथान्ये । पुण्यानि चाप्यायतनानि तेषां ददर्श राजा सुमनोहराणि ॥ १३ ॥ तेषूपवासान् विविधानुपोष्य दत्त्वा च रत्नानि महान्ति राजा । तीर्थेषु सर्व्वेषु परिप्लुताङ्गः पुनः स शूर्पारकमाजगाम ॥ १४ ॥ स तेन तीर्थेन तु सागरस्य पुनः प्रयातः सह सोदरीयैः । द्विजैः पृथिव्यां प्रथितं महद्भिस्तीर्थं प्रभासं समुपाजगाम ॥ १५ ॥ तत्राभिषिक्तः पृथुलोहिताक्षः सहानुजैर्द्देवगणान् पितॄंश्च । सन्तर्पयामास तथैव कृष्णा ते चापि विप्राः सह लोमशेन ॥ १६ ॥ स द्वादशाहं जलवायुभक्षः कुर्व्वन् क्षपाहःसु तदाभिषेकम् । समन्ततोऽग्नीनुपदीपयित्वा तेपे तपो धर्म्मभृतां-

र्वरिष्ठः ॥ १७ ॥ तमुग्रमास्थाय तपश्चरन्तं शुश्राव रामस्य जनार्दनस्य। तौ सर्ववृष्णिप्रवरौ ससैन्यौ युधिष्ठिरं जग्मतुराजमीढ़म् ॥ १८ ॥ ते वृष्णयः पाण्डुसुतान् समीक्ष्य भूमौ शयानान् मलदिग्धगात्रान्। अनर्हतीं द्रौपदीञ्चापि दृष्ट्वा सुदुःखिताश्चुक्रुशुरार्त्तनादम् ॥ १९ ॥ ततः स रामञ्च जनार्द्दनञ्च कार्ष्णिञ्च साम्बञ्च शिनेश्च पौत्रम्। अन्यांश्च वृष्णीनुपगम्य पूजाञ्चक्रे यथाधर्ममहीनसत्त्वः ॥ २० ॥ ते चापि सर्वान् प्रतिपूज्य पार्थांस्तैः सत्कृताः पाण्डुसुतैस्तथैव। युधिष्ठिरं सम्परिवार्य्य राजन्नुपाविशन्देवगणा यथेन्द्रम् ॥ २१ ॥ तेषां स सर्वञ्चरितं परेषां वने च वासं परमप्रतीतः। अस्त्रार्थमिन्द्रस्य गतञ्च पार्थं निवेशनं हृष्टमनाः शशंस ॥ २२ ॥ श्रुत्वा तु ते तस्य वचः प्रतीतास्तांश्चापि दृष्ट्वा सुकृशानतीव। नेत्रोद्भवं संमुमुचुर्महार्हा दुःखार्त्तिजं वारि महानुभावाः ॥ २३ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि वार्ष्णेययुधिष्ठिरसंवादे अष्टादशाधिकशततोऽध्यायः ॥ ११८ ॥

---

जनमेजय उवाच। प्रभासतीर्थमासाद्य पाण्डवा वृष्णयस्तथा। किमकुर्वन् कथाश्चैषां कास्तत्रासंस्तपोधन ॥ १ ॥ ते हि सर्वे महात्मानः सर्वशास्त्रविशारदाः। वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परम् ॥ २ ॥

वैशम्पायन उवाच। प्रभासतीर्थं संप्राप्य पुण्यतीर्थं महोदधेः। वृष्णयः पाण्डवान् वीराः परिवार्य्योपतस्थिरे ॥ ३ ॥ ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः। वनमाली हली रामो बभाषे पुष्करेक्षणम् ॥ ४ ॥

बलदेव उवाच। न कृष्ण धर्मश्चरितो भवाय जन्तोरधर्मश्च

पराभवाय । युधिष्ठिरो यत्र जटी महात्मा वनाश्रयः क्लिश्यति चीरवासाः ॥ ५ ॥ दुर्य्योधनस्यापि महीं प्रयास्ति न चास्य भूमिविवरं ददाति । धर्म्मादधर्म्मश्चरितो गरीयानितीव मन्येत नरोऽल्पबुद्धिः ॥ ६ ॥ दुर्य्योधने चापि विवर्द्धमाने युधिष्ठिरे चासुखमात्तराज्ये । किन्त्वत्र कर्त्तव्यमिति प्रजाभिः शङ्का मिथः सञ्जनिता नराणाम् ॥ ७ ॥ अयं स धर्म्मप्रभवो नरेन्द्रो धर्म्मे धृतः सत्यधृतिः प्रदाता । चलेद्धि राज्याच्च सुखाच्च पार्थो धर्म्मादपेतस्तु कथं विवर्द्धेत् ॥ ८ ॥ कथं नु भीष्मस्य कृपस्य विप्रो द्रोणस्य राजा च कुलस्य वृद्धः । प्रव्राज्य पार्थान् सुखमाप्नुवन्ति धिक् पापबुद्धीन् भरतप्रधानान् ॥ ९ ॥ किन्नाम वच्यत्यवनिप्रधानः पितॄन् समागम्य परत्र पापः । पुत्रेषु सम्यक् चरितं मयेति पुत्रानपापान् व्यपरोप्य राज्यात् ॥ १० ॥ नासौ धिया संप्रति पश्यति स्म किं नाम कृत्वाहमचक्षुरेवम् ।, जातः पृथिव्यामिति पार्थिवेषु प्रव्राज्य कौन्तेयमिति स्वराज्यात् ॥ ११ ॥ नूनं समृद्धान् पितृलोकभूमौ चामीकराभान् क्षितिजान् प्रफुल्लान् । विचित्रवीर्य्यस्य सुतः सपुत्रः कृत्वा नृशंसं बत पश्यति स्म ॥ १२ ॥ व्यूढोत्तरांसान् पृथुलोहिताक्षानिमान् स्म पृच्छन् स शृणोति ननम् । प्रास्थापयत् यत् स वनं ह्यशङ्को युधिष्ठिरं सानुजमात्तशस्त्रम् ॥ १३ ॥ योऽयं परेषां पृतनां समृद्धां निरायुधो दीर्घभुजो निहन्यात् । श्रुत्वैव शब्दं हि वृकोदरस्य मुञ्चन्ति सैन्यानि शकृत् समूत्रम् ॥ १४ ॥ स क्षुत्पिपासाध्वकृशस्तरस्वी समेत्य नानायुधबाणपाणिः । वने स्मरन् वासमिमं सुघोरं शेषं न कुर्य्यादिति निश्चितं मे ॥ १५ ॥ न ह्यस्य वीर्य्येस्य बलेन कश्चित् समः पृथिव्यामपि विद्यतेऽन्यः । स शीतवातातपकर्षिताङ्गो न शेषमाजावसुहृत्सु कुर्य्यात् ॥ १६ ॥ प्राच्यान्नृपानेकरथेन जित्वा वृकोदरः सानुचरान्रणेषु । स्वस्त्यागमद्योऽतिरथस्तरस्वी सोऽयं वने क्लिश्यति चीरवासाः ॥ १७ ॥

यः सिन्धुकूले व्यजयन्नृदेवान् समागतान् दाक्षिणात्यान् महीपान्। तं पश्यतेमं सहदेवमद्य तरस्विनं तापसवेषरूपम् ॥ १८ ॥ यः पार्थिवानेकरथेन जिग्ये दिशं प्रतीचीं प्रति युद्धशौण्डः। सोऽयं वने मूलफलेन जीवन् जटी चरत्यद्य मलाचिताङ्गः ॥ १९ ॥ सत्रे समृद्धेऽतिरथस्य राज्ञो वेदीतलादुत्पतिता सुता या। सेयं वने वासमिमं सुदुःखं कथं सहत्यद्य सती सुखार्हा ॥ २० ॥ त्रिवर्गमुख्यस्य समीरणस्य देवेश्वरस्याप्यथ वाश्विनोश्च। एषां सुराणां तनयाः कथन्नु वने चरन्त्यस्तसुखाः सुखार्हाः ॥ २१ ॥ जिते हि धर्मस्य सुते सभार्य्ये सभ्रातृके सानुचरे निरस्ते। दुर्य्योधने चापि विवर्द्धमाने कथं न सीदत्यवनिः सशैला ॥ २२ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि बलरामवाक्ये
एकोनविंशत्यधिकशततोऽध्यायः ॥ ११९ ॥

---

सात्यकिरुवाच। न राम कालः परिदेवनाय यदुत्तरं तत्र तदेव सर्वं। समाचरामो ह्यनतीतकालं युधिष्ठिरो यद्यपि नाह किञ्चित् ॥ १ ॥ ये नाथवन्तोऽद्य भवन्ति लोके ते नात्मना कर्म समारभन्ते। तेषान्तु कार्य्येषु भवन्ति नाथाः शैव्यादयो राम यथा ययातेः ॥ २ ॥ येषां तथा राम समारभन्ते कार्य्याणि नाथाः स्वमतेन लोके। ते नाथवन्तः पुरुषप्रवीरा नानाथवत् कृच्छ्रमवाप्नुवन्ति ॥ ३ ॥ कस्मादिमौ रामजनार्द्दनौ च प्रद्युम्नशाम्बौ च मया समेतौ। वसन्त्यरण्ये सह सोदरीयैस्त्रैलोक्यनाथानभिगम्य पार्थाः ॥ ४ ॥ निर्य्यातु साध्वद्य दशार्हसेना प्रभूतनानायुधचित्रवर्मा। यमक्षयं गच्छतु धार्त्तराष्ट्रः सबान्धवो वृष्णिबलाभिभूतः ॥ ५ ॥ त्वं ह्येव कोपात् पृथिवीमपीमां संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा। स धार्त्तराष्ट्रं जहि सानुबन्धं वृत्रं यथा

देवप्रतिर्महेन्द्रः ॥ ६ ॥ भ्राता च मे यः स सखा गुरुश्च जनार्द्दनस्यात्मसमश्च पार्थः । यदर्थमैच्छन्मनुजाः सुपुत्रं शिष्यं गुरुश्चाप्रतिकूलवादम् ॥७॥ यदर्थमभ्युद्यतमुत्तमन्तत् करोति कर्माग्र्यमपारणीयम् । तस्यास्त्रवर्षाण्यहमुत्तमास्त्रैर्विहत्य सर्वाणि रणेऽभिभूय ॥ ८ ॥ कोषाच्छिरः सर्पविषाग्निकल्पैः शरोत्तमैरुन्मथितास्मि राम । खड्गेन चाहं निशितेन सङ्ख्ये कायाच्छिरस्तस्य बलात् प्रमथ्य ॥ ९ ॥ ततोऽस्य सर्व्वाननुगान् हनिष्ये दुर्य्योधनञ्चापि कुरूंश्च सर्व्वान् । आत्तायुधं मामिह रौहिणेय पश्यन्तु भौमा युधि जातहर्षाः ॥ १० ॥ निघ्नन्तमेकं कुरुयोधमुख्यानग्निं महाकक्षमिवान्तकाले । प्रद्युम्नमुक्तान्निशितान्न शक्ताः सोढुं कृपद्रोणविकर्णकर्णाः ॥ ११ ॥ जानामि वीर्य्यञ्च जयात्मजस्य कार्ष्णिर्भवत्येष यथा रणस्थः । शाम्बः ससूतं सरथं भुजाभ्यां दुःशासनं शास्तु बलात् प्रमथ्य ॥१२॥ न विद्यते जाम्बवतीसुतस्य रणे विषह्यं हि रणोत्कटस्य । एतेन बालेन हि शम्बरस्य दैत्यस्य सैन्यं सहसा प्रणुन्नम ॥ १३ ॥ वृत्तोरुरत्यायतपीनबाहुरेतेन सङ्ख्ये निहतोऽश्वचक्रः । को नाम शाम्बस्य महारथस्य रणे समक्षं रथमभ्युदीयात् ॥ १४ ॥ यथा प्रविश्यान्तरमस्य सङ्ख्ये को वै मनुष्यो हि विनिष्क्रमेत । तथा पविश्यान्तरमस्य सङ्ख्ये को नाम जीवन् पुनराव्रजेच्च ॥ १५ ॥ द्रोणञ्च भीष्मञ्च महारथौ तौ सुतैर्वृतञ्चाप्यथ सोमदत्तम् । सर्व्वाणि सैन्यानि च वासुदेवः प्रधक्ष्यते सायकवह्निजालैः ॥ १६ ॥ किन्नाम लोकेष्वविषह्यमस्ति कृष्णस्य सर्व्वेषु सदैवतेषु । आत्तायुधस्योत्तमवाणपाणेश्चक्रायुधस्याप्रतिमस्य युद्धे ॥ १७ ॥ ततोऽनिरुद्धोऽप्यसिचर्मपाणिर्महीमिमां धार्त्तराष्ट्रैर्विसंज्ञैः । हृतोत्तमाङ्गैर्निहितैः करोतु कीर्णाङ्कुशैर्वेदिमिवाध्वरेषु ॥ १८ ॥ गदोल्मुकौ बाहुकभानुनीथाः शूरश्च सङ्ख्ये निशठः कुमारः । रणोत्-

कटौ सारणचारुदेष्णौ कुलोचितं विप्रथयन्तु कर्म ॥ १९ ॥ स-
वृष्णिभोजान्धकयोधमुख्या समागता सात्वतशूरसेना। हत्वा
रणे तान् धृतराष्ट्रपुत्रान् लोके यशः स्फीतमुपाकरोतु ॥ २० ॥
ततोऽभिमन्युः पृथिवीं प्रशास्तु यावद्व्रतं धर्मभृतां वरिष्ठः।
युधिष्ठिरः पारयते महात्मा द्यूते यथोक्तं कुरुसत्तमेन ॥ २१ ॥
अस्मत्प्रमुक्तैर्विशिखैर्जितारिस्ततो महीं भोक्ष्यति धर्मराजः।
निर्धार्त्तराष्ट्रां हतसूतपुत्रामेतद्धि नः कृत्यतमं यशस्यम् ॥ २२ ॥

वासुदेव उवाच। असंशयं माधव सत्यमेतद्गृह्णीम ते वाक्य-
मदीनसत्त्व। स्वाभ्यां भुजाभ्यामजितान्तु भूमिं नेच्छेत् कुरू-
णामृषभः कथञ्चित् ॥ २३ ॥ न ह्येष कामान्न भयान्न लोभाद्युधि-
ष्ठिरो जातु जह्यात् स्वधर्मम्। भीमार्जुनौ चातिरथौ यमौ च
तथैव कृष्णा द्रुपदात्मजेयम् ॥ २४ ॥ उभौ हि युद्धेऽप्रतिमौ
पृथिव्यां वृकोदरश्चैव धनञ्जयश्च। कस्मान्न कृत्स्नां पृथिवीं
प्रशासेन्माद्रीसुताभ्याञ्च पुरस्कृतोऽयम् ॥ २५ ॥ यदा तु पाञ्चाल-
पतिर्महात्मा सकेकयश्चेदिपतिर्वयञ्च। युध्येम विक्रम्य रणे समे-
तास्तदैव सर्वे रिपवो हि न स्युः ॥ २६ ॥

युधिष्ठिर उवाच। नैतच्चित्रं माधव यद्ब्रवीषि सत्यन्तु मे
रक्ष्यतमं न राज्यम्। कृष्णस्तु मां वेद यथावदेकः कृष्णञ्च वेदा-
हमथो यथावत् ॥ २७ ॥ यदैव कालं पुरुषप्रवीर वेत्स्यत्ययं
माधव विक्रमस्य। तदा रणे त्वञ्च शिनिप्रवीर सुयोधनं जेष्यसि
केशवश्च ॥ २८ ॥ प्रतिप्रयान्त्वद्य दशार्हवीरा दृष्टोऽस्मि नाथैर्नर-
लोकनाथैः। धर्मेऽप्रमादं कुरुताप्रमेया द्रष्टास्मि भूयः सुखिनः
समेतान् ॥ २९ ॥ तेऽन्योन्यमामन्त्र्य तथाभिवाद्य वृद्धान् परि-
ष्वज्य शिशूंश्च सर्वान्। यदुप्रवीराः स्वगृहाणि जग्मुस्ते चापि
तीर्थान्यनुसंविचेरुः ॥ ३० ॥ विसृज्य कृष्णं त्वथ धर्मराजो
विदर्भराजोपचितां सुतीर्थाम्। जगाम पुण्यां सरितं पयोष्णीं

सभ्रातृभृत्यः सह लोमशेन ॥ ३१ ॥ सुखेन सोमेन विमिश्रतोयां
पयः पयोष्णीं प्रति सोऽध्युवास । द्विजातिमुख्यैर्मुदितैर्महात्मा
संस्तूयमानः स्तुतिभिर्वराभिः ॥ ३२ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि दक्षिणगमने
विंशत्यधिकशततोऽध्यायः १२०॥

---

लोमश उवाच । नृगेण यजमानेन सोमेनेह पुरन्दरः ।
तर्पितः श्रूयते राजन् स तृप्तो मदमभ्यगात् ॥ १ ॥ इह देवैः
सहेन्द्रैश्च प्रजापतिभिरेव च । इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरि-
दक्षिणैः ॥ २ ॥ आमूर्त्तरयसश्चेह राजा वज्रधरं प्रभुं । तर्पया-
मास सोमेन हयमेधेषु सप्तसु ॥ ३ ॥ तस्य सप्तसु यज्ञेषु सर्व्व-
मासीद्धिरण्मयम् । वानस्पत्यञ्च भौमञ्च यद्द्रव्यं नियतं मखे ॥ ४ ॥
चषालयूपचमसाः स्थाल्यः पात्र्यः स्रुचः स्रुवाः । तेष्वेव चास्य
यज्ञेषु प्रयोगाः सप्त विश्रुताः ॥ ५ ॥ सप्तैकैकस्य यूपस्य चषाला-
श्चोपरिस्थिताः । तस्य स्म यूपान् यज्ञेषु भ्राजमानान् हिर-
ण्मयान् ॥ ६ ॥ स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर । तेषु
तस्य मखाग्र्येषु गयस्य पृथिवीपतेः ॥ ७ ॥ अमाद्यदिन्द्रः सोमेन
दक्षिणाभिर्द्विजातयः । प्रसंख्यानानसंख्येयान् प्रत्यगृह्णन् द्विजा-
तयः ॥ ८ ॥ सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतो धारा असंख्येयाः स्म केनचित् ॥ ९ ॥ तथैव
तदसंख्येयं धनं यत् प्रददौ गयः । सदस्येभ्यो महाराज तेषु
यज्ञेषु सप्तसु ॥ १० ॥ भवेत् संख्येयमेतद्धि यदेतत् परिकीर्त्ति-
तम् । न तस्य शक्याः संख्यातुं दक्षिणा दक्षिणावतः ॥ ११ ॥
हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्म्मणा । ब्राह्मणांस्तर्पयामास
नानादिग्भ्यः समागतान् ॥ १२ ॥ अल्पावशेषा पृथिवी चैत्यै-

रासीन्महात्मनः । गयस्य यजमानस्य तत्र तत्र विशाम्पते ॥ १३ ॥
स लोकान् प्राप्तवानैन्द्रान् कर्मणा तेन भारत । सलोकतां तस्य
गच्छेत् पयोष्ण्यां य उपस्पृशेत् ॥ १४ ॥ तस्मात्त्वमत्र राजेन्द्र
भ्रातृभिः सहितोच्युत । उपस्पृश्य महीपाल धूतपाप्मा भवि-
ष्यसि ॥ १५ ॥

वैशम्पायन उवाच । स पयोष्ण्यां नरश्रेष्ठ स्नात्वा वै भ्रातृभिः
सह । वैदूर्य्यपर्वतञ्चैव नर्मदाञ्च महानदीम् ॥ १६ ॥ समाजगाम
तेजस्वी भ्रातृभिः सहितोऽनघ । तत्रास्य सर्वानाचख्यौ लोमशो
भगवानृषिः ॥ १७ । तीर्थानि रमणीयानि पुण्यान्यायतनानि च ।
यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह । तत्र तत्राददद्वित्तं
ब्राह्मणेभ्यः सहस्रशः ॥ १८ ॥

लोमश उवाच । देवानामेति कौन्तेय तथा राज्ञां सलोक-
ताम् । वैदूर्य्यपर्वतं दृष्ट्वा नर्मदामवतीर्य्य च । सन्धिरेष नर-
श्रेष्ठ त्रेताया द्वापरस्य च ॥ १९ ॥ एतमासाद्य कौन्तेय सर्व-
पापैः प्रमुच्यते । एष शर्य्यातियज्ञस्य देशस्तात प्रकाशते ॥ २० ॥
साक्षाद्यत्रापिवत् सोममश्विभ्यां सह कौशिकः । चुकोप भार्गव-
श्चापि महेन्द्रस्य महातपाः ॥ २१ ॥ संस्तम्भयामास च तं वासवं
च्यवनः प्रभुः । सुकन्याञ्चापि भार्य्याञ्च राजपुत्रीमवाप्तवान् ॥२२॥

युधिष्ठिर उवाच । कथं विष्टम्भितस्तेन भगवान् पाक-
शासनः । किमर्थं भार्गवश्चापि कोपञ्चक्रे महातपाः ॥ २४ ॥
नासत्यौ च कथं ब्रह्मन् कृतवान् सामपीथिनौ । एतत् सर्वं
यथावृत्तमाख्यातु भगवान्मम ॥ २५ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सुकन्योपाख्याने
एकविंशत्यधिकशततोऽध्यायः ॥ १२१ ॥

---

लोमश उवाच । भृगोर्महर्षेः पुत्त्रोऽभूच्च्यवनो नाम भारत । समीपे सरसस्तस्य तपस्तेपे महाद्युतिः ॥ १ ॥ स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव । अतिष्ठत् चिरं कालमेकदेशे विशाम्पते ॥ २ ॥ स वल्मीकोऽभवदृषिर्लताभिरभिसंवृतः । कालेन महता राजन् समाकीर्णः पिपीलिकैः ॥ ३ ॥ तथा स संवृतो धीमान् मृत्पिण्ड इव सर्वशः । तप्यते स्म तपो घोरं वल्मीकेन समावृतः ॥ ४ ॥ अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः । आजगाम सरो रम्यं विहर्त्तुमिदमुत्तमम् ॥ ५ ॥ तस्य स्त्रीणां सहस्राणि चत्वार्य्यासन् परिग्रहः । एकैव च सुता सुभ्रूः सुकन्या नाम भारत ॥ ६ ॥ सा सखीभिः परिवृता दिव्याभरणभूषिता । चंक्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ७ ॥ सा वै वसुमतीं तत्र पश्यन्ती सुमनोरमाम् । वनस्पतीन् विचिन्वन्ती विजहार सखीवृता ॥ ८ ॥ रूपेण वयसा चैव मदनेन मदेन च । बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ९ ॥ तां सखीरहितामेकामेकवस्त्रामलंकृताम् । ददर्श भार्गवो धीमांश्चरन्तीमिव विद्युतम् ॥ १० ॥ तां पश्यमानो विजने स रेमे परमद्युतिः । क्षामकण्ठश्च विप्रर्षिस्तपोबलसमन्वितः ॥ ११ ॥ तामाबभाषे कल्याणीं सा चास्य न शृणोति वै । ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ॥ १२ ॥ कौतूहलात् कण्टकेन बुद्धिमोहबलात्कृता । किन्नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ॥ १३ ॥ अक्रुध्यत् स तया विद्धे नेत्रे परममन्युमान् । ततः शर्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् ॥ १४ ॥ ततो रुद्धे शकृन्मूत्रे सैन्यमासीत् सुदुःखितम् । तथागतमभिप्रेक्ष्य पर्य्यपृच्छत् स पार्थिवः ॥ १५ ॥ तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः । केनापकृतमद्येह भार्गवस्य महात्मनः ॥ १६ ॥ ज्ञातं वा यदि वाज्ञातं तद्द्रुतं ब्रूत माचिरम् । तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ॥ १७ ॥

सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु। ततः स पृथिवीपालः
साम्ना चोग्रेण च स्वयम् ॥ १८ ॥ पर्य्यपृच्छत् सुहृद्वर्गं पर्य्यजानन्न
चैव ते। अनाहार्त्तं ततो दृष्ट्वा बत् सैन्यमसुखार्द्दितम् ॥ १९ ॥
पितरं दुःखितं दृष्ट्वा सुकन्येदमथाब्रवीत्। मयाटन्त्येह वल्मीके
दृष्टं सत्त्वमभिज्वलत् ॥ २० ॥ खद्योतवदभिज्ञातं तन्मया विद्ध-
मन्तिकात्। एतच्छ्रुत्वा तु वल्मीकं शर्य्यातिस्तूर्णमभ्ययात् ॥२१॥
तत्रापश्यत्तपोवृद्धं वयोवृद्धञ्च भार्गवम्। अयाचदथ सैन्यार्थं
प्राञ्जलिः पृथिवीपतिः ॥ २२ ॥ अज्ञानाद्बालया यत्ते कृतं तत्
क्षन्तुमर्हसि। ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ॥ २३ ॥
अपमानादहं विद्धो ह्यनया दर्पपूर्णया। रूपौदार्य्यसमायुक्तां
लोभमोहवलात्कृताम् ॥ २४ ॥ तामेव प्रतिगृह्याहं राजन् दुहि-
तरं तव। क्षंस्यामीति महीपाल सत्यमेतद्ब्रवीमि ते ॥ २५ ॥
लोमश उवाच। ऋषेर्वचनमाज्ञाय शर्य्यातिरविचारयन्।
ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ २६ ॥ प्रतिगृह्य च
तां कन्यां भगवान् प्रससाद स। प्राप्तप्रसादो राजा वै ससैन्यः
पुरमाव्रजत् ॥ २७ ॥ सुकन्यापि पतिं लब्ध्वा तपस्विनमनि-
न्दिता। नित्यं पर्य्यचरत् प्रीत्या तपसा नियमेन च ॥ २८ ॥
अग्नीनामतिथीनाञ्च शुश्रूषुरनसूयिका। समाराधयत क्षिप्रं
च्यवनं सा शुभानना ॥ २९ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सुकन्योपाख्याने
द्वाविंशाधिकशततोऽध्यायः ॥ १२२ ॥

---

लोमश उवाच। कस्यचित्त्वथ कालस्य त्रिदशावश्विनौ नृप।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ १ ॥ तां दृष्ट्वा
दर्शनीयाङ्गीं देवराजसुतामिव। ऊचतुः समभिद्रुत्य नासत्या-

वश्विनाविदम् ॥ २ ॥ कस्य त्वमसि वामोरु वनेऽस्मिन् किञ्चरोषि च। इच्छाव भद्रे ज्ञातुं तत्त्वमाख्याहि शोभने ॥ ३ ॥ ततः सुकन्या सव्रीड़ा तावुवाच सुरोत्तमौ। शर्य्यातितनयां वित्तं भार्य्यां मां च्यवनस्य च ॥ ४ ॥ अथाश्विनौ प्रहस्यैतामब्रूतां पुनरेव तु। कथं त्वमसि कल्याणि पित्रा दत्ता गताध्वने ॥ ५ ॥ भ्राजसेऽस्मिन् वने भीरु विद्युत्सौदामिनी यथा। न देवेष्वपि तुल्यां हि त्वया पश्याव भाविनि ॥ ६ ॥ अनाभरणसम्पन्ना परमाम्बरवर्ज्जिता। शोभयस्यधिक भद्रे वनमप्यनलंकृता ॥ ७ ॥ सर्वाभरणसम्पन्ना परमाम्बरधारिणी। शोभसे त्वनवद्याङ्गि नलैवं मलपङ्किनी ॥ ८ ॥ कस्मादेवंविधा भूत्वा जराजर्ज्जरितं पतिम्। त्वमुपास्से ह कल्याणि कामभोगवहिष्कृतम् ॥ ९ ॥ असमर्थं परित्राणे पोषणे च शुचिस्मिते। सा त्वं च्यवनमुत्सृज्य वरयस्वैकमावयोः ॥ १० ॥ पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः। एवमुक्ता सुकन्यापि सुरौ ताविदमब्रवीत् ॥ ११ ॥ रताहं च्यवने पत्यौ मैवं मां पर्य्यशङ्कियाः। तावब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ॥ १२ ॥ युवानं रूपसम्पन्नं करिष्यावः पतिं तव। ततस्तस्यावयोश्चैव वृणीष्वान्यतमं पतिम् ॥ १३ ॥ एतेन समयेनैनमामन्त्रय पतिं शुभे। सा तयोर्वचनाद्राजन्नुपसङ्गम्य भार्गवम् ॥ १४ ॥ उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति। तच्छ्रुत्वा च्यवनो भार्य्यामुवाच क्रियतामिति ॥ १५ ॥ भर्त्रा सा समनुज्ञाता क्रियतामित्यथाब्रवीत्। श्रुत्वा तदाश्विनौ वाक्यं तत्तस्याः क्रियतामिति ॥ १६ ॥ ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः। ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ॥ १७ ॥ अश्विनावपि तद्राजन् सरः प्राविशतां तदा। ततो मुहूर्त्तादुत्तीर्णाः सर्वे ते सरसस्तदा ॥ १८ ॥ दिव्यरूपधराः सर्वे युवानो मृष्टकुण्डलाः तुल्यवेशधराश्चैव मनसः प्रीतिवर्द्धनाः ॥ १९ ॥ तेऽब्रूवन् सहिताः

सर्वं वृणीष्वान्यतमं शुभे । अस्माकमीप्सितं भद्रे पतित्वे वर-
वर्णिनि ॥ २० ॥ यत्र वाप्यभिकामासि तं वृणीष्व सुशोभने ।
सा समीक्ष्य तु तान् सर्वांस्तुल्यरूपधरान् स्थितान् ॥ २१ ॥
निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् । लब्ध्वा तु च्यवनो
भार्य्यां वयो रूपञ्च वाञ्छितम् ॥ २२ ॥ हृष्टोऽब्रवीन्महातेजास्तौ
नासत्याविदं वचः । यथाहं रूपसम्पन्नो वयसा च समन्वितः
॥ २३ ॥ कृतो भवद्भ्यां वृद्धः सन् भार्य्याञ्च प्राप्तवानिमाम् ।
तस्माद्युवां करिष्यामि प्रीत्याहं सोमपीथिनौ ॥ २४ ॥ मिषतो
देवराजस्य सत्यमेतद्ब्रवीमि वाम् । तच्छ्रुत्वा हृष्टमनसौ दिवं
तौ प्रतिजग्मतुः । च्यवनश्च सुकन्या च सुराविव विजह्रतुः ॥ २५ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सुकन्योपाख्याने
त्रयोविंशत्यधिशततोऽध्यायः ॥ १२३ ॥

---

लोमश उवाच । ततः शुश्राव शर्य्यातिर्वयःस्थं च्यवनं कृतम् ।
संहृष्टः सेनया सार्द्धमुपायाद्भार्गवाश्रमम् ॥ १ ॥ च्यवनञ्च सुक-
न्याञ्च दृष्ट्वा देवसुताविव । रेमे सभार्य्यः शर्य्यातिः कृत्स्नां प्राप्य
महीमिव ॥ २ ॥ ऋषिणा सत्कृतस्तेन सभार्य्यः पृथिवीपतिः ।
उपोपविष्टः कल्याणीः कथाश्चक्रे मनोरमाः ॥ ३ ॥ अथैनं भार्गवो
राजन्नुवाच परिसान्त्वयन् । याजयिष्यामि राजंस्त्वां सम्भारानव-
कल्पय ॥ ४ ॥ ततः परमसंहृष्टः शर्य्यातिरवनीपतिः । च्यवनस्य
महाराज तद्वाक्यं प्रत्यपूजयत् ॥ ५ ॥ प्रशस्तेऽहनि यज्ञीये सर्व-
कामसमृद्धिमत् । कारयामास शर्य्यातिर्यज्ञायतनमुत्तमम् ॥ ६ ॥
तत्रैनं च्यवनो राजन् याजयामास भार्गवः । अद्भुतानि च तत्रा-
सन् यानि तानि निबोध मे ॥ ७ ॥ अगृह्णाच्च्यवनः सोममश्विनो-
र्देवयोस्तदा । तमिन्द्रो वारयामास गृह्णाणं स तयोर्ग्रहम् ॥ ८ ॥

इन्द्र उवाच। उभावेतौ न सोमार्हौ नासत्याविति मे मतिः। भिषजौ दिवि देवानां कर्म्मणा तेन नार्हतः॥ ९॥

च्यवन उवाच। महोत्साहौ महात्मानौ रूपद्रविणवत्तरौ। यौ चक्रतुर्मां मघवन् वृन्दारकमिवाजरम्॥ १०॥ ऋते त्वां विबुधांश्चान्यान् कथं वै नार्हतः स्तवम्। अश्विनावपि देवेन्द्र देवौ विद्धि पुरन्दर॥ ११॥

इन्द्र उवाच। चिकित्सकौ कर्म्मकरौ कामरूपसमन्वितौ। लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः॥ १२॥

लोमश उवाच। एतदेव यदा वाक्यमाम्रेडयति देवराट्। अनादृत्य ततः शक्रं ग्रहं जग्राह भार्गवः॥ १३॥ ग्रहीष्यन्तन्तु तं सोममश्विनोरुत्तमं तदा। समीक्ष्य बलभिद्देव इदं वचनमब्रवीत्॥ १४॥ आभ्यामर्थाय सोमन्त्वं ग्रहीष्यसि यदि स्वयम्। वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम्॥ १५॥ एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः। जग्राह विधिवत् सोममश्विभ्यामुत्तमं ग्रहम्॥ १६॥ ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः। तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः॥ १७॥ तं स्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम्। कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः॥ १८॥ ततः कृत्याथ सञ्जज्ञे मुनेस्तस्य तपोबलात्। मदो नाम महावीर्य्यो बृहत्कायो महासुरः॥ १९॥ शरीरं यस्य निर्द्देष्टुमशक्यन्तु सुरासुरैः। तस्यास्यमभवद्घोरं तीक्ष्णाग्रदशनं महत्॥ २०॥ हनुरेका स्थिता तस्य भूमावेका दिवं गता। चतस्रश्चायता दंष्ट्रा योजनानां शतं शतम्॥ २१॥ इतरे तस्य दशना बभूवुर्द्दशयोजनाः। प्रासादशिखराकाराः शूलाग्रसमदर्शनाः॥ २२॥ बाहू पर्वतसङ्काशावायतावयुतं समौ। नेत्रे रविशशिप्रख्ये वक्त्रं कालाग्निसन्निभम्॥ २३॥ लेलिहञ्जिह्वया वक्त्रं विद्युच्चपललोलया। व्यात्ताननो घोरदृष्टिर्ग्रस-

न्निव जगद्बलात् ॥ २४ ॥ स भक्षयिष्यन् संक्रुद्धः शतक्रतुमुपा-
द्रवत्। महता घोररूपेण लोकान् शब्देन नादयन् ॥ २५ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सुकन्योपाख्याने
चतुर्विंशत्यधिकशततोऽध्यायः ॥ १२४ ॥

---

लोमश उवाच। तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः।
आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् ॥ १ ॥ भयात् सं-
स्तम्भितभुजः सृक्कणी लेलिहन्मुहुः। ततोऽब्रवीद्देवराजश्च्यवनं
भयपीड़ितः ॥ २ ॥ सोमार्हावश्विनावेतावद्यप्रभृति भार्गव।
भविष्यतः सत्यमेतद्वचो विप्र प्रसीद मे ॥ ३ ॥ न ते मिथ्या-
समारम्भो भवत्वेष परो विधिः। जानामि चाहं विप्रर्षे न मिथ्या
त्वं करिष्यसि ॥ ४ ॥ सोमार्हावश्विनावेतौ यथा वाद्य कृतौ
त्वया। भूय एव तु ते वीर्य्यं प्रकाशेदिति भार्गव ॥ ५ ॥ सुक-
न्यायाः पितुश्चास्य लोके कीर्त्तिः प्रथेदिति। अतो मयैतद्विहितं
तव वीर्य्यप्रकाशनम् ॥ ६ ॥ तस्मात् प्रसादं कुरु मे भवत्वेवं यथे-
च्छसि। एवमुक्तस्य शक्रेण भार्गवस्य महात्मनः ॥ ७ ॥ स मन्यु-
र्व्यंगमच्छीघ्रं मुमोच च पुरन्दरम्। मदञ्च व्यभजद्राजन् पाने
स्त्रीषु च वीर्य्यवान् ॥ ८ ॥ अक्षेषु मृगयायाञ्च पूर्वसृष्टं पुनः
पुनः। तदा मदं विनिक्षिप्य शक्रं सन्तर्प्य चेन्दुना ॥ ९ ॥
अश्विभ्यां सहितान् देवान् याजयित्वा च तं नृपम्। विख्याप्य
वीर्य्यं लोकेषु सर्वेषु वदतांवरः ॥ १० ॥ सुकन्यया सहारण्ये
विजहारानुकूलया। तस्यैतद्द्विजसङ्घुष्टं सरो राजन् प्रकाशते
॥ ११ ॥ अत्र त्वं सह सोदर्य्यैः पितॄन् देवांश्च तर्पय। एतद्दृष्ट्वा
महीपाल सिकताक्षञ्च भारत ॥१२॥ सैन्धवारण्यमासाद्य कुल्यानां
कुरु दर्शनम्। पुष्करेषु महाराज सर्वेषु च जलं स्पृश ॥ १३ ॥

स्थाणोर्मन्त्राणि च जपन् सिद्धिं प्राप्स्यसि भारत । सन्धिर्ह्येषो नरश्रेष्ठ त्रेताया द्वापरस्य च ॥ १४ ॥ अयं हि दृश्यते पार्थ सर्वपापप्रणाशनः । अत्रोपस्पृश्य चैव त्वं सर्वपापप्रणाशने ॥ १५ ॥ आर्च्चीकपर्वतश्चैव निवासो वै मनीषिणाम् । सदाफलः सदास्रोतो मरुतां स्थानमुत्तमम् ॥ १६ ॥ चैत्याश्चैते बहुविधास्त्रिदशानां युधिष्ठिर । एतच्चन्द्रमसस्तीर्थमृषयः पर्य्युपासते ॥१७॥ वैखानसा बालिखिल्याः पावका वायुभोजनाः । शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रस्रवणानि च ॥ १८ ॥ सर्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश । शान्तनुश्चात्र राजेन्द्र शुनकश्च नराधिपः ॥ १९ ॥ नरनारायणौ चोभौ स्थानं प्राप्ताः सनातनम् । इह नित्यशया देवाः पितरश्च महर्षिभिः ॥ २० ॥ आर्च्चीकपर्वते तेपुस्तान् यजस्व युधिष्ठिर । इह ते वै चरून् प्राश्नन्नृषयश्च विशांपते ॥ २१ ॥ यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः । यमौ च भीमसेनश्च कृष्णा चामित्रकर्षण ॥ २२ ॥ सर्वे चात्र गमिष्यामस्त्वयैव सह पाण्डव । एतत् प्रस्रवणं पुण्यमिन्द्रस्य मनुजेश्वर ॥ २३ ॥ यत्र धाता विधाता च वरुणश्चोर्द्ध्वमागताः । इह तेऽप्यवसन्राजन् क्षान्ताः परमधर्मिणः ॥ २४ ॥ मैत्राणामृजुबुद्धीनामयं गिरिवरः शुभः । एषा सा यमुना राजन् महर्षिगणसेविता ॥ २५ ॥ नानायज्ञचिता राजन् पुण्या पापभयापहा । अत्र राजा महेष्वासो मान्धातायजत स्वयम् । साहदेविश्च कौन्तेय सोमको ददतांवरः ॥ २६ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सुकन्योपाख्याने
पञ्चविंशत्यधिकशततोऽध्यायः ॥ १२५ ॥

---

युधिष्ठिर उवाच। मान्धाता राजशार्दूल स्त्रिषु लोकेषु विश्रुतः। कथं जातो महाब्रह्मन् यौवनाश्वो नृपोत्तम ॥ १ ॥ कथं चैनां परां काष्ठां प्राप्तवानमितद्युतिः। यस्य लोकास्त्रयो वश्या विष्णोरिव महात्मनः ॥ २ ॥ एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमतः। यथा मान्धातृशब्दश्च तस्य शक्रसमद्युतेः। जन्म चाप्रतिवीर्य्यस्य कुशलो ह्यसि भाषितुम् ॥ ३ ॥

लोमश उवाच। शृणुष्वावहितो राजन्नाम्नस्तस्य महात्मनः। यथा मान्धातृशब्दो वै लोकेषु परिगीयते। इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपतिः ॥ ४ ॥ सोऽयजत् पृथिवीपालः क्रतुभिर्भूरिदक्षिणैः। अश्वमेधसहस्रञ्च प्राप्य धर्मभृताम्वरः ॥ ५ ॥ अन्यैश्च क्रतुभिर्मुख्यैरयजत् स्वाप्तदक्षिणैः। अनपत्यस्तु राजर्षिः स महात्मा महाव्रतः ॥ ६ ॥ मन्त्रिष्वाधाय तद्राज्यं वननित्यो बभूव ह। शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मवान् ॥ ७ ॥ स कदाचिन्नृपो राजन्नुपवासेन दुःखितः। पिपासाशुष्कहृदयः प्रविवेशाश्रमं भृगोः ॥ ८ ॥ तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दनः। इष्टिञ्चकार सौद्युम्नेर्महर्षिः पुत्रकारणात् ॥ ९ ॥ सम्भृतो मन्त्रपूतेन वारिणा कलसो महान्। तत्रातिष्ठत राजेन्द्र पूर्वमेव समाहितः ॥ १० ॥ यत् प्राश्य प्रसवेत्तस्य पत्नी शक्रसमं सुतम्। तं न्यस्य वेद्यां कलसं सुषुपुस्ते महर्षयः ॥११॥ रात्रिजागरणात्क्रान्तान् सौद्युम्निः समतीत्य तान्। शुष्ककण्ठः पिपासार्त्तः पानीयार्थं भृशं नृपः ॥ १२ ॥ तं प्रविश्याश्रमं श्रान्तः पानीयं सोऽभ्ययाचत। तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा ॥ १३ ॥ नाश्रौषीत् कश्चन तदा शकुनेरिव वाशतः। ततस्तं कलसं दृष्ट्वा जलपूर्णं स पार्थिवः ॥ १४ ॥ अभ्यद्रवत वेगेन पीत्वा चाम्भो व्यवासृजत्। स पीत्वा शीतलं तोयं पिपासार्त्तो महीपतिः ॥ १५ ॥ निर्वाणमगमद्धीमान् सुसुखी चाभव-

तदा । ततस्ते प्रत्यबुध्यन्त मुनयः सतपोधनाः ॥ १६ ॥ निस्तोयं तच्च कलसं ददृशुः सर्वे एव ते । कस्य कर्मेदमिति ते पर्य्यपृच्छन् समागताः ॥ १७ ॥ युवनाश्वो मयेत्येवं सत्यं समभिपद्यत । न युक्तमिति तं प्राह भगवान् भार्गवस्तदा ॥ १८ ॥ सुतार्थं स्थापिता ह्यापस्तपसा चैव सम्भृताः । मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणम् ॥ १९ ॥ पुत्रार्थं तव राजर्षे महाबलपराक्रमम । महाबलो महावीर्य्यस्तपोबलसमन्वितः ॥ २० ॥ यः शक्रमपि वीर्य्येण गमयेद्यमसादनम् । अनेन विधिना राजन्मयैतदुपपादितम् ॥२१॥ अब्भक्षणं त्वया राजन्न युक्तं कृतमद्य वै । न त्वद्य शक्यमस्माभिरेतत् कर्त्तुमतोऽन्यथा ॥ २२ ॥ नूनं दैवकृतं ह्येतद्यदेवं कृतवानसि । पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः ॥ २३ ॥ आपस्त्वया महाराज मत्तपोवीर्य्यसम्भृताः । ताभ्यस्त्वमात्मना पुत्रमीदृशं जनयिष्यसि ॥ २४ ॥ विधास्यामो वयन्तत्र तवेष्टिं परमाद्भुताम् । यथा शक्रसमं पुत्रं जनयिष्यसि वीर्य्यवान् ॥२५॥ गर्भधारणजं वापि न खेदं समवाप्स्यसि । ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ॥ २६ ॥ वामपार्श्वं विनिर्भिद्य सुतः सूर्य्य इव स्थितः । निश्चक्राम महातेजा न च तं मृत्युराविशत् ॥ २७ ॥ युवनाश्वं नरपतिं तदद्भुतमिवाभवत् । ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत् ॥ २८ ॥ ततो देवा महेन्द्रं तमपृच्छन् धास्यतीति किम् । प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसन्दधे ॥ २९ ॥ मामयं धास्यतीत्येवं भाषिते चैव वज्रिणा । मान्धातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः ॥ ३० ॥ प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा । अवर्द्धत महातेजाः किष्कूंस्राजंस्त्रयोदश ॥ ३१ ॥ वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि चेश्वरम् । उपतस्थुर्महाराज ध्यातमात्राणि सर्वशः ॥ ३२ ॥ आजगवं नाम धनुः शराः शृङ्गोद्भवाश्च ये । अभेद्यं कवचञ्चैव सद्यस्तमुपशिश्रियुः ॥ ३३ ॥

सोऽभिषिक्तो मघवता स्वयं शक्रेण भारत । धर्मेण व्यजयल्लोकां-
स्त्रीन् विष्णुरिव विक्रमैः ॥ ३४ ॥ तस्याप्रतिहतश्चक्रं प्रावर्त्तत
महात्मनः । रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ॥ ३५ ॥
तस्येयं वसुसम्पूर्णा वसुधा वसुधाधिप । तेनेष्टं विविधैर्यज्ञै-
र्बहुभिः स्वाप्तदक्षिणैः ॥ ३६ ॥ चितचैत्यो महातेजा धर्मान्
प्राप्य च पुष्कलान् । शक्रस्यार्द्धासनं राजल्लब्धवानमितद्युतिः ॥३७॥
एकाह्नात् पृथिवी तेन धर्मनित्येन धीमता । विजिता शासना-
देव सरत्नाकरपत्तना ॥ ३८ ॥ तस्य चैत्यैर्महाराज क्रतूनां
दक्षिणावताम् । चतुरन्ता मही व्याप्ता नासीत् किञ्चिदना-
वृतम् ॥ ३९ ॥ तेन पद्मसहस्राणि गवां दश महात्मना । ब्राह्म-
णानां महाराज दत्तानीति प्रचक्षते ॥ ४० ॥ तेन द्वादशवार्षि-
क्यामनावृष्ट्यां महात्मना । वृष्टं शस्यविवृद्ध्यर्थं मिषतो वज्र-
पाणिनः ॥ ४१ ॥ तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् ।
गर्ज्जन्निव महामेघः प्रमथ्य निहतः शरैः ॥ ४२ ॥ प्रजाश्चतुर्विधा-
स्तेन त्राता राजन् कृतात्मना । तेनात्मतपसा लोकास्थापिता-
श्चातितेजसा ॥ ४३ ॥ तस्यैतद्देवयजनं स्थानमादित्यवर्च्चसः ।
पश्य पुण्यतमे देशे कुरुक्षेत्रस्य मध्यतः ॥ ४४ ॥ एतत्ते सर्व-
माख्यातं मान्धातुश्चरितं महत् । जन्म चाग्र्यं महीपाल यन्मां
त्वं परिपृच्छसि ॥ ४५ ॥

वैशम्पायन उवाच । एवमुक्तः स कौन्तेयो लोमशेन मह-
र्षिणा । पप्रच्छानन्तरं भूयः सोमकं प्रति भारत ॥ ४६ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि मान्धातुपाख्याने
षड्विंशत्यधिकशतोऽध्यायः ॥ १२६ ॥

---

युधिष्ठिर उवाच। कथं वीर्य्यः स राजाभूत् सोमको वदता-
म्वर। कर्माण्यस्य प्रभावञ्च श्रोतुमिच्छामि तत्त्वतः॥ १॥

लोमश उवाच। युधिष्ठिरासीन्नृपतिः सोमको नाम धार्मिकः।
तस्य भार्य्याशतं राजन् सदृशीनामभूत्तदा॥ २॥ स वै यत्नेन
महता तासु पुत्रं महीपतिः। कञ्चिन्नासादयामास कालेन महता
ह्यपि॥ ३॥ कदाचित्तस्य वृद्धस्य घटमानस्य यत्नतः। जन्तु-
र्नाम सुतस्तस्मिन् स्त्रीशते समजायत॥ ४॥ तं जातं मातरः
सर्वाः परिवार्य्य समासते। सततं पृष्ठतः कृत्वा कामभोगान्
विशाम्पते॥ ५॥ ततः पिपीलिका जन्तुं कदाचिददशत् स्फिचि।
स दष्टो व्यनदन्नादं तेन दुःखेन बालकः॥ ६॥ ततस्ता मातरः
सर्वाः प्राक्रोशन् भृशदुःखिताः। प्रवार्य्य जन्तुं सहसा सशब्द-
स्तुमुलोऽभवत्॥ ७॥ तमार्त्तनादं सहसा शुश्राव स महीपतिः।
अमात्यपार्षदो मध्ये उपविष्टः सहर्त्विजा॥ ८॥ ततः प्रस्था-
पयामास किमेतदिति पार्थिवः। तस्मै क्षत्ता यथावृत्तमाचचक्षे
सुतं प्रति॥ ९॥ त्वरयामास चोत्थाय सोमकः सह मन्त्रिभिः।
प्रविश्यान्तःपुरं पुत्रमाश्वासयदरिन्दमः॥१०॥ सान्त्वयित्वा तु तं
पुत्रं निष्क्रम्यान्तःपुरान्नृपः। ऋत्विजा सहितो राजन् सहामात्य
उपाविशत्॥ ११॥

सोमक उवाच। धिगस्त्विहैकपुत्रत्वमपुत्रत्वं वरं भवेत्।
नित्यातुरत्वाद्भूतानां शोक एवैकपुत्रता॥ १२॥ इदं भार्य्याशतं
ब्रह्मन् परीक्ष्य सदृशं प्रभो। पुत्रार्थिना मया वोढं न तासां
विद्यते प्रजा॥ १३॥ एकः कथञ्चिदुत्पन्नः पुत्रो जन्तुरयं मम।
यतमानासु सर्वासु किन्नु दुःखमतः परम्॥ १४॥ वयश्च सम-
तीतं मे सभार्य्यस्य द्विजोत्तम। आसां प्राणाः समायत्ता मम
चात्रैकपुत्रके॥ १५॥ स्यात्तु कर्म तथा युक्तं येन पुत्रशतं भवेत्।
महता लघुना वापि कर्मणा दुष्करेण वा॥ १६॥

ऋत्विगुवाच। अस्ति चैतादृशं कर्म येन पुत्रशतं भवेत्।
यदि शक्नोषि तत् कर्त्तुमथ वक्ष्यामि सोमक॥ १७॥

सोमक उवाच। कार्य्यं वा यदि वाकार्य्यं येन पुत्रशतं
भवेत्। कृतमेवेति तद्विद्धि भगवान् प्रब्रवीतु मे॥ १८॥

ऋत्विगुवाच। यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ।
ततः पुत्रशतं श्रीमद्भविष्यत्यचिरेण ते॥ १९॥ वपायां हूय-
मानायां धूममाघ्राय मातरः। ततस्ताः सुमहावीर्य्यान् जनयि-
ष्यन्ति ते सुतान्॥ २०॥ तस्यामेव तु ते जन्तुर्भविता पुनरा-
त्मजः। उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति॥ २१॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि जन्तूपाख्याने
सप्तविंशत्यधिकशततोऽध्यायः॥ १२७॥

---

सोमक उवाच। ब्रह्मन् यद्यद्यथा कार्य्यं तत् कुरुष्व तथा
तथा। पुत्रकामतया सर्वं करिष्यामि वचस्तव॥ १॥

लोमश उवाच। ततः स याजयामास सोमकं तेन जन्तुना।
मातरस्तु बलात् पुत्रमपाकार्षुः कृपान्विताः॥ २॥ हा हताः
स्मेति वाशन्त्यस्तीव्रशोकसमाहताः। रुदत्यः करुणञ्चापि गृहीत्वा
दक्षिणे करे॥ ३॥ सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म
कर्षति। कुररीणामिवार्त्तानां समाकृष्य तु तं सुतम्॥ ४॥
विशस्य चैनं विधिवद्वपामस्य जुहाव सः। वपायां हूयमानायां
गन्धमाघ्राय मातरः॥ ५॥ आर्त्ता निपेतुः सहसा पृथिव्यां
कुरुनन्दन। सर्वाश्च गर्भानलभंस्तुतस्ताः परमाङ्गनाः॥ ६॥
ततो दशसु मासेषु सोमकस्य विशाम्पते। जज्ञे पुत्रशतं पूर्णं
तासु सर्वासु भारत॥ ७॥ जन्तुर्ज्येष्ठः समभवज्जनित्रामेव
पार्थिव। स तासामिष्ट एवासीन्न तथा ते निजाः सुताः॥ ८॥

तच्च लक्षणमस्यासीत् सौवर्णं पार्श्व उत्तरे। तस्मिन् पुत्रशते
चोग्रः स बभूव गुणैरपि ॥ ९ ॥ ततः स लोकमगमत् सोमकस्य
गुरुः परम् । अथ काले व्यतीते तु सोमकोऽप्यगमत् परम ॥ १० ॥
अथ तं नरके घोरे पच्यमानं ददर्श सः। तमपृच्छत् किमर्थं त्वं
नरके पच्यसे द्विज ॥ ११ ॥ तमब्रवीद्गुरुः सोऽथ पच्यमानोऽग्निना
भृशम्। त्वं मया याजितो राजंस्तस्येदं कर्मणः फलम् ॥ १२ ॥
एतच्छ्रुत्वा तु राजर्षिर्धर्मराजानमब्रवीत्। अहमत्र प्रवेक्ष्यामि
मुच्यतां मम याजकः। मत्कृते हि महाभागः पच्यते नरका-
ग्निना ॥ १३ ॥

धर्मराज उवाच। नान्यः कर्त्तुः फलं राजन्नुपभुङ्क्ते कदा-
चन। इमानि तव दृश्यन्ते फलानि वदताम्वर ॥ १४ ॥

सोमक उवाच। पुण्यान्न कामये लोकानृतेऽहं ब्रह्मवादि-
नम्। इच्छाम्यहमनेनैव सह वस्तुं सुरालये ॥ १५ ॥ नरके वा
धर्मराज कर्मणास्य समो ह्यहम्। पुण्यापुण्यफलं देव सममस्त्वावयोरिदम् ॥ १६ ॥

धर्मराज उवाच। यद्येवमीप्सितं राजन् भुङ्क्ष्वास्य सहितः
फलम्। तुल्यकालं सहानेन पश्चात् प्राप्स्यसि सद्गतिम् ॥ १७ ॥

लोमश उवाच। स चकार तथा सर्वं राजा राजीवलोचनः।
क्षीणपापश्च तस्मात् स विमुक्तो गुरुणा सह ॥ १८ ॥ लेभे कामान्
शुभान्राजन् कर्मणा निर्ज्जितान् स्वयम्। सह तेनैव विप्रेण
गुरुणा स गुरुप्रियः ॥ १९ ॥ एष तस्याश्रमः पुण्यो य एषोऽग्रे
विराजते। क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः ॥ २० ॥
एतस्मिन्नपि राजेन्द्र वत्स्यामो विगतज्वराः। षड्रात्रं नियतात्मानः
सज्जीभव कुरूद्वह ॥ २१ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि जन्तूपाख्याने
अष्टाविंशत्यधिकशततोऽध्यायः ॥ १२८ ॥

लोमश उवाच । अस्मिन् किल स्वयं राजन्निष्टवान् वै प्रजापतिः । सत्रमिष्टीकृतं नाम पुरा वर्षसहस्रिकम् ॥ १ ॥ अम्बरीषश्च नाभाग इष्टवान् यमुनामनु । यज्ञैश्च दश पद्मानि सदस्येभ्यो विसृष्टवान् ॥ २ ॥ यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः । देशश्च नाहुषस्यायं यज्वनः पुण्यकर्मणः ॥ ३ ॥ सार्वभौमस्य कौन्तेय ययातेरमितौजसः । स्पर्द्धमानस्य शक्रेण तस्येदं यज्ञवास्त्विह ॥ ४ ॥ पश्य नानाविधाकारैरग्निभिर्निचितां महीम् । मज्जन्तीमिव चाक्रान्तां ययातेर्यज्ञकर्मभिः ॥ ५ ॥ एषा शम्येकपत्रा या सरकञ्चैतदुत्तमम् । पश्य रामह्रदानेतान् पश्य नारायणाश्रमम् ॥ ६ ॥ एतच्चर्चीकपुत्रस्य योगैर्विचरतो महीम् । प्रसर्पणं महीपाल रौप्यायाममितौजसः ॥७॥ अत्रानुवंश्यं पठतः शृणु मे कुरुनन्दन । उलूखलैराभरणैः पिशाची यदभाषत ॥ ८ ॥ युगन्धरे दधि प्राश्य उषित्वा चाच्युतस्थले । तद्वद्भूतिलये स्नात्वा सपुत्रा वस्तुमर्हसि ॥ ९ ॥ एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि । एतद्वै ते दिवावृत्तं रात्रौ वृत्तमतोऽन्यथा ॥ १० ॥ अद्य चात्र निवत्स्यामः क्षपां भरतसत्तम । द्वारमेतत्तु कौन्तेय कुरुक्षेत्रस्य भारत ॥ ११ ॥ अत्रैव नाहुषो राजा राजन् क्रतुभिरिष्टवान् । ययातिर्बहुरत्नौघैर्यत्रेन्द्रो मुदमभ्यगात् ॥ १२ ॥ एतत् प्लक्षावतरणं यमुनातीर्थमुत्तमम् । एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः ॥ १३ ॥ अत्र सारस्वतैर्यज्ञैरीजानाः परमर्षयः । यूपोलूखलिकास्तात गच्छन्त्यवभृथाप्लवम् ॥ १४ ॥ अत्रैव भरतो राजा राजन् क्रतुभिरिष्टवान् । हयमेधेन यज्ञेन मेध्यमश्वमवासृजत् ॥ १५ ॥ असकृत् कृष्णसारङ्गं धर्मेणाप्य च मेदिनीम् । अत्रैव पुरुषव्याघ्र मरुत्तः सत्रमुत्तमम् ॥ १६ ॥ प्राप चैवर्षिमुख्येन सम्वर्त्तेनाभिपालितः । अत्रोपस्पृश्य राजेन्द्र सर्वान् लोकान् प्रपश्यति । पूयते दुष्कृताच्चैव अत्रापि समुपस्पृश ॥ १७ ॥

वैशम्पायन उवाच। तत्र सम्भाद्दकः स्नात्वा स्तूयमानो महर्षिभिः। लोमशं पाण्डवश्रेष्ठ इदं वचनमब्रवीत् ॥ १८ ॥ सर्वान् लोकान् प्रपश्यामि तपसा सत्यविक्रम। इहस्थः पाण्डवश्रेष्ठं पश्यामि श्वेतवाहनम् ॥ १९ ॥

लोमश उवाच। एवमेतन्महाबाहो पश्यन्ति परमर्षयः। सरस्वतीमिमां पुण्यां पश्यैकशरणावृताम्। यत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यसि ॥ २० ॥ इह सारस्वतैर्यज्ञैरिष्टवन्तः सुरर्षयः। ऋषयश्चैव कौन्तेय तथा राजर्षयोऽपि च ॥ २१ ॥ वेदीप्रजापतेरेषा समन्तात् पञ्चयोजना। कुरोर्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः ॥ २२ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्व्वणि प्लक्षावतरणगमने एकोनत्रिंशदधिकशततोऽध्यायः ॥ १२९ ॥

---

लोमश उवाच। इह मर्त्यास्तनूस्त्यक्त्वा स्वर्गं गच्छन्ति भारत। मर्त्तुकामा नरा राजन्निहायान्ति सहस्रशः ॥ १ ॥ एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा। इह ये वै मरिष्यन्ति ते वै स्वर्गजिता नराः ॥ २ ॥ एषा सरस्वती रम्या दिव्या चौघवती नदी। एतद्विनशनं नाम सरस्वत्या विशाम्पते ॥ ३ ॥ द्वारं निषादराष्ट्रस्य येषां द्वेषात् सरस्वती। प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ॥ ४ ॥ एष वै चमसोद्भेदो यत्र दृश्या सरस्वती। यत्रैनामभ्यवर्त्तन्त सर्वाः पुण्याः समुद्रगाः ॥ ५ ॥ एतत् सिन्धोर्महातीर्थं यत्रागस्त्यमरिन्दम। लोपामुद्रा समागम्य भर्त्तारमवृणीत वै ॥ ६ ॥ एतत् प्रकाशते तीर्थं प्रभासं भास्करद्युते। इन्द्रस्य दयितं पुण्यं पवित्रं पापनाशनम् ॥ ७ ॥ एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम्। एषा रम्या विपाशा च नदी परमपावनी ॥ ८ ॥ अत्र वै पुत्रशोकेन वशिष्ठो भगवा-

नृषिः। बद्धात्मानं निपतितो विपाशः पुनरुत्थितः॥ ९॥ काश्मीर-मण्डलञ्चैतत् सर्वपुण्यमरिन्दम। महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह॥ १०॥ यत्रोत्तराणां सर्वेषामृषीणां नाहुषस्य च। अग्नेश्चैवात्र संवादः काश्यपस्य च भारत॥ ११॥ एतद्द्वारं महाराज मानसस्य प्रकाशते। वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम्॥ १२॥ एष वातिकषण्डो वै प्रख्यातः सत्य-विक्रम। नाभ्यवर्त्तत यद्द्वारं विदेहादुत्तरश्च यः॥ १३॥ इद-माश्चर्यमपरं देशेऽस्मिन् पुरुषर्षभ। क्षीणे युगे तु कौन्तेय शर्वस्य सह पार्षदैः॥ १४॥ सहोमया च भवति दर्शनं काम-रूपिणः। अस्मिन् सरसि सत्रै वै चैत्रे मासि पिनाकिनम्॥ १५॥ यजन्ते याजकाः सम्यक् परिवारशुभार्थिनः। अत्रोपस्पृश्य सरसि श्रद्दधानो जितेन्द्रियः॥ १६॥ क्षीणपापः शुभान् लोकान् प्राप्नुते नात्र संशयः। एष उज्जानको नाम पावकिर्यत्र शान्तवान्॥१७॥ अरुन्धतीसहायश्च वशिष्ठो भगवानृषिः। ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम्॥ १८॥ आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना। समाधीनां समासस्तु पाण्डवेय श्रुतस्त्वया॥१९॥ तं द्रक्ष्यसि महा-राज भृगुतुङ्गं महागिरिम्। वितस्तां पश्य राजेन्द्र सर्वपापप्रमो-चनीम्॥ २०॥ महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम्। जलाञ्चोपजलाञ्चैव यमुनामभितो नदीम्॥ २१॥ उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत। तां देवसमितिं तस्य वासवश्च विशा-म्पते॥ २२॥ अभ्यागच्छन् प्रवरं ज्ञातुमग्निश्च भारत। जिज्ञास-मानौ वरदौ महात्मानमुशीनरम्॥ २३॥ इन्द्रः श्येनः कपोतो-ऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः। ऊरुं राज्ञः समासाद्य कपोतः श्येन-जाद्भयात्। शरणार्थी तदा राजन्निलिल्ये भयपीड़ितः॥ २४॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि श्येनकपोतीये त्रिंशदधिकशततोऽध्यायः॥ १३०॥

श्येन उवाच। धर्म्मात्मानं त्वाहुरेकं सर्व्वे राजन् महीक्षितः। स वै धर्म्मविरुद्धं त्वं कस्मात् कर्म्म चिकीर्षसि ॥ १ ॥ विहितं भक्षणं राजन् पीड्यमानस्य मे क्षुधा। मा रक्षीर्धर्म्मलोभेन धर्म्ममुत्सृष्ट-वानसि ॥ २ ॥

राजोवाच। सन्त्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज। मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥ ३ ॥ एवमभ्यागतस्येह कपोतस्याभयार्थिनः। अप्रदाने परं धर्म्मं कथं श्येन न पश्यसि ॥ ४ ॥ प्रस्पन्दमानः सम्भ्रान्तः कपोतः श्येन लक्ष्यते। मत्सकाशे जीवितार्थी तस्य त्यागो विगर्हितः ॥ ५ ॥ यो हि कश्चिद्द्विजान् हन्याद्गां वा लोकस्य मातरम्। शरणागतञ्च त्यजति तुल्यं तेषां हि पातकम् ॥ ६ ॥

श्येन उवाच। आहारात् सर्व्वभूतानि सम्भवन्ति महीपते। आहारेण विवर्द्धन्ते तेन जीवन्ति जन्तवः ॥ ७ ॥ शक्यते दुस्त्य-जेऽप्यर्थे चिररात्राय जीवितुम्। न तु भोजनमुत्सृज्य शक्यं वर्त्तयितुं चिरम् ॥ ८ ॥ भक्ष्याद्वियोजितस्याद्य मम प्राणा विशा-म्पते। विसृज्य कायमेष्यन्ति पन्थानमकुतोभयम् ॥ ९ ॥ प्रमृते मयि धर्म्मात्मन् पुत्रदारादि नङ्क्ष्यति। रक्षमाणः कपोतं त्वं बहून् प्राणान्न रक्षसि ॥ १० ॥ धर्म्मं यो बाधते धर्म्मो न स धर्म्मः कुधर्म्म तत्। अविरोधात्तु यो धर्म्मः स धर्म्मः सत्यविक्रम ॥ ११ ॥ विरोधिषु महीपाल निश्चित्य गुरुलाघवम्। न बाधा विद्यते यत्र तं धर्म्मं समुपाचरेत् ॥ १२ ॥ गुरुलाघवमादाय धर्म्माधर्म्म-विनिश्चये। यतो भूयांस्ततो राजन् कुरुष्व धर्म्मनिश्चयम् ॥ १३ ॥

श्रीराजोवाच। बहुकल्याणसंयुक्तं भाषसे विहगोत्तम। सुपर्णः पक्षिराट् किं त्वं धर्म्मज्ञश्चास्यसंशयम् ॥ १४ ॥ तथाहि धर्म्मसंयुक्तं बहुचित्रञ्च भाषसे। न तेऽस्त्यविदितं किञ्चिदिति त्वां लक्षयाम्यहम् ॥ १५ ॥ शरणैषिपरित्यागं कथं साध्विति मन्यसे।

आहारार्थं समारम्भस्तव चायं विहङ्गम ॥ १६ ॥ शक्यश्चाप्यन्यथा कर्त्तुमाहारोऽप्यधिकस्त्वया । गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा । त्वदर्थमद्य क्रियतां यच्चान्यदिह काङ्क्षसि ॥१७॥

श्येन उवाच । न वराहं न चोक्षाणं न मृगान् विविधांस्तथा । भक्षयामि महाराज किं ममान्येन केनचित् ॥ १८ ॥ यस्तु मे दैवविहितो भक्ष्यः क्षत्रियपुङ्गव । तमुत्सृज्य महीपाल कपोतमिममेव मे ॥ १९ ॥ श्येनः कपोतानत्तीति स्थितिरेषा सनातनी । मा राजन् सारमज्ञात्वा कदलीस्कन्धमाश्रज ॥ २० ॥

राजोवाच । राष्ट्रं शिवीनामृद्धं वै ददानि तव खेचर । यं वा कामयसे कामं श्येन सर्वं ददामि ते ॥ २१ ॥ विनेमं पक्षिणं श्येन शरणार्थिनमागतम् । येनेमं वर्जयेथास्त्वं कर्मणा पक्षिसत्तम । तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् ॥२२॥

श्येन उवाच । उशीनर कपोते ते यदि स्नेहो नराधिप । आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् ॥ २३ ॥ यदा समं कपोतेन तव मांसं नृपोत्तम । तदा देयन्तु तन्मह्यं सा मे तुष्टिर्भविष्यति ॥ २४ ॥

राजोवाच । अनुग्रहमिमं मन्ये श्येन यन्माभियाचसे । तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् ॥ २५ ॥

लोमश उवाच । उत्कृत्य स स्वकं मांसं राजा परमधर्मवित् । तुलयामास कौन्तेय कपोतेन समं विभो ॥ २६ ॥ ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते । पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः ॥ २७ ॥ न विद्यते यदा मांसं कपोतेन समं धृतम् । तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् ॥ २८ ॥

श्येन उवाच । इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् । जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ । यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशाम्पते ॥ २९ ॥ एषा ते भास्वती कीर्त्तिर्लोका-

तमभिभविष्यति। यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ॥ ३० ॥ तावत् कीर्त्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः। इत्येवमुक्त्वा राजानमारुरोह दिवं पुनः ॥ ३१ ॥ उशीनरोऽपि धर्मात्मा धर्म्मेणावृत्य रोदसी। विभ्राजमानो वपुषा प्रारुरोह त्रिविष्टपम् ॥ ३२ ॥ तदेतत् सदनं राजन् राज्ञस्तस्य महात्मनः। पश्यस्वैतन्मया सार्द्धं पुण्यं पापप्रमोचनम् ॥ ३३ ॥ अत्र वै सततं देवा मुनयश्च सनातनाः। दृश्यन्ते ब्राह्मणै राजन् पुण्यवद्भिर्महात्मभिः ॥ ३४ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि श्येनकपोतीये
एकत्रिंशदधिकशतोऽध्यायः ॥ १३१ ॥

---

लोमश उवाच। यः कथ्यते मन्त्रविदग्र्यबुद्धिरौद्दालकिः श्वेतकेतुः पृथिव्याम्। तस्याश्रमं पश्य नरेन्द्र पुण्यं सदाफलैरुपपन्नं महीजैः ॥ १ ॥ साक्षादत्र श्वेतकेतुर्ददर्श सरस्वतीं मानुषदेहरूपाम्। वेत्स्यामि वाणीमिति संप्रवृत्तां सरस्वतीं श्वेतकेतुर्बभाषे ॥ २ ॥ तस्मिन् युगे ब्रह्मविदां वरिष्ठावास्तां मुनी मातुलभागिनेयौ। अष्टावक्रश्चैव कहोड़सूनुरौद्दालकिः श्वेतकेतुः पृथिव्याम् ॥ ३ ॥ विदेहराजस्य महीपतेस्तौ विप्रावुभौ मातुलभागिनेयौ। प्रविश्य यज्ञायतनं विवादे वन्दिं निजग्राहतुरप्रमेयौ ॥ ४ ॥ उपास्य कौन्तेय सहानुजस्त्वं तस्याश्रमं पुण्यतमं प्रविश्य। अष्टावक्रं यस्य दौहित्रमाहुर्योऽसौ वन्दिं जनकस्याथ यज्ञे। वादी विप्राग्र्यो बाल एवाभिगम्य वादे भङ्क्त्वा मज्जयामास नद्याम् ॥ ५ ॥

युधिष्ठिर उवाच। कथम्प्रभावः स बभूव विप्रस्तथाभूतं यो निजग्राह वन्दिम्। अष्टावक्रः केन चासौ बभूव तत्सर्वं मे लोमश शंस तत्त्वम् ॥ ६ ॥

लोमश उवाच। उद्दालकस्य नियतः शिष्य एको नाम्ना कहोड़ इति विश्रुतोऽभूत्। शुश्रूषुराचार्य्यवशानुवर्त्ती दीर्घं कालं सोऽध्ययनञ्चकार। तं वै विप्रः पर्य्यचरत् स शिष्यस्ताञ्च ज्ञात्वा परिचर्य्यां गुरुः सः॥ ७॥ तस्मै प्रादात् सद्य एव श्रुतञ्च भार्य्याञ्च वै दुहितरं स्वां सुजाताम्। तस्या गर्भः समभवदग्निकल्पः सोऽधीयानं पितरञ्चाप्युवाच॥ ८॥ सर्व्वां रात्रिमध्ययनं करोषि नेदं पितः सम्यगिवोपवर्त्तते। वेदान् साङ्गान् सर्व्वशास्त्रैरुपेतानधीतवानस्मि तव प्रसादात्॥ ९॥ इहैव गर्भे तेन पितर्ब्रवीमि नेदं त्वत्तः सम्यगिवोपवर्त्तते। उपालब्धः शिष्यमध्ये महर्षिः स तं कोपादुदरस्थं शशाप॥ १०॥ यस्मात् कुक्षौ वर्त्तमानो ब्रवीषि तस्माद्वक्रो भवितास्यष्टकृत्वः। स वै तथा वक्र एवाभ्यजायदष्टावक्रः प्रथितो वै महर्षिः॥ ११॥ तस्यासीद्वै मातुलः श्वेतकेतुः स तेन तुल्यो वयसा बभूव। सम्पीड्यमाना तु तदा सुजाता सा वर्द्धमानेन सुतेन कुक्षौ॥ १२॥ उवाच भर्त्तारमिदं रहोगता प्रसाद्य हीनं वसुना धनार्थिनी। कथं करिष्याम्यधना महर्षे मासश्चायं दशमो वर्त्तते मे। नैवास्ति ते वसु किञ्चित् प्रजाता येनाहमेतामापदं निस्तरेयम्॥ १३॥ उक्तस्त्वेवं भार्य्यया वै कहोड़ो वित्तस्यार्थे जनकमथाभ्यगच्छत्। स वै तदा वादविदा निगृह्य निमज्जितो वन्दिनेहाप्सु विप्रः॥ १४॥ उद्दालकस्तन्तु तदा निशम्य सूतेन वादेऽप्सु निमज्जितं तदा। उवाच तां तत्र ततः सुजातामष्टावक्रो गूहितव्योऽयमर्थः॥ १५॥ ररक्ष सा चापि तमस्य मन्त्रं जातोऽप्यसौ नैव शुश्राव विप्रः। उद्दालकं पितृवच्चापि मेने तथाष्टावक्रो भ्रातृवच्छ्वेतकेतुम्॥१६॥ ततो वर्षे द्वादशे श्वेतकेतुरष्टावक्रं पितुरङ्के निषण्णम्। अपाकर्षद्गृह्य पाणौ रुदन्तं नायं तवाङ्कः पितुरित्युक्तवांश्च॥ १७॥ यत्तेनोक्तं दुरुक्तं तत्तदानीं हृदि स्थितं तस्य सुदुःखमासीत्।

एवं गत्वा मातरं सोऽभिगम्य पप्रच्छेदं क्व नु तातो ममेति ॥१८॥
ततः सुजाता परमार्त्तरूपा शापाद्भीता सर्व्वमेवाचचक्षे । तद्वै
तत्त्वं सर्व्वमाज्ञाय रात्राविदमब्रवीत् श्वेतकेतुं स विप्रः ॥ १९ ॥
गच्छाव यज्ञं जनकस्य राज्ञो बह्वाश्चर्य्यः श्रूयते तस्य यज्ञः ।
श्रोष्यावोऽत्र ब्राह्मणानां विवादमन्नञ्चाग्र्यं तत्र भोक्ष्यावहे च ॥२०॥
विचक्षणत्वञ्च भविष्यते नौ शिवश्च सौम्यश्च हि ब्रह्मघोषः । तौ
जग्मतुर्मातुलभागिनेयौ यज्ञं समृद्धं जनकस्य राज्ञः । अष्टावक्रः
पथि राज्ञा समेत्य प्रोत्सार्य्यमाणो वाक्यमिदं जगाद ॥ २१ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अष्टावक्रीये
द्वात्रिंशदधिकशततोऽध्यायः ॥ १३२ ॥

---

अष्टावक्र उवाच । अन्धस्य पन्था वधिरस्य पन्थाः स्त्रियः
पन्था भारवाहस्य पन्थाः । राज्ञः पन्था ब्राह्मणेनासमेत्य समेत्य
तु ब्राह्मणस्यैव पन्थाः ॥ २ ॥

राजोवाच । पन्था अयं तेऽद्य मया निर्द्दिष्टो येनेच्छसि तेन
कामं व्रजस्व । न पावको विद्यते वै लघीयानिन्द्रोऽपि नित्यं
नमते ब्राह्मणानाम ॥ २ ॥

अष्टावक्र उवाच । प्राप्तौ स्व यज्ञं नृप सन्दिदृक्षू कौतूहलं
नौ बलवान्नरेन्द्र । प्राप्तावितावामतिथी प्रवेशं काङ्क्षावहे द्वारपते-
स्तवाज्ञाम् ॥ ३ ॥ ऐन्द्रद्युम्ने यज्ञदृशाविहावां विवक्षू वै जन-
केन्द्रं दिदृक्षू । तौ वै क्रोधव्याधिना दह्यमानावयञ्च नौ द्वार-
पालो रुणद्धि ॥ ४ ॥

द्वारपाल उवाच । वन्देः समादेशकरा वयं स्म निबोध
वाक्यञ्च मयेर्य्यमाणम् । न वै बालाः प्रविशन्त्यत्र विप्रा वृद्धा
विदग्धाः प्रविशन्त्यत्र विप्राः ॥ ५ ॥

अष्टावक्र उवाच। यद्यत्र वृद्धेषु कृतः प्रवेशो युक्तं प्रवेष्टुं मम द्वारपाल। वयञ्च वृद्धाश्चरितव्रताश्च वेदप्रभावेन समन्विताश्च ॥६॥ शुश्रूषवश्चापि जितेन्द्रियाश्च ज्ञानागमे चापि गताः स्म निष्ठाम्। न वाल इत्यवमन्तव्यमाहुर्वालोऽप्यग्निर्द्दहति स्पृश्यमानः ॥ ७ ॥

द्वारपाल उवाच। सरस्वतीमीरय वेदजुष्टामेकाक्षरां वह्लरूपां विराजम्। अङ्गात्मानं समवेक्षस्व वालं किं श्लाघसे दुर्लभो वै मनीषी ॥ ८ ॥

अष्टावक्र उवाच। न ज्ञायते कायवृद्ध्या विवृद्धिर्यथाष्ठीलाः शाल्मलेः संप्रवृद्धा। ह्रस्वोऽल्पकायः फलितो विवृद्धो यश्चाफलस्तस्य न वृद्धभावः ॥ ९ ॥

द्वारपाल उवाच। वृद्धेभ्य एवेह मतिं स्म वाला गृह्णन्ति कालेन भवन्ति वृद्धाः। न हि ज्ञानमल्पकालेन शक्यं कस्माद्वालः स्थविर इव प्रभाषसे ॥ १० ॥

अष्टावक्र उवाच। न तेन स्थविरो भवति येनास्य पलितं शिरः। वालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः ॥ ११ ॥ न हायनैर्न पलितैर्न वित्तेन न वन्धुभिः। ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ १२ ॥ दिदृक्षुरस्मि संप्राप्तो वन्दिनं राजसंसदि। निवेदयस्व मां द्वाःस्थ राज्ञे पुष्करमालिने ॥ १३ ॥ द्रष्टास्यद्य वदतोऽस्मान् द्वारपाल मनीषिभिः। सह वादे विवृद्धे तु वन्दिनञ्चापि निर्ज्जितम् ॥ १४ ॥ पश्यन्तु विप्राः परिपूर्णविद्याः सहैव राज्ञा सपुरोधमुख्याः। उताहो वाप्युच्चतां नीचतां वा तूष्णीम्भूतेष्वेव सर्व्वेष्वथाद्य ॥ १५ ॥

द्वारपाल उवाच। कथं यज्ञं दशवर्षो विशेस्त्वं विनीतानां विदुषां संप्रवेशम्। उपायतः प्रयतिष्ये तवाहं प्रवेशने कुरु यत्नं यथावत् ॥ १६ ॥

अष्टावक्र उवाच। भो भो राजन् जनकानां वरिष्ठ त्वं वै

सम्राट् त्वयि सर्वं समृद्धम्। त्वं वा कर्त्ता कर्मणां यज्ञियानां ययातिरेको नृपतिर्वा पुरस्तात् ॥ १७ ॥ विद्वान् वन्दी वादविदो निगृह्य वादे भग्नानप्रतिशङ्कमानः। त्वयाभिसृष्टैः पुरुषैराप्त-कृद्भिर्जले सर्वान् मज्जयतीति नः श्रुतम् ॥ १८ ॥ सोऽहं श्रुत्वा ब्राह्मणानां सकाशे ब्रह्माद्वैतं कथयितुमागतोऽस्मि। क्वासौ वन्दी यावदेनं समेत्य नक्षत्राणीव सविता नाशयामि ॥ १९ ॥

राजोवाच। आशंससे वन्दिनं वै विजेतुमविज्ञाय त्वं वाक्य-बलं परस्य। विज्ञातवीर्य्यैः शक्यमेवं प्रवक्तुं दृष्टश्चासौ ब्राह्मणै-र्वेदशीलैः ॥ २० ॥ आशंससे त्वं वन्दिनं वै विजेतुमविज्ञात्वा तु बलं वन्दिनोऽस्य। समागता ब्राह्मणास्तेन पूर्वं न शोभन्ते भास्करेणेव ताराः ॥ २१ ॥ आशंसन्तो वन्दिनं जेतुकामास्तस्या-न्तिकं प्राप्य विलुप्तशोभाः। विज्ञानमत्ता निःसृताश्च तात कथं सदस्यैर्वचनं विस्तरेयुः ॥ २२ ॥

अष्टावक्र उवाच। विवादितोऽसौ न हि मादृशैर्हि सिंही-कृतस्तेन वदत्यभीतः। समेत्य मां निहतः शेष्यतेऽद्य मार्गे भग्नं शकटमिवाचलाक्षम् ॥ २३ ॥

राजोवाच। त्रिंशकद्वादशांशस्य चतुर्विंशतिपर्वणः। य-स्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ॥ २४ ॥

अष्टावक्र उवाच। चतुर्विंशतिपर्व त्वां षण्णाभि द्वादशप्रधि। तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ॥ २५ ॥

राजोवाच। वड़वे इव संयुक्ते श्येनपाते दिवौकसाम्। कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥ २६ ॥

अष्टावक्र उवाच। मास्म ते ते गृहे राजन् शात्रवाणामपि ध्रुवम्। वातसारथिरागन्ता गर्भं सुषुवतुश्च तम् ॥ २७ ॥

राजोवाच। किंस्वित् सुप्तन्ननिमिषति किंस्विज्जातं न चोपति। कस्य स्विद्धृदयं नास्ति किंस्विद्वेगेन वर्द्धते ॥ २८ ॥

अष्टावक्र उवाच। महाग्रः सुप्तो न निमिषत्यण्डं जातं न चोपति। अश्मनो हृदयं नास्ति नदी वेगेन वर्द्धते ॥ २९ ॥

राजोवाच। न त्वां मन्ये मानुषं देवसत्त्व न त्वं बालः स्थविरः सम्मतो मे। न ते तुल्यो विद्यते वाक्प्रलापे तस्माद्द्वारं वितराम्येष वन्दी ॥ ३० ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि अष्टावक्रीये
त्रयस्त्रिंशदधिकशततोऽध्यायः ॥ १३३ ॥

---

अष्टावक्र उवाच। अत्रोग्रसेनेन समितेषु राजन् समागतेष्व-प्रतिमेषु राजसु। नावैमि वन्दिं वरमत्र वादिनां महाजले हंस-मिवाददामि ॥ १ ॥ न मेऽद्य वक्ष्यस्यतिवादिमानिन् ग्लहं प्रपन्नः सरितामिवागमः। हुताशनस्येव समिद्धतेजसः स्थिरो भवस्वेह ममाद्य वन्दिन् ॥ २ ॥ व्याघ्रं शयानं प्रति मा प्रबोध आशीविषं सृक्कणी संलिहानम्। पदाहतस्येह शिरोऽभिहत्य नादष्टो वै मोक्ष्यसे तन्निबोध ॥ ३ ॥ यो वै दर्पात् संहननोपपन्नः सुदुर्बलः पर्वतमाविहन्ति। तस्यैव पाणिः सनखो विदीर्य्यते न चैव शैलस्य हि दृश्यते व्रणः ॥ ४ ॥ सर्वे राज्ञो मैथिलस्य मैनाकस्येव पर्वताः। निकृष्टभूता राजानो वत्सा ह्यनडुहो यथा ॥ ५ ॥ यथा महेन्द्रः प्रवरः सुराणां नदीषु गङ्गा प्रवरा यथैव। तथा नृपाणां प्रवरस्त्वमेको वन्दिं समाख्यानय मत्सकाशम् ॥ ६ ॥

लोमश उवाच। एवमष्टावक्रः समितौ हि गर्ज्जन् जात-क्रोधो वन्दिनमाह राजन्। उक्ते वाक्ये चोत्तरं मे ब्रवीहि वाक्यस्य चाप्युत्तरं ते ब्रवीमि ॥ ७ ॥

वन्द्युवाच। एक एवाग्निर्बहुधा समिध्यते एकः सूर्य्यः सर्व-

मिदं विभाति। एको वीरो देवराजोऽरिहन्ता यमः पितॄणा-
मीश्वरश्चैक एव ॥ ८ ॥

अष्टावक्र उवाच। द्वाविन्द्राग्नी चरतो वै सखायौ द्वौ
देवर्षी नारदपर्वतौ च। द्वावश्विनौ द्वे रथस्यापि चक्रे भार्य्या-
पती द्वौ विहितौ विधात्रा ॥ ९ ॥

वन्द्युवाच। त्रिः सूयते कर्म्मणा वै प्रजेयं त्रयो युक्ता वाज-
पेयं वहन्ति। अध्वर्य्यवस्त्रिसवनानि तन्वते त्रयो लोकास्त्रीणि
ज्योतींषि चाहुः ॥ १० ॥

अष्टावक्र उवाच। चतुष्टयं ब्राह्मणानां निकेतं चत्वारो
वर्णा यज्ञमिमं वहन्ति। दिशश्चतस्रो वर्णचतुष्टयञ्च चतुष्पदा
गौरपि शश्वदुक्ता ॥ ११ ॥

वन्द्युवाच। पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्यज्ञाः तथैवाप्यथ
पञ्चेन्द्रियाणि। दृष्टा वेदे पञ्चचूडाप्सरांश्च लोके ख्यातं पञ्च-
नदञ्च पुण्यम् ॥ १२ ॥

अष्टावक्र उवाच। षड़ाधाने दक्षिणामाहुरेके षट् चैवेमे
ऋतवः कालचक्रम्। षड़िन्द्रियाणीत्युत षट्कृत्तिकाश्च षट्सा-
द्यस्काः सर्ववेदेषु दृष्टाः ॥ १३ ॥

वन्द्युवाच। सप्त ग्राम्याः पशवः सप्त वन्याः सप्तच्छन्दांसि
क्रतुमेकं वहन्ति। सप्तर्षयः सप्त चाप्यर्हणानि सप्ततन्त्री प्रथिता
चैव वीणा ॥ १४ ॥

अष्टावक्र उवाच। अष्टौ शाणाः शतमानं वहन्ति तथाष्ट-
पादः शरभः सिंहघाती। अष्टौ वसून् शुश्रुम देवतासु यूप-
श्चाष्टास्रिर्विहितः सर्वयज्ञे ॥ १५ ॥

वन्द्युवाच। नवैवोक्ताः सामिधेन्यः पितॄणां तथा प्राहु-
र्नवयोगं विसर्गम्। नवाक्षरा वृहती सम्प्रदिष्टा नवैव योगो
गणनामेति शश्वत् ॥ १६ ॥

अष्टावक्र उवाच। दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि। दशैव मासान् बिभ्रति गर्भवत्यो दशैरका दश दाशा दशार्हाः ॥ १७ ॥

वन्द्युवाच। एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः। एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः ॥ १८ ॥

अष्टावक्र उवाच। संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि। द्वादशाहः प्राकृतो यज्ञ उक्तो द्वादशादित्यान् कथयन्तीह धीराः ॥ १९ ॥

वन्द्युवाच। त्रयोदशी तिथिरुक्ता प्रशस्ता त्रयोदशद्वीपवती मही च।

लोमश उवाच। एतावदुक्त्वा विरराम वन्दी श्लोकस्यार्द्धं व्याजहाराष्टवक्रः ॥ २० ॥

अष्टावक्र उवाच। त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिच्छन्दांसि चाहुः ॥ २१ ॥ ततो महानुदतिष्ठन्निनादस्तूष्णीभूतं सूतपुत्रं निशम्य। अधोमुखं ध्यानपरं तदानीमष्टावक्रञ्चाप्युदीर्य्यन्तमेव ॥ २२ ॥ तस्मिंस्तथा संकुले वर्त्तमाने स्फीते यज्ञे जनकस्योत राज्ञः। अष्टावक्रं पूजयन्तोऽभ्युपेयुर्विप्राः सर्वे प्राञ्जलयः प्रतीताः ॥ २३ ॥

अष्टावक्र उवाच। अनेनैव ब्राह्मणाः शुश्रुवांसो वादे जित्वा सलिले मज्जिताः प्राक्। तानेव धर्मानयमद्य वन्दी प्राप्नोतु गृह्याप्सु निमज्जयैनम् ॥

वन्द्युवाच। अहं पुत्रो वरुणस्योत राज्ञस्तत्रास सत्रं द्वादशवार्षिकं वै। सत्रेण ते जनकतुल्यकालं तदर्थं ते प्रहिता मे द्विजाग्र्याः ॥२५॥ ते तु सर्वे वरुणस्योत यज्ञं द्रष्टुं गता इम आयान्ति भूयः। अष्टावक्रं पूजये पूजनीयं यस्य हेतोर्जनितारं समेष्ये ॥ २६ ॥

अष्टावक्र उवाच। विप्राः समुद्राम्भसि मज्जिता ये वाचा जिता मेधया चाविद्वानाः। तां मेधया वाचमथोज्जहार यथा वाचमवचिन्वन्ति सन्तः॥ २७॥ अग्निर्दहन् जातवेदाः सतां गृहान् विसर्ज्जयंस्तेजसा न स्म धाक्षीत्। बालेषु पुत्रेषु कृपणं वदत्सु तथा वाचमवचिन्वन्ति सन्तः॥ २८॥ श्लेष्मातकी क्षीण-वर्च्चाः शृणोषि उताहो त्वां स्तुतयो मोदयन्ति। हस्तीव त्वं जनक वितुद्यमानो न मामिकां वाचमिमां शृणोषि॥ २९॥

जनक उवाच। शृणोमि वाचं तव दिव्यरूपाममानुषीं दिव्यरूपोऽसि साक्षात्। अजैषीर्यद्वन्दिनं त्वं विवादे निसृष्ट एष तव कामोऽद्य बन्दी॥ ३०॥

अष्टावक्र उवाच। नानेन जीवता कश्चिदर्थो मे वन्दिना नृप। पिता यद्यस्य वरुणो मज्जयैनं जलाशये॥ ३१॥

वन्द्युवाच। अहं पुत्रो वरुणस्योत राज्ञो न मे भयं विद्यते मज्जितस्य। इमं मुहूर्त्तं पितरं द्रक्ष्यतेऽयमष्टावक्रश्चिरनष्टं कहोड़म्॥ ३२॥

लोमश उवाच। ततस्ते पूजिता विप्रा वरुणेन महात्मना। उदतिष्ठंस्ततः सर्व्वे जनकस्य समीपतः॥ ३३॥

कहोड़ उवाच। इत्यर्थमिच्छन्ति सुतान् जना जनक कर्म्मणा। यदहं नाशकं कर्त्तुं तत् पुत्रः कृतवान् मम॥ ३४॥ उताबलस्य बलवानुत बालस्य पण्डितः। उत वाविदुषो विद्वान् पुत्रो जनक जायते॥ ३५॥ शितेन ते परशुना स्वयमेवान्तको नृप। शिरांस्यपहरन्नाजौ रिपूणां भद्रमस्तु ते॥ ३६॥ महदौकथ्यं गीयते साम चोग्रं सम्यक् सोमः पीयते चात्र सत्रे। शुचीन् भागान् प्रतिजगृहुश्च हृष्टाः साक्षाद्देवा जनकस्योत राज्ञः॥ ३७॥

लोमश उवाच। समुत्थितेष्वथ सर्व्वेषु राजन् विप्रेषु तेष्व-

धिकं सुप्रभेषु । अनुज्ञातो जनकेनाथ राज्ञा विवेश तोयं सागरस्योत वन्दी ॥ ३८ ॥ अष्टावक्रः पितरं पूजयित्वा सम्पूजितो ब्राह्मणैस्तैर्यथावत् । प्रत्याजगामाश्रममेव चाग्र्यं जित्वा सौतिं सहितो मातुलेन ॥ ३९ ॥ ततोऽष्टावक्रं मातुरथान्तिके पिता नदीं समङ्गां शीघ्रमिमां विशस्व । प्रोवाच चैनं स तथा विवेश समैरङ्गैश्चापि बभूव सद्यः ॥ ४० ॥ नदी समङ्गा च बभूव पुण्या यस्यां स्नातो मुच्यते किल्बिषाद्धि । त्वमप्येनां स्नानपानावगाहैः सभ्रातृकः सहभार्य्यो विशस्व ॥ ४१ ॥ अत्र कौन्तेय सहितो भ्रातृभिस्त्वं सुखोषितः सहविप्रैः प्रतीतः । पुण्यान्यन्यानि शुचिकर्मैकभक्तिर्मया सार्द्धञ्चरितास्याजमीढ़ ॥ ४२ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि अष्टावक्रीये चतुस्त्रिंशदधिकशततोऽध्यायः ॥ १३४ ॥

---

लोमश उवाच । एषा मधुविला राजन् समङ्गा संप्रकाशते । एतत् कर्द्दमिलं नाम भरतस्याभिषेचनम् ॥ १ ॥ अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः । आप्लुतः सर्वपापेभ्यः समङ्गायां व्यमुच्यत ॥ २ ॥ पतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ । अदितिर्यत्र पुत्रार्थं तदन्नमपचत् पुरा ॥ ३ ॥ एनं पर्वतराजानमारुह्य भरतर्षभाः । अयशस्यामसंशब्द्यामलक्ष्मीं व्यपनोत्स्यथ ॥४॥ एते कनखला राजन्नृषीणां दयिता नगाः । एषा प्रकाशते गङ्गा युधिष्ठिर महानदी ॥ ५ ॥ सनत्कुमारो भगवानत्र सिद्धिमगात् पुरा । आजमीढावगाह्यैनां सर्वपापैः प्रमोक्ष्यसे ॥ ६ ॥ अपां ह्रदञ्च पुण्याख्यं भृगुतुङ्गञ्च पर्वतम् । तूष्णीगङ्गे च कौन्तेय सामात्यः समुपस्पृश ॥ ७ ॥ आश्रमः स्थूलशिरसो रमणीयः प्रकाशते । अत्र मानञ्च कौन्तेय क्रोधञ्चैव विवर्ज्जय ॥ ८ ॥ एष

रैभ्याश्रमः श्रीमान् पाण्डवेय प्रकाशते । भारद्वाजो यत्र कवि-र्यवक्रीतो व्यनश्यत ॥ ९ ॥

युधिष्ठिर उवाच । कथं युक्तोऽभवद्दषिर्भारद्वाजः प्रतापवान् । किमर्थञ्च यवक्रीतः पुत्रोऽनश्यत वै मुनेः ॥ १० ॥ एतत् सर्वं यथा-वृत्तं श्रोतुमिच्छामि तत्त्वतः । कर्म्मभिर्देवकल्पानां कीर्त्त्यमानै-र्भृशं रमे ॥ ११ ॥

लोमश उवाच । भरद्वाजश्च रैभ्यश्च सखायौ सम्बभूवतुः । तावूषतुरिहात्यन्तं प्रीयमानावनन्तरम् ॥ १२ ॥ रैभ्यस्य तु सुतावास्तामर्वावसुपरावसू । आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ॥ १३ ॥ रैभ्यो विद्वान् सहापत्यस्तपस्वी चेतरोऽभवत् । तयोश्चाप्यतुला कीर्त्तिर्बाल्यात् प्रभृति भारत ॥ १४ ॥ यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम् । दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रैः सहानघ ॥ १५ ॥ पर्य्यतप्यत तेजस्वी मन्युनाभिपरिप्लुतः । तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ॥ १६ ॥ स समिद्धे महत्यग्नौ शरीरमुपतापयन् । जनयामास सन्तापमिन्द्रस्य सु-महातपाः ॥ १७ ॥ तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर । अब्र-वीत् कस्य हेतोस्त्वमास्थितस्तप उत्तमम् ॥ १८ ॥

यवक्रीत उवाच । द्विजानामनधीता वै वेदाः सुरगणार्च्चित । प्रतिभान्त्विति तप्येऽहमिदं परमकं तपः ॥ १९ ॥ स्वाध्यायार्थं समारम्भो ममायं पाकशासन । तपसा ज्ञातुमिच्छामि सर्व-ज्ञानानि कौशिक ॥ २० ॥ कालेन महता वेदाः शक्या गुरु-मुखाद्विभो । प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥ २१ ॥

इन्द्र उवाच । अमार्गं एष विप्रर्षे येन त्वं यातुमिच्छसि । किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ॥ २२ ॥

लोमश उवाच । एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत । भूय एवाकरोद्यत्नं तपस्यमितविक्रमः ॥ २३ ॥ घोरेण तपसा

राजंस्तप्यमानो महत्तपः। सन्तापयामास भृशं देवेन्द्रमिति नः श्रुतम्॥२४॥ तं तथा तप्यमानन्तु तपस्तीव्रं महामुनिम्। उपेत्य बलभिद्देवो वारयामास वै पुनः॥२५॥ अशक्योऽर्थः समारब्धो नैतद्बुद्धिकृतं तव। प्रतिभास्यन्ति वै वेदास्तव चैव पितुश्च ते॥२६॥

यवक्रीत उवाच। न चैतदेवं क्रियते देवराज ममेप्सितम्। महता नियमेनाहं तपस्ये घोरतरं तपः॥२७॥ समिद्धेऽग्नावुपाकृत्याङ्गमङ्गं होष्यामि वा मघवंस्तन्निबोध। यद्येतदेवं न करोषि कामं ममेप्सितं देवराजेह सर्वम्॥२८॥

लोमश उवाच। निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः। प्रतिवारणहेत्वर्थं बुद्ध्या सञ्चिन्त्य बुद्धिमान्॥२९॥ तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य तपस्विनः। अनेकशतवर्षस्य दुर्बलस्य सयक्ष्मणः॥३०॥ यवक्रीतस्य यत्तीर्थमुचितं शौचकर्मणि। भागीरथ्यां तत्र सेतुं बालुकाभिश्चकार सः॥३१॥ यदास्य वदतो वाक्यं न स चक्रे द्विजोत्तमः। बालुकाभिस्ततः शक्रो गङ्गां समभिपूरयन्॥३२॥ बालुकामुष्टिमनिशं भागीरथ्यां व्यसर्ज्जयत्। सेतुमभ्यारभच्छक्रो यवक्रीतं निदर्शयन्॥३३॥ तं ददर्श यवक्रीतो यत्नवन्तं निबन्धने। प्रहसंश्चाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः॥३४॥ किमिदं वर्त्तते ब्रह्मन् किञ्च ते ह चिकीर्षितम्। अतीव हि महान् यत्नः क्रियतेऽयं निरर्थकः॥३५॥

इन्द्र उवाच। बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति। क्लिश्यते हि जनस्तात तरमाणः पुनः पुनः॥३६॥

यवक्रीत उवाच। नायं शक्यस्त्वया बद्धुं महानोघस्तपोधन। अशक्याद्विनिवर्त्तस्व शक्यमर्थं समारभ॥३७॥

इन्द्र उवाच। यथैव भवता चेदं तपो वेदार्थमुद्यतम्। अशक्यं तद्वदस्माभिरयं भारः समाहितः॥३८॥

यवक्रीत उवाच। यथा तव निरर्थोऽयमारम्भस्त्रिदशेश्वर। तथा यदि ममापीदं मन्यसे पाकशासन ॥ ३९ ॥ क्रियतां यज्ञवेच्छक्यं त्वया सुरगणेश्वर। वरांश्च मे प्रयच्छान्यान् यैरन्यान् भवितास्म्यति ॥ ४० ॥

लोमश उवाच। तस्मै प्रादाद्वरानिन्द्र उक्तवान् यान् महातपाः। प्रतिभास्यन्ति ते वेदाः पित्रा सह यथेप्सिताः ॥ ४१ ॥ यच्चान्यत् काङ्क्षसे कामं यवक्रिन् गम्यतामिति। स लब्धकामः पितरमभ्येत्याथेदमब्रवीत् ॥ ४२ ॥

यवक्रीत उवाच। प्रतिभास्यन्ति वै वेदा मम तातस्य चोभयोः। अतीवान्यान् भविष्यावो वरा लब्धास्तथा मया ॥ ४३ ॥

भरद्वाज उवाच। दर्पस्ते भविता तात वरान् लब्ध्वा यथेप्सितान्। स दर्पपूर्णः कृपणः क्षिप्रमेव विनङ्क्ष्यसि ॥ ४४ ॥ तत्राप्युदाहरन्तीमा गाथा देवैरुदाहृताः। मुनिरासीत् पुरा पुत्र बालधिर्नाम वीर्य्यवान् ॥ ४५ ॥ स पुत्रशोकादुद्विग्नस्तपस्तेपे सुदुष्करम्। भवेन्मम सुतोऽमर्त्य इति तं लब्धवांश्च सः ॥ ४६ ॥ तस्य प्रसादो वै देवैः कृतो नत्वमरैः समः। नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति ॥ ४७ ॥

बालधिरुवाच। तथेमे पर्वताः शश्वत्तिष्ठन्ति सुरसत्तमाः। अक्षयास्तन्निमित्तं मे सुतस्यायुर्भविष्यति ॥ ४८ ॥

भरद्वाज उवाच। तस्य पुत्रस्तदा यज्ञे मेधावी क्रोधनस्तदा। स तच्छ्रुत्वाकरोद्दर्पमृषींश्चैवावमन्यत ॥ ४९ ॥ विकुर्वाणो मुनीनाञ्च व्यचरत् स महीमिमाम्। आससाद महावीर्य्यं धनुषाक्षं मनीषिणम् ॥ ५० ॥ तस्यापचक्रे मेधावी तं शशाप स वीर्य्यवान्। भव भस्मेति चोक्तः स न भस्म समपद्यत ॥ ५१ ॥ धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयम्। निमित्तमस्य महिषैर्भेदयामास वीर्य्यवान् ॥ ५२ ॥ स निमित्ते विनष्टे तु ममार

सहसा विभुः। तं मृतं पुत्रमादाय विललाप ततः पिता ॥५३॥ लालप्यमानं तं दृष्ट्वा मुनयः परमार्त्तवत्। जचुर्वेदविदः सर्वे गाथां यां तां निबोध मे ॥ ५४ ॥ न दिष्टमर्थमत्येतुमीशो मर्त्त्यः कथञ्चन। महिषैर्भेदयामास धनुषाचो महीधरान् ॥ ५५ ॥ एवं लब्धा वरान् बाला दर्पपूर्णास्तपस्विनः। चिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान् ॥ ५६ ॥ एष रैभ्यो महावीर्यः पुत्रौ चास्य तथाविधौ। तं यथा पुत्र नाभ्येषि तथा कुर्य्यास्त्वतन्द्रितः ॥ ५७॥ स हि क्रुद्धः समर्थस्य पुत्र पीड़यितुं रुषा। रैभ्यश्चापि तपस्वी च कोपनश्च महानृषिः ॥ ५८ ॥

यवक्रीत उवाच। एवं करिष्ये मा तापं तात कार्षीः कथञ्चन। यथा हि मे भवान्मान्यस्तथा रैभ्यः पिता मम ॥ ५९ ॥

लोमश उवाच। उक्त्वा स पितरं श्लक्ष्णं यवक्रीरकुतोभयः। विप्रकुर्वन्नृषीनन्यानतुष्यत् परया मुदा ॥ ६० ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि यवक्रीतोपाख्याने पञ्चत्रिंशदधिकशततोऽध्यायः ॥ १३५ ॥

---

लोमश उवाच। चंक्रम्यमाणः स तदा यवक्रीरकुतोभयः। जगाम माधवे मासि रैभ्याश्रमपदं प्रति ॥ १ ॥ स ददर्शाश्रमे रम्ये पुष्पितद्रुमभूषिते। विचरन्तीं स्नुषां तस्य किन्नरीमिव भारत ॥ २ ॥ यवक्रीस्तामुवाचेदमुपतिष्ठस्व मामिति। निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः ॥ ३ ॥ सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती। तेजस्वितां च रैभ्यस्य तथेत्युक्त्वा जगाम ह ॥ ४ ॥ तत एकान्तमुन्नीय सज्जयामास भारत। आजगाम तदा रैभ्यः स्वमाश्रममरिन्दम ॥ ५ ॥ रुदतीञ्च स्नुषां दृष्ट्वा भार्य्यामार्त्तां परावसोः। सान्त्वयन् श्लक्ष्णया वाचा पर्य्यपृच्छद्-

युधिष्ठिर ॥ ६ ॥ सा तस्मै सर्व्वमाचष्ट यवक्रीभाषितं शुभा।
प्रत्युक्तञ्च यवक्रीतं प्रेक्षापूर्वं तथात्मना ॥ ७ ॥ शृण्वानस्यैव रैभ्यस्य
यवक्रेस्तद्विचेष्टितम्। दहन्निव तदा चेतः क्रोधः समभवन्महान्
॥ ८ ॥ स तदा मन्युनाविष्टस्तपस्वी कोपनो भृशम्। अवलुच्य
जटामेकां जुहावाग्नौ सुसंस्कृते ॥ १० ॥ ततः समभवन्नारी
तस्या रूपेण सम्मिता। अवलुच्य पराञ्चाथ जुहावाग्नौ जटां
पुनः ॥ ११ ॥ ततः समभवद्रक्षो घोराक्षं भीमदर्शनम्। अब्रूतां
तौ तदा रैभ्यं किङ्कार्य्यं करवावहे ॥ १२ ॥ तावब्रवीदृषिः क्रुद्धो
यवक्रीर्वध्यतामिति। जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया
॥ १३ ॥ ततः सा समुपस्थाय कृत्या सृष्टा महात्मना। कमण्डलुं
जहारास्य मोहयित्वेव भारत ॥१४॥ उच्छिष्टन्तु यवक्रीतमपकृष्ट-
कमण्डलुम्। तत उद्यतशूलः सन्राक्षसः समुपाद्रवत् ॥ १५ ॥
तमाद्रवन्तं संप्रेक्ष्य शूलहस्तं जिघांसया। यवक्रीः सहसोत्थाय
प्राद्रवद्येन वै सरः। २६ ॥ जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितः
पुनः। जगाम सरितः सर्व्वास्ताश्चाप्यासन् विशोषिताः ॥ १७ ॥
स काल्यमानो घोरेण शूलहस्तेन रक्षसा। अग्निहोत्रं पितु-
र्भीत सहसा प्रविविश ह ॥ १८ ॥ स वै प्रविशमानस्तु शूद्रेणा-
न्धेन रक्षिणा। निगृहीतो बलाद्द्वारि सोऽवातिष्ठत पार्थिव ॥१९॥
निगृहीतन्तु शूद्रेण यवक्रीतं स राक्षसः। ताडयामास शूलेन
स भिन्नहृदयोऽपतत् ॥ २० ॥ यवक्रीतं स हत्वा तु राक्षसी
रैभ्यमागमत्। अनुज्ञातस्तु रैभ्येण तया नार्य्या सहावसत् ॥२०॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि यवक्रीतोपाख्याने
षट्त्रिंशदधिकशततोऽध्यायः १३६ ॥

---

लोमश उवाच। भारद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम् । समित्कलापमादाय प्रविवेश स्वमाश्रमम् ॥ १ ॥ तं स्म दृष्ट्वा पुरा सर्वे प्रत्युत्तिष्ठन्ति पावकाः । न त्वेनमुपतिष्ठन्ति हतपुत्रं तदाग्नयः ॥ २ ॥ वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः । तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ॥ ३ ॥ किन्नु मे नाग्नयः शूद्र प्रतिनन्दन्ति दर्शनम् । त्वञ्चापि न यथापूर्वं कच्चित् क्षेममिहाश्रमे ॥ ४ ॥ कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः । एतदाचक्ष्व मे शीघ्रं न हि शुध्यति मे मनः ॥ ५ ॥

शूद्र उवाच। रैभ्यं यातो नूनमयं पुत्रस्ते मन्दचेतनः । तथा हि निहतः शेते राक्षसेन बलीयसा ॥ ६ ॥ प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा । अग्न्यागारं प्रति द्वारि मया दोर्भ्यां निवारितः ॥ ७ ॥ ततः स विहताशोऽत्र जलकामोऽशुचिर्ध्रुवम् । निहतः सोऽतिवेगेन शूलहस्तेन रक्षसा ॥ ८ ॥ भारद्वाजस्तु तच्छ्रुत्वा शूद्रस्य विप्रियं महत् । गतासुं पुत्रमादाय विललाप सुदुःखितः ॥ ९ ॥

भारद्वाज उवाच। ब्राह्मणानां किलार्थाय ननु त्वं तप्तवांस्तपः । द्विजानामनधीता वै वेदाः संप्रतिभान्त्विति ॥ १० ॥ तथा कल्याणशीलस्त्वं ब्राह्मणेषु महात्मसु । अनागाः सर्वभूतेषु कर्कशत्वमुपेयिवान् ॥ ११ ॥ प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात् । गतवानेव तं द्रष्टुं कालान्तकयमोपमम् ॥ १२ ॥ यः स जानन्महातेजा वृद्धस्यैकं ममात्मजम् । गतवानेव कोपस्य वशं परमदुर्मतिः ॥ १३ ॥ पुत्रशोकमनुप्राप्य एष रैभ्यस्य कर्मणा । त्यक्ष्यामि त्वामृते पुत्र प्राणानिष्टतमान् भुवि ॥ १४ ॥ यथाहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी । तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागसम् ॥ १५ ॥ सुखिनो वै नरा येषां जात्या पुत्रो न विद्यते । ये पुत्रशोकमप्राप्य विचरन्ति यथासुखम् ॥१६॥

यो तु पुत्रकृताच्छोकादृभृशं व्याकुलचेतसः। शपन्तीष्टान् सखी-
नार्त्तास्तेभ्य पापतरो नु कः ॥ १७ ॥ परासुश्च सुतो दृष्टः शप्त-
श्चेष्टः सखा मया। ईदृशीमापदं कोऽत्र द्वितीयोऽनुभविष्यति ॥१८॥

लोमश उवाच। विलप्यैवं बहुविधं भारद्वाजोऽदहत् सुतम्।
सुसमिद्धं ततः पश्चात् प्रविवेश हुताशनम् ॥ १९ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि यवक्रीतोपाख्याने
सप्तत्रिंशदधिकशततोऽध्यायः ॥ १३७ ॥

---

लोमश उवाच। एतस्मिन्नेव काले तु वृहद्युम्नो महीपतिः।
सत्रं तेने महाभागो रैभ्ययाज्यः प्रतापवान् ॥ १ ॥ तेन रैभ्यस्य
वै पुत्रावर्वावसुपरावसू। वृतौ सहायौ सत्रार्थं वृहद्युम्नेन
धीमता ॥ २ ॥ तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः।
आश्रमे त्वभवद्रैभ्यो भार्य्या चैव परावसोः ॥ ३ ॥ तथावलोक-
कोऽगच्छद्गृहानेकः परावसुः। कृष्णाजिनेन संवीतं ददर्श पितरं
वने ॥ ४ ॥ जघन्यरात्रे निद्रान्धः सावशेषे तमस्यपि। चरन्तं
गहनेऽरण्ये मेने स पितरं मृगम् ॥ ५ ॥ मृगन्तु मन्यमानेन
पिता वै तेन हिंसितः। अकामयानेन तदा शरीरत्राणमिच्छता
॥ ६ ॥ तस्य स प्रेतकार्य्याणि कृत्वा सर्वाणि भारत। पुनरा-
गम्य तत्सत्रमब्रवीद्भ्रातरं वचः ॥ ७ ॥ इदं कर्म न शक्तस्त्वं वोढु-
मेकः कथञ्चन। मया च हिंसितस्तातो मन्यमानेन तं मृगम्
॥ ८ ॥ सोऽस्मदर्थे व्रतं तात चर त्वं ब्रह्महिंसनम्। समर्थोऽप्यहृ-
मेकाकी कर्म कर्त्तुमिदं मुने ॥ ९ ॥

अर्वावसुरुवाच। करोतु वै भवान् सत्रं वृहद्युम्नस्य धीमतः।
ब्रह्मवध्याञ्चरिष्येऽहं त्वदर्थं नियतेन्द्रियः ॥ १० ॥

लोमश उवाच। स तस्य ब्रह्मवध्यायाः पारं गत्वा युधिष्ठिर।
अर्व्वावसुस्तदा सत्रमाजगाम पुनर्मुनिः ॥ ११ ॥ ततः परावसु-

दृष्ट्वा भ्रातरं समुपस्थितम्। बृहद्युम्नमुवाचेदं वचनं हर्षगद्-
दम्॥ १२॥ एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति।
ब्रह्महा प्रेक्षितेनापि पीड़येत्त्वामसंशयम्॥ १३॥

लोमश उवाच। तच्छ्रुत्वैव तदा राजा प्रेष्यानाह स विसृ-
ज्यताम्। प्रेष्यैरुत्सार्य्यमाणस्तु राजन्नर्वावसुस्तदा॥१४॥ न मया
ब्रह्महत्येयं कृतेत्याह पुनः पुनः। उच्यमानोऽसकृत् प्रेष्यैर्ब्रह्मह-
न्निति भारत॥ १५॥ नैव स्म प्रतिजानाति ब्रह्मवध्यां स्वयं
कृताम्। मम भ्राता कृतमिदं मया स परिमोक्षितः॥ १६॥
स तथा प्रवदन् क्रोधात्तैस्तु प्रेष्यैः प्रभाषितः। तूष्णीं जगाम
ब्रह्मर्षिर्वनमेव महातपाः॥ १७॥ उग्रं तपः समास्थाय दिवा-
करमथाश्रितः। रहस्यवेदं कृतवान् सूर्य्यस्य द्विजसत्तमः।
मूर्त्तिमांस्तं ददर्शाथ स्वयमग्रभुगव्ययः॥ १८॥

लोमश उवाच। प्रीतास्तस्याभवन् देवाः कर्मणार्वावसोर्नृप।
तन्ते प्रवरयामासुर्निरासुश्च परावसुम्। ततो देवा वरं तस्मै
ददुरग्निपुरोगमाः॥ १९॥ स चापि वरयामास पितुरुत्थान-
मात्मनः। अनागस्त्वं ततो भ्रातुः पितुश्चास्मरणं वधे॥ २०॥
भारद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः। प्रतिष्ठाञ्चापि वेदस्य
सौरस्य द्विजसत्तमः॥ २१॥ एवमस्त्विति तं देवाः प्रोचुश्चापि
वरान् ददुः। ततः प्रादुर्बभूवुस्ते सर्व एव युधिष्ठिर॥ २२॥
अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान्। समधीतं मया ब्रह्म
व्रतानि चरितानि च॥ २३॥ कथञ्च रैभ्यः शक्तो मामधीयानं
तपस्विनम्। तथायुक्तेन विधिना निहन्तुममरोत्तमाः॥ २४॥

देवा ऊचुः। मैवं कृथा यवक्रीत यथा वदसि वै मुने। ऋते
गुरुमधीता हि सुखं वेदास्त्वया पुरा॥ २५॥ अनेन तु गुरून्
दुःखात्तोषयित्वात्मकर्मणा। कालेन महता क्लेशाद्ब्रह्माधिगत-
मुत्तमम्॥ २६॥

लोमश उवाच। यवक्रीतमथोक्त्वैवं देवाः सेन्द्रपुरोगमाः। सञ्जीवयित्वा तान् सर्व्वान् पुनर्जग्मुस्त्रिविष्टपम् ॥ २७ ॥ आश्रमस्तस्य पुण्योऽयं सदापुष्पफलद्रुमः। अत्रोष्य राजशार्दूल सर्व्वं पापं प्रमोक्ष्यसि ॥ २८ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि यवक्रीतोपाख्याने अष्टत्रिंशदधिकशततोऽध्यायः ॥ १३८ ॥

---

लोमश उवाच। उशीरवीजं मैनाकं गिरिं श्वेतञ्च भारत। समतीतोऽसि कौन्तेय कालशैलञ्च पार्थिव ॥ १ ॥ एषा गङ्गा सप्तविधा राजते भरतर्षभ। स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते ॥ २ ॥ एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमद्भुतम्। समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ ॥ ३ ॥ एतन्द्रक्ष्यति देवानामाक्रीड़ञ्चरणाङ्कितम्। अतिक्रान्तोऽसि कौन्तेय कालशैलञ्च पर्व्वतम् ॥ ४ ॥ श्वेतं गिरिं प्रवेक्ष्यामो मन्दरञ्चैव पर्व्वतम्। यत्र मणिवरो यक्षः कुवेरश्चैव यक्षराट् ॥ ५ ॥ अष्टाशीतिसहस्राणि गन्धर्व्वाः शीघ्रगामिनः। तथा किम्पुरुषा राजन् यक्षाश्चैव चतुर्गुणाः ॥ ६ ॥ अनेकरूपसंस्थाना नानाप्रहरणाश्च ते। यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते ॥ ७ ॥ तेषामृद्धिरतीवात्र गतौ वायुसमाश्च ते। स्थानात् प्रच्यावयेयुर्य्ये देवराजमपि ध्रुवम् ॥ ८ ॥ तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः। दुर्गमाः पर्व्वताः पार्थ समाधिं परमं कुरु ॥ ९ ॥ कुवेरसचिवाश्चान्ये रौद्रा मन्दाश्च राक्षसाः। तैः समेष्याम कौन्तेय संयतो विक्रमेण च ॥ १० ॥ कैलासः पर्व्वतो राजन् षड्योजनशतोच्छ्रितः। यत्र देवाः समायान्ति विशाला यत्र भारत ॥ ११ ॥ असङ्ख्येयास्तु कौन्तेय यक्षराक्षसकिन्नराः। नागाः सुपर्णा गन्धर्व्वाः कुवेरसदनं

प्रति ॥ १२ ॥ तान् विगाहस्व पार्थाद्य तपसा च दमेन च ।
रक्ष्यमाणौ मया राजन् भीमसेनबलेन च ॥ १३ ॥ स्वस्ति ते
वरुणो राजा यमश्च समितिंजयः । गङ्गा च यमुना चैव पर्व-
तश्च दधातु ते ॥ १४ ॥ मरुतश्च सहाश्विभ्यां सरितश्च सरांसि च
स्वस्ति देवासुरेभ्यश्च वसुभ्यश्च महाद्युते ॥ १५ ॥ इन्द्रस्य जाम्बू-
नदपर्वताद्दै शृणोमि घोषं तव देवि गङ्गे । गोपायसीमं सुभगे
गिरिभ्यः सर्वाजमीढापचितं नरेन्द्रम् ॥ १६ ॥ ददस्व शर्म
प्रविविक्षतोऽस्य शैलानिमाञ्छैलसुते नृपस्य । उक्त्वा तथा साग-
रगां स विप्रो यत्तो भवस्वेति शशास पार्थम् ॥ १७ ॥

युधिष्ठिर उवाच । अपूर्वोऽयं सम्भ्रमो लोमशस्य कृष्णां सर्वे
रक्षत मा प्रमादम् । देशोऽह्ययं दुर्गतमो मतोऽस्य तस्मात् परं
शौचमिहाचरध्वम् ॥ १८ ॥

वैशम्पायन उवाच । ततोऽब्रवीद्भीममुदारवीर्य्यं कृष्णां यत्तः
पालय भीमसेन । शून्येऽर्जुने सन्निहिते च तात त्वामेव कृष्णा
भजते भयेषु ॥ १९ ॥ ततो महात्मा स यमौ समेत्य मूर्द्धन्युपा-
घ्राय विमृज्य गात्रे । उवाच तौ वाष्पकलं स राजा माभैष्ट-
मागच्छतमप्रमत्तौ ॥ २० ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि युधिष्ठिरवाक्ये
एकोनचत्वारिंशदधिकशततोऽध्यायः ॥ १३९ ॥

---

युधिष्ठिर उवाच । अन्तर्हितानि भूतानि बलवन्ति महान्ति
च । अग्निना तपसा चैव शक्यं गन्तुं वृकोदर ॥ १ ॥ सन्नि-
वर्त्तय कौन्तेय क्षुत्पिपासे बलाश्रयात् । ततो बलञ्च दाक्ष्यञ्च
संश्रयस्व वृकोदर ॥ २ ॥ ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्वतं
प्रति । बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति ॥ ३ ॥ अथ

वा सहदेवेन धौम्येन च समं विभो। सूतैः पौरोगवैश्चैव सर्व्वैश्च परिचारकैः ॥ ४ ॥ रथैरश्वैश्च ये चान्ये विप्राः क्लेशसहाः पथि। सर्व्वैस्त्वं सहितो भीम निवर्त्तस्वायतेक्षण ॥ ५ ॥ त्रयो वयं गमिष्यामो लघ्वाहारा यतव्रताः। अहञ्च नकुलश्चैव लोमशश्च महातपाः ॥ ६ ॥ ममागमनमाकाङ्क्षन् गङ्गाद्वारे समाहितः। वसेह द्रौपदीं रक्षन् यावदागमनं मम ॥ ७ ॥

भीम उवाच। राजपुत्री श्रमेणार्त्ता दुःखार्त्ता चैव भारत। व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ॥ ८ ॥ तव चाप्यरतिस्तीव्रा वर्त्तते तमपश्यतः। गुडाकेशं महात्मानं संग्रामेष्वपलायिनम् ॥ ९ ॥ किं पुनः सहदेवञ्च माञ्च कृष्णाञ्च भारत। द्विजाः कामं निवर्त्तन्तां सर्व्वे च परिचारकाः ॥ १० ॥ सूताः पौरोगवाश्चैव यञ्च मन्येत नो भवान्। न ह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित् ॥ ११ ॥ शैलेऽस्मिन्राक्षसाकीर्णे दुर्गेषु विषमेषु च। इयञ्चापि महाभागा राजपुत्री पतिव्रता ॥ १२ ॥ त्वामृते पुरुषव्याघ्र नोत्सहेद्विनिवर्त्तितुम्। तथैव सहदेवोऽयं सततं त्वामनुव्रतः ॥ १३ ॥ न जातु विनिवर्त्तेत मनोज्ञो ह्यहमस्य वै। अपि चात्र महाराज सव्यसाचिदिदृक्षया ॥ १४ ॥ सर्व्वे लालसभूताः स्म तस्माद्यास्यामहे सह। यद्यशक्यो रथैर्गन्तुं शैलोऽयं बहुकन्दरः ॥ १५ ॥ पद्भिरेव गमिष्यामो मा राजन् विमना भव। अहं वहिष्ये पाञ्चालीं यत्र यत्र न शक्ष्यति ॥ १६ ॥ इति मे वर्त्तते बुद्धिर्मा राजन् विमना भव। सुकुमारौ तथा वीरौ माद्रीनन्दनकावुभौ। दुर्गे सन्तारयिष्यामि यत्राशक्तौ भविष्यतः ॥ १७ ॥

युधिष्ठिर उवाच। एवं ते भाषमाणस्य बलं भीमाभिवर्द्धताम्। यत्त्वमुत्सहसे वोढुं पाञ्चालीञ्च यशस्विनीम् ॥ १८ ॥ यमजौ चापि भद्रन्ते नैतदन्यत्र विद्यते। बलं तव यशश्चैव धर्मः

कौन्तेयश्च वर्द्धताम् ॥ १९ ॥ यत्त्वमुत्सहसे नेतुं भ्रातरौ सह कृष्णया। मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः ॥२०॥

वैशम्पायन उवाच। ततः कृष्णाब्रवीद्वाक्यं प्रहसन्ती मनोरमा। गमिष्यामि न सन्तापः कार्य्यो मां प्रति भारत ॥ २१ ॥

लोमश उवाच। तपसा शक्यते गन्तुं पर्वतं गन्धमादनम्। तपसा चैव कौन्तेय सर्व्वे योच्यामहे वयम् ॥ २२ ॥ नकुलः सहदेवश्च भीमसेनश्च पार्थिव। अहञ्च त्वञ्च कौन्तेय द्रक्ष्यामः श्वेतवाहनम् ॥ २३ ॥

वैशम्पायन उवाच। एवं सम्भाषमाणास्ते सुबाहुविषयं महत्। ददृशुर्मुदिता राजन् प्रभूतगजवाजिमत् ॥ २४ ॥ किराततङ्गणाकीर्णं पुलिन्दशतसंकुलम्। हिमवत्यमरैर्जुष्टं बह्वाश्चर्य्यसमाकुलम् ॥ २५ ॥ सुबाहुश्चापि तान् दृष्ट्वा पूजया प्रत्यगृह्णत। विषयान्ते कुलिन्दानामीश्वरः प्रीतिपूर्व्वकम् ॥ २६ ॥ ततस्ते पूजितास्तेन सर्व्व एव सुखोषिताः। प्रतस्थुर्विमले सूर्य्ये हिमवन्तं गिरिं प्रति ॥ २७ ॥ इन्द्रसेनमुखांश्चापि भृत्यान् पौरोगवांस्तथा। सूदांश्च पारिबर्हांश्च द्रौपद्याः सर्व्वशो नृप ॥ २८ ॥ राज्ञः कुलिन्दाधिपतेः परिदाय महारथाः। पद्भिरेव महावीर्य्या ययुः कौरवनन्दनाः ॥ २९ ॥ ते शनैः प्राद्रवन् सर्व्वे कृष्णया सह पाण्डवाः। तस्माद्देशात् सुसंहृष्टा द्रष्टुकामा धनञ्जयम् ॥३०॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

युधिष्ठिर उवाच। भीमसेन यमौ चोभौ पाञ्चालि च निबोधत। नास्ति भूतस्य नाशो वै पश्यतास्मान् वने चरान् ॥ १ ॥ दुर्ब्बलाः क्लेशिताः स्मेति यद्ब्रवामेतरेतरम्। अशक्येऽपि व्रजामो-

धनञ्जयदिदृक्षया ॥२॥ तन्मे दहति गात्राणि तूलराशिमिवानलः। यच्च वीरं न पश्यामि धनञ्जयमुपान्तिकात् ॥ ३ ॥ तस्य दर्शनतृष्णं मां सानुजं वनमास्थितम्। याज्ञसेन्याः परामर्शः स च वीर दहत्युत ॥ ४ ॥ नकुलात् पूर्व्वजं पार्थं न पश्याम्यमितौजसम्। अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ ५ ॥ तीर्थानि चैव रम्याणि वनानि च सरांसि च। चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया ॥ ६ ॥ पञ्च वर्षाण्यहं वीरं सत्यसन्धं धनञ्जयम्। यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर ॥ ७ ॥ तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनम्। न पश्यामि महाबाहुं तेन तप्ये वृकोदर ॥ ८ ॥ कृतास्त्रं निपुणं युद्धेऽप्रतिमानं धनुष्मताम्। न पश्यामि कुरुश्रेष्ठं तेन तप्ये वृकोदर ॥ ९ ॥ चरन्तमरिसङ्घेषु काले क्रुद्धमिवान्तकम्। प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनञ्जयम् ॥ १० ॥ यः स शक्रादनवरो वीर्य्येण द्रविणेन च। यमयोः पूर्व्वजः पार्थः श्वेताश्वोऽमितविक्रमः ॥ ११ ॥ दुःखेन महताविष्टस्तन्न पश्यामि फाल्गुनम्। अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ १२ ॥ सततं यः क्षमाशील क्षिप्यमाणोऽप्यणीयसा। ऋजुमार्गप्रपन्नस्य शर्म्मदाताभयस्य च ॥ १३ ॥ स तु जिह्मप्रवृत्तस्य माययाभिजिघांसतः। अपि वज्रधरस्यापि भवेत् कालविषोपमः ॥ १४ ॥ शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान्। दाताभयस्य बीभत्सुरमितात्मा महाबलः ॥ १५ ॥ सर्व्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्द्दिता। आहर्त्ता सर्व्वरत्नानां सर्व्वेषां नः सुखावहः ॥ १६ ॥ रत्नानि यस्य वीर्य्येण दिव्यान्यासन् पुरा मम। बहूनि बहुजातीनि यानि प्राप्तः सुयोधनः ॥ १७ ॥ यस्य बाहुबलाद्वीर सभा चासीत् पुरा मम। सर्व्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव ॥ १८ ॥ वासुदेवसमं वीर्य्ये कार्त्तवीर्य्यसमं युधि। अजेयममितं युद्धे तन्न पश्यामि फाल्गुनम् ॥ १९ ॥ सङ्क-

येषां महावीर्य्यं लाञ्च भीमापराजितम् । अनुयातः स्ववीर्य्येण वासुदेवश्च मनुहा ॥ २० ॥ यस्य बाहुबले तुल्यः प्रभावे च पुरन्दरः । जवे वायुर्मुखे सोमः क्रोधे मृत्युः सनातनः ॥ २१ ॥ ते वयं तं नरव्याघ्रं सर्व्वे वीरं दिदृक्षवः । प्रवेक्ष्यामो महाबाहो पर्वतं गन्धमादनम् ॥ २२ ॥ विशाला बदरी यत्र नरनारायणाश्रमः । तं सदाध्युषितं यक्षैर्द्रक्ष्यामो गिरिमुत्तमम् ॥ २३ ॥ कुवेरनलिनीं रम्यां राक्षसैरभिसेविताम् । पद्भिरेव गमिष्यामस्तप्यमाना महत्तपः ॥ २४ ॥ न च यानवता शक्यो गन्तुं देशो वृकोदर । न नृशंसेन लुब्धेन नाप्रशान्तेन भारत ॥ २५ ॥ तत्र सर्व्वे गमिष्यामो भीमार्जुनगवेषिणः । सायुधा बद्धनिस्त्रिंशाः सार्द्धं विप्रैर्महाव्रतैः ॥२६॥ मक्षिकादंशमशकान् सिंहान् व्याघ्रान् सरीसृपान् । प्राप्नोत्यनियतः पार्थः नियतस्तान् न पश्यति ॥२७॥ ते वयं नियतात्मानः पर्वतं गन्धमादनम् । प्रवेक्ष्यामो मिताहारा धनञ्जयदिदृक्षया ॥ २८ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि गन्धमादनप्रवेशे
एकचत्वारिंशदधिकशततोऽध्यायः ॥ १४१ ॥

---

लोमश उवाच । दृष्टा वः पर्वता सर्व्वे नद्यः सपुरकाननाः । तीर्थानि चैव श्रीमन्ति स्पृष्टश्च सलिलं करैः ॥ १ ॥ पर्वतं मन्दरं दिव्यमेष पन्थाः प्रयास्यति । समाहिता निरुद्विग्नाः सर्व्वे भवत पाण्डवाः ॥ २ ॥ अयं देवनिवासो वै गन्तव्यो वो भविष्यति । ऋषीणाञ्चैव दिव्यानां निवासः पुण्यकर्म्मणाम् ॥ ३ ॥ एषा शिवजला पुण्या याति सौम्य महानदी । वदरीप्रभवा राजन् देवर्षिगणसेविता ॥ ४ ॥ एषा वैहायसैर्नित्यं वालिखिल्यैर्महात्मभिः । अर्चिता चोपयाता च गन्धर्वैश्च महात्मभिः ॥ ५ ॥ अत्र साम स

गायन्ति सामगाः पुण्यनिःस्वनाः । मरीचिः पुलहश्चैव भृगुश्चै-
वाङ्गिरास्तथा ॥ ६ ॥ अत्राह्निकं सुरश्रेष्ठो जपते समरुद्गणः ।
साध्याश्चैवाश्विनौ चैव परिधावन्ति तं तदा ॥ ७ ॥ चन्द्रमाः सह
सूर्य्येण ज्योतींषि च ग्रहैः सह । अहोरात्रविभागेन नदीमेना-
मनुव्रजन् ॥ ८ ॥ एतस्याः सलिलं मूर्द्ध्नि वृषाङ्कः पर्य्यधारयत् ।
गङ्गाद्वारे महाभाग येन लोकस्थितिर्भवेत् ॥ ९ ॥ एतां भगवतीं
देवीं भवन्तः सर्व्व एव हि । प्रयतेनात्मना ताताः प्रतिगम्याभिनादत
॥ १० ॥ तस्य तद्वचनं श्रुत्वा लोमशस्य महात्मनः । आकाशगङ्गां
प्रयताः पाण्डवास्तेऽभ्यवादयन् ॥ ११ ॥ अभिवाद्य च ते सर्व्वे
पाण्डवा धर्म्मचारिणः । पुनः प्रयाताः संहृष्टाः सर्व्वे ऋषिगणैः
सह ॥ १२ ॥ ततो दूरात् प्रकाशन्तं पाण्डुरं मेरुसन्निभम् ।
ददृशुस्ते नरश्रेष्ठा विकीर्णं सर्व्वतो दिशम् ॥ १३ ॥ तान् प्रष्टु-
कामान् विज्ञाय पाण्डवान् स तु लोमशः । उवाच वाक्यं वाक्यज्ञः
शृणुध्वं पाण्डुनन्दनाः ॥ १४ ॥ एतद्विकीर्णं सुश्रीमत् कैलास-
शिखरोपमम् । यत् पश्यसि नरश्रेष्ठ पर्व्वतप्रतिमं स्थितम् ॥१५॥
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः । पर्व्वतप्रतिमं भाति
पर्व्वतप्रस्तराश्रितम् ॥ १६ ॥ पुरातनेन देवेन विष्णुना परमा-
त्मना । दैत्यो विनिहतस्तात सुरराजहितैषिणा ॥ १७ ॥ दश-
वर्षसहस्राणि तपस्तप्य महामनाः । ऐन्द्रं प्रार्थयते स्थानं तपः
स्वाध्यायविक्रमात् ॥ १८ ॥ तपोबलेन महता बाहुवेगबलेन च ।
नित्यमेव दुराधर्षो धर्षयन् स दितेः सुतः ॥ १९ ॥ स तु तस्य
बलं ज्ञात्वा धर्म्मं च चरितं व्रतम् । भयाभिभूतः संविग्नः शक्र
आसीत्तदानघ ॥ २० ॥ तेन सञ्चिन्तितो देवो मनसा विष्णु-
रव्ययः । सर्व्वत्रगः प्रभुः श्रीमानागतश्च स्थितो बभौ ॥ २१ ॥
ऋषयश्चापि तं सर्व्वे तुष्टुवुश्च दिवौकसः । तं दृष्ट्वा ज्वलमानश्री-
र्भगवान् हव्यवाहनः ॥ २२ ॥ नष्टतेजाः समभवत्तस्य तेजोऽभि-

भर्त्सितः । तं दृष्ट्वा वरदं देवं विष्णुं देवगणेश्वरम् ॥ २३ ॥ प्राञ्जलिः प्रणतो भूत्वा नमस्कृत्य च वज्रभृत् । प्राह वाक्यं ततस्तत्त्वं यतस्तस्य भयं भवेत् ॥ २४ ॥

विष्णुरुवाच । जानामि ते भयं शक्र दैत्येन्द्रान्नरकात्ततः । ऐन्द्रं प्रार्थयते स्थानं तपः सिद्धेन कर्मणा ॥ २५ ॥ सोऽहमेनं तव प्रीत्या तपः सिद्धमपि ध्रुवम् । वियुनज्मि देहाद्देवेन्द्र मुहूर्त्तं प्रतिपालय ॥ २६ ॥ तस्य विष्णुर्महातेजाः पाणिना चेतनां हरत् । स पपात ततो भूमौ गिरिराज इवाहतः ॥ २७ ॥ तस्यैतदस्थिसङ्घातं मायाविनिहतस्य वै । इदं द्वितीयमपरं विष्णोः कर्म प्रकाशते ॥ २८ ॥ नष्टा वसुमती कृत्स्ना पाताले चैव मज्जिता । पुनरुद्धरिता तेन वराहेणैकशृङ्गिणा ॥ २८ ॥

युधिष्ठिर उवाच । भगवन् विस्तरेणेमां कथां कथय तत्त्वतः । कथन्तेन सुरेशेन नष्टा वसुमती तदा ॥ ३० ॥ योजनानां शतं ब्रह्मन् पुनरुद्धरितां तदा । केन चैव प्रकारेण जगतो धारणी ध्रुवा ॥ ३१ ॥ शिवा देवी महाभागा सर्वशस्यप्ररोहिणी । कस्य चैव प्रभावाद्धि योजनानां शतं गता ॥ ३२ ॥ केनैतद्वीर्य्यसर्वस्वं दर्शितं परमात्मनः । एतत् सर्वं यथातत्त्वमिच्छामि द्विजसत्तम । श्रोतुं विस्तरशः सर्वं त्वं हि तस्य प्रतिश्रयः ॥ ३३ ॥

लोमश उवाच । यत्तेऽहं परिपृष्टोऽस्मि कथाकेतां युधिष्ठिर । तत् सर्वमखिलेनेह श्रूयतां मम भाषतः ॥ ३४ ॥ पुरा कृतयुगे तात वर्त्तमाने भयङ्करे । यमत्वं कारयामास आदिदेवः पुरातनः ॥ ३५ ॥ यमत्वं कुर्वतस्तस्य देवदेवस्य धीमतः । न तत्र म्रियते कश्चिज्जायते वा तथाच्युत ॥ ३६ ॥ वर्द्धन्ते पक्षिसङ्घाश्च तथा पशुगवेडकम् । गवाश्वञ्च मृगाश्चैव सर्वे ते पिशिताशनाः ॥ ३७ ॥ तथा पुरुषशार्दूल मानुषाश्च परन्तप । सहस्रशो ह्ययुतशो वर्द्धन्ते सलिलं यथा ॥ ३८ ॥ एतस्मिन् सङ्कुले तात

वर्त्तमाने भयङ्करे । अतिभाराद्वसुमती योजनानां शतङ्गता ॥३९॥ सा वै व्यथितसर्व्वाङ्गी भारेणाक्रान्तचेतना । नारायणं वरं देवं प्रपन्ना शरणं गता ॥ ४० ॥

पृथिव्युवाच । भगवंस्त्वत्प्रसादाद्धि तिष्ठेयं सुचिरन्त्विह । भारेणास्मि समाक्रान्ता न शक्नोमि स्म वर्त्तितुम् ॥ ४१ ॥ ममेयं भगवन् भारं व्यपनेतुं त्वमर्हसि । शरणागतास्मि ते देव प्रसादं कुरु मे विभो ॥ ४२ ॥ तस्यास्तद्वचनं श्रुत्वा भगवानक्षरः प्रभुः । प्रोवाच वचनं हृष्टः श्रव्याक्षरसमीरितम् ॥ ४३ ॥

विष्णुरुवाच । न ते मत्ति भयं कार्य्यं भारार्त्ते वसुधारिणि । अहमेवं तथा कुर्म्मि यथा लघ्वी भविष्यसि ।

लोमश उवाच । स तां विसर्ज्जयित्वा तु वसुधां शैलकुण्डलाम् ॥४४॥ ततो वराहः संवृत्त एकशृङ्गो महाद्युतिः । रक्ताभ्यां नयनाभ्यान्तु भयमुत्पादयन्निव ॥ ४५ ॥ धूमञ्च ज्वलयन् लक्ष्म्या तत्र देशे व्यवर्द्धत । स गृहीत्वा वसुमतीं शृङ्गेणैकेन भास्वता ॥ ४६ ॥ योजनानां शतं वीर समुद्धरति सोऽक्षरः । तस्याञ्चोद्धार्य्यमाणायां सङ्क्षोभः समजायत ॥ ४७ ॥ देवाः सङ्क्षुभिताः सर्व्वे ऋषयश्च तपोधनाः । हाहाभूतमभूत् सर्व्वं त्रिदिवं व्योम भूस्तथा ॥ ४८ ॥ न पर्य्यवस्थितः कश्चिद्देवो वा मानुषोऽपि वा । ततो ब्रह्माणमासीनं ज्वलमानमिव श्रिया ॥४९॥ देवाः सर्षिगणाश्चैव उपतस्थुरनेकशः । उपसर्प्य च देवेशं ब्रह्माणं लोकसाक्षिकम् ॥५०॥ भूत्वा प्राञ्जलयः सर्व्वे वाक्यमुच्चारयंस्तदा । लोकाः संक्षुभिताः सर्व्वे व्याकुलञ्च चराचरम् ॥ ५१ ॥ समुद्राणाञ्च सङ्क्षोभस्त्रिदशेश प्रकाशते । सैषा वसुमती कृत्स्ना योजनानां शतं गता ॥ ५२ ॥ किमेतत् किं प्रभावेन येनेदं व्याकुलं जगत् । आख्यातु नो भवान् शीघ्रं विसंज्ञाः स्मेह सर्व्वशः ॥ ५३ ॥

ब्रह्मोवाच । असुरेभ्यो भयं नास्ति युष्माकं कुत्रचित् क्वचित् ।

श्रूयतां यत् कृते लोष सङ्क्षोभो जायतेऽमराः ॥ ५४ ॥ योऽसौ सर्वत्रगः श्रीमानचरात्मा व्यवस्थितः । तस्य प्रभावात् सङ्क्षोभ-स्त्रिदिवस्य प्रकाशते ॥ ५५ ॥ येषा वसुमती कृत्स्ना योजनानां शतं गता । समुद्धृता पुनस्तेन विष्णुना परमात्मना ॥ ५६ ॥ तस्यामुद्धार्य्यमाणायां सङ्क्षोभ समजायत । एवं भवन्तो जानन्तु छिद्यतां संशयश्च वः ॥ ५७ ॥

देवा ऊचुः । क्व तद्भूतं वसुमतीं समुद्धरति हृष्टवत् । तं देशं भगवन् ब्रूहि तत्र यास्यामहे वयम् ॥ ५८ ॥

ब्रह्मोवाच । हन्त गच्छत भद्रं वो नन्दने पश्यत स्थितम् । एषोऽत्र भगवान् श्रीमान् सुपर्णः सम्प्रकाशते ॥ ५९ ॥ वाराहे-णैव रूपेण भगवान् लोकभावनः । कालानल इवाभाति पृथिवी-तलमुद्धरन् ॥ ६० ॥ एतस्योरसि सुव्यक्तं श्रीवत्समभिराजते । पश्यध्वं विबुधाः सर्वे भूतमेतदनामयम् ॥ ६१ ॥

लोमश उवाच । ततो दृष्ट्वा महात्मानं श्रुत्वा चामन्त्र्य चामराः । पितामहं पुरस्कृत्य जग्मुर्देवा यथागतम् ॥ ६२ ॥

वैशम्पायन उवाच । श्रुत्वा तु तां कथां सर्वे पाण्डवा जन-मेजय । लोमशादेशितेनाशु पथा जग्मुः प्रहृष्टवत् ॥ ६३ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि गन्धमादनप्रवेशे द्विचत्वारिंशदधिकशतोऽध्यायः ॥ १४२ ॥

---

वैशम्पायन उवाच । ते शूरास्ततधन्वानस्तूणवन्तः समा-गताः । बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ १ ॥ परिगृह्य द्विजश्रेष्ठान् ज्येष्ठाः सर्वधनुष्मताम् । पाञ्चालीसहिता राजन् प्रययुर्गन्धमादनम् ॥ २ ॥ सरांसि सरितश्चैव पर्वतांश्च वनानि च । वृक्षांश्च बहुलच्छायान् ददृशुर्गिरिमूर्द्धनि ॥ ३ ॥

नित्यपुष्पफलान् दिव्यान् देवर्षिगणसेवितान्। आत्मन्यात्मान-
माधाय वीरा मूलफलाशिनः ॥ ४ ॥ चेरुरुच्चावचाकारान् दिव्यान्
विषमसङ्कटान्। पश्यन्तो मृगजातानि बहूनि विविधानि च
॥ ५ ॥ ऋषिसिद्धामरयुतं गन्धर्वाप्सरसां प्रियम्। विविशुस्ते
महात्मानः किन्नराचरितं गिरिम् ॥ ६ ॥ प्रविशत्स्वथ वीरेषु
पर्वतं गन्धमादनम्। चण्डवातं महद्दर्षं प्रादुरासीद्विशाम्पते ॥७॥
ततो रेणुः समुद्भूतः स पत्रबहुलो महान्। पृथिवीञ्चान्तरीक्षञ्च
द्याञ्चैव सहसावृणोत् ॥ ८ ॥ न स्म प्रज्ञायते किञ्चिदावृते व्योम्नि
रेणुना। न चापि शेकुस्तत् कर्त्तुमन्योन्यस्याभिभाषणम् ॥ ९ ॥
न चापश्यंस्ततोऽन्योऽन्यं तमसावृतचक्षुषः। आकृष्यमाणा वातेन
साश्मचूर्णेन भारत ॥ १० ॥ द्रुमाणां वातभग्नानां पततां भूतले-
ऽनिशम्। अन्येषाञ्च महीजानां शब्दः समभवन्महान् ॥ ११ ॥
द्यौः स्वित् पतति किं भूमिर्दीर्य्यते पर्वतो नु किम्। इति ते
मेनिरे सर्वे पवनेनापि मोहिताः ॥ १२ ॥ ते यथानन्तरान्
वृक्षान् वल्मीकान् विषमाणि च। पाणिभि परिमार्गन्तो भीता
वायोर्निषिल्यिरे ॥ १३ ॥ ततः कार्मुकमादाय भीमसेनो महा-
बलः। कृष्णामादाय सङ्गम्य तस्थावाश्रित्य पादपम् ॥ १४ ॥
धर्म्मराजश्च धौम्यश्च निलिल्याते महावने। अग्निहोत्राण्युपादाय
सहदेवस्तु पर्वतम् ॥ १५ ॥ नकुलो ब्राह्मणाश्चान्ये लोमशश्च
महातपाः। वृक्षानासाद्य सन्त्रस्तास्तत्र तत्र निलिल्यिरे ॥ १६ ॥
मन्दीभूते तु पवने तस्मिन्रजसि शाम्यति। महद्भिर्जलधारौघै-
र्वर्षमभ्याजगाम ह ॥१७॥ भृशं चटचटाशब्दो वज्राणां क्षिप्यता-
मिव। ततस्ताश्चञ्चलाभासश्चेरुरभ्रेषु विद्युतः ॥ १८ ॥ ततो-
ऽश्मसहिता धाराः संवृण्वत्यः समन्ततः। प्रपेतुरनिशं तत्र शीघ्र-
वातसमीरिताः ॥ १९ ॥ तत्र सागरगा ह्यापः कीर्य्यमाणाः सम-
न्ततः। प्रादुरासन् सकलुषाः फेनवत्यो विशान्पते ॥ २० ॥

वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम् । परिसस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान् ॥ २१ ॥ तस्मिन्नुपरते शब्दे वाते च समतां गते । गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे ॥ २२ ॥ निर्ज्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत । प्रतस्थिरे पुनर्वीराः पर्वतं गन्धमादनम् ॥ २६ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि गन्धमादनप्रवेशे त्रिचत्वारिंशदधिकशततोऽध्यायः ॥ १४३ ॥

---

वैशम्पायन उवाच । क्रोशमात्रं प्रयातेषु पाण्डवेषु महात्मसु । पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ १ ॥ श्रान्ता दुःखपरीता च वातवर्षेण तेन च । सौकुमार्य्याच्च पाञ्चाली संमुमोह तपस्विनी ॥ २ ॥ सा कम्पमाना मोहेन बाहुभ्यामसितेक्षणा । वृत्ताभ्यामनुरूपाभ्यामूरू समवलम्बत ॥ ३ ॥ आलम्बमाना सहितावूरू गजकरोपमौ । पपात सहसा भूमौ वेपन्ती कदली यथा ॥ ४ ॥ तां पतन्तीं वरारोहां भज्यमानां लतामिव । नकुलः समभिद्रुत्य परिजग्राह वीर्य्यवान् ॥ ५ ॥

नकुल उवाच । राजन् पाञ्चालराजस्य सुतेयमसितेक्षणा । श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ॥ ६ ॥ अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी । आश्वासय महाराज तामिमां श्रमकर्षिताम् ॥ ७ ॥

वैशम्पायन उवाच । राजा तु वचनात्तस्य भृशदुःखसमन्वितः । भीमश्च सहदेवश्च सहसा समुपाद्रवत् ॥ ८ ॥ तामवेक्ष्य तु कौन्तेयो विवर्णवदनां कृशाम् । अङ्कमानीय धर्मात्मा पर्य्यदेवयदातुरः ॥ ९ ॥

युधिष्ठिर उवाच । कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।

भूमौ निपतिता शेते सुखार्हा वरवर्णिनी ॥ १० ॥ सुकुमारौ कथं पादौ मुखञ्च कमलप्रभम्। मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ॥ ११ ॥ किमिदं द्यूतकामेन मया कृतमबुद्धिना। आदाय कृष्णाञ्चरता वने मृगगणायुते ॥ १२ ॥ सुखं प्राप्स्यति कल्याणी पाण्डवान् प्राप्य वै पतीन्। इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ॥ १३ ॥ तत्सर्वमनवाप्येयं श्रमशोकाध्वकर्षिता। शेते निपतिता भूमौ पापस्य मम कर्मभिः ॥ १४ ॥

वैशम्पायन उवाच। तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे। धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥ १५ ॥ ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन्। रक्षोघ्नांश्च तथा मन्त्रान् जेपुश्चक्रुश्च ते क्रियाः ॥ १६ ॥ पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः। स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ॥ १७ ॥ सेव्यमाना च शीतेन जलमिश्रेण वायुना। पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ १८ ॥ परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे। पार्था विश्रामयामासुर्लब्धसंज्ञां तपस्विनीम् ॥१९॥ तस्या यमौ रक्ततलौ पादौ पूजितलक्षणौ। कराभ्यां किणजाताभ्यां शनकैः संववाहतुः ॥ २० ॥ पर्य्याश्वासयदप्येनां धर्मराजो युधिष्ठिरः। उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ॥२१॥ बहवः पर्वता भीम विषमा हिमदुर्गमाः। तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ २२ ॥

भीमसेन उवाच। त्वां राजन्राजपुत्रीञ्च यमौ च पुरुषर्षभौ। स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ॥ २३ ॥ हैडिम्बश्च महावीर्य्यो विहगो महलोपमः। वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ २४ ॥

वैशम्पायन उवाच। अनुज्ञातो धर्म्मराज्ञा पुत्रं सस्मार राक्षसम्। घटोत्कचस्तु धर्मात्मा स्मृतमात्रः पितुस्तदा ॥ २५ ॥

कृताञ्जलिरुपातिष्ठदभिवाद्याथ पाण्डवान्। ब्राह्मणांश्च महाबाहुः स च तैरभिनन्दितः ॥ २६ ॥ उवाच भीमसेनञ्च पितरं भीमविक्रमम्। स्मृतोऽस्मि भवता शीघ्रं शुश्रूषुरहमागतः ॥२७॥ आज्ञापय महाबाहो सर्वं कर्त्ताऽस्म्यसंशयम्। तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे ॥ २८ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि गन्धमादनप्रवेशे चतुश्चत्वारिंशदधिकशततोऽध्यायः ॥ १४४ ॥

---

युधिष्ठिर उवाच। धर्म्मज्ञो बलवान् शूरः सत्यो राक्षसपुङ्गवः। भक्तोऽस्मानौरसः पुत्रो भीम गृह्णातु मातरम् ॥ १ ॥ तव बाहुबलेनाहमतिभीमपराक्रम। अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनम् ॥ २ ॥

वैशम्पायन उवाच। भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम्। आदिदेश नरव्याघ्रस्तनयं शत्रुकर्षणम् ॥ ३ ॥

भीमसेन उवाच। हैडिम्बेयं परिश्रान्ता तव मातापराजिता। त्वञ्च कामगमस्तात बलवान् वह तां खग ॥ ४ ॥ स्कन्धमारोप्य भद्रन्ते मध्येऽस्माकं विहायसा। गच्छ नीचिकया गत्या यथा चैनां न पीड़येः ॥ ५ ॥

घटोत्कच उवाच। धर्म्मराजञ्च धौम्यञ्च कृष्णाञ्च यमजौ तथा। एकोऽप्यहमलं वोढुं किमुताद्य सहायवान् ॥ ६ ॥ अन्ये च शतशः शूरा विहगाः कामरूपिणः। सर्वान् वो ब्राह्मणैः सार्द्धं वक्ष्यन्ति सहितानघ ॥ ७ ॥ एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः। पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ॥ ८ ॥ लोमशः सिद्धमार्गेण जगामानुपमद्युतिः। स्वेनैव स्वप्रभावेन द्वितीय इव भास्करः ॥ ९ ॥ ब्राह्मणांश्चापि तान् सर्वान् समु-

पादाय राक्षसाः। नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः
॥ १० ॥ एवं सुरमणीयानि वनान्युपवनानि च। आलोकयन्त-
स्ते जग्मुर्विशालां वदरीं प्रति ॥ ११ ॥ ते त्वाशुगतिभिर्वीरा
राक्षसैस्तैर्महाजवैः। उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत्
॥ १२ ॥ देशान् म्लेच्छजनाकीर्णान्नानारत्नाकरायुतान्। ददृशु-
र्गिरिपादांश्च नानाधातुसमाचितान् ॥ १३ ॥ विद्याधरसमा-
कीर्णान् युतान् वानरकिन्नरैः। तथा किम्पुरुषैश्चैव गन्धर्वैश्च
समन्ततः ॥ १४ ॥ मयूरैश्चमरैश्चैव वानरै रुरुभिस्तथा। वराहै-
र्गवयैश्चैव महिषैश्च समावृतान् ॥ १५ ॥ नदीजालसमाकीर्णा-
न्नानापक्षियुतान् बहून्। नानाविधमृगैर्जुष्टान् वानरैश्चोपशोभि-
तान् ॥ १६ ॥ समदैश्चापि विहगैः पादपैरन्वितांस्तथा। तेऽव-
तीर्य्य बहून् देशानुत्तरांश्च कुरूनपि ॥ १७ ॥ ददृशुर्विविधाश्चर्य्यं
कैलासं पर्व्वतोत्तमम्। तस्याभ्यासे तु ददृशुर्नरनारायणाश्रमम्
॥ १८ ॥ उपेतं पादपैर्दिव्यैः सदा पुष्पफलोपगैः। ददृशुस्तांश्च
वदरीं वृत्तस्कन्धां मनोहराम् ॥ १९ ॥ स्निग्धामविरलच्छायां
श्रिया परमया युताम्। पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः
शुभाम् ॥ २० ॥ विशालशाखां विस्तीर्णामतिद्युतिसमन्विताम्।
फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशम् ॥ २१ ॥ मधुस्रवैः
सदा दिव्यां महर्षिगणसेविताम्। मदप्रमुदितैर्नित्यं नाना-
द्विजगणैर्युताम् ॥ २२ ॥ अदंशमशके देशे बहुमूलफलोदके।
नीलशाद्वलसंछन्ने देवगन्धर्वसेविते ॥ २३ ॥ सुसमीकृतभूभागे
स्वभावविहिते शुभे। जातां हिममृदुस्पर्शे देशेऽपहतकण्टके॥२४॥
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः। अवतेरुस्ततः सर्व्वे
राक्षसस्कन्धतः शनैः ॥ २५ ॥ ततस्तमाश्रमं रम्यं नरनारायणा-
श्रितम्। ददृशुः पाण्डवा राजन् सहिता द्विजपुङ्गवैः ॥ २६ ॥
तमसा रहितं पुण्यमनामृष्टं रवेः करैः। क्षुत्तृट्शीतोष्णदोषैश्च

वर्ज्जितं शोकनाशनम् ॥ २७ ॥ महर्षिगणसम्बाधं ब्राह्म्या लक्ष्म्या समन्वितम्। दुष्प्रवेशं महाराज नरैर्धर्मबहिष्कृतैः ॥ २८ ॥ बलि-होमार्च्चितं दिव्यं सुसंमृष्टानुलेपनम्। दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् ॥ २९ ॥ विशालैरग्निशरणैः स्रुग्भाण्डैराचितं शुभैः। महद्भिस्तोयकलशैः कठिनैश्चोपशोभितम् ॥ ३० ॥ शरण्यं सर्वभूतानां ब्रह्मघोषनिनादितम्। दिव्यमाश्रयणीयन्तमाश्रमं श्रमनाशनम् ॥ ३१ ॥ श्रिया युतमनिर्द्देश्यं देवचर्य्योपशोभितम्। फलमूलाशनैर्दान्तैश्चारुकृष्णाजिनाम्बरैः ॥ ३२ ॥ सूर्य्यवैश्वानर-समैस्तपसा भावितात्मभिः। महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः ॥३३॥ ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः। सोऽभ्यगच्छन्महातेजास्तानृषीन् प्रयतः शुचिः ॥ ३४ ॥ भ्रातृभिः सहितो धीमान् धर्मपुत्रो युधिष्ठिरः। दिव्यज्ञानोपपन्नास्ते दृष्ट्वा प्राप्तं युधिष्ठिरम् ॥ ३५ ॥ अभ्यगच्छन्त सुप्रीताः सर्व एव महर्षयः। आशीर्वादान् प्रयुञ्जानाः स्वाध्यायनिरता भृशम् ॥ ३६ ॥ प्रीतास्ते तस्य सत्कारं विधिना पावकोपमाः। उपाजह्रुश्च सलिलं पुष्प-मूलफलं शुचि ॥ ३७ ॥ स तं प्रीत्याथ सत्कारमुपनीतं महर्षिभिः। प्रयतः प्रतिजग्राह धर्मराजो युधिष्ठिरः ॥ ३८ ॥ तं शक्रसदनप्रख्यं दिव्यगन्धं मनोरमम्। प्रीतः स्वर्गोपमं पुण्यं पाण्डवः सह कृष्णया ॥ ३९ ॥ विवेश शोभया युक्तं भ्रातृभिश्च महानघ। ब्राह्मणैर्वेदवेदाङ्गपारगैश्च सहस्रशः ॥ ४० ॥ तत्रा-पश्यत धर्मात्मा देवदेवर्षिपूजितम्। नरनारायणस्थानं भागी-रथ्योपशोभितम् ॥ ४१ ॥ पश्यन्तस्ते नरव्याघ्रा रेमिरे तत्र पाण्डवाः। मधुस्रवफलं दिव्यं ब्रह्मर्षिगणसेवितम् ॥ ४२ ॥ तदुपेत्य महात्मानस्तेऽवसन् ब्राह्मणैः सह। मुदा युक्ता महात्मानो रेमिरे तत्र ते तदा ॥ ४३ ॥ आलोकयन्तो मैनाकं नाना-द्विजगणायुतम्। हिरण्यशिखरञ्चैव तच्च विन्दुसरः शिवम् ॥४४॥

तस्मिन् विहरमाणाश्च पाण्डवाः सह कृष्णया। मनोज्ञे कानन-
वरे सर्व्वर्त्तु[illegible]ले ॥ ४५ ॥ पादपैः पुष्पविकचैः फलभारा-
वनामिभि। शोभिते सर्व्वतो रम्यैः पुंस्कोकिलगणायुतैः ॥ ४६ ॥
स्निग्धपत्रैरविरलैः शीतच्छायैर्मनोरमैः। सरांसि च विचि-
त्राणि प्रसन्नसलिलानि च ॥ ४७ ॥ कमलैः सोत्पलैश्चैव भ्राज-
मानानि सर्व्वशः। पश्यन्तश्चारुरूपाणि रेमिरे तत्र पाण्डवाः
॥ ४८ ॥ पुण्यगन्धः सुखस्पर्शो ववौ तत्र समीरणः। ह्लादयन्
पाण्डवान् सर्व्वान् द्रौपद्या सहितान् प्रभो ॥ ४९ ॥ भागीरथीं
सुतीर्थाञ्च शीतां विमलपङ्कजाम्। मणिप्रवालप्रस्तारां पादपै-
रुपशोभिताम् ॥ ५० ॥ दिव्यपुष्पसमाकीर्णां मनसः प्रीतिवि-
र्द्धिनीम्। वीक्षमाणा महात्मानो विशालां बदरीमनु ॥ ५१ ॥
तस्मिन् देवर्षिचरिते देशे परमदुर्गमे। भागीरथीपुण्यजले
तर्पयाञ्चक्रिरे तदा ॥ ५२ ॥ देवानृषींश्च कौन्तेयाः परमं शौच-
मास्थिताः। तत्र ते तर्पयन्तश्च जपन्तश्च कुरूद्वहाः ॥ ५३ ॥
ब्राह्मणैः सहिता वीरा ह्यवसन् पुरुषर्षभाः। कृष्णायास्तत्र पश्यन्तः
क्रीड़ितान्यमरप्रभाः। विचित्राणि नरव्याघ्रा रेमिरे तत्र
पाण्डवाः ॥ ५४ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे
पञ्चचत्वारिंशदधिकशततोऽध्यायः ॥ १४५ ॥

---

वैशम्पायन उवाच। तत्र ते पुरुषव्याघ्राः परमं शौच-
मास्थिताः। षड्रात्रमवसन् वीरा धनञ्जयदिदृक्षवः ॥ १ ॥ ततः
पूर्व्वोत्तरो वायुः पवमानो यदृच्छया। सहस्रपत्रमर्काभं दिव्यं
पद्ममुपाहरत् ॥ २ ॥ तदपश्यत पाञ्चाली दिव्यगन्धं मनोरमम्।
अनिलेनाहृतं भूमौ पतितं जलजं शुचि ॥ ३ ॥ तच्छुभा शुभ-

मासाद्य सौगन्धिकमनुत्तमम्। अतीव मुदिता राजन् भीमसेन-
मथाब्रवीत् ॥ ४ ॥ पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमम्।
गन्धसंस्थानसम्पन्नं मनसो मम नन्दनम् ॥ ५ ॥ इदञ्च धर्मराजाय
प्रदास्यामि परन्तप। हरेदं मम कामाय काम्यके पुनराश्रमे
॥ ६ ॥ यदि तेऽहं प्रिया पार्थ बहूनीमान्युपाहर। तान्यहं
नेतुमिच्छामि काम्यकं पुनराश्रमम् ॥ ७ ॥ एवमुक्त्वा शुभापाङ्गी
भीमसेनमनिन्दिता। जगाम पुष्पमादाय धर्मराजाय तत्तदा
॥ ८ ॥ अभिप्रायन्तु विज्ञाय महिष्याः पुरुषर्षभः। प्रियायाः
प्रियकाम स प्रायाद्भीमो महाबलः ॥ ९ ॥ वातं तमेवाभिमुखो
यतस्तत् पुष्पमागतम्। आजिहीर्षुर्जगामाशु स पुष्पाण्यपरा-
ण्यपि ॥ १० ॥ रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान्।
मृगराडिव संक्रुद्धः प्रभिन्न इव कुञ्जरः ॥ ११ ॥ ददृशुः सर्व-
भूतानि महाबाणधनुर्द्धरम्। न ग्लानिर्न च वैक्लव्यं न भयं न
च सम्भ्रमः ॥ १२ ॥ कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः।
द्रौपद्याः प्रियमन्विच्छन् स बाहुबलमाश्रितः ॥ १३ ॥ व्यपेतभय-
सम्मोहः शैलमभ्यपतद्बली। स तं द्रुमलतागुल्मच्छन्नं नीलशिला-
तलम् ॥ १४ ॥ गिरिञ्चचारारिहरः किन्नराचरितं शुभम्। नाना-
वर्णधरैश्चित्रं धातुद्रुममृगाण्डजैः ॥ १५ ॥ सर्वभूषणसम्पूर्णं भूमे-
र्भुजमिवोच्छ्रितम्। सर्वत्र रमणीयेषु गन्धमादनसानुषु ॥ १६ ॥
सक्तचक्षुरभिप्रायान् हृदयेनानुचिन्तयन्। पुंस्कोकिलनिनादेषु
षट्पदाचरितेषु च ॥ १७ ॥ बद्धश्रोत्रमनश्चक्षुर्जगामामितविक्रमः।
आजिघ्रन् स महातेजाः सर्वर्त्तुकुसुमोद्भवम् ॥ १८ ॥ गन्धमुद्धत-
सद्दामो वने मत्त इव द्विपः। वीज्यमानः सुपुण्येन नानाकुसुम-
गन्धिना ॥ १९ ॥ पितुः संस्पर्शशीतेन गन्धमादनवायुना। ह्रिय-
माणश्रमः पित्रा संप्रहृष्टतनूरुहः ॥ २० ॥ सयक्षगन्धर्वसुरब्रह्मर्षि-
गणसेवितम्। विलोकयामास तदा पुष्पहेतोररिन्दमः ॥ २१ ॥

विषमच्छेदरचितैरनुलिप्त इवाङ्गुलैः । विमलैर्धातुविच्छेदैः काञ्च-
नाञ्जनराजतैः ॥ २२ ॥ सपक्षमिव नृत्यन्तं पार्श्वलग्नैः पयोधरैः ।
मुक्ताहारैरिव चितं च्युतैः प्रस्रवणोदकैः ॥ २३ ॥ अभिरामदरी-
कुञ्जनिर्झरोदककन्दरम् । अप्सरोनूपुररवैः प्रनृत्तवरवर्हिणम्
॥ २४ ॥ दिग्वारणविषाणाग्रैर्घृष्टोपलशिलातलम् । स्रस्तांशुक-
मिवाक्षोभ्यैर्निम्नगा निःसृतैर्जलैः ॥ २५ ॥ सशष्पकवलैः स्वस्थै-
रदूरपरिवर्त्तिभिः । भयानभिज्ञैर्हरिणैः कौतूहलनिरीक्षितः
॥ २६ ॥ चालयानः स वेगेन लताजालान्यनेकशः । आक्रीड़मानो
हृष्टात्मा श्रीमान् वायुसुतो ययौ ॥ २७ ॥ प्रियामनोरथं कर्त्तु-
मुद्यतश्चारुलोचनः । प्रांशुः कनकवर्णाभः सिंहसंहननो युवा
॥ २८ ॥ मत्तवारणविक्रान्तो मत्तवारणवेगवान् । मत्तवारण-
ताम्राक्षो मत्तवारणवारणः ॥ २९ ॥ प्रियपार्श्वोपविष्टाभिर्व्या-
वृत्ताभिर्विचेष्टितैः । यक्षगन्धर्वयोषाभिरदृश्याभिर्निरीक्षितः ॥३०॥
नवावतारं रूपस्य विक्रीड़न्निव पाण्डवः । चचार रमणीयेषु
गन्धमादनसानुषु ॥ ३१ ॥ संस्मरन् विविधान् क्लेशान् दुर्य्योधन-
कृतान् बहून् । द्रौपद्या वनवासिन्याः प्रियं कर्त्तुं समुद्यतः ॥३२॥
सोऽचिन्तयद्गते स्वर्गमर्जुने मयि चागते । पुष्पहेतोः कथं त्वार्य्यः
करिष्यति युधिष्ठिरः ॥ ३३ ॥ स्नेहान्नरवरो नूनमविश्वासा-
द्बलस्य च । नकुलं सहदेवञ्च न मोक्ष्यति युधिष्ठिरः ॥ ३४ ॥
कथन्नु कुसुमावाप्तिः स्याच्छीघ्रमिति चिन्तयन् । प्रतस्थे नर-
शार्दूलः पपात रुचिराननः ॥ ३५ ॥ सज्जमानमनोदृष्टिः फुल्लेषु
गिरिसानुषु । द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ ॥ ३६ ॥
कम्पयन् मेदिनीं पद्भ्यां निर्घात इव पर्व्वसु । त्रासयन् गजयूथानि
वातरंहा वृकोदरः ॥ ३७ ॥ सिंहव्याघ्रमृगांश्चैव मर्द्दयानो महा-
बलः । उन्मूलयन्महावृक्षान् पोथयंस्तरसा बली ॥ ३८ ॥ लता-
वल्लीश्च वेगेन विकर्षन् पाण्डुनन्दनः । उपर्य्युपरि शैलाग्रमारु-

स्कन्दुरिव द्विपः ॥ ३९ ॥ विनर्दमानोऽतिभृशं सविद्युदिवतोयदः ।
तेन शब्देन महता भीमस्य प्रतिबोधिताः ॥ ४० ॥ गुहां सन्त-
त्यजुर्व्याघ्रा निलिल्युर्वनवासिन । समुत्पेतुः खगास्त्रस्ता मृग-
यूथानि दुद्रुवुः ॥४१॥ ऋक्षाश्चोत्ससृजुर्वृक्षांस्तत्यजुर्हरयो गुहाम् ।
व्यजृम्भन्त महासिंहा महिषाश्चावलोकयन् ॥ ४२ ॥ तेन वित्रा-
सिता नागाः करेणुपरिवारिताः । तद्वनं संपरित्यज्य जग्मु-
रन्यन्महावनम् ॥ ४३ ॥ वराहमृगसिंहाश्च महिषाश्च वनेचराः ।
व्याघ्रगोमायुसंघाश्च प्रणेदुर्गवयैः सह ॥ ४४ ॥ रथाङ्गसाह्वदात्यूहा
हंसकारण्डवप्लवाः । शुकाः पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे
दिशः ॥ ४५ ॥ तथान्ये दर्पिता नागाः करेणुशरपीडिताः ।
सिंहव्याघ्राश्च संक्रुद्धा भीमसेनमथाद्रवन् ॥ ४६ ॥ शकृन्मूत्रञ्च
मुञ्चाना भयविभ्रान्तमानसाः । व्यादितास्या महारौद्रा व्यनदन्
भीषणान्रवान् ॥ ४७ ॥ ततो वायुसुतः क्रोधात् स्वबाहुबल-
माश्रितः । गजेनान्यान् गजान् श्रीमान् सिंहं सिंहेन वा विभुः
॥ ४७ ॥ तलप्रहारैरन्यांश्च व्यहनत् पाण्डवो बली । ते वध्यमाना
भीमेन सिंहव्याघ्रतरक्षवः ॥ ४८ ॥ भयाद्विससृजुर्भीमं शकृ-
न्मूत्रञ्च सुस्रुवुः । प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ॥४९॥
वनं पाण्डुसुतः श्रीमाञ्छब्देनापूरयन्दिशः । अथापश्यन्महाबाहु-
र्गन्धमादन सानुषु ॥ ५० ॥ सुरम्यं कदलीखण्डं बहुयोजनविस्तृ-
तम् । तमभ्यगच्छद्वेगेन क्षोभयिष्यन्महाबलः ॥ ५१ ॥ महागज
इवास्रावी प्रभञ्जन् विविधान् द्रुमान् । उत्पाट्य कदलीस्तम्भान्
बहुतालसमुच्छ्रयान् ॥ ५२ ॥ चिक्षेप तरसा भीमः समन्ताद्-
बलिनाम्बरः । विनदन् सुमहातेजा नृसिंह इव दर्पितः ॥ ५३ ॥
ततः सत्त्वान्युपाक्रामन् बहूनि सुमहान्ति च । रुरुवानरसिंहांश्च
महिषांश्च जलाशयान् ॥ ५४ ॥ तेन शब्देन चैवाथ भीमसेनरवेण
च । वनान्तरगताश्चापि वित्रेसुर्मृगपक्षिणः ॥ ५५ ॥ तं शब्दं

सहसा श्रुत्वा मृगपक्षिसमीरितम् । जलार्द्रपक्षा विहगाः समुत्पेतुः सहस्रशः ॥ ५७ ॥ तानौदकान् पक्षिगणान्निरीक्ष्य भरतर्षभ । तानेवानुसरन्नम्यं ददर्श सुमहत्सरः ॥ ५८ ॥ काञ्चनैः कदलीषण्डैर्मन्दमारुतकम्पितैः । वीज्यमानमिवाक्षोभ्य तीरान्तीरविसर्पिभिः ॥ ५९ ॥ तत् सरोऽथावतीर्य्याथ प्रभूतनलिनोत्पलम् । महागज इवोद्दामश्चिक्रीड़ बलवद्बली ॥ ६० ॥ विक्रीड्य तस्मिन् सुचिरमुत्ततारामितद्युतिः । ततोऽव्यगाहत् वेगेन तद्वनं बहुपादपम् ॥ ६१ ॥ दध्मौ च शङ्खं स्वनवत् सर्वप्राणेन पाण्डवः । आस्फोटयच्च बलवान् भीमः सन्नादयन्दिशः ॥ ६२ ॥ तस्य शङ्खस्य शब्देन भीमसेनरवेण च । बाहुशब्देन चोग्रेण नर्द्दन्तीव गिरेर्गुहा ॥ ६३ ॥ तं वज्रनिष्पेषसममास्फोटितमहारवम् । श्रुत्वा शैलगुहासुप्तैः सिंहैर्मुक्तो महास्वनः ॥ ६४ ॥ सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत । मुक्तो विरावः सुमहान् पर्वतो येन पूरितः ॥ ६५ ॥ तन्तु नादं ततः श्रुत्वा मुक्तं वारणपुङ्गवैः । भ्रातरं भीमसेनन्तु विज्ञाय हनुमान् कपि ॥ ६६ ॥ दिवङ्गमं सरोधाय मार्गं भीमस्य कारणात् । अनेन हि पथा मा वै गच्छेदिति विचार्य्य सः ॥ ६७ ॥ आस्ते एकायने मार्गे कदलीषण्डमण्डिते । भ्रातुर्भीमस्य रक्षार्थं तं मार्गमवरुध्य वै ॥ ६८ ॥ मात्र प्राप्स्यति शाप वा धर्षणां वेति पाण्डव । कदलीषण्डमध्यस्थो ह्येवं सञ्चिन्त्य वानर ॥६९॥ प्राजृम्भत महाकायो हनुमान्नाम वानरः । कदलीषण्डमध्यस्थो निद्रावशगतस्तदा ॥ ७० ॥ जृम्भमाणः सुविपुलं शक्रध्वजमिवोच्छ्रितम् । आस्फोटयच्च लाङ्गुलमिन्द्राशनिसमस्वनम् ॥ ७१ ॥ तस्य लाङ्गुलनिनदं पर्वतः स गुहामुखैः । उद्गारमिव गौर्नर्द्दन्नुत्ससर्ज्ज समन्ततः ॥ ७२ ॥ लाङ्गूलास्फोटशब्दाच्च चलितः स महागिरिः । विघूर्णमानशिखरः समन्तात् पर्य्यशीर्य्यत ॥ ७३ ॥ स लाङ्गूलरवस्तस्य मत्तवारणनिस्वनम् ।

अन्तर्धाय विचित्रेषु चचार गिरिसानुषु॥ ७४॥ स भीमसेन-
स्तच्छ्रुत्वा सम्प्रहृष्टतनूरुहः। शब्दप्रभवमन्विच्छंश्चचार कदली-
वनम्॥ ७५॥ कदलीवनमध्यस्थमथ पीने शिलातले। ददर्श
सुमहाबाहुर्वानराधिपतिं तदा॥ ७६॥ विद्युत्सम्पातदुष्प्रेक्ष्यं
विद्युत्सम्पातपिङ्गलम्। विद्युत्सम्पातनिनदं विद्युत्सम्पातचञ्चलम्
॥ ७७॥ बाहुस्वस्तिकविन्यस्तपीनह्रस्वशिरोधरम्। स्कन्धभूयिष्ठ-
कायत्वात्तनुमध्यकटीतटम्॥ ७८॥ किञ्चिच्चाभुग्नशीर्षेण दीर्घ-
रोमाञ्चितेन च। लाङ्गूलेनोर्द्ध्वगतिना ध्वजेनेव विराजता॥७९॥
ह्रस्वोष्ठं ताम्रजिह्वास्यं रक्तकर्णं चलद्भ्रुवम्। विवृत्तदंष्ट्रादशनं
शुक्लतीक्ष्णाग्रशोभितम्॥ ८०॥ अपश्यद्वदनं तस्य रश्मिवन्त-
मिवोडुपम्। वदनाभ्यन्तरगतैः शुक्लैर्दन्तैरलंकृतम्॥ ८१॥
केशरोत्करसम्मिश्रमशोकानामिवोत्करम्। हिरण्मयीनां मध्यस्थं
कदलीनां महाद्युतिम्॥ ८२॥ दीप्यमानेन वपुषा स्वर्चिष्मन्त-
मिवानलम्। निरीक्षन्तमवित्रस्तं लोचनैर्मधुपिङ्गलैः॥ ८३॥ तं
वानरवरं धीमानतिकायं महाबलम्। स्वर्गपन्थानमावृत्य हिम-
वन्तमिव स्थितम्॥ ८४॥ दृष्ट्वा चैनं महाबाहुरेकं तस्मिन् महा-
वने। अथोपसृत्य तरसा विभीर्भीमस्ततो बली॥ ८५॥ सिंह-
नादं चकारोग्रं वज्राशनिसमं बली। तेन शब्देन भीमस्य वित्रे-
सुर्मृगपक्षिणः॥ ८६॥ हनूमांश्च महासत्त्व ईषदुन्मील्य लोचने।
दृष्ट्वा तमथ सावज्ञं लोचनैर्मधुपिङ्गलैः। स्मितेन चैनमासाद्य
हनूमानिदमब्रवीत्॥ ८७॥

हनूमानुवाच। किमर्थं सरुजस्तेऽहं सुखसुप्तः प्रबोधितः।
ननु नाम त्वया कार्य्या दया भूतेषु जानता। वयं धर्मं न जानी-
मस्तिर्य्यग्योनिमुपाश्रिताः॥ ८८॥ नरास्तु बुद्धिसम्पन्ना दयां
कुर्वन्ति जन्तुषु। क्रूरेषु कर्मसु कथं देहवाक्चित्तदूषिषु॥ ८९॥
धर्मोपघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः। न त्वं धर्मं विजा-

नास्ति क्षुधा नोपासिताख्रया ॥ ९० ॥ अल्पबुद्धितया बाल्या-
दुत्सादयसि यन्मृगान् । ब्रूहि कस्त्वं किमर्थं वा किमिदं वन-
मागतां ॥ ९१ ॥ वाञ्छितं मनुषैर्भावैस्तथैव पुरुषैरपि । क्व वा
त्वयाद्य गन्तव्यं प्रब्रूहि पुरुषर्षभ ॥ ९२ ॥ अतः परमगम्योऽयं
पर्वतः सुदुरासदः । विना सिद्धिगतिं वीर गतिरत्र न विद्यते
॥ ९३ ॥ देवलोकस्य मार्गोऽयमगम्यो मानुषैः सदा । कारुण्या-
त्त्वामहं वीर वारयामि निबोध मे ॥ ९४ ॥ नातः परं त्वया
शक्यं गन्तुमाश्वसिहि प्रभो । स्वागतं सर्वथैवेह तवाद्य मनुजर्षभ
॥ ९५ ॥ इमान्यमृतकल्पानि मूलानि च फलानि च । भक्षयित्वा
निवर्त्तस्व मा वृथा प्राप्स्यसे वधम् । ग्राह्यं यदि वचो मह्यं हितं
मनुजपुङ्गव ॥ ९६ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि भीमकदलीषण्डप्रवेशे
षट्चत्वारिंशदधिकशतोऽध्यायः ॥ १४६ ॥

---

वैशम्पायन उवाच । एतच्छ्रुत्वा वचस्तस्य वानरेन्द्रस्य धीमतः ।
भीमसेनस्तदा वीरः प्रोवाचामित्रकर्षण ॥ १ ॥

भीमसेन उवाच । को भवान् किं निमित्तं वा वानरं वपु-
राश्रितः । ब्राह्मणानन्तरो वर्णः क्षत्रियस्त्वान्तु पृच्छति ॥ २ ॥
कौरवः सोमवंशीयः कुन्त्या गर्भेण धारितः । पाण्डवो वायुतनयो
भीमसेन इति श्रुतः ॥ ३ ॥ स वाक्यं कुरुवीरस्य स्मितेन प्रति-
गृह्य तत् । हनूमान् वायुतनयो वायुपुत्रमभाषत ॥ ४ ॥

हनूमानुवाच । वानरोऽहं न ते मार्गं प्रदास्यामि यथेप्सितम् ।
साधु गच्छ निवर्त्तस्व मां त्वं प्राप्स्यसि वैशसम् ॥ ५ ॥

भीमसेन उवाच । वैशसं वास्तु यद्वान्यन्न त्वां पृच्छामि
वानर । प्रयच्छ मार्गमुत्तिष्ठ मा मत्तः प्राप्स्यसे व्यथाम् ॥ ६ ॥

हनूमानुवाच । नास्ति शक्तिर्ममोत्थातुं व्याधिना क्लेशितो ऽस्म्यहम् । यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ॥ ७ ॥

भीम उवाच । निर्गुणः परमात्मा तु देहं व्याप्यावतिष्ठती । तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ ८ ॥ यद्यागमैर्न विद्याञ्च तमहं भूतभावनम् । क्रमेयं त्वां गिरिञ्चैव हनूमानिव सागरम् ॥९॥

हनूमानुवाच । क एष हनुमान्नाम सागरो येन लङ्घितः । पृच्छामि त्वां नरश्रेष्ठ कथ्यतां यदि शक्यते ॥ १० ॥

भीमसेन उवाच । भ्राता मम गुणश्लाघ्यो बुद्धिसत्त्वबलान्वितः । रामायणेऽतिविख्यातः श्रीमान् वानरपुङ्गवः ॥ ११ ॥ रामपत्नीकृते येन शतयोजनविस्तृत । सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः ॥ १२ ॥ स मे भ्राता महावीर्य्यस्तुल्योऽहं तस्य तेजसा । बले पराक्रमे युद्धे शक्तोऽहं तव निग्रहे ॥ १३ ॥ उत्तिष्ठ देहि मे मार्गं पश्य मे चाद्य पौरुषम् । मच्छासनमकुर्वाणं त्वा वा नेष्ये यमक्षयम् ॥ १४ ॥

वैशम्पायन उवाच । विज्ञाय तं बलोन्मत्तं बाहुवीर्य्येण दर्पितम् । हृदयेनावहस्यैनं हनूमान् वाक्यमब्रवीत् ॥ १५ ॥

हनमानुवाच । प्रसीद नास्ति मे शक्तिरुत्थातुं जरयानघ । ममानुकम्पया त्वेतत् पुच्छमुत्सार्य्य गम्यताम् ॥ १६ ॥

वैशम्पायन उवाच । एवमुक्तो हनुमता हीनवीर्य्यपराक्रमम् । मनसाचिन्तयद्भीमः स्वबाहुबलदर्पितः ॥ १७ ॥ पुच्छे प्रगृह्य तरसा हीनवीर्य्यपराक्रमम् । सालोक्यमन्तकस्यैनं नयाम्यद्येह वानरम् ॥ १८ ॥ सावज्ञमथ वामेन स्मयन् जग्राह पाणिना । न चाशकच्चालयितुं भीमः पुच्छं महाकपेः ॥ १९ ॥ उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम् । नोद्धर्त्तुमशकद्भीमो दोर्भ्यामपि महाबलः ॥ २० ॥ उत्क्षिप्तभ्रुर्विवृत्ताक्षः संहतभ्रुकुटीमुखः । स्विन्नगात्रोऽभवद्भीमो न चोद्धर्त्तुं शशाक तम् ॥ २१ ॥ यत्नवानपि

तु श्रीमांल्लाङ्गूलोद्धरणोद्यतः । कपेः पार्श्वगतो भीमस्तस्थौ व्रीडा-
नताननः ॥ २२ ॥ प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत् ।
प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम ॥ २३ ॥ सिद्धो वा यदि
वा देवो गन्धर्व्वो वाथ गुह्यकः । पृष्टः सन् काम्यया ब्रूहि कस्त्वं
वानररूपधृक् ॥ २४ ॥ न चेद्गुह्यं महावाहो श्रोतव्यञ्चेद्भवेन्मम ।
शिष्यवस्त्वान्तु पृच्छामि उपपन्नोऽस्मि तेनऽघ ॥ २५ ॥

हनूमानुवाच । यत्ते मम परिज्ञाने कौतूहलमरिन्दम ।
तत्सर्व्वमखिलेन त्वं शृणु पाण्डवनन्दन ॥ २६ ॥ अहं केसरिणः
क्षेत्रे वायुना जगदायुना । जातः कमलपत्राक्ष हनूमान्नाम
वानरः ॥ २७ ॥ सूर्य्यपुत्रञ्च सुग्रीवं शक्रपुत्रञ्च वालिनम् । सर्व्वे
वानरराजानस्तथा वानरयूथपाः ॥ २८ ॥ उपतस्थुर्महावीर्य्या
मम चामित्रकर्षण । सुग्रीवेणाभवत् प्रीतिरनिलस्याग्निना यथा
॥ २९ ॥ निकृतः स ततो भ्रात्रा कस्मिंश्चित् कारणान्तरे । ऋष्यमूके
मया सार्द्धं सुग्रीवो न्यवसच्चिरम् ॥ ३० ॥ अथ दाशरथिर्व्वीरो
रामो नाम महाबलः । विष्णुर्म्मानुषरूपेण चचार वसुधातलम्
॥ ३१ ॥ स पितुः प्रियमन्विच्छन् सहभार्य्यः सहानुजः । सधनु-
र्द्धन्विनां श्रेष्ठो दण्डकारण्यमाश्रितः ॥ ३२ ॥ तस्य भार्य्या जन-
स्थानाच्छलेनापहृता बलात् । राक्षसेन्द्रेण वलिना रावणेन दुरा-
त्मना ॥ ३३ ॥ सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा । वञ्चयित्वा
नरव्याघ्रं मारीचेण तदानघ ॥ ३४ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि हनूमद्भीमसंवादे
सप्तचत्वारिंशदधिकशततोऽध्यायः ॥ १४७ ॥

---

हनूमानुवाच । हृतदारः सह भ्रात्रा पत्नीं मार्गन् स राघवः ।
दृष्टवाञ्छैलशिखरे सुग्रीवं वानरर्षभम् ॥ १ ॥ तेन तस्याभवत्

सख्यं राघवस्य महात्मनः । स हत्वा वालिनं राज्ये सुग्रीवमभि-
षिक्तवान् ॥ २ ॥ स राज्यं प्राप्य सुग्रीवः सीतायाः परिमार्गणे ।
वानरान् प्रेषयामास शतशोऽथ सहस्रशः ॥ ३ ॥ ततो वानर-
कोटिभिः सहितोऽहं नरर्षभ । सीतां मार्गन्महाबाहो प्रयातो
दक्षिणां दिशम् ॥ ४ ॥ ततः प्रवृत्तिः सीताया गृध्रेण सुमहा-
त्मना । सम्पातिना समाख्याता रावणस्य निवेशने ॥ ५ ॥ ततो-
ऽहङ्कार्य्यसिद्ध्यर्थं रामस्याक्लिष्टकर्म्मणः । शतयोजनविस्तारमर्णवं
सहसाप्लुतः ॥ ६ ॥ अहं स्ववीर्य्यादुत्तीर्य्य सागरं मकरालयम् ।
सुतां जनकराजस्य सीतां सुरसुतोपमाम् ॥ ७ ॥ दृष्टवान् भरत-
श्रेष्ठ रावणस्य निवेशने । समेत्य तामहं देवीं वैदेहीं राघव-
प्रियाम् ॥ ८ ॥ दग्ध्वा लङ्कामशेषेण साट्टप्राकारतोरणाम् ।
प्रत्यागतश्चास्य पुनर्नाम तत्र प्रकाश्य वै ॥ ९ ॥ मद्वाक्यच्चावधा-
र्य्याशु रामो राजीवलोचनः । स बुद्धिपूर्वं सैन्यस्य बद्ध्वा सेतुं
महोदधौ ॥ १० ॥ वृतो वानरकोटिभिः समुत्तीर्णो महार्णवम् ।
ततो रामेण वीरेण हत्वा तानेव राक्षसान् ॥ ११ ॥ रणे स
राक्षसगणं रावणं लोकरावणम् । निशाचरेन्द्रं हत्वा तु सभ्रातृ-
सुतबान्धवम् ॥ १२ ॥ राज्येऽभिषिच्य लङ्कायां राक्षसेन्द्रं विभी-
षणम् । धार्म्मिकं भक्तिमन्तञ्च भक्तानुगतवत्सलम् ॥ १३ ॥ ततः
प्रत्याहृता भार्य्या नष्टा वेदश्रुतिर्यथा । तयैव सहितः साध्व्या
पत्न्या रामो महायशाः ॥ १४ ॥ गत्वा ततोऽतित्वरितः स्वां पुरीं
रघुनन्दनः । अध्यावसत्ततोऽयोध्यामयोध्यां द्विषतां प्रभुः ॥ १५ ॥
ततः प्रतिष्ठितो राज्ये रामो नृपतिसत्तमः । वरं मया याचि-
तोऽसौ रामो राजीवलोचनः ॥ १६ ॥ यावद्रामकथेयन्ते भवे-
ल्लोकेषु शत्रुहन् । तावज्जीवेयमित्येवं तथास्त्विति च सोऽब्रवीत्
॥ १७ ॥ सीताप्रसादाच्च सदा मामिहस्थमरिन्दम । उपतिष्ठन्ति
मे दिव्या भोगा भीम यथेप्सिताः ॥ १८ ॥ दशवर्षसहस्राणि

दशवर्षशतानि च। राज्यं कारितवान् रामस्ततः स्वभवनं गतः ॥ १९ ॥ तदिहाप्सरसस्तात गन्धर्वाश्च सदानघ। तस्य वीरस्य चरितं गायन्तो रमयन्ति माम् ॥ २० ॥ अयञ्च मार्गो मर्त्यानामगम्यः कुरुनन्दन। ततोऽहं रुद्धवान् मार्गं तवेमं देवसेवितम् ॥ २१ ॥ धर्षयेद्वा शपेद्वापि मा कश्चिदिति भारत। दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः। यदर्थमागतश्चासि अत एव सरश्च तत् ॥ २२ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि हनूमद्भीमसंवादे अष्टचत्वारिंशदधिकशततोऽध्यायः ॥ १४८ ॥

---

वैशम्पायन उवाच। एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान्। प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः ॥ १ ॥ उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम्। मया धन्यतरो नास्ति यदार्य्यं दृष्टवानहम् ॥ २ ॥ अनुग्रहो मे सुमहांस्तृप्तिश्च तव दर्शनात्। एकन्तु कृतमिच्छामि त्वयाद्य प्रियमात्मनः ॥ ३ ॥ यत्ते तदासीत् प्लवतः सागरं मकरालयम्। रूपप्रतिमं वीर तदिच्छामि निरीक्षितुम् ॥ ४ ॥ एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः। एवमुक्त स तेजस्वी प्रहस्य हरिरब्रवीत् ॥ ५ ॥

हनूमानुवाच। न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित्। कालावस्था तदा ह्यन्या न सा वर्त्तति साम्प्रतम् ॥ ६ ॥ अन्यः कृतयुगे कालस्त्रेतायां द्वापरेऽपरः। अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ॥ ७ ॥ भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः। काल समनुवर्त्तन्ते यथा भावा युगे युगे ॥ ८ ॥ बलवर्ष्म प्रभावा हि प्रहीयन्त्युद्भवन्ति च। तदलं तव तद्रूपं द्रष्टुं कुरुकुलोद्वह। युगं समनुवर्त्तामि कालो हि दुरतिक्रमः ॥ ९ ॥

भीमसेन उवाच। युगसंख्यां समाचच्व आचारञ्च युगे युगे। धर्मकामार्थभावांश्च कर्म वीर्य्यं भवाभवौ ॥ १० ॥

हनूमानुवाच। कृतं नाम युगं तात यत्र धर्मः सनातनः। कृतमेव न कर्त्तव्यं तस्मिन् काले युगोत्तमे। न तत्र धर्माः सीदन्ति चीयन्ते न च वै प्रजाः ॥ ११ ॥ ततः कृतयुगं नाम कालेन गुणतां गतम्। देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥१२॥ नासन् कृतयुगे तात तदा न क्रयविक्रयः। न सामऋग्यजुर्वर्णाः क्रिया नासीच्च मानवी ॥१३॥ अभिध्याय फलं तत्र धर्मः सन्न्यास एव च। न तस्मिन् युगसंसर्गे व्याधयो नेन्द्रियक्षयः ॥ १४ ॥ नासूया नापि रुदितं न दर्पो नापि वैकृतम्। न विग्रहः कुतस्तन्द्री न द्वेषो न च पैशुनम् ॥ १५ ॥ न भयं नापि सन्तापो न चेर्ष्या न च मत्सरः। तपः परमकं ब्रह्म सा गतिर्योगिनां परा ॥ १६ ॥ आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ॥ १७ ॥ कृते युगे समभवन् स्वकर्मनिरताः प्रजाः। समाश्रयं समाचारं समज्ञानञ्च केवलम् ॥ १८ ॥ तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन्। एकवेदसमायुक्ता एकमन्त्रविधिक्रियाः ॥ १९ ॥ पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः। चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना ॥ २० ॥ अकामफलसंयोगात् प्राप्नुवन्ति पराङ्गतिम्। आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः ॥ २१ ॥ कृते युगे चतुष्पादश्चातुर्वर्ण्यस्य शाश्वतः। एतत् कृतयुगं नाम त्रैगुण्यपरिवर्ज्जितम् ॥ २२ ॥ त्रेतामपि निबोध त्वं तस्मिन् सत्रं प्रवर्त्तते। पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ॥ २३ ॥ सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः। ततो यज्ञाः प्रवर्त्तन्ते धर्म्याश्च विविधाः क्रियाः ॥ २४ ॥ त्रेतायां भावसङ्कल्पाः क्रियादानफलोपगाः। प्रचलन्ति न वै धर्मात्तपोदानपरायणाः ॥ २५ ॥ स्वधर्मस्थाः क्रियावन्तो

नराश्त्रेतायुगेऽभवन्। द्वापरे च युगे धर्म्मो द्विभागो न प्रवर्त्तते ॥ २६ ॥ विष्णुर्वै पीततां याति चतुर्द्धा वेद एव च। ततोऽन्ये च चतुर्वेदा स्त्रिवेदाश्च तथापरे ॥ २७ ॥ द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे। एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया ॥ २८ ॥ तपोदानप्रवृत्ता च राजसी भवति प्रजा। एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः ॥ २९ ॥ सत्त्वस्य चेह विभ्रंशात् सत्ये कश्चिदवस्थितः। सत्त्वात् प्रच्यवमानानां व्याधयो बहवोऽभवन् ॥ ३० ॥ कामाश्चोपद्रवाश्चैव तदा वै दैवकारिताः। यैरर्द्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः ॥ ३१ ॥ कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे। एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ॥ ३२ ॥ पादेनैकेन कौन्तेय धर्म्मः कलियुगे स्थितः। तामसं युगमासाद्य कृष्णो भवति केशवः ॥ ३३ ॥ वेदाचाराः प्रशाम्यन्ति धर्म्मयज्ञक्रियास्तथा। ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा ॥ ३४ ॥ उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा। युगेष्वावर्त्तमानेषु धर्म्मो व्यावर्त्तते पुनः ॥ ३५ ॥ धर्म्मे व्यावर्त्तमाने तु लोको व्यावर्त्तते पुनः। लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्त्तकाः ॥ ३६ ॥ युगक्षयकृता धर्म्माः प्रार्थनानि विकुर्वते। एतत् कलियुगं नाम अचिराद्यत् प्रवर्त्तते ॥ ३७ ॥ युगानुवर्त्तनन्त्वेतत् कुर्वन्ति चिरजीविनः। यच्च ते मत्परिज्ञाने कौतूहलमरिन्दम ॥ ३८ ॥ अनर्थकेषु को भावः पुरुषस्य विजानतः। एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि। युगसङ्ख्यां महावाहो स्वस्ति प्राप्नुहि गम्यताम् ॥ ३९ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि हनूमद्भीमसंवादे एकोनपञ्चाशदधिकशतोऽध्यायः ॥ १४९ ॥

---

भीमसेन उवाच। पूर्वरूपमदृष्ट्वा ते न यास्यामि कथञ्चन। यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना ॥ १ ॥

वैशम्पायन उवाच। एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवङ्गमः। तद्रूपं दर्शयामास यद्वै सागरलङ्घने ॥ २ ॥ भ्रातुः प्रियमभीप्सन् वै चकार सुमहद्वपुः। देहस्तस्य ततोऽतीव वर्द्धत्यायामविस्तरैः ॥ ३ ॥ सद्रुमं कदलीषण्डं छादयन्नमितद्युतिः। गिरेश्चोच्छ्रयमाक्रम्य तस्थौ तत्र च वानरः ॥ ४ ॥ समुच्छ्रितमहाकायो द्वितीय इव पर्वतः। ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भ्रुकुटीकुटिलाननः ॥ ५ ॥ दीर्घलाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः। तद्रूपं महदालक्ष्य भ्रातुः कौरवनन्दनः ॥ ६ ॥ विसिस्मिये तदा भीमो जहृषे च पुनः पुनः। तमर्कमिव तेजोभिः सौवर्णमिव पर्वतम् ॥ ७ ॥ प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत्। आबभाषे च हनूमान् भीमसेनं स्मयन्निव ॥ ८ ॥ एतावदिह शक्तस्त्वं द्रष्टुं रूपं ममानघ। वर्द्धेऽहञ्चाप्यतो भूयो यावन्मे मनसि स्थितम्। भीम शत्रुषु चात्यर्थं वर्द्धते मूर्त्तिरोजसा ॥ ९ ॥

वैशम्पायन उवाच। तदद्भुतं महारौद्रं विन्ध्यपर्वतसन्निभम्। दृष्ट्वा हनूमतो वर्ष्म सम्भ्रान्तः पवनात्मजः ॥ १० ॥ प्रत्युवाच ततो भीमः संप्रहृष्टतनूरुहः। कृताञ्जलिरदीनात्मा हनूमन्तमवस्थितम् ॥ ११ ॥ दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो। संहरस्व महावीर्य्य स्वयमात्मानमात्मना ॥ १२ ॥ न हि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितम्। अप्रमेयमनाधृष्यं मैनाकमिव पर्वतम् ॥ १३ ॥ विस्मयश्चैव मे वीर सुमहान् मनसोऽद्य वै। यद्रामस्त्वयि पार्श्वस्थे स्वयं रावणमभ्यगात् ॥ १४ ॥ त्वमेव शक्तस्तां लङ्कां सयोधां सहवाहनाम्। स्वबाहुबलमाश्रित्य विनाशयितुमञ्जसा ॥ १५ ॥ न हि ते किञ्चिदप्राप्यं मारुतात्मज विद्यते। तव नैकस्य पर्य्याप्तो रावणः सगणो युधि ॥ १६ ॥

वैशम्पायन उवाच । एवमुक्तस्तु भीमेन हनूमान् स प्लवङ्गमः ।
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा । एवमेतन्महा-
बाहो यथा वदसि भारत ॥ १७ ॥ भीमसेन न पर्य्याप्तो ममासौ
राक्षसाधमः । मया तु निहते तस्मिन् रावणे लोककण्टके ॥१८॥
कीर्त्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् । तेन वीरेण तं हत्वा
सगणं राक्षसाधमम् ॥ १९ ॥ आनीता स्वपुरीं सीता कीर्त्ति-
श्चाख्यापिता नृषु । तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः ॥१०॥
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः । एष पन्थाः कुरुश्रेष्ठ
सौगन्धिकवनाय ते ॥ २१ ॥ द्रक्ष्यसे धनदोद्यानं रक्षितं यक्ष-
राक्षसैः । न च ते तरसा कार्य्यः कुसुमावचयः स्वयम् ॥ २२ ॥
दैवतानि हि मान्यानि पुरुषेण विशेषतः । बलिहोमनमस्कारै-
र्मन्त्रैश्च भरतर्षभ ॥ २३ ॥ दैवतानि प्रसादं हि भक्त्या कुर्वन्ति
भारत । मा तात साहसं कार्षीः स्वधर्मं परिपालय ॥ २४ ॥
स्वधर्मस्थः परं धर्मं बुध्यस्व गमयस्व च । न हि धर्ममविज्ञाय
वृद्धाननुपसेव्य च ॥ २५ ॥ धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमै-
रपि । अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः ॥ २६ ॥ स
विज्ञेयो विभागेन यत्र मुह्यन्त्यबुद्धयः । आचारसम्भवो धर्मो
धर्मे वेदाः प्रतिष्ठिताः ॥ २७ ॥ वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः
प्रतिष्ठिताः । वेदाचारविधानोक्तैर्यज्ञैर्धार्य्यन्ति देवताः ॥ २८ ॥
बृहस्पत्युशनोक्तैश्च नयैर्धार्य्यन्ति मानवाः । पण्याकरवणिज्याभिः
कृष्या गोऽजाविपोषणैः ॥ २९ ॥ वार्त्तया धार्य्यते सर्वं धर्मरेतै-
र्द्विजातिभिः । त्रयी वार्त्ता दण्डनीतिस्तिस्रो विद्या विजान-
ताम् ॥ ३० ॥ ताभिः सम्यक् प्रयुक्ताभिर्लोकयात्रा विधीयते ।
सा चेद्धर्मक्रिया न स्यात्त्रयीधर्मस्मृते भुवि ॥ ३१ ॥ दण्डनीतिमृते
चापि निर्मर्य्यादमिदं भवेत् । वार्त्ताधर्मे ह्यवर्त्तिन्यो विनश्येयु-
रिमाः प्रजाः ॥ ३२ ॥ सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मं सूयन्ति वै प्रजाः ।

द्विजातीनामृतं धर्म्मो ह्येकश्चैवैकवर्णिकः॥ ३३॥ यज्ञाध्ययन-
दानानि त्रयः साधारणाः स्मृताः। याजनाध्यापनं विप्रे धर्म-
श्चैव प्रतिग्रहः॥ ३४॥ पालनं क्षत्रियाणां वै वैश्यधर्म्मश्च पोष-
णम्। शुश्रूषा च द्विजातीनां शूद्राणां धर्म्म उच्यते॥ ३५॥
भैक्ष्यहोमव्रतैर्हीनास्तथैव गुरुवासिनः। क्षत्रधर्मोऽत्र कौन्तेय
तव धर्मोऽत्र रक्षणम्॥ ३६॥ स्वधर्मं प्रतिपद्यस्व विनीतो नियते-
न्द्रियः। वृद्धैः सम्मन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः॥ ३७॥
आस्थितः शास्ति दण्डेन व्यसनी परिभूयते। निग्रहानुग्रहैः
सम्यग्यदा राजा प्रवर्त्तते॥ ३८॥ तदा भवन्ति लोकस्य मर्य्यादाः
सुव्यवस्थिताः। तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च॥ ३९॥
नित्यञ्चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा। राज्ञामुपायश्चारश्च
बुद्धिमन्त्रपराक्रमाः॥ ४०॥ निग्रहप्रग्रहौ चैव दाक्ष्यं वै कार्य्य-
साधकम्। साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च॥ ४१॥
साधनीयानि कर्माणि समासव्यासयोगतः। मन्त्रमूला नयाः
सर्वे चाराश्च भरतर्षभ॥ ४२॥ सुमन्त्रितेन वा सिद्धिस्तां द्विजैः
सह मन्त्रयेत्। स्त्रिया मूढ़ेन बालेन लुब्धेन लघुनापि वा॥४३॥
न मन्त्रयीत गुह्यानि येषाञ्चोन्मादलक्षणम्। मन्त्रयेत् सह
विद्वद्भिः शक्तैः कर्माणि कारयेत्॥ ४४॥ स्निग्धैश्च नीतिविन्या-
सान् मूर्खान् सर्वत्र वर्ज्जयेत्। धार्म्मिकान् धर्म्मकार्य्येषु अर्थ-
कार्य्येषु पण्डितान्॥ ४५॥ स्त्रीषु क्लीवान्नियुञ्जीत क्रूरान्
क्रूरेषु कर्म्मसु। स्वेभ्यश्चैव परेभ्यश्च कार्य्याकार्य्यसमुद्भवा॥ ४६॥
बुद्धिः कर्मसु विज्ञेया रिपूणाञ्च बलाबलम्। बुद्ध्या सुप्रतिपन्नेषु
कुर्य्यात् साधुष्वनुग्रहम्॥ ४७॥ निग्रहं चाप्यशिष्टेषु निर्मर्य्यादेषु
कारयेत्। निग्रहे प्रग्रहे सम्यग्यदा राजा प्रवर्त्तते॥ ४८॥
तदा भवति लोकस्य मर्य्यादा सुव्यवस्थिता। एष तेऽभिहितः
पार्थ घोरो धर्म्मो दुरन्वयः॥ ४९॥ तं स्वधर्मं विभागेन विन-

यस्थोऽनुपालय। तपोधर्मदमेज्याभिर्विप्रा यान्ति यथा दिवम् ॥ ५० ॥ दानातिथ्यक्रियाधर्मैर्यान्ति वैश्याश्च सद्गतिम्। क्षत्रं याति तथा स्वर्गं भुवि निग्रहपालनैः ॥ ५१ ॥ सम्यक्प्रणीत-दण्डा हि कामद्वेषविवर्ज्जिताः। अलुब्धा विगतक्रोधाः सतां यान्ति सलोकताम् ॥ ५२ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि हनूमद्भीमसंवादे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

वैशम्पायन उवाच। ततः संहृत्य विपुलं तद्वपुः कामतः कृतम्। भीमसेनं पुनर्दोर्भ्यां पर्य्यष्वजत वानरः ॥ १ ॥ परि-ष्वक्तस्य तस्याशु भ्रात्रा भीमस्य भारत। श्रमो नाशमुपागच्छत् सर्व्वञ्चासीत् प्रदक्षिणम् ॥ २ ॥ बलञ्चातिबलो मेने न मेऽस्ति सदृशो महान्। ततः पुनरथोवाच पर्य्यश्रुनयनो हरिः ॥ ३ ॥ भीममाभाष्य सौहार्द्दाद्बाष्पगद्गदया गिरा। गच्छ वीर स्वमा-वासं स्मर्त्तव्योऽस्मि कथान्तरे ॥ ४ ॥ इहस्थश्च कुरुश्रेष्ठ न निवे-द्योऽस्मि कर्हिचित्। धनदस्यालयाच्चापि विसृष्टानां महाबल ॥ ५ ॥ देशकाल इहायातुं देवगन्धर्व्वयोषिताम्। ममापि सफलं चक्षुः स्मारितश्चास्मि राघवम् ॥ ६ ॥ रामाभिधानं विष्णुं हि जगद्हृदयनन्दनम्। सीतावक्त्रारविन्दार्कं दशास्यध्वान्तभास्करम् ॥ ७ ॥ मानुषं गात्रसंस्पर्शं गत्वा भीम त्वया सह। तदस्मद्दर्शनं वीर कौन्तेयामोघमस्तु ते ॥ ८ ॥ भ्रातृत्वं त्वं पुरस्कृत्य वरं वरय भारत। यदि तावन्मया क्षुद्रा गत्वा वारणसाह्वयम् ॥ ९ ॥ धार्त्तराष्ट्रा निहन्तव्या यावदेतत् करोम्यहम्। शिलया नगर-ञ्चापि मर्द्दितव्यं मया यदि ॥ १० ॥ बद्ध्वा दुर्य्योधनञ्चाद्य आन-यामि तवान्तिकम्। यावदेतत् करोम्यद्य कामं तव महाबल ॥ ११ ॥

वैशम्पायन उवाच। भीमसेनस्तु तद्वाक्यं श्रुत्वा तस्य महात्मनः। प्रत्युवाच हनूमन्तं प्रहृष्टेनान्तरात्मना ॥ १२ ॥ कृतमेव त्वया सर्वं मम वानरपुङ्गव। स्वस्ति तेऽस्तु महाबाहो कामये त्वां प्रसीद मे ॥ १३ ॥ सनाथाः पाण्डवाः सर्वे त्वया नाथेन वीर्यवन्। तवैव तेजसा सर्वान् विजेष्यामो वयं परान् ॥ १४ ॥ एवमुक्तस्तु हनूमान् भीमसेनमभाषत। भ्रातृत्वात् सौहृदाच्चैव करिष्यामि प्रियं तव ॥ १५ ॥ चमूं विगाह्य शत्रूणां शरशक्तिसमाकुलाम्। यदा सिंहरवं वीर करिष्यसि महाबल ॥ १६ ॥ तदाहं बृंहयिष्यामि स्वरवेण रवं तव। विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान् ॥ १७ ॥ शत्रूणां ये प्राणहराः सुखं येन हनिष्यथ। एवमाभाष्य हनुमांस्तदा तं पाण्डुनन्दनम्। मार्गमाख्याय भीमाय तत्रैवान्तरधीयत ॥ १८ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सौगन्धिकाहरणे
एकपञ्चाशदधिकशततोऽध्यायः ॥ १५१ ॥

---

वैशम्पायन उवाच। गते तस्मिन् हरिवरे भीमोऽपि बलिनाम्वरः। तेन मार्गेण विपुलं व्यचरद्गन्धमादनम् ॥ १ ॥ अनुस्मरन् वपुस्तस्य श्रियञ्चाप्रतिमां भुवि। माहात्म्यमनुभावञ्च स्मरन् दाशरथेर्ययौ ॥ २ ॥ स तानि रमणीयानि वनान्युपवनानि च। विलोकयामास तदा सौगन्धिकवनेप्सया ॥ ३ ॥ फुल्लद्रुमविचित्राणि सरांसि सरितस्तथा। नानाकुसुमचित्राणि पुष्पितानि वनानि च ॥ ४ ॥ मत्तवारणयूथानि पङ्कक्लिन्नानि भारत। वर्षतामिव मेघानां वृन्दानि ददृशे तदा ॥ ५ ॥ हरिणैश्चपलापाङ्गैर्हरिणीसहितैर्वनम्। सशष्पकवलैः श्रीमान् पथि दृष्ट्वा द्रुतं ययौ ॥ ६ ॥ महिषैश्च वराहैश्च शार्दूलैश्च निषेवितम्। व्यपेत-

श्रीगिरिं शौर्य्याद्भीमसेनो व्यगाहत ॥ ७ ॥ कुसुमानन्तगन्धैश्च ताम्रपल्लवकोमलैः। याच्यमान इवारण्यैर्द्रुमैर्मारुतकम्पितैः ॥८॥ कृतपद्माञ्जलिपुटा मत्तषट्पदसेविता। प्रियतीर्थवना मार्गे पद्मिनीः समतिक्रमन् ॥ ९ ॥ सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु। द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ ॥ १० ॥ परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने। काञ्चनैर्विमलैः पद्मैर्ददर्श विपुलां नदीम् ॥ ११ ॥ हंसकारण्डवयुतां चक्रवाकोपशोभिताम्। रचितामिव तस्याद्रेर्मालां विमलपङ्कजाम् ॥ १२ ॥ तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत्। अपश्यत् प्रीतिजननं बालार्कसदृशद्युति ॥ १३ ॥ तद्दृष्ट्वा लब्धकामः स मनसा पाण्डुनन्दनः। वनवासपरिक्लिष्टां जगाम मनसा प्रियाम् ॥ १४ ॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सौगन्धिकाहरणे द्विपञ्चाशदधिकशततोऽध्यायः ॥ १५२ ॥

---

वैशम्पायन उवाच। स गत्वा नलिनीं रम्यां राक्षसैरभिरक्षिताम्। कैलासशिखराभ्यासे ददर्श शुभकाननाम् ॥ १ ॥ कुवेरभवनाभ्यासे जातां पर्वतनिर्झरे। सुरम्यां विपुलच्छायां नानाद्रुमलताकुलाम् ॥ २ ॥ हरिताम्बुजसंछन्नां दिव्यां कनकपुष्कराम्। नानापक्षिजनाकीर्णां सूपतीर्थामकर्द्दमाम् ॥ ३ ॥ अतीवरम्यां सुजलां जातां पर्वतसानुषु। विचित्रभूतां लोकस्य शुभामद्भुतदर्शनाम् ॥ ४ ॥ तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभम्। ददर्श विमलं तोयं पिबंश्च बहु पाण्डवः ॥ ५ ॥ तान्तु पुष्करिणीं रम्यां दिव्यसौगन्धिकावृताम्। जातरूपमयैः पद्मैश्छन्नां परमगन्धिभिः ॥ ६ ॥ वैदूर्य्यवरनालैश्च बहुचित्रैर्मनोरमैः। हंसकारण्डवोद्धूतैः सृजद्भिरमलं रजः ॥ ७ ॥ आक्रीड़ं

राजराजस्य कुवेरस्य महात्मनः। गन्धर्वाप्सरोभिश्च देवैश्च परमार्चिताम्॥ ८॥ सेवितामृषिभिर्दिव्यैर्यक्षैः किम्पुरुषैस्तथा। राक्षसैः किन्नरैश्चापि गुप्तां वैश्रवणेन च॥ ९॥ ताञ्च दृष्ट्वैव कौन्तेयो भीमसेनो महाबलः। बभूव परमप्रीतो दिव्यं संप्रेक्ष्य तत्सरः॥ १०॥ तच्च क्रोधवशा नाम राक्षसा राजशासनात्। रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः॥ ११॥ ते तु दृष्ट्वैव कौन्तेयमजिनैः प्रतिवासितम्। रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमम्॥ १२॥ सायुधं बद्धनिस्त्रिंशमशङ्कितमरिन्दमम्। पुष्करेप्सुमुपायान्तमन्योऽन्यमभिचुक्रुशुः॥ १३॥ अयं पुरुषशार्दूलः सायुधोऽजिनसंवृतः। यच्चिकीर्षुरिह प्राप्तस्तत् सम्प्रष्टुमिहार्हथ॥ १४॥ ततः सर्वे महाबाहुं समासाद्य वृकोदरम्। तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि॥ १५॥ मुनिवेशधरश्चैव सायुधश्चैव लक्ष्यसे। यदर्थमभिसंप्राप्तः तदाचक्ष्व महामते॥ १६॥

इति आरण्यपर्वणि तीर्थयात्रापर्वणि सौगन्धिकाहरणे त्रिपञ्चाशदधिकशतोऽध्यायः॥ १५३॥

---

भीमसेन उवाच। पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः। विशालां बदरीं प्राप्तो भ्रातृभिः सह राक्षसाः॥ १॥ अपश्यत्तत्र पाञ्चाली सौगन्धिकमनुत्तमम्। अनिलोढ़मितो नूनं सा बहूनि परीप्सति॥ २॥ तस्या मामनवद्याङ्ग्या धर्मपत्न्याः प्रिये स्थितम्। पुष्पाहारमिह प्राप्तं निबोधत निशाचराः॥ ३॥

राक्षसा ऊचुः। आक्रीडोऽयं कुवेरस्य दयितः पुरुषर्षभ। नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मिणा॥ ४॥ देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर। आमन्त्र्य यक्षप्रवरं पिबन्ति रमयन्ति च॥ ५॥ गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव। अन्यायेनेह

यः कश्चिदवमन्य धनेश्वरम् ॥ ६ ॥ विहर्त्तुमिच्छेद्दुर्वृत्तः स विनश्येन्न संशयः। तमनादृत्य पद्मानि जिहीर्षसि बलादितः। धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ॥ ७ ॥ आमन्त्र्य यक्षराजं वै ततः पिब हरस्व च। नातोऽन्यथा त्वया शक्यं किञ्चित् पुष्करमीक्षितुम् ॥ ८ ॥

भीमसेन उवाच। राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके। दृष्ट्वापि च महाराजं नाहं याचितुमुत्सहे ॥ ९ ॥ न हि याचन्ति राजान एष धर्मः सनातनः। न चाहं हातुमिच्छामि क्षात्रं धर्मं कथञ्चन ॥ १० ॥ इयञ्च नलिनी रम्या जाता पर्वतनिर्झरे। नेयं भवनमासाद्य कुवेरस्य महात्मनः ॥ ११ ॥ तुल्या हि सर्व्वभूतानामियं वैश्रवणस्य च। एवं गतेषु द्रव्येषु कः कं याचितुमर्हति ॥ १२ ॥

वैशम्पायन उवाच। इत्युक्त्वा राक्षसान् सर्व्वान् भीमसेनो ह्यमर्षणः। व्यगाहत महाबाहुर्नलिनीं तां महाबलः ॥ १३ ॥ ततः स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान्। मा मैवमिति सक्रोधैर्भर्त्सयद्भिः समन्ततः ॥ १४ ॥ कदर्थीकृत्य तु स तान् राक्षसान् भीमविक्रमः। व्यगाहत महातेजास्ते तं सर्व्वे न्यवारयन् ॥ १५ ॥ गृह्णीत बध्नीत प्रकर्त्ततेमं पचाम खादाम च भीमसेनम्। क्रुद्धा ब्रुवन्तोऽभिययुर्द्रुतं ते शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ १६ ॥ ततः स गुर्व्वीं यमदण्डकल्पां महागदां काञ्चनपट्टनद्धाम्। प्रगृह्य तानभ्यपतत्तरस्वी ततोऽब्रवीत्तिष्ठत तिष्ठतेति ॥ १७ ॥ ते तं तदा तोमरपट्टिशाद्यैर्व्याविद्धशस्त्रैः सहसा निपेतुः। जिघांसवः क्रोधवशाः सुभीमा भीमं समन्तात् परिवव्रुरुग्राः ॥ १८ ॥ वातेन कुन्त्यां बलवान् स जातः शूरस्तरस्वी द्विषतां निहन्ता। सत्ये च धर्मे च रतः सदैव पराक्रमे शत्रुभिरप्रधृष्यः ॥ १९ ॥ तेषां स मार्गान् विविधान्महात्मा विहत्य शस्त्राणि च शात्रवाणाम्।

यथा प्रवीरान्निजघान भीमः सरं शतं पुष्करिणीसमीपे ॥ २० ॥
ते तस्य वीर्य्यञ्च बलञ्च दृष्ट्वा विद्याबलं बाहुबलं तथैव । अशक्नु-
वन्तः सहितुं समन्तात् हतं प्रवीराः सहसा निवृत्ताः ॥ २१ ॥
विदीर्य्यमाणास्तत एव तूर्णमाकाशमास्थाय विमूढसंज्ञाः । कैलास-
शृङ्गाण्यभिदुद्रुवुस्ते भीमार्द्दिताः क्रोधवशाः प्रभग्नाः ॥ २२ ॥ स
शक्रवद्दानवदैत्यसङ्घान् विक्रम्य जित्वा च रणेऽरिसङ्घान् । विगाह्य
तां पुष्करिणीं जितारिः कामाय जग्राह ततोऽम्बुजानि ॥ २३ ॥
ततः स पीत्वामृतकल्पमम्भो भूयो बभूवोत्तमवीर्य्यतेजाः । उत्पाट्य
जग्राह च सोऽम्बुजानि सौगन्धिकान्युत्तमगन्धवन्ति ॥२४॥ ततस्तु
ते क्रोधवशाः समेत्य धनेश्वरं भीमबलप्रणुन्नाः । भीमस्य वीर्य्यञ्च
बलञ्च संख्ये यथावदाचख्युरतीव भीताः ॥ २५ ॥ तेषां वचस्तत्तु
निशम्य देवः प्रहस्य रक्षांसि ततोऽभ्युवाच । गृह्णातु भीमो जल-
जानि कामात् कृष्णानिमित्तं विदितं ममैतत् ॥ २६ ॥ ततोऽभ्य-
नुज्ञाप्य धनेश्वरन्ते जग्मुः कुरूणां प्रवरं विरोषाः । भीमञ्च
तस्यां ददृशुर्नलिन्यां यथोपजोषं विचरन्तमेकम् ॥ २७ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सौगन्धिकाहरणे
चतुःपञ्चाशदधिकशतोऽध्यायः ॥ १५४ ॥

---

वैशम्पायन उवाच । ततस्तानि महार्हाणि दिव्यानि भरत-
र्षभ । बहूनि बहुरूपाणि विरजांसि समाददे ॥ १ ॥ ततो
वायुर्महान् शीघ्रो नीचैः शर्करकर्षणः । प्रादुरासीत् खरस्पर्शः
सङ्ग्राममभिचोदयन् ॥ २ ॥ पपात महती चोल्का सनिर्घाता
महाभया । निष्प्रभश्चाभवत् सूर्य्यश्छन्नरश्मिस्तमोवृतः ॥ ३ ॥
निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते । चचाल पृथिवी चापि
पांशुवर्षं पपात च ॥ ४ ॥ सलोहिता दिशश्चासन् खरवाचो

मृगद्विजाः । तमोवृतमभूत् सर्वं न प्राज्ञायत किञ्चन ॥ ५ ॥
अन्ये च बहवो भीमा उत्पातास्तत्र जज्ञिरे । तदद्भुतमभि-
प्रेक्ष्य धर्म्मपुत्रो युधिष्ठिरः ॥ ६ ॥ उवाच वदतां श्रेष्ठः कोऽस्मा-
नभिभविष्यति । सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्मदाः ॥ ७ ॥
यथारूपाणि पश्यामि स्वभ्यग्रो नः पराक्रमः । एवमुक्त्वा ततो
राजा वीक्षाञ्चक्रे समन्ततः ॥ ८ ॥ अपश्यमानो भीमन्तु धर्म-
पुत्रो युधिष्ठिरः । ततः कृष्णां यमौ चापि समीपस्थावरिन्दमः
॥ ९ ॥ पप्रच्छ भ्रातरं भीमं भीमकर्म्माणमाहवे । कच्चिन्नु
भीमः पाञ्चालि किञ्चित् कृत्यञ्चिकीर्षति ॥ १० ॥ कृतवानपि वा
वीरः साहसं साहसप्रियः । इमे ह्यकस्मादुत्पाता महासमर-
दर्शनाः ॥ ११ ॥ दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः । तं
तथा वादिनं कृष्णा प्रत्युवाच मनस्विनी । प्रिया प्रियञ्चिकीर्षन्ती
महिषी चारुहासिनी ॥ १२ ॥

द्रौपद्युवाच । यत्तत् सौगन्धिकं राजन्नाहृतं मातरिश्वना ।
तन्मया भीमसेनस्य प्रीतयाद्योपपादितम् । अपि चोक्तो मया
वीरो यदि पश्येवहून्यपि ॥ १३ ॥ तानि सर्वाण्युपादाय शीघ्र-
मागम्यतामिति । स तु नूनं महाबाहुः प्रियार्थं मम पाण्डव
॥ १४ ॥ प्रागुदीचीं दिशं राजंस्तान्याहर्त्तुमितो गतः । उक्त-
स्त्वेवं तया राजा यमाविदमथाब्रवीत् ॥ १५ ॥ गच्छाम सहिता-
स्तूर्णं येन यातो वृकोदरः । वहन्तु राक्षसा विप्रान् यथा-
श्रान्तान् यथाकृशान् ॥ १६ ॥ त्वमप्यमरसङ्काशः वह कृष्णां
घटोत्कच । व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः ॥ १७ ॥
चिरञ्च तस्य कालोऽयं स च वायुसमो जवे । तरस्वी वैनतेयस्य
सदृशो भुवि लङ्घने ॥ १८ ॥ उत्पतेदपि चाकाशं निपतेच्च यथे-
च्छकम् । तमन्विषाम भवतां प्रभावाद्रजनीचराः ॥ १९ ॥ पुरा
स नापराध्नोति सिद्धानां ब्रह्मवादिनाम् । तथेत्युक्त्वा तु ते सर्वे

हैडिम्बप्रमुखास्तदा ॥ २० ॥ उह्येमग्नाः कुबेरस्य नलिन्या भरतर्षभ । आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः ॥ २१ ॥ लोमशेनैव सहिताः प्रययुः प्रीतमानसाः । ते सर्वे त्वरिता गत्वा ददृशुः शुभकाननाम् ॥ २२ ॥ गन्धसौगन्धिकवतीं नलिनीं सुमनोरमाम् । तच्च भीमं महात्मानं तस्यास्तीरे तरस्विनम् ॥ २३ ॥ ददृशुर्निहतांश्चैव यक्षांश्च विपुलेक्षणान् । भिन्नकायाक्षिबाहूरून् सञ्चिंतशिरोधरान् ॥ २४ ॥ तञ्च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् । सक्रोधं स्तब्धनयनं सन्दष्टदशनच्छदम् ॥ २५ ॥ उद्यम्य च गदां दोर्भ्यां नदीतीरे व्यवस्थितम् । प्रजासङ्क्षेपसमये दण्डहस्तमिवान्तकम् ॥ २६ ॥ तं दृष्ट्वा धर्म्मराजस्तु परिष्वज्य पुनः पुनः । उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् ॥ २७ ॥ साहसं वत भद्रं ते देवानामथ वाप्रियम् । पुनरेवं न कर्त्तव्यं मम चेदिच्छसि प्रियम् ॥ २८ ॥ अनुशिष्य तु कौन्तेयं पद्मानि परिगृह्य च । तस्यामेव नलिन्यान्तु विजह्रुरमरोपमाः ॥ २९ ॥ एतस्मिन्नेव काले तु प्रगृहीतशिलायुधाः । प्रादुरासन्महाकायास्तस्योद्यानस्य रक्षिणः ॥ ३० ॥ ते दृष्ट्वा धर्म्मराजानं महर्षिञ्चापि लोमशम् । नकुलं सहदेवञ्च तथान्यान् ब्राह्मणर्षभान् ॥ ३१ ॥ विनयेन गताः सर्वे प्रणिपेतुश्च भारत । सान्त्विता धर्म्मराजेन प्रसेदुः क्षणदाचराः ॥ ३२ ॥ विदिताश्च कुवेरस्य तत्र ते कुरुपुङ्गवाः । ऊषुर्नातिचिरं कालं रममाणाः कुरूद्वहाः । प्रतीक्षमाणा वीभत्सुं गन्धमादनसानुषु ॥ ३३ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सौगन्धिकाहरणे पञ्चपञ्चाशदधिकशततोऽध्यायः ॥ १५५ ॥

---

वैशम्पायन उवाच। तस्मिन् निवसमानोऽथ धर्मराजो युधिष्ठिरः। कृष्णाया सहितान् भ्रातृनित्युवाच सहद्विजान् ॥ १ ॥ दृष्टानि तीर्थान्यस्माभिः पुण्यानि च शिवानि च। मनसो ह्लादनीयानि वनानि च पृथक् पृथक् ॥ २ ॥ देवैः पूर्वं विकीर्णानि मुनिभिश्च महात्मभिः। यथाक्रमविशेषेण द्विजैः सम्पूजितानि च ॥ ३ ॥ ऋषीणां पूर्वचरितं तथा कर्म विचेष्टितम्। राजर्षीणाञ्च चरितं कथाश्च विविधाः शुभाः ॥ ४ ॥ शृण्वानास्तत्र तत्र स्म आश्रमेषु शिवेषु च। अभिषेकं द्विजैः सार्द्धं कृतवन्तो विशेषतः ॥ ५ ॥ आर्च्चिताः सततं देवाः पुष्पैरद्भिः सदा च वः। यथालब्धैर्मूलफलैः पितरश्चापि तर्पिताः ॥ ६ ॥ पर्वतेषु च रम्येषु सर्व्वेषु च सरःसु च। उदधौ च महापुण्ये सूपस्पृष्टं महात्मभिः ॥ ७ ॥ इला सरस्वती सिन्धुर्यमुना नर्मदा तथा। नानातीर्थेषु रम्येषु सूपस्पृष्टं सह द्विजैः ॥ ८ ॥ गङ्गाद्वारमतिक्रम्य बहवः पर्वताः शुभाः। हिमवान् पर्वतश्चैव नानाद्विजगणायुतः ॥ ९ ॥ विशाला वदरी दृष्टा नरनारायणाश्रमः। दिव्या पुष्करिणी दृष्टा सिद्धदेवर्षिपूजिता ॥ १० ॥ यथाक्रमविशेषेण सर्वाण्यायतनानि च। दर्शितानि द्विजश्रेष्ठा लोमशेन महात्मना ॥ ११ ॥ इमं वैश्रवणावासं पुण्यं सिद्धनिषेवितम्। कथं भीम गमिष्यामो गतिरन्तरधीयताम् ॥ १२ ॥

वैशम्पायन उवाच। एवं ब्रुवति राजेन्द्रे वागुवाचाशरीरिणी। न शक्यो दुर्गमो गन्तुमितो वैश्रवणाश्रमात् ॥ १३ ॥ अनेनैव पथा राजन् प्रतिगच्छ यथागतम्। नरनारायणस्थानं वदरीत्यभिविश्रुतम् ॥ १४ ॥ तस्माद्यास्यसि कौन्तेय सिद्धचारणसेवितम्। बहुपुष्पफलं रम्यमाश्रमं वृषपर्व्वणः ॥ १५ ॥ अतिक्रम्य च तं पार्थ चार्ष्टिषेणाश्रमे वसेः। ततो द्रक्ष्यसि कौन्तेय निवेशं धनदस्य च ॥ १६ ॥ एतस्मिन्नन्तरे वायुर्दिव्यगन्धवहः

शुचिः। सुखप्रह्लादनः शीतः पुष्पवर्षं ववर्ष च ॥ १७ ॥ श्रुत्वा तु दिव्यामाकाशाद्वाचं सर्व्वे विसिस्मिरुः। ऋषीणां ब्राह्मणानाञ्च पार्थिवानां विशेषतः ॥ १८ ॥ श्रुत्वा तन्महदाश्चर्य्यं द्विजो धौम्यो ऽब्रवीत्तदा। न शक्यमुत्तरं वक्तुमेवं भवतु भारत ॥ १९ ॥ ततो युधिष्ठिरो राजा प्रतिजग्राह तद्वचः। प्रत्यागम्य पुनस्तन्तु नरनारायणाश्रमम् ॥ २० ॥ भीमसेनादिभिः सर्व्वैर्भ्रातृभिः परिवारितः। पाञ्चाल्या ब्राह्मणैश्चैव न्यवसत्तु सुखं तदा ॥ २१ ॥

इति आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि नरनारायणाश्रमगमने षट्पञ्चाशदधिकशततोऽध्यायः। समाप्तञ्च तीर्थयात्रापर्व्व ॥ १५६ ॥

---

## अथ जटासुरवधपर्व्व ॥ ८ ॥

वैशम्पायन उवाच। ततस्तान् परिविश्वस्तान् वसतस्तत्र पाण्डवान्। पर्व्वतेन्द्रे द्विजैः सार्द्धं पार्थागमनकाङ्क्षया ॥ १ ॥ गतेषु तेषु रक्षःसु भीमसेनात्मजेऽपि च। रहितान् भीमसेनेन कदाचित्तान् यदृच्छया ॥ २ ॥ जहार धर्म्मराजानं यमौ कृष्णाञ्च राक्षसः। ब्राह्मणो मन्त्रकुशलः सर्व्वशास्त्रविदुत्तमः ॥ ३ ॥ इति ब्रुवन् पाण्डवेयान् पर्य्युपास्ते स्म नित्यदा। परीप्समानः पार्थानां कलापानि धनूंषि च ॥ ४ ॥ अन्तरं सम्परिप्रेप्सुर्द्रौपद्या हरणं प्रति। दुष्टात्मा पापबुद्धिः स नाम्ना ख्यातो जटासुरः ॥ ५ ॥ पोषणं तस्य राजेन्द्र चक्रे पाण्डवनन्दनः। बुबुधे न च तं पापं भस्मच्छन्नमिवानलम् ॥ ६ ॥ स भीमसेने निष्क्रान्ते मृगयार्थमरिन्दम। घटोत्कचं सानुचरं दृष्ट्वा विप्रद्रुतं दिशः ॥ ७ ॥ लोमशप्रभृतींस्तांस्तु महर्षींश्च समाहितान्। स्नातुं विनिर्गतान् दृष्ट्वा पुष्पार्थञ्च तपोधनान् ॥ ८ ॥ रूपमन्यत् समास्थाय विकृतं भैरवं महत्। गृहीत्वा सर्व्वशस्त्राणि द्रौपदीं परिगृह्य च ॥ ९ ॥

प्रातिष्ठत स दुष्टात्मा त्रीन् गृहीत्वा च पाण्डवान् । सहदेवस्तु यत्नेन ततोऽपक्रम्य पाण्डवः ॥ १० ॥ विक्रम्य कौशिकं खड्गं मोचयित्वा ग्रहं रिपोः । आक्रन्दद्भीमसेनं वै येन यातो महाबलः ॥ ११ ॥ तमब्रवीद्धर्मराजो ह्रियमाणो युधिष्ठिरः । धर्मस्ते हीयते मूढ़ न तत्त्वं समवेक्षसे ॥ १२ ॥ येऽन्ये क्वचिन्मनुष्येषु तिर्य्यग्योनिगताश्च ये । धर्मन्ते समवेक्षन्ते रक्षांसि च विशेषतः ॥ १३ ॥ धर्मस्य राक्षसा मूलं धर्मन्ते विदुरुत्तमम् । एतत् परीक्ष्य सर्वं त्वं समीपे स्थातुमर्हसि ॥ १४ ॥ देवाश्च ऋषयः सिद्धा पितरश्चापि राक्षस । गन्धर्वोरगरक्षांसि वयांसि पशवस्तथा ॥ १५ ॥ तिर्य्यग्योनिगताश्चैव अपि कीटपिपीलिकाः । मनुष्यानुपजीवन्ति ततस्त्वमपि जीवसि ॥ १६ ॥ समृद्ध्या ह्यस्य लोकस्य लोको युष्माकमृध्यति । इमन्तु लोकं शोचन्तमनुशोचन्ति देवताः ॥ १७ ॥ पूज्यमानाथ वर्द्धन्ते हव्यकव्यैर्यथाविधि । वयं राष्ट्रस्य गोप्तारो रक्षितारश्च राक्षस ॥ १८ ॥ राष्ट्रस्यारक्ष्यमाणस्य कुतो भूतिः कुतः सुखम् । न च राजावमन्तव्यो रक्षसा जालनागसि ॥१९॥ अणुरप्यपचारश्च नास्त्यस्माकं नराशन । विघसाशान् यथाशक्त्या कुर्म्महे देवतादिषु ॥ २० ॥ गुरूंश्च ब्राह्मणांश्चैव प्रणामप्रवणाः सदा । द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् ॥ २१ ॥ येषांत्वन्नानि भुञ्जीत यत्र च स्यात् प्रतिश्रयः । स त्वं प्रतिश्रयेऽस्माकं पूज्यमानः सुखोषितः ॥ २२ ॥ भुक्त्वा चान्नानि दुष्प्रज्ञ कथमस्मान् जिहीर्षसि । एवमेव वृथाचारो वृथावृद्धो वृथामतिः ॥ २३ ॥ वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि । अथ चेद्दुष्टबुद्धिस्त्वं सर्व्वधर्म्मविवर्ज्जितः ॥ २४ ॥ प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर । अथ चेत्त्वमविज्ञानादिदं कर्म करिष्यसि ॥ २५ ॥ अधर्मञ्चाप्यकीर्त्तिञ्च लोके प्राप्स्यसि केवलाम् । एतामद्य परामृश्य स्त्रियं राक्षस मानुषीम् ॥ २६ ॥ विषमेतत् समालोड्य कुम्भेन

प्रार्थितं त्वया। ततो युधिष्ठिरस्तस्य गुरुकः समपद्यत ॥ २७ ॥
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत्। अथाब्रवीत् द्रौप-
दीञ्च नकुलञ्च युधिष्ठिरः ॥ २८ ॥ माभैष्ट राक्षसान्मूढ़ाद्गतिरस्य
मया हृता। नातिदूरे महाबाहुर्भविता पवनात्मजः ॥ २९ ॥
अस्मिन् मुहूर्त्ते संप्राप्ते न भविष्यति राक्षसः। सहदेवस्तु तं
दृष्ट्वा राक्षसं मूढ़चेतनम् ॥ ३० ॥ उवाच वचनं राजन् कुन्ती-
पुत्रं युधिष्ठिरम्। राजन् किं नाम तत् कृत्यं क्षत्रियस्याख्यतो-
ऽधिकम् ॥ ३१ ॥ यद्युद्धाभिमुखः प्राणांस्त्यजेच्छत्रून् जयेत वा।
एष चास्मान् वयञ्चैनं युध्यमानाः परन्तप ॥ ३२ ॥ सूदयेम
महाबाहो देशकालो ह्ययं नृप। क्षत्रधर्मस्य संप्राप्तः कालः सत्य-
पराक्रम ॥ ३३ ॥ जयन्तो हन्यमाना वा प्राप्तुमर्हाम सद्गतिम्।
राक्षसे जीवमानेऽद्य रविरस्तमियाद्यदि ॥ ३४ ॥ नाहं ब्रूयां
पुनर्ज्जातु क्षत्रियोऽस्मीति भारत। भो भो राक्षस तिष्ठस्व सह-
देवोऽस्मि पाण्डवः ॥ ३५ ॥ हत्वा वा मां नयस्वैनां हतो वाद्येह
स्वप्स्यसि। तथा ब्रुवति माद्रेये भीमसेनो यदृच्छया ॥ ३६ ॥
प्रत्यदृश्यद्गदाहस्तः सवज्र इव वासवं। सोऽपश्यद्भ्रातरौ तत्र
द्रौपदीञ्च यशस्विनीम् ॥ ३७ ॥ क्षितिस्थं सहदेवञ्च क्षिपन्तं
राक्षसं तथा। मार्गाच्च रक्षः संमूढ़ं कालोपहतचेतसम् ॥ ३८ ॥
भ्रमन्तं तत्र तत्रैव दैवेन विनिवारितम्। भ्रातॄंस्तान् ह्रियतो
दृष्ट्वा द्रौपदीञ्च महाबलः ॥ ३९ ॥ क्रोधमाहारयद्भीमो राक्षस-
ञ्चेदमब्रवीत्। विज्ञातोऽसि मया पूर्वं पाप शस्त्रपरीक्षणे
॥ ४० ॥ आस्था तु त्वयि मे नास्ति यतोऽसि न हतस्तदा।
ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियम् ॥ ४१ ॥ प्रियेषु
रममाणं त्वां न चैवाप्रियकारिणम्। अतिथिं ब्रह्मरूपञ्च
कथं हन्यामनागसम् ॥ ४२ ॥ राक्षसं जानमानोऽपि यो हन्या-
न्नरकं ब्रजेत्। अपक्वस्य च कालेन बधस्तव न विद्यते ॥ ४३ ॥

नूनमद्यामि संपन्नो यथा ते मतिरीदृशी। हन्तः कृष्णापहरणे कालेनाद्भुतकर्मणा ॥ ४३ ॥ बड़िशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः। मत्स्योऽम्भसीव स्यूतास्यः कथमद्य भविष्यति ॥ ४४ ॥ यत्रासि प्रस्थितो दिष्टं मनःपूर्व्वंगतञ्च ते। गतं गन्तासि गन्तासि मर्गं बकहिड़िम्बयोः ॥ ४५ ॥ एवमुक्तस्तु भीमेन राक्षसः कालचोदितः। भीत उत्सृज्य तान् सर्व्वान् युद्धाय समुपस्थितः ॥ ४६ ॥ अब्रवीच्च पुनर्भीमं रोषात् प्रस्फुरिताधरः। न मे मूढा दिशः पाप त्वदर्थं मे विलम्बितम् ॥ ४७ ॥ श्रुता मे राक्षसा ये ये त्वया विनिहता रणे। तेषामद्य करिष्यामि तवास्रेणोदकक्रियाम् ॥ ४८ ॥ एवमुक्तस्ततो भीमः सृक्कणी परिसंलिहन्। स्मयमान इव क्रोधात् साक्षात् कालान्तकोपमः ॥ ४९ ॥ बाहुसंरम्भमेवैच्छन्नभिदुद्राव राक्षसम्। राक्षसोऽपि तदा भीमं युद्धार्थिनमवस्थितम् ॥ ५० ॥ मुहुर्मुहुर्व्यादृदानः सृक्कणी परिसंलिहन्। अभिदुद्राव संरब्धो बलिर्व्वज्रधरं यथा ॥ ५१ ॥ वर्त्तमाने तदा ताभ्यां बाहुयुद्धे सुदारुणे। माद्रीपुत्त्रावभिक्रुद्धावुभावप्यभ्यधावताम् ॥ ५२ ॥ न्यवारयत्तौ प्रहसन् कुन्तीपुत्रो वृकोदरः। शक्तोऽहं राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ॥ ५३ ॥ आत्मना भ्रातृभिश्चैव धर्म्मेण सुकृतेन च। इष्टेन च शपे राजन् सूदयिष्यामि राक्षसम् ॥ ५४ ॥ इत्येवमुक्त्वा तौ वीरौ स्पर्द्धमानौ परस्परम्। बाहुभ्यां समसज्जेतामुभौ रक्षोवृकोदरौ ॥ ५५ ॥ तयोरासीत् संप्रहारः क्रुद्धयोर्भीमरक्षसोः। अमृष्यमाणयो संख्ये देवदानवयोरिव ॥ ५६ ॥ आरुज्यारुज्य तौ वृक्षानन्योन्यमभिजघ्नतुः। जीमुताविव गर्जन्तौ निनदन्तौ महाबलौ ॥ ५७ ॥ बभञ्जतुर्महावृक्षानूरुभिर्बलिनाम्वरौ। अन्योन्येनातिसंरब्धौ परस्परवधैषिणौ ॥ ५८ ॥ तद्वृक्षयुद्धमभवन्महीरुहविनाशनम्। वालिसुग्रीवयोर्भ्रात्रोः पुरा स्त्रीकांक्षिणोर्यथा ॥ ५९ ॥ आवि-

ध्याविध्य तौ वृक्षान्मुहूर्त्तमितरेतरम् । ताड़यामासतुरुभौ विनदन्तौ मुहुर्मुहुः ॥ ६० ॥ तस्मिन् देशे यदा वृक्षाः सर्वं एव निपातिताः । पुञ्जीकृताश्च शतशः परस्परवधेप्सया ॥ ६१ ॥ ततः शिलाः समादाय मुहूर्त्तमिव भारत । महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ॥ ६२ ॥ शिलाभिरुग्ररूपाभिर्बृहतीभिः परस्परम् । वज्रैरिव महावेगैराजघ्नतुरमर्षणौ ॥ ६३ ॥ अभिद्रुत्य तु भूयस्तावन्योन्यबलदर्पितौ । भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव ॥ ६४ ॥ मुष्टिभिश्च महाघोरैरन्योन्यमभिजघ्नतुः । ततः कटकटाशब्दो बभूव सुमहात्मनोः ॥ ६५ ॥ ततः संहृत्य मुष्टिन्तु पञ्चशीर्षमिवोरगम् । वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम् ॥ ६६ ॥ ततः श्रान्तन्तु तद्रक्षो भीमसेनभुजाहतम् । सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्त्तत ॥ ६७ ॥ तत एनं महाबाहुर्बाहुभ्याममरोपमः । समुत्क्षिप्य बलाद्भीमो विनिष्पिष्य महीतले ॥ ६८ ॥ तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः । अरत्निना चाभिहत्य शिरः कायादपाहरत् ॥ ६९ ॥ सन्दष्टौष्ठं विवृत्ताक्षं फलं वृन्तादिव च्युतम् । जटासुरस्य तु शिरो भीमसेनबलाहृतम् ॥ ७० ॥ पपात रुधिरादिग्धं सन्दष्टदशनच्छदम् । तं निहत्य महेष्वासो युधिष्ठिरमुपागमत् । स्तूयमानो द्विजाग्र्यैस्तु मरुद्भिरिव वासवः ॥ ७१ ॥

इति आरण्यपर्वणि जटासुरवधपर्वणि जटासुरवधो नाम सप्तपञ्चाशदधिकशततोऽध्यायः समाप्तञ्च जटासुरवधपर्व ॥ १५७॥

---

वैशम्पायन उवाच । निहते राक्षसे तस्मिन् पुनर्नारायणाश्रमम् । अभ्येत्य राजा कौन्तेयो निवासमकरोत् प्रभुः ॥ १ ॥

स समानीय तान् सर्वान् भ्रातृनित्यब्रवीद्वचः। द्रौपद्या सहि-
तान् काले संस्मरन् भ्रातरं जयम् ॥ २ ॥ समाश्वतस्रोऽभिगताः
शिवेन चरतां वने। कृतोद्देशस्तु वीभत्सुः पञ्चमीमभितः समाम्
॥ ३ ॥ प्राप्य पर्वतराजानं श्वेतं शिखरिणाम्वरम्। पुष्पितै-
र्द्रुमषण्डैश्च मत्तकोकिलषट्पदैः ॥ ४ ॥ मयूरैश्चातकैश्चापि नित्यो
त्सवविभूषितम्। व्याघ्रैर्वराहैर्महिषैर्गवयैर्हरिणैस्तथा ॥ ५ ॥
श्वापदैर्व्यालरूपैश्च रुरुभिश्च निषेवितम्। फुल्लैः सहस्रपत्रैश्च
शतपत्रैस्तथोत्पलैः ॥ ६ ॥ प्रफुल्लैः कमलैश्चैव तथा नीलोत्पलै-
रपि। महापुण्यं पवित्रञ्च सुरासुरनिषेवितम् ॥ ७ ॥ तत्रापि
च कृतोद्देशः समागमदिदृक्षुभिः। कृतश्च समयस्तेन पार्थना-
मिततेजसा ॥ ८ ॥ पञ्चवर्षाणि वत्स्यामि विद्यार्थीति पुरा मयि।
तत्र गाण्डीवधन्वानमवाप्तास्त्रमरिन्दमम् ॥ ९ ॥ देवलोकसमं
लोकं द्रक्ष्यामः पुनरागतम्। इत्युक्त्वा ब्राह्मणान् सर्वानामन्त्रयत
पाण्डवः ॥ १० ॥ कारणञ्चैव तत्तेषामाचचक्षे तपस्विनाम्।
तानुग्रतपसः प्रीतान् कृत्वा पार्थाः प्रदक्षिणम् ॥ ११ ॥ ब्राह्म-
णास्तेऽन्वमोदन्त शिवेन कुशलेन च। सुखोदर्कमिदं क्लेश-
मचिराद्भरतर्षभ ॥ १२ ॥ क्षत्रधर्मेण धर्मज्ञ तीर्त्वा गां पालयि-
ष्यसि। तत्तु राजा वचस्तेषां प्रतिगृह्य तपस्विनाम् ॥ १३ ॥
प्रतस्थे सह विप्रैस्तैर्भ्रातृभिश्च परन्तपः। राक्षसैरनुयातो वै
लोमशेनाभिरक्षितः ॥ १४ ॥ क्वचित् पद्भ्यां ततोऽगच्छद्राक्षसै
रुह्यते क्वचित्। तत्र तत्र महातेजा भ्रातृभिः सह सुव्रतः ॥ १५ ॥
ततो युधिष्ठिरो राजा बहून् क्लेशान् विचिन्तयन्। सिंहव्याघ्रैः
गजाकीर्णामुदीचीं प्रययौ दिशम् ॥ १६ ॥ अवेक्षमाणः कैलासं
मैनाकञ्चैव पर्वतम्। गन्धमादनपादांश्च श्वेतञ्चापि शिलोच्चयम्
॥ ॥ १७ ॥ उपर्य्युपरि शैलस्य बह्वीश्च सरितः शिवाः। पृष्ठ हिम-
वतः पुण्यं ययौ सप्तदशेऽहनि ॥ १८ ॥ ददृशुः पाण्डवा राजन्

गन्धमादनमन्तिकात्। पृष्ठे हिमवतः पुण्ये नानाद्रुमलतावृते ॥ १९ ॥ सलिलावर्त्तसञ्जातैः पुष्पितैश्च महीरुहैः। समावृतं पुण्यतममाश्रमं वृषपर्वणः॥ २० ॥ तमुपागम्य राजर्षिं धर्मात्मानमरिन्दमाः। पाण्डवा वृषपर्वाणमवन्दन्त गतक्लमाः॥ २१ ॥ अभ्यनन्दत राजर्षिः पुत्रवद्भरतर्षभान्। पूजितास्चावसंस्तत्र सप्तरात्रमरिन्दमाः॥ २२ ॥ अष्टमेऽहनि संप्राप्ते तमृषिं लोकविश्रुतम्। आमन्त्र्य वृषपर्वाणं प्रस्थानं प्रत्यरोचयन् ॥ २३ ॥ एकैकशश्च तान् विप्रान्निवेद्य वृषपर्वणे। न्यासभूतान् यथाकालं बन्धूनिव सुसत्कृतान् ॥ २४ ॥ परिवार्हञ्च तं शेषं परिदाय महात्मने। ततस्ते यज्ञपात्राणि रत्नान्याभरणानि च ॥ २५ ॥ न्यदधुः पाण्डवा राजन्नाश्रमे वृषपर्वणः। अतीतानागते विद्वान् कुशलः सर्वधर्मवित् ॥ २६ ॥ अन्वशासत स धर्मज्ञः पुत्रवद्भरतर्षभान्। तेऽनुज्ञाता महात्मान प्रययुर्दिशमुत्तराम् ॥ २७ ॥ तान् प्रस्थितानभ्यगच्छद्वृषपर्वा महामतिः। उपन्यस्य महातेजा विप्रेभ्यः पाण्डवांस्तदा ॥ २८ ॥ अनुसंसाध्य कौन्तेयानाशीर्भिरभिनन्द्य च। वृषपर्वा निववृते पन्थानमुपदिश्य च ॥ २९ ॥ नानामृगगणैर्युष्टं कौन्तेयः सत्यविक्रमः। पदातिभ्रातृभिः सार्द्धं प्रातिष्ठत युधिष्ठिरः॥ ३० ॥ नानाद्रुमनिरोधेषु वसन्तः शैलसानुषु। पर्वतं विविशुः श्वेतं चतुर्थेऽहनि पाण्डवाः॥ ३१ ॥ महाभ्रघनसङ्काशं सलिलोपहितं शुभम्। मणिकाञ्चनरम्यस्य शिला-नाञ्च समुच्चयम् ॥ ३२ ॥ ते समासाद्य पन्थानं यथोक्तं वृषपर्वणा। अनुसस्रुर्यथोद्देशं पश्यन्तो विविधान्नगान् ॥ ३३ ॥ उपर्य्युपरि शैलस्य गुहाः परमदुर्गमाः। सुदुर्गमांस्तेषु बहून् सुखेनैवाभिचक्रमुः॥ ३४ ॥ धौम्यः कृष्णा च पार्थाश्च लोमशश्च महानृषिः। अगच्छन् सहितास्तत्र न कश्चिदवहीयते ॥ ३५ ॥ ते मृगद्विजसंघुष्टं ननाद्रुमलतायुतम्। शाखामृगगणैश्चैव सेवितं

सुमनोरमम् ॥ ३६ ॥ पुण्यं पद्मसरोयुक्तं सपल्वलमहावनम् । उपतस्थुर्महाभागा माल्यवन्तं महागिरिम् ॥ ३७ ॥ ततः किम्पुरुषावासं सिद्धचारणसेवितम् । ददृशुर्हृष्टरोमाणः पर्व्वतं गन्धमादनम् ॥ ३८ ॥ विद्याधरानुचरितं किन्नरीभिस्तथैव च । गजसंघसमावासं सिंहव्याघ्रगणायुतम् ॥ ३९ ॥ शरभोन्नादसंघुष्टं नानामृगनिषेवितम् । ते गन्धमादनवनं तन्नन्दनवनोपमम् ॥ ४० ॥ मुदिताः पाण्डुतनया मनोहृदयनन्दनम् । विविशुः क्रमशो वीराः शरण्यं शुभकाननम् ॥ ४१ ॥ द्रौपदीसहिता वीरास्तैश्च विप्रैर्महात्मभिः । शृण्वन्तः प्रीतिजननान् वल्गून्मदकलाञ्छुभान् ॥ ४२ ॥ श्रोत्ररम्यान् सुमधुरान् शब्दान् खगमुखेरितान् । सर्व्वर्त्तुफलभाराढ्यान् सर्व्वर्त्तुकुसुमोज्ज्वलान् ॥ ४३ ॥ पश्यन्तः पादपांश्चापि फलभारावनामितान् । आम्रानाम्रातकान् भव्यान् नारिकेलान् सतिन्दुकान् ॥ ४४ ॥ मुञ्जातकांस्तथाजीरान् दाड़िमान् वीजपूरकान् । पनसान् लकुचान् मोचान् खर्ज्जुरानम्लवेतसान् ॥ ४५ ॥ पारावतांस्तथा चौद्रान्नीपांश्चापि मनोरमान् । विल्वान् कपित्थान् जम्बूंश्च काश्मरीर्वदरीस्तथा ॥ ४६ ॥ प्लक्षानुड़ुम्वरवटानश्वत्थान् चीरिकांस्तथ । भल्लातकानामलकीर्हरीतकविभीतकान् ॥ ४७ ॥ इङ्गुदान् करमर्द्दांश्च तिन्दुकांश्च महाफलान् । एतानन्यांश्च विविधान् गन्धमादनसानुषु ॥ ४८ ॥ फलैरमृतकल्पैस्तानाचितान् स्वादुभिस्तरून् । तथैव चम्पकाशोकान् केतकान् वकुलांस्तथा ॥ ४९ ॥ पुन्नागान् सप्तपर्णांश्च कर्णिकारान् सकेतकान् । पाटलाः कुटजान् रम्यान् मन्दारेन्दीवरांस्तथा ॥ ५० ॥ पारिजातान् कोविदारान् देवदारुद्रुमांस्तथा । शालांस्तालांस्तमालांश्च पिप्पलानिङ्गुदांस्तथा ॥ ५१ ॥ शाल्मलीः किंशुकाशोकान् शिंशपाः सरलांस्तथा । चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः ॥ ५२ ॥ कोकिलैः कलविङ्कैश्च हारीतैर्जीव-

जीवकैः। प्रियकैश्चातकैश्चैव तथान्यैर्विविधैः खगैः ॥ ५३ ॥ श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितान्। सरांसि च मनोज्ञानि समन्ताज्जलचारिभिः ॥ ५४ ॥ कुमुदैः पुण्डरीकैश्च तथा कोकनदोत्पलैः। कह्लारैः कमलैश्चैव आचितानि समन्ततः ॥ ५५ ॥ कादम्बैश्चक्रवाकैश्च कुररैर्जलकुक्कुटैः। कारण्डवैः प्लवैर्हंसैर्बकैर्मद्गुभिरेव च ॥ ५६ ॥ एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः। हृष्टैस्तथा तामरसरसासवमदालसैः ॥ ५७ ॥ पद्मोदरच्युतरजःकिञ्जल्कारुणरञ्जितैः। मञ्जुस्वरैर्मधुकरैर्विरुतान् कमलाकरान् ॥ ५८ ॥ अपश्यंस्ते नरव्याघ्रा गन्धमादनसानुषु। तथैव पद्मषण्डैश्च मण्डितांश्च समन्ततः ॥ ५९ ॥ शिखण्डिनीभिः सहितान् लतामण्डपकेषु च। मेघतूर्य्यरवोद्दाममदनाकुलितान् भृशम् ॥ ६० ॥ कृत्वैव केकामधुरं सङ्गीतं मधुरस्वरम्। चित्रान् कलापान् विस्तीर्य्य सविलासान्मदालसान् ॥ ६१ ॥ मयूरान् ददृशुर्हृष्टान्नृत्यतो वनलालसान्। कांश्चित् प्रियाभिः सहितान् रममाणान् कलापिनः ॥ ६२ ॥ वल्लीलतासङ्कटेषु कुटजेषु स्थितांस्तथा। कांश्चिच्च कुटजानान्ते विटपेषूत्कठानिव ॥ ६३ ॥ कलापरुचिराटोपनिचितान्मुकुटानिव। विवरेषु तरूणाञ्च रुचिरं ददृशुश्च ते ॥ ६४ ॥ सिन्धुवारांस्तथोदारान् मन्मथस्येव तोमरान्। सुवर्णवर्णकुसुमान् गिरीणां शिखरेषु च ॥ ६५ ॥ कर्णिकारान् विकसितान् कर्णपूरानिवोत्तमान्। तथापश्यन् कुरुवकान् वनराजिषु पुष्पितान् ॥ ६६ ॥ कामवश्योत्सुककरान् कामस्येव शरोत्करान्। तथैव वनराजीनामुदारान्रचितानिव ॥ ६७ ॥ विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव। तथानङ्गशराकारान् सहकारान्मनोरमान् ॥ ६८ ॥ अपश्यन् भ्रमरारावान् मञ्जरीभिर्विराजितान्। हिरण्यसदृशैः पुष्पैर्दावाग्निसदृशैरपि ॥ ६९ ॥ लोहितैरञ्जनाभैश्च वैदूर्य्यसदृशैरपि। अतीव

वृक्षा राजन्ते पुष्पिताः शैलसानुषु ॥ ७० ॥ तथा शालांस्तमालांश्च पाटलान् बकुलानपि। माला इव समासक्ताः शैलानां शिखरेषु च ॥ ७१ ॥ विमलस्फाटिकाभानि पाण्डुरच्छदनैर्द्विजैः। कलहंसैरुपेतानि सारसाभिरुतानि च ॥ ७२ ॥ सरांसि बहुशः पार्था पश्यन्तः शैलसानुषु। पद्मोत्पलविमिश्राणि सुखशीतजलानि च ॥ ७३ ॥ एवं क्रमेण ते वीरा वीक्षमाणाः समन्ततः। गन्धवन्त्यथ माल्यानि रसवन्ति फलानि च ॥ ७४ ॥ सरांसि च मनोज्ञानि वृक्षांश्चातिमनोरमान्। विविशुः पाण्डवाः सर्व्वे विस्मयोत्फुल्ललोचनाः ॥ ७५ ॥ कमलोत्पलकह्लारपुण्डरीकसुगन्धिना। सेव्यमाना वने तस्मिन् सुखस्पर्शेन वायुना ॥ ७६ ॥ ततो युधिष्ठिरो भीममाहेदं प्रीतिमद्वचः। अहो श्रीमदिदं भीम गन्धमादनकाननम् ॥ ७७ ॥ वने ह्यस्मिन् मनोरम्ये दिव्याः काननजा द्रुमाः। लताश्च विविधाकाराः पत्रपुष्पफलोपगाः ॥ ७८ ॥ भान्त्येते पुष्पविकचाः पुंस्कोकिलकुलाकुलाः। नात्र कण्टकिनः केचिन्न च विद्यन्त्यपुष्पिताः ॥ ७९ ॥ स्निग्धपत्रफला वृक्षा गन्धमादनसानुषु। भ्रमरारावमधुरा नलिनीः फुल्लपङ्कजाः ॥ ८० ॥ विलोड्यमानाः पश्येमाः करिभिः सकरेणुभिः। पश्येमां नलिनीं चान्यां कमलोत्पलमालिनीम् ॥ ८१ ॥ स्रग्धरां विग्रहवतीं साक्षाच्छ्रियमिवापराम्। नानाकुसुमगन्धाढ्यास्तस्येमाः काननोत्तमे ॥ ८२ ॥ उपगीयमाना भ्रमरैराजन्ते वनराजयः। पश्य भीम शुभान् देशान् देवाक्रीड़ान् समन्ततः ॥ ८३ ॥ अमानुषगतिं प्राप्ताः संसिद्धा स्म वृकोदर। लताभिः पुष्पिताग्राभिः पुष्पिताः पादपोत्तमाः ॥ ८४ ॥ संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु। शिखण्डिनीभिश्चरतां सहितानां शिखण्डिनाम् ॥ ८५ ॥ नदतां शृणु निर्घोषं भीम पर्व्वतसानुषु। चकोराः शतपत्राश्च मत्तकोकिलसारिकाः ॥ ८६ ॥ पत्रिणः पुष्पितानेतान् सम्पतन्ति

महाद्रुमान्। रक्तपीतारुणाः पार्थ पादपाग्रगताः खगाः॥ ८७॥ परस्परमुदीक्षन्ते बहवो जीवजीवकाः। हरितारुणवर्णानां शाद्वलानां समीपतः॥ ८८॥ शरभाः प्रतिदृश्यन्ते शैलप्रस्रवणेष्वपि। वदन्ति मधुरा वाचः सर्वभूतमनोरमाः॥ ८९॥ भृङ्गराजोपचक्राश्च लोहपृष्ठा पतत्रिणः। चतुर्विषाणाः पद्माभाः कुञ्जराः मकरेणवः॥ ९०॥ एते वैदूर्य्यवर्णाभं क्षोभयन्ति महत्सरः। बहुतालसमुत्सेधाः शैलशृङ्गपरिच्युताः॥ ९१॥ नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्ति च। भास्कराभप्रभा भीमाः शारदाभ्रघनोपमाः॥ ९२॥ शोभयन्ति महाशैलं नानारजतधातवः। क्वचिदञ्जनवर्णाभाः क्वचित्काञ्चनसन्निभाः॥ ९३॥ धातवो हरितालस्य क्वचिद्धिङ्गुलकस्य च। मनःशिलागुहाश्चैव सन्ध्याभ्रनिकरोपमाः॥ ९४॥ शोभयन्ति महाशैलं नानारजतधातवः। शशलोहितवर्णाभाः क्वचिद्गैरिकधातवः॥ ९५॥ सितासिताभ्रप्रतिमाः बालसूर्य्यसमप्रभाः। एते बहुविधाः शैला शोभयन्ति महाप्रभाः॥ ९६॥ गन्धर्वाः सह कान्ताभिर्यथोक्तं वृषपर्वणा। दृश्यन्त शैलशृङ्गेषु पार्थ किम्पुरुषैः सह॥ ९७॥ गीतानां समतालानां तथा साम्नाञ्च निस्वनः। श्रूयते बहुधा भीम सर्वभूतमनोहरः॥ ९८॥ महागङ्गामुदीक्षस्व पुण्यां देवनदीं शुभाम्। कलहंसगणैर्जुष्टामृषिकिन्नरसेविताम्॥ ९९॥ धातुभिश्च सरिद्भिश्च किन्नरैर्मृगपक्षिभिः। गन्धर्वैरप्सरोभिश्च काननैश्च मनोरमैः॥ १००॥ व्यालैश्च विविधाकारैः शतशीर्षैः समन्ततः। उपेतं पश्य कौन्तेय शैलराजमरिन्दम॥ १०१॥

वैशम्पायन उवाच। ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम्। नातृप्यन् पवनेन्द्रस्य दर्शनेन परन्तपाः॥ १०२॥ उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः। आर्ष्टिषेणस्य राजर्षि-

राश्रमं ददृशुस्तदा ॥ १०३ ॥ ततस्ते तिग्मतपसं कृशन्धमनि-
सन्ततम्। पारगं सर्व्वधर्म्माणामार्ष्टिषेणमुपागमन् ॥ १०४ ॥

इति आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि गन्धमादनशोभादर्शनं
नामाष्टपञ्चाशदधिकशततोऽध्यायः ॥ १५८ ॥

---

वैशम्पायन उवाच। युधिष्ठिरस्तमासाद्य तपसा दग्धकिल्वि-
षम्। अभ्यवादयत प्रीतः शिरसा नाम कीर्त्तयन् ॥ १ ॥ ततः
कृष्णा च भीमश्च यमौ च सुतपस्विनौ। शिरोभिः प्राप्य राजर्षिं
परिवार्य्योपतस्थिरे ॥ २ ॥ तथैव धौम्यो धर्म्मज्ञः पाण्डवानां
पुरोहितः। यथान्यायमुपाक्रान्तस्तमृषिं संशितव्रतम् ॥ ३ ॥
अन्वजानात् स धर्म्मज्ञो मुनिर्दिव्येन चक्षुषा। पाण्डोः पुत्रान्
कुरुश्रेष्ठानास्यतामिति चाब्रवीत् ॥ ४ ॥ कुरूणामृषभं प्राज्ञं
पूजयित्वा महातपाः। सह भ्रातृभिरासीनं पर्य्यपृच्छदनामयम्
॥ ५ ॥ नानृते कुरुषे भावं कच्चिद्धर्म्मे प्रवर्त्तसे। मातापित्रोश्च ते
वृत्तिः कच्चित् पार्थ न सीदति ॥ ६ ॥ कच्चित्ते गुरवः सर्व्वे वृद्धा
वैद्याश्च पूजिताः। कच्चिन्न कुरुषे भावं पार्थ पापेषु कर्म्मसु ॥ ७ ॥
सुकृतं प्रतिकर्त्तुञ्च कच्चिद्धातुञ्च दुष्कृतम्। यथान्यायं कुरुश्रेष्ठ
जानासि न विकत्थसे ॥ ८ ॥ यथार्हं मानिताः कच्चित्त्वया नन्दन्ति
साधवः। वनेष्वपि वसन् कच्चिद्धर्म्ममेवानुवर्त्तसे ॥ ९ ॥ कच्चि-
द्धौम्यस्त्वदाचारैर्न पार्थ परितप्यते। दानधर्म्मतपःशौचैरार्जवेन
तितिक्षया ॥ १० ॥ पितृपैतामहं वृत्तं कच्चित् पार्थानुवर्त्तसे।
कच्चिद्राजर्षियातेन पथा गच्छस्यरिन्दम ॥ ११ ॥ स्वे स्वे किल
कुले जाते पुत्रे नप्तरि वा पुनः। पितरः पितृलोकस्थाः शोचन्ति
च हसन्ति च ॥ १२ ॥ किन्त्वस्य दुष्कृतेऽस्माभिः सम्प्राप्तव्यं भवि-
ष्यति। किञ्चास्य सुकृतेऽस्माभिः प्राप्तव्यमिति शोभनम् ॥ १३ ॥

पिता माता तथैवाग्निर्गुरुरात्मा च पञ्चमः। यस्यैते पूजिताः पार्थ तस्य लोकावुभौ जितौ॥ १४॥

युधिष्ठिर उवाच। भगवन्नार्य्यमाहैतद्यथावद्धर्मनिश्चयम्। यथाशक्ति यथान्यायं क्रियते विधिवन्मया॥ १५॥

आर्ष्टिषेण उवाच। अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसा। जुषन्ते पर्वतश्रेष्ठमृषयः पर्वसन्धिषु॥ १६॥ कामिनः सह कान्ताभिः परस्परमनुव्रताः। दृश्यन्ते शैलशृङ्गस्था यथा किम्पुरुषा नृप॥ १७॥ अरजांसि च वासांसि वसानाः कौशिकानि च। दृश्यन्ते बहवः पार्थ गन्धर्वाप्सरसां गणाः॥ १८॥ विद्याधरगणाश्चैव स्रग्विणः प्रियदर्शनाः। महोरगगणाश्चैव सुपर्णाश्चोरगादयः॥ १९॥ अस्य चोपरि शैलस्य श्रूयते पर्वसन्धिषु। भेरीपणवशङ्खानां मृदङ्गानाञ्च निःस्वनः॥ २०॥ इहस्थैरेव तत् सर्वं श्रोतव्यं भरतर्षभाः। न कार्य्या वः कथञ्चित्स्यात्तत्राभिगमने मतिः॥ २१॥ न चाप्यतः परं शक्यं गन्तुं भरतसत्तमाः। विहारो ह्यत्र देवानाममानुषगतिस्तु सा॥ २२॥ ईषच्चपलकर्माणं मनुष्यमिह भारत। द्विषन्ति सर्वभूतानि ताडयन्ति च राक्षसाः॥ २३॥ अस्यातिक्रम्य शिखरं कैलासस्य युधिष्ठिर। गतिः परमसिद्धानां देवर्षीणां प्रकाशते॥ २४॥ चापल्यादिह गच्छन्तं पार्थ यानमतः परम्। अयःशूलादिभिर्घ्नन्ति राक्षसाः शत्रुसूदन॥ २५॥ अप्सरोभिः परिवृतः समृद्ध्या नरवाहनः। इह वैश्रवणस्तात पर्वसन्धिषु दृश्यते॥ २६॥ शिखरस्थं समासीनमधिपं यक्षरक्षसाम्। प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम्॥ २७॥ देवदानवसिद्धानां तथा वैश्रवणस्य च। गिरेः शिखरमुद्यानमिदं भरतसत्तम॥ २८॥ उपासीनस्य धनदं तुम्बुरोः पर्वसन्धिषु। गीतसामस्वनस्तात श्रूयते गन्धमादने॥ २९॥ एतदेवंविधञ्चित्रमिह तात युधिष्ठिर। प्रेक्षन्ते सर्वभूतानि बहुशः

पर्व्वसन्धिषु ॥ ३० ॥ भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च। वसध्वं पाण्डवश्रेष्ठा यावदर्ज्जुनदर्शनात् ॥ ३१ ॥ न तात चपलैर्भाव्यमिह प्राप्तैः कथञ्चन। उषित्वेह यथाकामं यथाश्रद्धं विहृत्य च। ततः शस्त्रजितां तात पृथिवीं पालयिष्यसि ॥ ३२ ॥

इति आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि आर्ष्टिषेणयुधिष्ठिर-संवादे एकोनषष्ट्यधिकशततोऽध्यायः ॥ १५९ ॥

---

जनमेजय उवाच। आर्ष्टिषेणाश्रमे तस्मिन् मम पूर्व्वपितामहाः। पाण्डोः पुत्रा महात्मानः सर्व्वे दिव्यपराक्रमाः ॥ १ ॥ कियन्तं कालमवसन् पर्व्वते गन्धमादने। किञ्च चक्रुर्महावीर्य्याः सर्व्वेऽतिबलपौरुषाः ॥ २ ॥ कानि चाभ्यवहार्य्याणि तत्र तेषां महात्मनाम्। वसतां लोकवीराणामासंस्तद्ब्रूहि सत्तम ॥ ३ ॥ विस्तरेण च मे शंस भीमसेनपराक्रमम्। यद्यच्चक्रे महाबाहुस्तस्मिन् हिमवते गिरौ ॥ ४ ॥ न खल्वासीत् पुनर्युद्धं तस्य यक्षैर्द्विजोत्तम। कच्चित्समागमस्तेषामासीद्वैश्रवणेन च ॥ ५ ॥ तत्र ह्यायाति धनद आर्ष्टिषेणो यथाब्रवीत्। एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन। न हि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितम् ॥ ६ ॥

वैशम्पायन उवाच। एतदात्महितं श्रुत्वा तस्याप्रमिततेजसः। शासनं सततञ्चक्रुस्तथैव भरतर्षभाः। भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ॥ ७ ॥ शुद्धबाणहतानाञ्च मृगाणां पिशितान्यपि। मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च ॥ ८ ॥ एवं ते न्यवसंस्तत्र पाण्डवा भरतर्षभ। तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात् ॥ ९ ॥ शृण्वतां लोमशोक्तानि वाक्यानि विविधान्युत। कृत्यकाल उपस्थास्य इति चोक्त्वा घटोत्कचः ॥ १० ॥

राक्षसैः सह सर्वैश्च पूर्वमेव गतः प्रभो। आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम् ॥ ११ ॥ अगच्छन् बहवो मासाः पश्यतां महदद्भुतम्। तैस्तत्र विहरद्भिश्च रममाणैश्च पाण्डवैः ॥ १२ ॥ प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा। आजग्मुः पाण्डवान् द्रष्टुं शुद्धात्मानो यतव्रताः ॥ १३ ॥ ते तैः सह कथाश्चक्रुर्दिव्यां भरतसत्तमाः। ततः कतिपयाहस्य महाह्रदनिवासिनम् ॥ १४ ॥ ऋद्धिमन्तं महानागं सुपर्णः सहसाहरत्। प्राकम्पत महाशैलः प्रामथ्यन्त महाद्रुमाः ॥ १५ ॥ ददृशुः सर्वभूतानि पाण्डवाश्च तदद्भुतम्। ततः शैलोत्तमस्याग्रात् पाण्डवान् प्रति मारुतः ॥ १६ ॥ अवहत् सर्वमाल्यानि गन्धवन्ति शुभानि च। तत्र पुष्पाणि दिव्यानि सुहृद्भिः सह पाण्डवाः ॥ १७ ॥ ददृशुः पञ्चवर्णानि द्रौपदी च यशस्विनी। भीमसेनं ततः कृष्णा काले वचनमब्रवीत् ॥ १८ ॥ विविक्ते पर्वतोद्देशे सुखासीनं महाभुजम्। सुपर्णानिलवेगेन श्वसनेन महाबलात् ॥ १९ ॥ पञ्चवर्णानि पात्यन्ते पुष्पाणि भरतर्षभ। प्रत्यक्षं सर्वभूतानां नदीमश्वरथां प्रति ॥ २० ॥ खाण्डवे सत्यसन्धेन भ्रात्रा तव महात्मना। गन्धर्वोरगरक्षांसि वासवश्च निवारितः ॥ २१ ॥ हता मायाविनश्चोग्रा धनुः प्राप्तञ्च गाण्डिवम्। तवापि सुमहत्तेजो महद्बाहुबलञ्च ते ॥ २२ ॥ अविषह्यमनाधृष्यं शक्रतुल्यबलोपमम्। तद्बाहुबलवेगेन त्रासिताः सर्वराक्षसाः ॥ २३ ॥ हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश। ततः शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवम् ॥ २४ ॥ व्यपेतभयसम्मोहाः पश्यन्तु सुहृदस्तव। एवं प्रणिहितं भीम चिरात् प्रभृति मे मनः ॥ २५ ॥ द्रष्टुमिच्छामि शैलाग्रं तद्बाहुबलपालिता। ततः क्षिप्तमिवात्मानं द्रौपद्या स परन्तपः ॥ २६ ॥ नामृष्यत महाबाहुः प्रहारमिव सद्गवः। सिंहर्षभगतिः श्रीमानुदारकनकप्रभः ॥ २७ ॥ मनस्वी बलवान् दृप्तो मानी शूरश्च

पाण्डवः। लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः ॥ २८॥
सिंहदंष्ट्रो बृहत्स्कन्धः शालपोत इवोद्गतः। महात्मा चारु-
सर्वाङ्गः कम्बुग्रीवो महाभुजः ॥ २९॥ रुक्मपृष्ठं धनुः खड्गं तूणां-
श्चापि परामृषत्। स केशरीव चोत्सिक्तः प्रभिन्न इव वारणः
॥ ३०॥ व्यपेतभयसम्मोहः शैलमभ्यपतद्बली। तं मृगेन्द्रमिवा-
यान्तं प्रभिन्नमिव वारणम् ॥ ३१॥ ददृशुः सर्वभूतानि बाण-
कार्मुकधारिणम्। द्रौपद्या वर्द्धयन् हर्षं गदामादाय पाण्डवः
॥ ३२॥ व्यपेतभयसम्मोहः शैलराजं समाश्रितः। न ग्लानिर्न च
कातर्य्यं न वैक्लव्यं न मत्सरः ॥ ३३॥ कदाचिज्जुषते पार्थमात्मजं
मातरिश्वनः। तदेकायनमासाद्य विषमं भीमदर्शनम् ॥ ३४॥
बहुतालोच्छ्रयं शृङ्गमारुरोह महाबलः। स किन्नरमहानाग-
मुनिगन्धर्वराक्षसान् ॥ ३५॥ हर्षयन् पर्वतस्याग्रमारुह्य सु-
महाबलः। ततो वैश्रवणावासं ददर्श भरतर्षभः ॥ ३६॥ काञ्चनैः
स्फाटिकैश्चैव वेश्मभिः समलंकृतम्। प्राकारेण परिक्षिप्तं सौव-
र्णेन समन्ततः ॥ ३७॥ सर्वरत्नद्युतिमता सर्वोद्यानवता तथा।
शैलादभ्युच्छ्रयवता चयाट्टालकशोभिना ॥ ३८॥ द्वारतोरण-
निर्व्यूहध्वजसंवाहशोभिना। विलासिनीभिरत्यर्थं नृत्यन्तीभिः
समन्ततः ॥ ३९॥ वायुना धूयमानाभिः पताकाभिरलंकृतम्।
धनुष्कोटिमवष्टभ्य वक्रभावेन बाहुना ॥ ४०॥ पश्यमानः स
खेदेन द्रविणाधिपतेः पुरम्। मोदयन् सर्वभूतानि गन्धमादन-
सम्भवः ॥ ४१॥ सर्वगन्धवहस्तत्र मारुतः सुसुखो ववौ। चित्रा
विविधवर्णाभाश्चित्रमञ्जरिधारिणः ॥ ४२॥ अचिन्त्या विविधा-
स्तत्र द्रुमाः परमशोभिनः। रत्नजालपरिक्षिप्तं चित्रमाल्यविभू-
षितम् ॥ ४३॥ राक्षसाधिपतेः स्थानं ददृशे भरतर्षभः। गदा-
खड्गधनुष्पाणिः समभित्यक्तजीवितः ॥ ४४॥ भीमसेनो महा-
बाहुस्तस्थौ गिरिरिवाचलः। ततः शङ्खमुपाध्मासीद्द्विषतां लोम-

दर्शनम् ॥ ४५ ॥ व्याघोषतलशब्दञ्च कृत्वा भूतान्यमोहयत्। ततः प्रहृष्टरोमाणस्तं शब्दमभिदुद्रुवुः ॥ ४६ ॥ यक्षराक्षसगन्धर्वाः पाण्डवस्य समीपतः। गदापरिघनिस्त्रिंशशूलशक्तिपरश्वधाः ॥ ४७॥ प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः। ततः प्रववृते युद्धं तेषां तस्य च भारत ॥ ४८ ॥ तैः प्रयुक्तान्महामायैः शूलशक्तिपरश्वधान्। भल्लैर्भीमः प्रचिच्छेद भीमवेगतरैस्ततः ॥ ४९ ॥ अन्तरीक्षगतानाञ्च भूमिष्ठानाञ्च गर्जताम्। शरैर्विव्याध गात्राणि राक्षसानां महाबलः ॥ ५० ॥ सा लोहितमहावृष्टिरभ्यवर्षन्महाबलम्। गदापरिघपाणीनां रक्षसां कायसम्भवा ॥ ५१ ॥ कायेभ्यः प्रच्युता धारा राक्षसानां समन्ततः। भीमबाहुबलोत्सृष्टैरायुधैर्यक्षरक्षसाम् ॥ ५२ ॥ विनिकृत्तानि दृश्यन्ते शरीराणि शिरांसि च। प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनम् ॥ ५३ ॥ ददृशुः सर्वभूतानि सूर्यमभ्रगणैरिव। स रश्मिभिरिवादित्यः शरैररिनिघातिभिः ॥ ५४ ॥ सर्वानार्च्छन्महाबाहुर्बलवान् सत्यविक्रमः। अभितर्ज्जयमानाश्च रुवन्तश्च महारवान् ॥ ५५ ॥ न मोहं भीमसेनस्य ददृशुः सर्वराक्षसाः। यक्षा विकृतसर्वाङ्गा भीमसेनभयार्दिताः ॥ ५६ ॥ भीममार्त्तस्वरञ्चक्रुर्विप्रकीर्णमहायुधाः। उत्सृज्य ते गदाशूलानसिशक्तिपरश्वधान् ॥ ५७ ॥ दक्षिणां दिशमाजग्मुस्त्रासिता दृढधन्वना। तत्र शूलगदापाणिर्व्यूढोरस्को महाभुजः ॥ ५८ ॥ सखा वैश्रवणस्यासीन्मणिमान्नाम राक्षसः। अदर्शयदधीकारं पौरुषञ्च महाबलः ॥ ५९ ॥ स तान् दृष्ट्वा परावृत्तान् स्मयमान इवाब्रवीत्। एकेन बहवः संख्ये मानुषेण पराजिताः ॥ ६० ॥ प्राप्य वैश्रवणावासं किं वक्ष्यथ धनेश्वरम्। एवमाभाष्य तान् सर्वानभ्यवर्त्तत राक्षसः ॥ ६१ ॥ शक्तिशूलगदापाणिरभ्यधावत् स पाण्डवम्। तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ॥ ६२ ॥ वत्सदन्तैस्त्रिभिः पार्श्वे भीम-

सेनः समार्दयत्। मणिमानपि संक्रुद्धः प्रगृह्य महतीं गदाम् ॥ ६३॥ प्राहिणोद्भीमसेनाय परिगृह्य महाबलः। विद्युद्रूपां महाघोरामाकाशे महतीं गदाम् ॥ ६४॥ शरैर्बहुभिरभ्याच्छं भीमसेनः शिलाशितैः। प्रत्यहन्यन्त ते सर्व्वे गदामासाद्य सायकाः ॥ ६५॥ न वेगं धारयामासुर्गदावेगस्य वेगिताः। गदायुद्धसमाचारं बुध्यमानः स वीर्य्यवान् ॥ ६६॥ व्यंसयामास तं तस्य प्रहारं भीमविक्रमः। ततः शक्तिं महाघोरां रुक्मदण्डामयस्मयीम् ॥ ६७॥ तस्मिन्नेवान्तरे धीमान् प्रजहाराथ राक्षसः। सा भुजं भीमनिर्ह्रादा भित्वा भीमस्य दक्षिणम् ॥ ६८॥ साग्निज्वाला महारौद्रा पपात सहसा भुवि। सोऽतिविद्धो महेष्वासः शक्त्यामितपराक्रमः ॥ ६९॥ गदां जग्राह कौन्तेयः क्रोधपर्य्याकुलेक्षणः। रुक्मपट्टपिनद्धान्तां शैक्यां भयवर्द्धिनीम् ॥ ७०॥ प्रगृह्याथ नदन् भीमः शैक्यां सर्व्वायसीं गदाम्। तरसा चाभिदुद्राव मणिमन्तं महाबलम् ॥ ७१॥ दीप्यमानं महाशूलं प्रगृह्य मणिमानपि। प्राहिणोद्भीमसेनाय वेगेन महता नदन् ॥ ७२॥ भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः। अभिदुद्राव तं हन्तुं गरुत्मानिव पन्नगम् ॥ ७३॥ सोऽन्तरीक्षमवप्लुत्य विधूय सहसा गदाम्। प्रचिक्षेप महाबाहुर्विनद्य रणमूर्द्धनि ॥ ७४॥ सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरंहसा। हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह ॥ ७५॥ तं राक्षसं भीमबलं भीमसेनेन पातितम्। ददृशुः सर्व्वभूतानि सिंहेनेव गवाम्पतिम् ॥ ७६॥ तं प्रेक्ष्य निहतं भूमौ हतशेषा निशाचराः। भीममार्त्तस्वरं कृत्वा जग्मुः प्राचीं दिशं प्रति ॥ ७७॥

इति आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि मणिमद्वधो नाम षष्ट्यधिकशततोऽध्यायः ॥ १६०॥

---

वैशम्पायन उवाच। श्रुत्वा बहुविधैः शब्दैर्नाद्यमानां गिरेर्गुहाम्। अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि॥ १॥ धौम्यः कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा। भीमसेनमपश्यन्तः सर्वे विमनसोऽभवन्॥ २॥ द्रौपदीमार्ष्टिषेणाय सम्प्रधार्य्य महारथाः। सहिताः सायुधाः शूराः शैलमारुरुहुस्तदा॥ ३॥ ततः संप्राप्य शैलाग्रं वीक्षमाणा महारथाः। ददृशुस्ते महेष्वासा भीमसेनमरिन्दमाः॥ ४॥ स्फुरतश्च महाकायान् गतसत्त्वांश्च राक्षसान्। महाबलान् महासत्त्वान् भीमसेनेन पातितान्॥ ५॥ शुशुभे स महाबाहुर्गदाखड्गधनुर्द्धरः। निहत्य समरे सर्वान् दानवान् मघवानिव॥ ६॥ ततस्ते भ्रातरं दृष्ट्वा परिष्वज्य महारथाः। तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमाम्॥ ७॥ तैश्चतुर्भिर्महेष्वासैर्गिरिशृङ्गमशोभत। लोकपालैर्महाभागैर्दिवं देववरैरिव॥ ८॥ कुवेरसदनं दृष्ट्वा राक्षसांश्च निपातितान्। भ्राता भ्रातरमासीनमब्रवीत् पृथिवीपतिः॥ ९॥

युधिष्ठिर उवाच। साहसाद्यदि वा मोहाद्भीम पापमिदं कृतम्। नैतत्ते सदृशं वीर मुनेरिव मृषा वचः॥ १०॥ राजद्विष्टं न कर्त्तव्यमिति धर्म्मविदो विदुः। त्रिदशानामिदं द्विष्टं भीमसेन त्वया कृतम्॥ ११॥ अर्थधर्म्मावनादृत्य यः पापे कुरुते मनः। कर्म्मणां पार्थ पापानां स फलं विन्दते ध्रुवम्। पुनरेवं न कर्त्तव्यं मम चेदिच्छसि प्रियम्॥ १२॥

वैशम्पायन उवाच। एवमुक्त्वा स धर्म्मात्मा भ्राता भ्रातरमच्युतम्। अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः। विरराम महातेजास्तमेवार्थं विचिन्तयन्॥ १३॥ ततस्ते हतशिष्टा ये भीमसेनेन राक्षसाः। सहिताः प्रत्यपद्यन्त कुवेरसदनं प्रति॥ १४॥ ते जवेन महावेगाः प्राप्य वैश्रवणालयम्। भीममार्त्तस्वरञ्चक्रुर्भीमसेनभयार्द्दिताः॥ १५॥ न्यस्तशस्त्रायुधाः क्लान्ताः

शोणिताक्ततनुच्छदाः । प्रकीर्णमूर्द्धजा राजन् यक्षाधिपतिमब्रु-
वन् ॥ १६ ॥ गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः । राक्षसा
निहताः सर्व्वे तव देव पुरःसराः ॥ १७ ॥ प्रमृद्य तरसा शैलं
मानुषेण धनेश्वर । एकेन सहिताः संख्ये रणे क्रोधवशा गणाः
॥ १८ ॥ प्रवरा राक्षसेन्द्राणां यक्षाणाञ्च नराधिप । शेरते
निहता देव गतसत्त्वाः परासवः ॥ १९ ॥ लब्धशेषा वयं मुक्ता
मणिमांस्ते सखा हतः । मानुषेण कृतं कर्म विधत्स्व यदन-
न्तरम् ॥ २० ॥ एतच्छ्रुत्वा सुसंक्रुद्धः सर्व्वयक्षगणाधिपः । कोप-
संरक्तनयनः कथमित्यब्रवीद्वचः ॥ २१ ॥ द्वितीयमपराध्यन्तं भीमं
श्रुत्वा धनेश्वरः । चुक्रोध यक्षाधिपतिर्युज्यतामिति चाब्रवीत्
॥ २२ ॥ अथाभ्रघनसङ्काशं गिरिशृङ्गमिवोच्छ्रितम् । रथं सं-
योजयामासुर्गन्धर्व्वैर्हेममालिभिः ॥ २३ ॥ तस्य सर्व्वगुणोपेता
विमलाक्षा हयोत्तमाः । तेजोबलगुणोपेता नानारत्नविभूषिताः
॥ २४ ॥ शोभमाना रथे युक्तास्तरिष्यन्त इवाशुगाः । ह्रेषया-
मासुरन्योन्यं ह्रेषितैर्विजयावहैः ॥ २५ ॥ स समास्थाय भगवान्
राजराजो महारथम् । प्रययौ देवगन्धर्व्वैः स्तूयमानो महा-
द्युतिः ॥ २६ ॥ तं प्रयान्तं महात्मानं सर्व्वे यक्षा धनाधिपम् ।
रक्ताक्षा हेमसङ्काशा महाकाया महाबलाः ॥ २७ ॥ सायुधा
बद्धनिस्त्रिंशा यक्षा दशशता वराः । ते जवेन महावेगाः प्लवमाना
विहायसा ॥ २८ ॥ गन्धमादनमाजग्मुः प्रकर्षन्त इवाम्बरम् ।
तत् केशरिमहाजालं धनाधिपतिपालितम् ॥ २९ ॥ कुवेरञ्च
महात्मानं यक्षरक्षोगणावृतम् । ददृशुर्हृष्टरोमाणः पाण्डवाः
प्रियदर्शनम् ॥ ३० ॥ कुवेरस्तु महासत्त्वान् पाण्डोः पुत्रान् महा-
रथान् । आत्तकार्मुकनिस्त्रिंशान् दृष्ट्वा प्रीतोऽभवत्तदा ॥ ३१ ॥
देवकार्य्यं चिकीर्षन् स हृदयेन तुतोष ह । ते पक्षिण इवापेतु-
र्गिरिशृङ्गं महाजवाः ॥ ३२ ॥ तस्थुस्तेषां समभ्याशे धनेश्वरपुरः-

चराः। ततस्तं हृष्टमनसं पाण्डवान् प्रति भारत ॥ ३३ ॥ समीक्ष्य यक्षगन्धर्वा निर्विकारमवस्थिताः। पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुम् ॥ ३४ ॥ नकुलः सहदेवश्च धर्मपुत्रश्च धर्मवित्। अपराद्धमिवात्मानं मन्यमाना महारथाः ॥ ३५ ॥ तस्थुः प्राञ्जलयः सर्वे परिवार्य्य धनेश्वरम्। स ह्यासनवरं श्रीमत्-पुष्पकं विश्वकर्मणा ॥ ३६ ॥ विहितञ्चित्रपर्य्यन्तमातिष्ठत धनाधिपः। तमासीनं महाकायाः शङ्कुकर्णा महाजवाः ॥ ३७ ॥ उपोपविविशुर्यक्षा राक्षसाश्च सहस्रशः। शतशश्चापि गन्धर्वा-स्तथैवाप्सरसां गणाः ॥ ३८ ॥ परिवार्य्योपतिष्ठन्त यथा देवाः शतक्रतुम्। काञ्चनीं शिरसा बिभ्रद्भीमसेनः स्रजं शुभाम् ॥ ३९ ॥ पाशखड्गधनुष्पाणिरुदैक्षत धनाधिपम्। भीमसेनस्य न ग्लानि-र्विक्षतस्यापि राक्षसैः ॥ ४० ॥ आसीत्तस्यामवस्थायां कुवेरमपि पश्यतः। आददानं शितान् वाणान् योद्धुकाममवस्थितम् ॥ ४१ ॥ दृष्ट्वा भीमं धर्मसुतमब्रवीन्नरवाहनः। विदुस्त्वां सर्वभूतानि पार्थं भूतहिते रतम् ॥ ४२ ॥ निर्भयश्चापि शैलाग्रे वस त्वं भ्रातृभिः सह। न च मन्युस्त्वया कार्य्यो भीमसेनस्य पाण्डव ॥ ४३ ॥ कालेनैते हताः पूर्वं निमित्तमनुजस्तव। व्रीड़ा चात्र न कर्त्तव्या साहसं यदिदं कृतम् ॥ ४४ ॥ दृष्टश्चापि सुरैः पूर्वं विनाशो यक्षरक्षसाम्। न भीमसेने कोपो मे प्रीतोऽस्मि भरतर्षभ। कर्मणा भीमसेनस्य मम तुष्टिरभूत् परा ॥ ४५ ॥

वैशम्पायन उवाच। एवमुक्त्वा तु राजानं भीमसेनमभाषत। नैतन्मनसि मे तात वर्त्तते कुरुसत्तम ॥ ४६ ॥ यदिदं साहसं भीम कृष्णार्थे कृतवानसि। मामनादृत्य देवांश्च विनाशं यक्षरक्षसाम् ॥ ४७ ॥ स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि। शापादद्य विनिर्मुक्तो घोरादस्मि वृकोदर ॥ ४८ ॥ अहं पूर्वमगस्त्येन क्रुद्धेन परमर्षिणा। शप्तोऽपराधे कस्मिंश्चित्तस्यैषा

निष्कृतिः कृता ॥४९॥ दिष्टो हि मम सङ्क्लेशः पुरा पाण्डवनन्दन ।
न तवात्रापराधोऽस्ति कथञ्चिदपि पाण्डव ॥ ५० ॥

युधिष्ठिर उवाच । कथं शप्तोऽसि भगवन्नगस्त्येन महात्मना ।
श्रोतुमिच्छाम्यहं देव तवैतच्छापकारणम् ॥ ५१ ॥ इदञ्चाश्चर्य्य-
भूतं मे यत् क्रोधात्तस्य धीमतः । तदैव त्वं न निर्दग्धः सबलः
सपदानुगः ॥ ५२ ॥

धनेश्वर उवाच । देवतानामभून्मन्त्रः कुशवत्यां नरेश्वर ।
वृतस्तत्राहमगमं महापद्मशतैस्त्रिभिः । यक्षाणां घोररूपाणां
विविधायुधधारिणाम् ॥ ५३ ॥ अध्वन्यहमथापश्यमगस्त्यमृषि-
सत्तमम् । उग्रं तपस्तप्यमानं यमुनातीरमाश्रितम् ॥ ५४ ॥
नानापक्षिगणाकीर्णं पुष्पितद्रुमशोभितम् । तमूर्द्ध्ववाहुं दृष्ट्वा वै
सूर्य्यस्याभिमुखे स्थितम् ॥ ५५ ॥ तेजोराशिं दीप्यमानं हुता-
शनमिवैधितम् । राक्षसाधिपतिः श्रीमान्मणिमान्नाम मे सखा
॥ ५६ ॥ मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च पार्थिव । न्यष्ठीव-
दाकाशगतो महर्षेस्तस्य मूर्द्धनि ॥ ५७ ॥ स कोपान्मामुवाचेदं
दिशः सर्वा दहन्निव । मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव
॥ ५८ ॥ धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर । तस्मात् सहैभिः
सैन्यैस्ते वधं प्राप्स्यति मानुषात् ॥ ५९ ॥ त्वञ्चाप्येभिर्हतैः सैन्यैः
क्लेशं प्राप्येह दुर्मतिः । तमेव मानुषं दृष्ट्वा किल्विषाद्विप्रमोक्ष्यसे
॥ ६० ॥ सैन्यानान्तु तवैतेषां पुत्रपौत्रं बलान्वितम् । न शापं
प्राप्स्यते घोरं तत्तवाज्ञां करिष्यति ॥ ६१ ॥ एष शापो मया
प्राप्तः प्राक् तस्मादृषिसत्तमात् । स भीमेन महाराज भ्राता तव
विमोचितः ॥ ६२ ॥

इति आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि कुवेरदर्शने
एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

---

धनद उवाच। युधिष्ठिर धृतिर्दाक्ष्यं देशकालपराक्रमाः।
लोकतन्त्रविधानानामेष पञ्चविधो विधिः॥ १॥ धृतिमन्तश्च
दक्षाश्च स्वे स्वे कर्माणि भारत। पराक्रमविधानज्ञा नराः कृत-
युगेऽभवन्॥ २॥ धृतिमान् देशकालज्ञः सर्वधर्मविधानवित्।
क्षत्रियः क्षत्रियश्रेष्ठ प्रशास्ति पृथिवीं चिरम्॥ ३॥ य एवं वर्त्तते
पार्थ पुरुषः सर्वकर्मसु। स लोके लभते वीर यशः प्रेत्य च
सद्गतिम्॥ ४॥ देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम्।
सम्प्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह॥ ५॥ यस्तु केवल-
संरम्भात् प्रपातं न निरीक्षते। पापात्मा पापबुद्धिर्यः पापमेवा-
नुवर्त्तते॥ ६॥ कर्मणामविभागज्ञः प्रेत्य चेह विनश्यति।
अकालज्ञः सुदुर्मेधाः कार्य्याणामविशेषवित्॥ ७॥ वृथाचार-
समारम्भः प्रेत्य चेह विनश्यति। साहसे वर्त्तमानानां निकृतीनां
दुरात्मनाम्॥ ८॥ सर्वसामर्थ्यलिप्सूनां पापो भवति निश्चयः।
अधर्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः॥ ९॥ निर्भयो भीमसेनो-
ऽयं तं शाधि पुरुषर्षभ। आर्ष्टिषेणस्य राजर्षेः प्राप्य भूयस्त्वमा-
श्रमम्॥ १०॥ तामिस्रं प्रथमं पक्षं वीतशोकभयो वस।
अलकाः सह गन्धर्वैर्यक्षाश्च सह किन्नरैः॥ ११॥ मन्नियुक्ता
मनुजेन्द्र सर्वे च गिरिवासिनः। रक्षिष्यन्ति महाबाहो सहितं
द्विजसत्तमैः॥ १२॥ साहसादनुसम्प्राप्तः प्रतिबुध्य वृकोदरः।
वार्य्यतां साध्वयं राजंस्त्वया धर्मभृतां वर॥ १३॥ अतः परञ्च
वो राजन् द्रक्ष्यन्ति वनगोचराः। उपस्थास्यन्ति वो राजन्
रक्षिष्यन्ते च वः सदा॥ १४॥ तथैव चान्नपानानि स्वादूनि
च बहूनि च। आहरिष्यन्ति मत्प्रेष्याः सदा वः पुरुषर्षभाः॥ १५॥
यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः। धर्मस्य त्वं यथा
तात योगोत्पन्नो निजः सुतः॥ १६॥ आत्मजावात्मसम्पन्नौ यमौ
चोभौ यथाश्विनोः रक्ष्यास्तद्वन्ममापीह यूयं सर्वे युधिष्ठिर॥ १७॥

अर्थतत्त्वविधानज्ञः सर्व्वधर्म्मविधानवित्। भीमसेनादवरजः
फाल्गुनः कुशली दिवि ॥ १८ ॥ याः काश्चन मता लोके स्वर्ग्याः
परमसम्पदः। जन्मप्रभृति ताः सर्व्वाः स्थितास्तात धनञ्जये ॥१९॥
दमो दानं बलं बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम्। एतान्यपि महा-
सत्त्वे स्थितान्यमिततेजसि ॥ २० ॥ न मोहात् कुरुते जिष्णुः
कर्म्म पाण्डव गर्हितम्। न पार्थस्य मृषोक्तानि कथयन्ति नरा
नृषु ॥ २१ ॥ स देवपितृगन्धर्व्वैः कुरूणां कीर्त्तिवर्द्धनः। मानितः
कुरुतेऽस्त्राणि शक्रसद्मनि भारत ॥ २२ ॥ योऽसौ सर्व्वान्महीपालान्
धर्म्मेण वशमानयत्। स शान्तनुर्महातेजाः पितुस्तव
पितामहः ॥ २३ ॥ प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना।
सम्यक् चासौ महावीर्य्यः कुलधूर्य्येण पार्थिवः ॥ २४ ॥ पितॄन्
देवानृषीन् विप्रान् पूजयित्वा महातपाः। सप्त मुख्यान्महा-
मेधानाहरद्यमुनां प्रति ॥ २५ ॥ अधिराजः स राजंस्त्वां शान्तनुः
प्रपितामहः। स्वर्गजित् शक्रलोकस्थः कुशलं परिपृच्छति ॥२६॥

वैशम्पायन उवाच। एतच्छ्रुत्वा तु वचनं धनदेन प्रभाषितम्।
पाण्डवाश्च ततस्तेन बभूवुः संप्रहर्षिताः ॥ २७ ॥ ततः शक्तिं
गदां खड्गं धनुश्च भरतर्षभः। प्राध्वं कृत्वा नमश्चक्रे कुबेराय
वृकोदरः ॥ २८ ॥ ततोऽब्रवीद्धनाध्यक्षः शरण्यः शरणागतम्।
मानहा भव शत्रूणां सुहृदां नन्दिवर्द्धनः ॥ २९ ॥ स्वेषु वेश्मसु
रम्येषु वसतामित्रतापनाः। कामान्न परिहास्यन्ति यक्षा वो
भरतर्षभाः ॥ ३० ॥ शीघ्रमेव गुडाकेशः कृतास्त्रः पुनरेष्यति।
साक्षान्मघवता सृष्टः संप्राप्स्यसि धनञ्जयः ॥ ३१ ॥ एवमुत्तम-
कर्म्माणमनुशिष्य युधिष्ठिरम्। अस्तं गिरिवरश्रेष्ठं प्रययौ गुह्यका-
धिपः ॥ ३२ ॥ तं परिस्तोमसङ्कीर्णैर्नानारत्नविभूषितैः। याने-
रनुययुर्यक्षा राक्षसाश्च सहस्रशः ॥ ३३ ॥ पक्षिणामिव निर्घोषो
कुवेरसदनं प्रति। बभूव परमाश्वानामैरावतपथे यथा ॥ ३४ ॥

ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः। प्रकर्षन्त इवाभ्राणि पिबन्त इव मारुतम् ॥ ३५ ॥ ततस्तानि शरीराणि गतसत्त्वानि रक्षसाम्। अपाकृष्यन्त शैलाग्राद्धनाधिपतिशासनात् ॥ ३६ ॥ तेषां हि शापकालः स कृतोऽगस्त्येन धीमता। समरे निहतास्तस्माच्छापस्यान्तोऽभवत्तदा ॥ ३७ ॥ पाण्डवाश्च महात्मानस्तेषु वेश्मसु ताः क्षपाः। सुखमूषुर्गतोद्वेगाः पूजिताः सर्वराक्षसैः ॥३८॥

इति आरण्यपर्वणि यक्षयुद्धपर्वणि कुवेरवाक्ये
द्विषष्ट्यधिकशततोऽध्यायः ॥ १६२ ॥

---

वैशम्पायन उवाच। ततः सूर्योदये धौम्यः कृताह्निकमरिन्दम। आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्त्तत ॥ १ ॥ तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव ह। ततः प्राञ्जलयः सर्वे ब्राह्मणांस्तानपूजयन् ॥ २ ॥ ततो युधिष्ठिरं धौम्यो गृहीत्वा दक्षिणे करे। प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत् ॥ ३ ॥ असौ सागरपर्य्यन्तां भूमिमावृत्य तिष्ठति। शैलराजो महाराज मन्दरोऽतिविराजते ॥ ४ ॥ इन्द्रवैश्रवणावेतां दिशं पाण्डव रक्षतः। पर्वतैश्च वनान्तैश्च काननैश्चैव शोभिताम् ॥ ५ ॥ एतदाहुर्महेन्द्रस्य राज्ञो वैश्रवणस्य च। ऋषयः सर्वधर्मज्ञाः सद्म तात मनीषिणः ॥ ६ ॥ ततश्चोद्यन्तमादित्यमुपतिष्ठन्ति वै द्विजाः। ऋषयश्चापि धर्मज्ञाः सिद्धाः साध्याश्च देवताः ॥ ७ ॥ यमस्तु राजा धर्मज्ञः सर्वप्राणभृतां प्रभुः। प्रेतसत्त्वगतिं ह्येनां दक्षिणामाश्रितो दिशम् ॥ ८ ॥ एतत् संयमनं पुण्यमतीवाद्भुतदर्शनम्। प्रेतराजस्य भवनमृद्ध्या परमया युतम् ॥ ९ ॥ तं प्राप्य सविता राजन् सत्येन प्रतितिष्ठति। अस्तं पर्वतराजानमेतमाहुर्मनीषिणः ॥ १० ॥ एनं पर्वतराजानं समुद्रञ्च महोदधिम्। आव-

सन् वरुणो राजा भूतानि परिरक्षति ॥ ११ ॥ उदीचीं दीपय-
न्नेष दिशं तिष्ठति वीर्य्यवान्। महामेरुर्महाभागः शिवो ब्रह्म-
विदां गतिः ॥ १२ ॥ यस्मिन् ब्रह्मसदश्चैव भूतात्मा चावतिष्ठते।
प्रजापतिः सृजन् सर्वं यत्किञ्चिज्जङ्गमागमम् ॥ १३ ॥ यानाहु-
र्ब्रह्मणः पुत्रान् मानसान् दक्षसप्तमान्। तेषामपि महामेरुः
शिवं स्थानमनामयम् ॥ १४ ॥ अत्रैव प्रतितिष्ठन्ति पुनरवोद-
यन्ति च। सप्त देवर्षयस्तात वशिष्ठप्रमुखास्तदा ॥ १५ ॥ देशं
विरजसं पश्य मेरोः शिखरमुत्तमम्। यत्रात्मतृप्तैरध्यास्ते देवैः
सह पितामहः ॥ १६ ॥ यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम्।
अनादिनिधनं देवं प्रभुं नारायणं परम् ॥ १७ ॥ ब्रह्मणः सद-
नात्तस्य परं स्थानं प्रकाशते। देवापि यं न पश्यन्ति सर्वतेजो-
मयं शुभम् ॥ १८ ॥ अत्यर्कानलदीप्तन्तत् स्थानं विष्णोर्महा-
त्मनः। स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः ॥ २९ ॥
प्राच्यां नारायणस्थानं मेरावति विराजते। यत्र भुतेश्वरस्तात
सर्वप्रकृतिरात्मभूः ॥ ३० च भासयन् सर्वभूतानि सुश्रियाभि-
विराजते। नात्र ब्रह्मर्षयस्तात कुत एव महर्षयः ॥ ३१ ॥ प्राप्नु-
वन्ति गतिं ह्येतां यतीनां कुरुसत्तम। न तं ज्योतींषि सर्वाणि
प्राप्य भासन्ति पाण्डव ॥ ३२ ॥ स्वयं प्रभुरचिन्त्यात्मा तत्र ह्यति-
विराजते। यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ॥ ३३ ॥
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः। योगसिद्धा महा-
त्मानस्तमोमोहविवर्जिताः ॥ ३४ ॥ तत्र गत्वा पुनर्नेमं लोक-
मायान्ति भारत। स्वयम्भुवं महात्मानं देवदेवं सनातनम् ॥३५॥
स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययम्। ईश्वरस्य सदा ह्येतत्
प्रणमात्र युधिष्ठिर ॥ ३६ ॥ एनं त्वहरहर्मेरुं सूर्य्याचन्द्रमसौ
ध्रुवम्। प्रदक्षिणमुपावृत्य कुरुतः कुरुनन्दन ॥ ३७ ॥ ज्योतींषि
चाप्यशेषेण सर्वाण्यनघ सर्वतः। परियान्ति महाराज गिरि-

राजं प्रदक्षिणम् ॥ ३८ ॥ एवं ज्योतींषि सर्वाणि प्रकर्षन् भगवानपि। कुरुते वितमस्कर्मा आदित्योऽपि प्रदक्षिणम् ॥ ३९ ॥ अस्तं प्राप्य ततः सन्ध्यामतिक्रम्य दिवाकरः। उदीचीं भजते काष्ठां दिशमेष विभावसुः ॥ ४० ॥ स मेरुमनुवृत्तः सन् पुनर्गच्छति पाण्डव। प्राङ्मुखः सविता देवः सर्वभूतहिते रतः ॥ ४१ ॥ स मासं विभजन् काले बहुधा पर्वसन्धिषु। तथैव भगवान् सोमो नक्षत्रैः सह गच्छति ॥ ४२ ॥ एवमेष ह्यतिक्रम्य महामेरुमतन्द्रितः। भावयन् सर्वभूतानि पुनर्गच्छति मन्दरम् ॥ ४३ ॥ तथा तमिस्रहा देवो मयूखैर्भासयन् जगत्। मार्गमेतमसम्बाधमादित्यः परिवर्त्तते ॥ ४४ ॥ सिसृक्षुः शिशिराण्येष दक्षिणां भजते दिशम्। ततः सर्वाणि भूतानि कालोऽभ्यर्च्छति शैशिरः ॥ ४५ ॥ स्थावराणाञ्च भूतानां जङ्गमानाञ्च तेजसा। तेजांसि समुपादत्ते निवृत्तः स विभावसुः ॥ ४६ ॥ ततः स्वेदक्लमौ तन्द्रीर्ग्लानिश्च भजते नरान्। प्राणिभिः सततं स्वप्नो ह्यभीक्ष्णञ्च निषेव्यते ॥ ४७ ॥ एवमेतमनिर्देश्यं मार्गमावृत्य भानुमान्। पुनः सृजति वर्षाणि भगवान् भावयन् प्रजाः ॥ ४८ ॥ वृष्टिमारुतसन्तापैः सुखैः स्थावरजङ्गमान्। वर्द्धयन् सुमहातेजाः पुनः प्रतिनिवर्त्तते ॥ ४९ ॥ एवमेष चरन् पार्थ कालचक्रमतन्द्रितः। प्रकर्षन् सर्वभूतानि सविता परिवर्त्तते ॥ ५० ॥ सन्तता गतिरेतस्य नैष तिष्ठति पाण्डव। आदायैव तु भूतानां तेजो विसृजते पुनः ॥ ५१ ॥ विभजन् सर्वभूतानामायुः कर्म च भारत। अहोरात्रं कलाः काष्ठाः सृजत्येष सदा विभुः ॥ ५२ ॥

इति आरण्यपर्वणि यक्षयुद्धपर्वणि मेरुदर्शने
त्रिषष्ट्यधिकशततमोऽध्यायः॥ १६३ ॥

---

वैशम्पायन उवाच। तस्मिन्नगेन्द्रे वसताञ्च तेषां महात्मनां सद्व्रतमास्थितानाम् । रतिः प्रमोदश्च बभूव तेषामाकांक्षतां दर्शनमर्जुनस्य ॥ १ ॥ तान् वीर्य्ययुक्तान् सुविशुद्धकामांस्तेजस्विनः सत्यधृतिप्रधानान्। संप्रीयमाणा बहवोऽभिजग्मुर्गन्धर्व्वसङ्घाश्च महर्षयश्च ॥ २ ॥ तं पादपैः पुष्पधरैरुपेतं नगोत्तमं प्राप्य महारथानाम् । मनःप्रसादः परमो बभूव यथा दिवं प्राप्य मरुद्गणानाम् ॥ ३ ॥ मयूरहंसस्वननादितानि पुष्पोपकीर्णानि महाचलस्य। शृङ्गाणि सानूनि च पश्यमाना गिरेः परं हर्षमवाप्य तस्थुः ॥ ४ ॥ साक्षात् कुवेरेण कृताश्च तस्मिन्नगोत्तमे संवृतकूलरोधसः । कादम्बकारण्डवहंसजुष्टाः पद्माकुलाः पुष्करिणीरपश्यन् ॥ ५ ॥ क्रीड़ाप्रदेशांश्च समृद्धरूपान् सुचित्रमाल्यावृतजातशोभान् । मणिप्रकीर्णांश्च मनोरमांश्च यथा भवेयुर्धनदस्य राज्ञः ॥ ६ ॥ अनेकवर्णैश्च सुगन्धिभिश्च महाद्रुमैः सन्ततमभ्रजालैः । तपःप्रधानाः सततं चरन्तः शृङ्गं गिरेश्चिन्तयितुं न शेकुः ॥ ७ ॥ स्वतेजसा तस्य नगोत्तमस्य महौषधीनाञ्च तथा प्रभावात् । विभक्तभावो न बभूव कश्चिदहो निशानां पुरुषप्रवीर ॥ ८ ॥ यमास्थितः स्थावरजङ्गमानि विभावसुर्भावयतेऽमितौजाः । तस्योदयञ्चास्तमनञ्च वीरास्तत्र स्थितास्ते ददृशुर्नृसिंहाः ॥ ९ ॥ रवेस्तमिस्रागमनिर्गमांस्ते तथोदयञ्चास्तमनञ्च वीराः । समावृताः प्रेक्ष्य तमोनुदस्य गभस्तिजालैः प्रदिशो दिशश्च ॥ १० ॥ स्वाध्यायवन्तः सततक्रियाश्च धर्मप्रधानाश्च शुचिव्रताश्च । सत्ये स्थितास्तस्य महारथस्य सत्यव्रतस्यागमनप्रतीक्षाः ॥ ११ ॥ इहैव हर्षोऽस्तु समागतानां क्षिप्रं कृतास्त्रेण धनञ्जयेन । इति ब्रुवन्तः परमाशिषस्ते पार्थास्तपोयोगपरा बभुवुः ॥ १२ ॥ दृष्ट्वा विचित्राणि गिरौ वनानि किरीटिनं चिन्तयतामभीक्ष्णम् । बभूव रात्रिर्दिवसश्च तेषां सम्वत्सरेणैव समानरूपः ॥ १३ ॥

यदैव धौम्यानुमते महात्मा कृत्वा जटां प्रव्रजितः स जिष्णुः।
तदैव तेषां न बभूव हर्षः कुतो रतिस्तद्गतमानसानाम्॥ १४॥
भ्रातुर्नियोगात्तु युधिष्ठिरस्य वनादसौ वारणमत्तगामी। यत्
काम्यकात् प्रव्रजितः स जिष्णुस्तदैव ते शोकहता बभूवुः॥ १५॥
तथैव तं चिन्तयतां सिताश्वमस्त्रार्थिनं वासवमभ्युपेतम्। मासोऽथ
कृच्छ्रेण तदा व्यतीतस्तस्मिन्नगे भारत भारतानाम्॥ १६॥
उषित्वा पञ्चवर्षाणि सहस्राक्षनिवेशने। अवाप्य दिव्यान्यस्त्राणि
सर्वाणि विबुधेश्वरात्॥ १७॥ आग्नेयं वारुणं सौम्यं वायव्य-
मथ वैष्णवम्। ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः॥ १८॥
यमस्य धातुः सवितुस्त्वष्टुर्वैश्रवणस्य च। तानि प्राप्य सहस्राक्षा-
दभिवाद्य शतक्रतुम्॥ १९॥ अनुज्ञातस्तदा तेन कृत्वा चापि
प्रदक्षिणम्। आगच्छदर्जुनः प्रीतः प्रहृष्टो गन्धमादनम्॥ २०॥

इति आरण्यपर्वणि यक्षयुद्धपर्वणि महर्षिगणदर्शने
चतुःषष्ट्यधिकशततमोऽध्यायः॥ १६४॥

---

वैशम्पायन उवाच। ततः कदाचिद्धरिसंप्रयुक्तं महेन्द्रवाहं
सहसोपयातम्। विद्युत्प्रभं प्रेक्ष्य महारथानां हर्षोऽर्जुनं चिन्त-
यतां बभूव॥ १॥ स दीप्यमानः सहसान्तरीक्षं प्रकाशयन्
मातलिसंगृहीतः। बभौ महोल्केव घनान्तरस्था शिखेव चाग्ने-
र्ज्वलिता विधूमा॥ २॥ तमास्थितः संददृशे किरीटी स्रग्वी
नवान्याभरणानि बिभ्रत्। धनञ्जयो वज्रधरप्रभावः श्रिया
ज्वलन् पर्वतमाजगाम॥ ३॥ स शैलमासाद्य किरीटमाली महे-
न्द्रवाहादवरुह्य तस्मात्। धौम्यस्य पादावभिवाद्य धीमानजात-
शत्रोस्तदनन्तरञ्च॥ ४॥ वृकोदरस्यापि च वन्द्य पादौ माद्री-

सुताभ्यामभिवादितश्च। समेत्य कृष्णां परिसान्त्व चैनां प्रह्वो-ऽभवद्भ्रातुरुपह्वरे सः ॥ ५ ॥ बभूव तेषां परमप्रहर्षस्तेनाप्रमेयेण समागतानाम्। स चापि तान् प्रेच्य किरीटमाली ननन्द राजा-नमभिप्रशंसन ॥ ६ ॥ यमास्थितः सप्त जघान पूगान् दितेः सुतानां नमुचेर्निहन्ता। तमिन्द्रवाहं समुपेत्य पार्थाः प्रदक्षिणं चक्रुरदीनसत्त्वाः ॥ ७ ॥ ते मातलेश्चक्रुरतीव हृष्टाः सत्कारमग्र्यं सुरराजतुल्यम्। सर्वान् यथावच्च दिवौकसस्ते पप्रच्छुरेनं कुरु-राजपुत्राः ॥ ८ ॥ तानप्यसौ मातलिरभ्यनन्दत् पितेव पुत्रा-ननुशिष्य पार्थान्। ययौ रथेनाप्रतिमप्रभेण पुनः सकाशं त्रिदिवेश्वरस्य ॥ ९ ॥ गते तु तस्मिन्नरदेववर्य्ये शक्रात्मजः शक्र-रिपुप्रमाथी। शक्रेण दत्तानि ददौ महात्मा महाधनान्युत्तम-रूपवन्ति ॥ १० ॥ दिवाकराभाणि विभूषणानि प्रियः प्रियायै सुतसोममात्रे। ततः स तेषां कुरुपुङ्गवानां तेषाञ्च सूर्य्याग्नि-समप्रभाणाम् ॥ ११ ॥ विप्रर्षभाणामुपविश्य मध्ये सर्वं यथावत् कथयाम्बभूव। एवं मयास्त्राण्युपशिक्षितानि शक्राच्च वाताच्च शिवाच्च साक्षात् ॥ १२ ॥ तथैव शीलेन समाधिनाथ प्रीताः सुरा मे सहिताः सहेन्द्राः। संक्षेपतो वै स विशुद्धकर्मा तेभ्यः समाख्याय-दिवि प्रवासम्। माद्रीसुताभ्यां सहितः किरीटी सुष्वाप तामा-वसतिं प्रतीतः ॥ १३ ॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि अर्जुनागमने पञ्चषष्ट्यधिकशततोऽध्यायः ॥ १६५ ॥

---

वैशम्पायन उवाच। ततो रजन्यां व्युष्टायां धर्मराजं युधि-ष्ठिरम्। भ्रातृभिः सहितः सर्वैरवन्दत धनञ्जयः ॥ १ ॥ एत-स्मिन्नेव काले तु सर्ववादित्रनिस्वनः। बभूव तुमुलः शब्दस्त्वन्त-

रोहे दिवौकसाम् ॥ २ ॥ रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ।
पृथग्व्यालमृगाणाञ्च पक्षिणानिव सर्वशः ॥ ३ ॥ तं समन्तादनु-
ययुर्गन्धर्वाप्सरसां गणाः । विमानैः सूर्य्यसङ्काशैर्देवराजमरि-
न्दमम् ॥ ४ ॥ ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम् । मेघ-
नादिनमारुह्य श्रिया परमया ज्वलन् ॥ ५ ॥ पार्थानभ्याजगा-
माथ देवराजः पुरन्दरः । आगत्य च सहस्राक्षो रथादवरुरोह
वै ॥ ६ ॥ तं दृष्ट्वैव महात्मानं धर्मराजो युधिष्ठिरः । भ्रातृभिः
सहितः श्रीमान् देवराजमुपागमत् ॥ ७ ॥ पूजयामास वै चाथ
विधिवद्भूरिदक्षिणः । यथार्हममितात्मानं विधिदृष्टेन कर्मणा
॥ ८ ॥ धनञ्जयश्च तेजस्वी प्रणिपत्य पुरन्दरम् । भृत्यवत् प्रणत-
स्तस्थौ देवराजसमीपतः ॥ ९ ॥ आघ्राय तं महातेजाः कुन्तीपुत्रो
युधिष्ठिरः । धनञ्जयमभिप्रेक्ष्य विनीतं स्थितमन्तिके ॥ १० ॥
जटिलं देवराजस्य तपोयुक्तमकल्मषम् । हर्षेण महताविष्टः
फाल्गुनस्याथ दर्शनात् ॥ ११ ॥ बभूव परमप्रीतो देवराजञ्च
पूजयन् । तं तथादीनमनसं राजानं हर्षसंप्लुतम् ॥ १२ ॥ उवाच
वचनं धीमान् देवराजः पुरन्दरः । त्वमिमां पृथिवीं राजन्
प्रशासिष्यसि पाण्डव । स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनरा-
श्रमम् ॥ १३ ॥ अस्त्राणि लब्धानि च पाण्डवेन सर्वाणि मत्तः
प्रयतेन राजन् । कृतोप्रयश्चास्मि धनञ्जयेन जेतुं न शक्यस्त्रिभि-
रेष लोकैः ॥ १४ ॥ एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरम् ।
जगाम त्रिदिवं हृष्टः स्तूयमानो महर्षिभिः ॥ १५ ॥ धनेश्वरगृह-
स्थानां पाण्डवानां समागमम् । शक्रेण य इदं विद्वानधीयीत
समाहितः ॥ १६ ॥ सम्वत्सरं ब्रह्मचारी नियतः संशितव्रतः ।
स जीवेद्धि निराबाधः ससुखी शरदां शतम् ॥ १७ ॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि इन्द्रागमने
षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

वैशम्पायन उवाच । यथागतं गते शक्रे भ्रातृभिः सह सङ्गतः ।
कृष्णया चैव वीभत्सुर्धर्म्मपुत्रमपूजयत् ॥ १ ॥ अभिवादयमानं
तं मूर्द्ध्न्युपाघ्राय पाण्डवम् । हर्षगद्गदया वाचा प्रहृष्टोऽर्ज्जुनमब्र-
वीत् ॥ २ ॥ कथमर्ज्जुन कालोऽयं स्वर्गे व्यतिगतस्तव । कथ-
ञ्चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ ३ ॥ सम्यग्वा ते गृही-
तानि कच्चिदस्त्राणि पाण्डव । कच्चित् सुराधिपः प्रीतो रुद्रो
वास्त्राण्यदात्तव ॥ ४ ॥ यथा दृष्टश्च ते शक्रो भगवान् वा पिनाक-
धृक् । यथैवास्त्राण्यवाप्तानि यथैवाराधितश्च ते ॥ ५ ॥ यथोक्तवा-
स्त्वां भगवाञ्छतक्रतुररिन्दम । कृतप्रियस्त्वयास्मीति तस्य ते किं
प्रियं कृतम् ॥ ६ ॥ एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ।
यथा तुष्टो महादेवो देवराजस्तथानघ ॥ ७ ॥ यच्चापि वज्र-
पाणेस्तु प्रियं कृतमरिन्दम । एतदाख्याहि मे सर्व्वमखिलेन
धनञ्जय ॥ ८ ॥

अर्ज्जुन उवाच । शृणु हन्त महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवन्तञ्च शङ्करम् ॥ ९ ॥ विद्यामधीत्य तां
राजंस्त्वयोक्तामरिमर्द्दन । भवता च समादिष्टस्तपसे प्रस्थितो
वनम् ॥ १० ॥ भृगुतुङ्गमथो गत्वा काम्यकादास्थितस्तपः । एक-
रात्रोषितः कञ्चिदपश्यं ब्राह्मणं पथि ॥ ११ ॥ स मामपृच्छत
कौन्तेय क्वासि गन्ता ब्रवीहि मे । तस्मा अवितथं सर्व्वमब्रवं कुरु-
नन्दन ॥ १२ ॥ स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम ।
अपूजयत मां राजन् प्रीतिमांश्चाभवन्मयि ॥ १३ ॥ ततो माम-
ब्रवीत् प्रीतस्तप आतिष्ठ भारत । तपस्यन्नचिरेण त्वं द्रक्ष्यसे
विबुधाधिपम् ॥ १४ ॥ ततोऽहं वचनात्तस्य गिरिमारुह्य शैशि-
रम् । ततोऽतप्यं महाराज मासं मूलफलाशनः ॥ १५ ॥ द्वितीय-
श्चापि मे मासो जलं भक्षयतो गतः । निराहारस्तृतीयेऽथ मासे
पाण्डवनन्दन ॥ ॥ १६ ॥ ऊर्द्ध्ववाहुश्चतुर्थन्तु मासमस्मि स्थितस्तदा ।

न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ १७ ॥ पञ्चमे त्वथ संप्राप्ते प्रथमे दिवसे गते । वराहसंस्थितं भूतं मत्समीपं समागमत् ॥ १८ ॥ निघ्नन् प्रोथेन पृथिवीं विलिखंश्चरणैरपि । संमार्जन् जठरेणोर्वीं विवर्त्तंश्च मुहुर्मुहुः ॥ १९ ॥ अनु तस्यापरं भूतं महत् कैरातसंस्थितम् । धनुर्बाणासिमत् प्राप्तं स्त्रीगणानुगतं तदा ॥ २० ॥ ततोऽहं धनुरादाय तथाक्षय्ये महेषुधी । अताड़यं शरेणाथ तद्भूतं लोमहर्षणम् ॥ २१ ॥ युगपत्तं किरातस्तु विकृष्य बलवद्धनुः । अभ्याजघ्ने दृढतरं कम्पयन्निव मे मनः ॥ २२ ॥ स तु मामब्रवीद्राजन् मम पूर्वपरिग्रहः । मृगयाधर्ममुत्सृज्य किमर्थं ताड़ितस्त्वया ॥ २३ ॥ एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव । स धनुष्मान् महाकायस्ततो मामभ्यभाषत ॥ २४ ॥ ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः । तञ्चाहं शरवर्षेण महता समवाकिरम् ॥ २५ ॥ ततः शरैर्दीप्तमुखैर्यन्त्रितैरनुमन्त्रितैः । प्रत्यविध्यमहं तन्तु वज्रैरिव शिलोच्चयम् ॥ २६ ॥ तस्य तच्छतधा रूपमभवच्च सहस्रधा । तानि चास्य शरीराणि शरैरहमताड़यम् ॥ २७ ॥ पुनस्तानि शरीराणि एकीभूतानि भारत । अदृश्यन्त महाराज तान्यहं व्यधमं पुनः ॥ २७ ॥ अणुर्बृहच्छिरा भूत्वा बृहच्चाणुशिराः पुनः । एकीभूतस्तदा राजन् सोऽभ्यवर्त्तत मां युधि ॥ २८ ॥ यदाभिभवितुं बाणैर्नं च शक्नोमि तं रणे । ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ २९ ॥ न चैनमशकं हन्तुं तदद्भुतमिवाभवत् । तस्मिन् प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥ ३० ॥ भूय एव महाराज सविशेषमहन्ततः । अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ ३१ ॥ स्थूणाकर्णमयो जालं शरवर्षमयोल्बणम् । शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययाम् ॥ ३२ ॥ जग्रास प्रसभं तानि सर्वाण्यस्त्राणि मे नृप । तेषु सर्वेषु जग्धेषु ब्रह्मास्त्रमहमादिशं ॥ ३३ ॥

ततः प्रज्वलितैर्वाणैः सर्व्वतः सोपचियते । उपचीयमानश्च मया महास्त्रेण व्यवर्द्धत ॥ ३४ ॥ ततः सन्तापिता लोका मत्प्रसूतेन तेजसा । क्षणेन हि दिशः खञ्च सर्व्वतो हि विदीपितम् ॥ ३५ ॥ तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत् । ब्रह्मास्त्रे तु हते राजन् भयं मां महदाविशत् ॥ ३६ ॥ ततोऽहं धनुरादाय तथाक्षय्ये महेषुधी । सहसाभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ॥ ३७ ॥ हतेष्वस्त्रेषु सर्व्वेषु भक्षितेष्वायुधेषु च । मम तस्य च भूतस्य बाहुयुद्धमवर्त्तत ॥ ३८ ॥ व्यायामं मुष्टिभिः कृत्वा तलैरपि समागतैः । अपारयंश्च तद्भूतं निश्चेष्टमगमं महीम् ॥ ३९ ॥ ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत । सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ ४० ॥ एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमास्थितः । दिव्यमेव महाराज वसानोऽद्भुतमम्बरम् ॥ ४१ ॥ हित्वा किरातरूपञ्च भगवान् त्रिदशेश्वरः । स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ॥ ४२ ॥ अदृश्यत ततः साक्षाद्भगवान् गोवृषध्वजः । उमासहायो व्यालम्बबहुरूपः पिनाकधृक् ॥ ४३ ॥ स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् । शूलपाणिरथोवाच तुष्टोऽस्मीति परन्तपः ॥ ४४ ॥ ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ । प्रादान्ममैव भगवान् धारयस्वेति चाब्रवीत् ॥ ४५ ॥ तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते । मनोगतं वीर यत्ते तद्ब्रूहि वितराम्यहम् ॥ ४६ ॥ अमरत्वमपाहाय ब्रूहि यत्ते मनो गतम् । ततः प्राञ्जलिरेवाहमस्त्रेषु गतमानसः ॥ ४७ ॥ प्रणम्य मनसा शर्व्वं ततो वचनमाददे । भगवन्मे प्रसन्नश्चेदीप्सितोऽयं वरो मम ॥ ४८ ॥ अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् । ददानीत्येव भगवानब्रवीत्त्र्यम्बकश्च माम् ॥ ४९ ॥ रौद्रमस्त्रं मदीयं त्वामुपस्थास्यति पाण्डव । प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं महत् ॥ ५० ॥ उवाच च महादेवो दत्त्वा मेऽस्त्रं

सनातनम् । न प्रयोज्यं भवेदेतन्मानुषेषु कथञ्चन ॥ ५१ ॥ जगद्विनिर्द्दहेदेवमल्पतेजसि पातितम् । पीड्यमानेन बलवत् प्रयोज्यं स्याद्धनञ्जय ॥ ५२ ॥ अस्त्राणां प्रतिघाते च सर्वथैव प्रयोजयेत् । तदप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ॥ ५३ ॥ मूर्त्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे । उत्सादनममित्राणां परसेनानिकर्त्तनम् ॥ ५४ ॥ दुरासदं दुष्प्रसहं सुरदानवराक्षसैः । अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् । प्रेक्षतश्चैव मे देवस्तत्रैवान्तरधीयत ॥ ५५ ॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि अर्जुनयुधिष्ठिरसंवादे सप्तषष्ट्यधिकशततोऽध्यायः ॥ १६७ ॥

---

अर्जुन उवाच । ततस्तामवसं प्रीतो रजनीं तत्र भारत । प्रसादाद्देवदेवस्य त्र्यम्बकस्य महात्मनः ॥ १ ॥ व्युषितो रजनीं चाहं कृत्वा पौर्वाह्णिकीः क्रियाः । अपश्यन्तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा ॥ २ ॥ तस्मै चाहं यथावृत्तं सर्वमेव न्यवेदयम् । भगवन्तं महादेवं समेतोऽस्मीति भारत ॥ ३ ॥ स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः । दृष्टस्त्वया महादेवो यथा नान्येन केनचित् ॥ ४ ॥ समेत्य लोकपालैस्तु सर्वैर्वैवस्वतादिभिः । द्रष्टास्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति ॥ ५ ॥ एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः । आगच्छत् स यथाकामं ब्राह्मणः सूर्य्यसन्निभः ॥ ६ ॥ अथापराह्णे तस्याह्नः प्रावात् पुण्यः समीरणः । पुनर्नवमिमं लोकं कुर्वन्नपि सपत्नहन् ॥ ७ ॥ दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च । शैशिरस्य गिरेः पादे प्रादुरासन् समीपतः ॥ ८ ॥ वादित्राणि च दिव्यानि सुघोषाणि समन्ततः । स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः ॥ ९ ॥

गणाश्चाप्सरसां तत्र गन्धर्वाणां तथैव च । पुरस्ताद्देवदेवस्य जगुर्गीतानि सर्वशः ॥ १० ॥ मरुताञ्च गणास्तत्र देवयानैरुपागमन् । महेन्द्रानुचरा ये च ये च सद्मनिवासिनः ॥ ११ ॥ ततो मरुत्वान् हरिभिर्युक्तैर्वाहैः स्वलंकृतैः । शचीसहायस्तत्रायात् सह सर्वैस्तदामरैः ॥ १२ ॥ एतस्मिन्नेव काले तु कुवेरो नरवाहनः । दर्शयामास मां राजलक्ष्म्या परमया युतः ॥ १३ ॥ दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् । वरुणं देवराजञ्च यथास्थानमवस्थितम् ॥ १४ ॥ ते मामूचुर्महाराज सान्त्वयित्वा नरर्षभ । सव्यसाचिन्निरीक्षस्वास्माल्लोकपालानवस्थितान् ॥ १५ ॥ सुरकार्य्यार्थसिद्ध्यर्थं दृष्टवानसि शङ्करम् । अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः ॥ १६ ॥ ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् । प्रत्यगृह्णं तदास्त्राणि महान्ति विधिवद्विभो ॥ १७ ॥ गृहीतास्त्रस्ततो देवैरनुज्ञातोऽस्मि भारत । अथ देवा ययुः सर्वे यथागतमरिन्दम ॥ १८ ॥ मघवानपि देवेशो रथमारुह्य सुप्रभम् । उवाच भगवान् स्वर्गं गन्तव्यं फाल्गुन त्वया ॥ १९ ॥ पुरैवागमनादस्माद्वेदाहं त्वां धनञ्जय । अतः परं त्वहं वै त्वां दर्शये भरतर्षभ ॥ २० ॥ त्वया हि तीर्थेषु पुरा समाप्लवाः कृतोऽसकृत् । तपश्चेदं महत्तप्तं स्वर्गं गन्तासि पाण्डव ॥ २१ ॥ भूयश्चैव च तप्तव्यं तपश्चरणमुत्तमम् । स्वर्गं त्ववश्यं गन्तव्यं त्वया मधुनिसूदन ॥ २२ ॥ मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति । विदितस्त्वं हि देवानां मुनीनाञ्च महात्मनाम् ॥ २३ ॥ ततोऽहमब्रुवं शक्रं प्रसीद भगवन्मम । आचार्य्यं वरये त्वामस्त्रार्थं त्रिदशेश्वर ॥ २४ ॥

इन्द्र उवाच । क्रूरकर्मास्त्रवित्तात भविष्यसि परन्तप । यदर्थमस्त्राणीप्सुस्त्वं तं कामं पाण्डवाप्नुहि ॥ २५ ॥ ततोऽहमब्रवन्नाहं दिव्यान्यस्त्राणि शत्रुहन् । मानुषेषु प्रयोक्ष्यामि विनास्त्र-

प्रतिघातनात् ॥ २६ ॥ तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप । लोकांश्चास्त्रजितान् पश्चाल्लभेयं सुरपुङ्गव ॥ २७ ॥

इन्द्र उवाच । परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनञ्जय । ममात्मजस्य वचनं सूपपन्नमिदं तव ॥ २८ ॥ शिक्ष मे भवनं गत्वा सर्वाण्यस्त्राणि भारत । वायोरग्नेर्वसुभ्योऽपि वरुणात् समरुद्गणात् ॥ २९ ॥ साध्यं पैतामहञ्चैव गन्धर्वोरगरक्षसाम् । वैष्णवानि च सर्वाणि नैर्ऋतानि तथैव च ॥ ३० ॥ मद्गतानि च जानीहि सर्वास्त्राणि कुरूद्वह । एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत ॥ ३१ ॥ अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम् । दिव्यं मायामयं पुण्यं यत्तं मातलिना नृप ॥ ३२ ॥ लोकपालेषु यातेषु मामुवाचाथ मातलिः । द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ॥ ३३ ॥ संसिध्यस्व महाबाहो कुरु कार्य्यमनन्तरम् । पश्य पुण्यकृताल्लोकान् सशरीरो दिवं व्रज ॥ ३४ ॥ देवराजः सहस्राक्षस्त्वां दिदृक्षति भारत । इत्युक्तोऽहं मातलिना गिरिमामन्त्र्य शैशिरम् ॥ ३५ ॥ प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् । चोदयामास स हयान् मनोमारुतरंहसः ॥ ३६ ॥ मातलिर्हयतत्त्वज्ञो यथावद्भूरिदक्षिणः । अवैक्षत च मे वक्त्रं स्थितस्याथ स सारथिः ॥ ३७ ॥ तथा भ्रान्ते रथे राजन् विस्मितश्चेदमब्रवीत् । अत्यद्भुतमिदं त्वद्य विचित्रम्प्रतिभाति मे ॥ ३८ ॥ यदास्थितो रथं दिव्यं पदान्न चलितः पदम् । देवराजोऽपि हि मया नित्यमत्रोपलक्षितः ॥ ३९ ॥ विचलन् प्रथमोत्पाते हयानां भरतर्षभ । त्वं पुनः स्थित एवात्र रथे भ्रान्ते कुरूद्वह ॥ ४० ॥ अतिशक्रमिदं सर्वं तवेति प्रतिभाति मे । इत्युक्त्वाकाशमाविश्य मातलिर्विबुधालयान् ॥ ४१ ॥ दर्शयामास मे राजन् विमानानि च भारत । स रथो हरिभिर्युक्तो ह्यूर्द्ध्वमाचक्रमे ततः ॥ ४२ ॥ ऋषयो देवताश्चैव पूजयन्ति नरोत्तम । ततः

कामगमाल्लोकानपश्यं वै सुरर्षिणाम् ॥ ४३ ॥ गन्धर्वाप्सरसाञ्चैव प्रभावममितौजसाम्। नन्दनादीनि देवानां वनान्युपवनानि च ॥ ४४ ॥ दर्शयामास मे शीघ्रं मातलि शक्रसारथिः। ततः शक्रस्य भवनमपश्यममरावतीम् ॥ ४५ ॥ दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलंकृताम्। न तत्र सूर्य्यस्तपति न शीतोष्णे न च क्लमः ॥ ४६ ॥ न बाधते तत्र रजस्तत्रास्ति न जरा नृप। न तत्र शोको दैन्यं वा दौर्वल्यञ्चोपलक्ष्यते ॥ ४७ ॥ दिवौकसां महाराज न ग्लानिररिमर्दन। न क्रोधलोभौ तत्रास्तां सुरादीनां विशाम्पते ॥ ४८ ॥ नित्यं तुष्टाश्च ते राजन् प्राणिनः सुरवेश्मनि। नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ४९ ॥ पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः। शीतस्तत्र ववौ वायुः सुगन्धी जीवनः शुचिः ॥ ५० ॥ सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता। मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः ॥ ५१ ॥ विमानगामिनश्चात्र दृश्यन्ते बहवोऽम्बरे। ततोऽपश्यं वसून् रुद्रान् साध्यांश्च समरुद्गणान् ॥ ५२ ॥ आदित्यानश्विनौ चैव तान् सर्वान् प्रत्यपूजयम्। ते मां वीर्य्येण यशसा तेजसा च बलेन च ॥ ५३ ॥ अस्त्रैश्चाप्यन्वजानन्त संग्रामे विजयेन च। प्रविश्य तां पुरीं दिव्यां देवगन्धर्वपूजिताम् ॥ ५४ ॥ देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलिः। ददावर्द्धासनं प्रीतः शक्रो मे ददतांवरः ॥ ५५ ॥ बहुमानाच्च गात्राणि पस्पर्श मम वासवः। तत्राहं देवगन्धर्वैः सहितो भूरिदक्षिणैः ॥ ५६ ॥ अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत। विश्वावसोश्च वै पुत्रश्चित्रसेनोऽभवत् सखा ॥ ५७ ॥ स च गान्धर्वमखिलं ग्राहयामास मां नृप। तत्राहमवसं राजन् गृहीतास्त्रः सुपूजितः ॥ ५८ ॥ सुखं शक्रस्य भवने सर्वकामसमन्वितः। शृण्वन् वै गीतशब्दञ्च तूर्य्यशब्दञ्च पुष्कलम् ॥ ५९ ॥ पश्यंश्चाप्सरसः श्रेष्ठा नृत्यन्तीर्भरतर्षभ।

तत् सर्वमनवज्ञाय तथ्यं विज्ञाय भारत ॥ ६० ॥ अत्यर्थं प्रतिरुष्टाहमस्त्रेष्वेव व्यवस्थितः। ततोऽतुष्यत् सहस्राक्षस्तेन कामेन मे विभुः ॥ ६१ ॥ एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि। कृतास्त्रमतिविश्वस्तमथ मां हरिवाहनः ॥ ६२ ॥ संस्पृश्य मूर्द्धि पाणिभ्यामिदं वचनमब्रवीत्। न त्वमद्य युधा जेतुं शक्यः सुरगणैरपि ६३ ॥ किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः। अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा ॥ ६४ ॥ अथाब्रवीत् पुनर्देवः संप्रहृष्टतनूरुहः। अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति ॥ ६५ ॥ अप्रमत्तः सदा दक्षः सत्यवादी जितेन्द्रियः। ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह ॥ ६६ ॥ अस्त्राणि समवाप्तानि त्वया दश च पञ्च च। पञ्चभिर्विधिभिः पार्थ विद्यते न त्वया सम ॥ ६७ ॥ प्रयोगमुपसंहारमावृत्तिञ्च धनञ्जय। प्रायश्चित्तञ्च वेत्थ त्वं प्रतिघातञ्च सर्वशः ॥ ६८ ॥ तव गुर्वर्थकालोऽयं समुत्पन्नः परन्तप। प्रतिजानीष्व तं कर्त्तुं ततो वेत्स्याम्यहं परम ॥ ६९ ॥ ततोऽहमब्रवं राजन् देवराजमिदं वचः। विषह्यं यन्मया कर्त्तुं कृतमेव निबोध तत् ॥ ७० ॥ ततो मामब्रवीद्राजन् प्रहसन् बलवृत्रहा। नाविषह्यं तवाद्यास्ति त्रिषु लोकेषु किञ्चन ॥ ७१ ॥ निवातकवचा नाम दानवा मम शत्रवः। समुद्रकुक्षिमाश्रित्य दुर्गं प्रतिवसन्त्युत ॥ ७२ ॥ तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः। तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति ॥ ७३ ॥ ततो मातलिसंयुक्तं मयूरसमरोमभिः। हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम ॥ ७४ ॥ बबन्ध चैव मे मूर्द्धि किरीटमिदमुत्तमम्। स्वरूपसदृशञ्चैव प्रादादङ्गविभूषणम् ॥ ७५ ॥ अभेद्यं कवचञ्चेदं स्पर्शरूपवदुत्तमम्। अजरां ज्यामिमाञ्चापि गाण्डीवे समयोजयत् ॥ ७६ ॥ ततः प्रायामहन्तेन स्यन्दनेन विराजता। येनाजयद्देवपतिर्बलिं

वैरोचनिं पुरा ॥ ७७ ॥ ततो देवाः सर्व्व एव तेन घोषेण
बोधिता। मन्वाना देवराजं मां समाजग्मुर्विशाम्पते ॥ ७८ ॥
दृष्ट्वा च मामपृच्छन्त किङ्करिष्यसि फाल्गुन। तानब्रुवं यथाभूत-
मिदं कर्त्तास्मि संयुगे ॥ ७९ ॥ निवातकवचानान्तु प्रस्थितं मां
बधैषिणम्। निबोधत महाभागाः शिवश्चाशास्त मेऽनघाः ॥ ८० ॥
तुष्टुवुर्मां प्रसन्नास्ते यथा देवं पुरन्दरम्। रथेनानेन मघवान्
जितवान् शम्बरं युधि ॥ ८१ ॥ नमुचिं बलवृत्रौ च प्रह्लादन-
रकावपि। बहूनि च सहस्राणि प्रयुतान्यर्बुदान्यपि ॥ ८२ ॥
रथेनानेन दैत्यानां जितवान्मघवान् युधि। तमप्यनेन कौन्तेय
निवातकवचान्रणे ॥ ८३ ॥ विजेता युधि विक्रम्य पुरेव मघ-
वान् वशी। अयञ्च शङ्खप्रवरो येन जेतासि दानवान् ॥ ८४ ॥
अनेन विजिता लोकाः शक्रेणापि महात्मना। प्रदीयमानं देवैस्तं
देवदत्तं जलोद्भवम् ॥ ८५ ॥ प्रत्यगृह्णं जयायैनं स्तूयमान-
स्तदामरैः। सशङ्खी कवची बाणी प्रगृहीतशरासनः। दानवा-
लयमत्युग्रं प्रयातोऽस्मि युयुत्सया ॥ ८६ ॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि अर्जुनवाक्ये
अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

अर्जुन उवाच। ततोऽहं स्तूयमानस्तु तत्र तत्र महर्षिभिः।
अपश्यमुदधिं भीममपाम्पतिमथाव्ययम् ॥ १ ॥ फेनवत्यः प्रकी-
र्णाश्च संहताश्च समुत्थिताः। ऊर्मयश्चात्र दृश्यन्ते वल्गन्त इव
पर्वताः ॥ २ ॥ नावः सहस्रशस्तत्र रत्नपूर्णाः समन्ततः। तिमि-
ङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः ॥ ३ ॥ मकराश्चात्र
दृश्यन्ते जले मग्ना इवाद्रयः। शङ्खानाञ्च सहस्राणि मग्नान्यप्सु
समन्ततः ॥ ४ ॥ दृश्यन्ते स्म यथा रात्रौ तारास्त्वभ्रसंवृताः।

तथा सहस्रशस्तत्र रत्नसंघाः प्लवन्त्युत ॥ ५ ॥ वायुश्च घूर्णते भीमस्तदद्भुतमिवाभवत्। तमुदीच्य महावेगं सर्वाम्भोनिधिमुत्तमम् ॥ ६ ॥ अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात्। तत्रैव मातलिस्तूर्णं निपत्य पृथिवीतले ॥ ७ ॥ रथं तन्तु समाश्लिष्य प्राद्रवद्रथयोगवित्। त्रासयन्रथघोषेण तत् पुरं समुपाद्रवत् ॥ ८ ॥ रथघोषन्तु तं श्रुत्वा स्तनयित्नोरिवाम्बरे मन्वाना देवराजं मामाविग्ना दानवाभवन् ॥ ९ ॥ सर्वे संभ्रान्तमनसः शरचापधराः स्थिताः। तथासिशूलपरशुगदामुषलपाणयः ॥ १० ॥ ततो द्वाराणि पिदधुर्दानवास्त्रस्तचेतसः। संविधाय पुरे रक्षां न स्म कश्चन दृश्यते ॥ ११ ॥ ततः शङ्खमुपादाय देवदत्तं महास्वनम्। परमां मुदमाश्रित्य प्राधमन्तं शनैरहम् ॥ १२ ॥ स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत्। वित्रेसुश्च निलिल्युश्च भूतानि सुमहान्त्यपि ॥ १३ ॥ ततो निवातकवचाः सर्व एव स्वलंकृताः। दंशिता विविधैस्त्राणैर्विचित्रायुधपाणयः ॥ १४ ॥ आयसैश्च महाशूलैर्गदाभिर्मुषलैरपि। पट्टिशैः करवालैश्च रथचक्रैश्च भारत ॥ १५ ॥ शतघ्नीभिर्भुशुण्डीभिः खड्गैश्चित्रैः स्वलंकृतैः। प्रगृहीतैर्दितेः पुत्राः प्रादुरासन् सहस्रशः ॥ १६ ॥ ततो विचार्य्य बहुशो रथमार्गेषु तान् हयान्। प्राचोदयत् समे देशे मातलिर्भरतर्षभ ॥ १७ ॥ तेन तेषां प्रणुन्नानामाशुत्वाच्छीघ्रगामिनाम्। नान्वपश्यं तदा किञ्चित्तन्मेऽद्भुतमिवाभवत् ॥ १८ ॥ ततस्ते दानवास्तत्र वादित्राणि सहस्रशः। विकृतस्वररूपाणि भृशं सर्वाण्यवादयन् ॥ १९ ॥ तेन शब्देन सहसा समुद्रे पर्वतोपमाः। आप्लवन्त गतैः सत्त्वैर्मत्स्याः शतसहस्रशः ॥ २० ॥ ततो वेगेन महता दानवा मामुपाद्रवन्। विमुञ्चन्तः शितान् बाणान् शतशोऽथ सहस्रशः ॥ २१ ॥ स संप्रहारस्तुमुलस्तेषाञ्च मम भारत। आवर्त्तत महाघोरो निवातकवचान्तकः ॥ २२ ॥ ततो देवर्षय-

स्तथैव दानवर्षिगणाश्च ये । ब्रह्मर्षयश्च सिद्धाश्च समाजग्मुर्महा-
मृधे ॥ २३ ॥ ते वै मामनुरूपाभिर्मधुराभिर्जयैषिणः । अस्तुवन्
मुनयो वाग्भिर्यथेन्द्रं तारकामये ॥ २४ ॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि निवातकवचवधे
एकोनसप्तत्यधिकशततोऽध्यायः ॥ १६९ ॥

---

अर्जुन उवाच । ततो निवातकवचाः सर्वे वेगेन भारत ।
अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे ॥ १ ॥ आच्छाद्य रथ-
पन्थानमुत्क्रोशन्तो महारथाः । आवृत्य सर्वतस्ते मां शरवर्षै-
रवाकिरन् ॥ २ ॥ ततोऽपरे महावीर्य्याः शूलपट्टिशपाणयः ।
शूलानि च भुशुण्डीश्च मुमुचुर्दानवा मयि ॥ ३ ॥ तच्छूलवर्षं
सुमहत् गदाशक्तिसमाकुलम् । अनिशं सृज्यमानं तैरपतन्म-
द्रथोपरि ॥ ४ ॥ अन्ये मामभ्यधावन्त निवातकवचा युधि । शित-
शस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः ॥ ५ ॥ तानहं विविधै-
र्वाणैर्वेगवद्भिरजिह्मगैः । गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे
॥ ६ ॥ ते कृता विमुखाः सर्वे मत्प्रयुक्तैः शिलाशितैः । ततो
मातलिना तूर्णं हयास्ते संप्रचोदिताः ॥ ७ ॥ मार्गान् बहु-
विधांस्तत्र विचेरुर्वातरंहसः । सुसंयता मातलिना प्रामथ्नन्त
दितेः सुतान् ॥ ८ ॥ शतंशतास्ते हरयस्तस्मिन् युक्ता महारथे ।
तदा मातलिना यत्ता व्यचरन्नल्पका इव ॥ ९ ॥ तेषाञ्चरण-
पातेन रथनेमिस्वनेन च । मम वाणनिपातैश्च हतास्ते शतशो-
ऽसुराः ॥ १० ॥ गतासवस्तथैवान्ये प्रगृहीतशरासनाः । हत-
सारथयस्तत्र व्यकृष्यन्त तुरङ्गमैः ॥ ११ ॥ ते दिशो विदिशः सर्वे
प्रतिरुध्य प्रहारिणः । अभ्यघ्नन् विविधैः शस्त्रैस्ततो मे व्यथितं
मनः ॥ १२ ॥ ततोऽहं मातलेर्वीर्य्यमपश्यं परमाद्भुतम् । अश्वां-
स्तथा वेगवतो यदयत्नादधारयत् ॥ १३ ॥ ततोऽहं लघुभिश्चित्रै-

रस्तैस्तानसुरान्रणे। चिच्छेद सायुधान्राजञ्छतशोऽथ सहस्रशः ॥ १४ ॥ एवं मे चरतस्तत्र सर्वयत्नेन सव्यूहन्। प्रीतिमानभववीरो मातलिः शक्रसारथिः ॥ १५ ॥ बध्यमानास्ततस्तैस्तु हयैस्तेन रथेन च। अगमन् प्रचयं केचिन्न्यवर्त्तन्त तथापरे ॥ १६ ॥ स्पर्द्धमाना इवास्माभिर्निवातकवचा रणे। शरवर्षैः शरार्त्ता मां महद्भिः प्रत्यवारयन् ॥ १७ ॥ ततोऽहं लघुभिश्चित्रैर्ब्रह्मास्त्रपरिमन्त्रितैः। व्यधमं सायकैराशु शतशोऽथ सहस्रशः ॥ १८ ॥ ततः संपीड्यमानास्ते क्रोधाविष्टा महासुराः। अपीड़यन्मां सहिताः शक्तिशूलासिवृष्टिभिः ॥ १९ ॥ ततोऽहमस्त्रमातिष्ठं परमं तिग्मतेजसम्। दयितं देवराजस्य माधवं नाम भारत ॥ २० ॥ ततःखड्गत्रिशूलेन तोमरांश्च सहस्रशः। अस्त्रवीर्य्येण शतधा तैर्मुक्तानहमच्छिनम् ॥ २१ ॥ छित्वा प्रहरणान्येषां ततस्तानपि सर्वशः। प्रत्यविध्यमहं रोषाद्दशभिर्दशभिः शरैः ॥ २२ ॥ गाण्डीवाद्धि तदा संख्ये यथा भ्रमरपङ्क्तयः। निष्पतन्ति महावाणास्तन्मातलिरपूजयत् ॥ २३ ॥ तेषामपि तु वाणास्ते बहुत्वाच्छलभा इव। अवाकिरन्मां बलवत्तानहं व्यधमं शरैः ॥ २४ ॥ बध्यमानास्ततस्ते तु निवातकवचाः पुनः। शरवर्षैर्महद्भिर्मां समन्तात् पर्य्यवारयन् ॥ २५ ॥ शरवेगान्निहत्याहमस्त्रैरस्त्रविघातिभिः ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ॥ २६ ॥ तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितम्। प्रावृषीवाभिवृष्टानि शृङ्गाण्यथ धराभृताम् ॥ २७ ॥ इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः। मद्वाणैर्बध्यमानास्ते समुद्विग्नाः स्म दानवाः ॥ २८ ॥ शतधा भिन्नदेहास्ते तीक्ष्णप्रहरणौजसः। ततो निवातकवचा मामयुध्यन्त मायया ॥ २९ ॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि निवातकवचवधे सप्तत्यधिकशततोऽध्यायः॥ १७० ॥

अर्जुन उवाच। ततोऽश्मवर्षं सुमहत् प्रादुरासीत् समन्ततः। नगमात्रैः शिलाखण्डैस्तन्मां दृढमपीड़यत् ॥ १ ॥ तदहं वज्रसङ्काशैर्महेन्द्रास्त्रप्रचोदितैः। अचूर्णयं वेगवद्भिः शरजालैर्महाहवे ॥ २ ॥ चूर्ण्यमानेऽश्मवर्षे तु पावकः समजायत। तत्राश्मचूर्णान्यपतन् पावकप्रकरा इव ॥ ३ ॥ ततोऽश्मवर्षे विहते जलवर्षं महत्तरम्। धाराभिरक्षमात्राभिः प्रादुरासीन्ममान्तिके ॥४॥ नभसः प्रच्युता धारास्तिग्मवीर्य्याः सहस्रशः। आवृण्वन् सर्वतो व्योम दिशश्चोपदिशस्तथा ॥ ५ ॥ धाराणाञ्च निपातेन वायोर्विस्फूर्जितेन च। गर्जितेन च दैत्यानां न प्राज्ञायत किञ्चन ॥ ६ ॥ धारा दिवि च सम्बद्धा वसुधायाञ्च सर्व्वशः। व्यामोहयन्त मां तत्र निपतन्त्योऽनिशं भुवि ॥ ७ ॥ तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणम्। दीप्तं प्राहिणवं घोरमशुष्यत्तेन तज्जलम् ॥ ८ ॥ हतेऽश्मवर्षे च मया जलवर्षे च शोषिते। मुमुचुर्दानवा मायामग्निं वायुञ्च भारत ॥ ९ ॥ ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्व्वशः। शैलेन च महास्त्रेण वायोर्वेगमधारयम् ॥ १० ॥ तस्यां प्रतिहतायान्ते दानवा युद्धदुर्मदाः। प्राकुर्व्वन् विविधां मायां यौगपद्येन भारत ॥ ११ ॥ ततो वर्षं प्रादुरभूत् सुमहल्लोमहर्षणम्। अस्त्राणां घोररूपाणामग्नेर्वायोस्तथाश्मनाम् ॥ १२ ॥ सा तु मायामयी वृष्टिः पीड़यामास मां युधि। अथ घोरं तमस्तीव्रं प्रादुरासीत् समन्ततः ॥ १३ ॥ तमसा संवृते लोके घोरेण परुषेण च। हरयो विमुखाश्चासन् प्रास्खलच्चापि मातलिः ॥१४॥ हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि। असकृच्चाह मां भीतः क्वासीति भरतर्षभ ॥ १५ ॥ माञ्च भीराविशत्तीव्रा तस्मिन् विगतचेतसि। स च मां विगतज्ञानः सन्त्रस्तमिदमब्रवीत् ॥ १६ ॥ सुराणामसुराणाञ्च संग्रामः सुमहानभूत्। अमृतार्थं पुरा पार्थ स च दृष्टो मयानघ ॥ १७ ॥ शम्बरस्य वधे घोरः संग्रामः सुमहा-

नभूत्। सारथ्यं देवराजस्य तत्रापि कृतवानहम्॥ १८॥
तथैव वृत्रस्य वधे संग्रहीता हया मया। वैरोचनेर्महायुद्धं
दृष्टञ्चापि सुदारुणम्। बलप्रह्लादयोश्चापि तथान्येषाञ्च पाण्डव
॥ १९॥ एते मया महाघोराः संग्रामाः पर्य्युपासिताः। न
चापि विगतज्ञानो भूतपूर्वोऽस्मि पाण्डव॥ २०॥ पितामहेन
संहारः प्रजानां विहितो ध्रुवम्। न हि युद्धमिदं युक्तमन्यत्र
जगतः क्षयात्॥ २१॥ तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना।
मोहयिष्यन् दानवानामहं मायाबलं महत्॥ २२॥ अब्रुवं
मातलिं भीतं पश्य मे भुजयोर्बलम्। अस्त्राणाञ्च प्रभावं वै
धनुषो गाण्डीवस्य च॥ २३॥ अद्यास्त्रमायया तेषां मायामेतां
सुदारुणाम्। विनिहन्मि तमश्चोग्रं मा भैः सूत स्थिरो भव॥ २४॥
एवमुक्त्वाहमसृजमस्त्रमायां नराधिप। मोहनीं सर्वभूतानां
हिताय त्रिदिवौकसाम्॥ २५॥ पीड्यमानासु मायासु तासु
तास्वसुरोत्तमाः। पुनर्बहुविधा मायाः प्राकुर्वन्नमितौजसः॥२६॥
पुनः प्रकाशमभवत्तमसा ग्रस्यते पुनः। भवत्यदर्शनो लोकः पुनरप्सु
निमज्जति॥ २७॥ सुसंग्रहीतैर्हरिभिः प्रकाशे सति मातलिः।
व्यचरत् स्यन्दनाग्रेण संग्रामे लोमहर्षणे॥२८॥ ततः पर्य्यपतन्नुग्रा
निवातकवचा मयि। तानहं विवरं दृष्ट्वा प्राहिणुं यमसादनम्
॥ २९॥ वर्त्तमाने तथा युद्धे निवातकवचान्तके। नापश्यं सहसा
सर्वान् दानवान् मायया वृतान्॥ ३०॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि मायायुद्धे
एकसप्तत्यधिकशततोऽध्यायः॥ १७१॥

---

अर्जुन उवाच। अदृश्यमानास्ते दैत्या योधयन्ति स्म मायया।
अदृश्येनास्त्रवीर्य्येण तानप्यहमयोधयम्॥ १॥ गाण्डीवमुक्ता

विशिखाः सम्यगस्त्रप्रचोदिताः। अच्छिन्दन्नुत्तमाङ्गानि यत्र तत्र स्म तेऽभवन्॥ २॥ ततो निवातकवचा वध्यमाना मया युधि। संहृत्य मायां सहसा प्राविशन् पुरमात्मनः॥ ३॥ व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने। अपश्यं दानवांस्तत्र हतान्शतसहस्रशः॥ ४॥ विनिष्पिष्टानि तत्रैषां शस्त्राण्याभरणानि च। शतशः स्म प्रदृश्यन्ते गात्राणि कवचानि च॥ ५॥ हयानां नान्तरं ह्यासीत् पदाद्विचलितुं पदम्। उत्पत्य सहसा तस्थुरन्तरीक्षगमास्ततः॥ ६॥ ततो निवातकवचा व्योम संछाद्य केवलम्। अदृश्या ह्यभ्यवर्त्तन्त विसृजन्तः शिलोच्चयान्॥ ७॥ अन्तर्भूमिगताश्चान्ये हयानां चरणान्यथ। व्यगृह्णन् दानवा घोरा रथचक्रे च भारत॥ ८॥ विनिगृह्य हरीनश्वान्रथञ्च मम युध्यतः। सर्वतो मामविध्यन्त सरथं धरणीधरैः॥ ९॥ पर्वतैरुपचीयद्भिः पतमानैस्तथापरैः। स देशो यत्र वर्त्ताम गुहेव समपद्यत॥ १०॥ पर्वतैश्छाद्यमानोऽहं निगृहीतैश्च वाजिभिः। अगच्छं परमामार्त्तिं मातलिस्तदलक्षयत्॥ ११॥ लक्षयित्वा च मां भीतमिदं वचनमब्रवीत्। अर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय॥ १२॥ ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदैरयम्। देवराजस्य दयितं भीममस्त्रं नराधिप॥ १३॥ अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च। अमुञ्चं वज्रसंस्पर्शानायसान्निशितान् शरान्॥ १४॥ ततो मायाश्च ताः सर्वा निवातकवचांश्च तान्। ते वज्रचोदिता बाणा वज्रभूताः समाविशन्॥ १५॥ ते वज्रवेगविहता दानवाः पर्वतोपमाः। इतरेतरमाश्लिष्य न्यपतन् पृथिवीतले॥ १६॥ अन्तर्भूमौ च येऽगृह्णन् दानवा रथवाजिनः। अनुप्रविश्य तान् बाणाः प्राहिण्वन् यमसादनम्॥ १७॥ हतैर्निवातकवचैर्निरस्तैः पर्वतोपमैः। समाच्छाद्यत देशः स विकीर्णैरिव पर्वतैः॥ १८॥ न हयानां क्षतिः काचिन्न रथस्य न मातलेः। मम चादृश्यत

तदा तदद्भुतमिवाभवत् ॥ १९ ॥ ततो मां प्रहसन्राजन् मातलिः प्रत्यभाषत । नैतदर्जुन देवेषु त्वयि वीर्य्यं यदीक्ष्यते ॥ २० ॥ हतेष्वसुरसंघेषु दारास्तेषान्तु सर्वशः । प्राक्रोशन्नगरे तस्मिन् यथा शरदि सारसाः ॥ २१ ॥ ततो मातलिना सार्द्धमहन्तत् पुरमभ्ययाम् । त्रासयन्रथघोषेण निवातकवचस्त्रियः ॥ २२ ॥ तान् दृष्ट्वा दशसाहस्रान् मयूरसदृशान् हयान् । रथञ्च रविसङ्काशं प्राद्रवन् गणशः स्त्रियः ॥ २३ ॥ ताभिराभरणैः शब्दस्त्रासिताभिः समीरितः । शिलानामिव शैलेषु पतन्तीनामभूत्तदा ॥ २४ ॥ वित्रस्ता दैत्यनार्य्यस्ताः स्वानि वेश्मान्यथाविशन् । बहुरत्नविचित्राणि शातकुम्भमयानि च ॥ २५ ॥ तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम् । विशिष्टं देवनगरादपृच्छं मातलिं ततः ॥ २६ ॥ इदमेवंविधं कस्माद्देवा नावासयन्त्युत । पुरन्दरपुराद्धीदं विशिष्टमुपलक्षये ॥ २७ ॥

मातलिरुवाच । आसीदिदं पुरा पार्थ देवराजस्य नः पुरम् । ततो निवातकवचैरितः प्रच्याविताः सुराः ॥ २८ ॥ तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहम् । इदं वृतं निवासाय देवेभ्यश्चाभयं युधि ॥ २९ ॥ ततः शक्रेण भगवान् स्वयम्भूरिति चोदितः । विधत्तां भगवानन्तमात्मनो हितकाम्यया ॥ ३० ॥ तत उक्तो भगवता दिष्टमत्रेति भारत । भवितान्तस्त्वमप्येषां देहेनान्येन वृत्रहन् ॥ ३१ ॥ तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव । न हि शक्याः सुरैर्हन्तुं य एते निहतास्त्वया ॥ ३२ ॥ कालस्य परिणामेन ततस्त्वमिह भारत । एषामन्तकरः प्राप्तस्त्वया च कृतं तथा ॥ ३३ ॥ दानवानां विनाशाय अस्त्राणां परमं बलम् । ग्राहितस्त्वं महेन्द्रेण पुरुषेन्द्र तदुत्तमम् ॥ ३४ ॥

अर्ज्जुन उवाच। ततः प्रणाम्य नगरं दानवांश्च निहत्य तान्
पुनर्मातलिना सार्द्धमगच्छं देवसद्म तत् ॥ ३५ ॥

इति आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि निवातकवचवधे
द्विसप्तत्यधिकशततोऽध्यायः ॥ १७२ ॥

---

अर्ज्जुन उवाच। निवर्त्तमानेन मया महद्दृष्टं ततोऽपरम्।
पुरं कामचरं दिव्यं पावकार्कसमप्रभम् ॥ १ ॥ रत्नद्रुममयैश्चित्रैः
सुस्वरैश्च पतत्रिभिः। पौलोमैः कालकञ्जैश्च नित्यहृष्टैरधिष्ठितम्
॥ २ ॥ गोपुराट्टालकोपेतं चतुर्द्वारं पुरासदम्। सर्व्वरत्नमयं
दिव्यमद्भुतोपमदर्शनम् ॥ ३ ॥ द्रुमैः पुष्पफलोपेतैः सर्व्वरत्नमयै-
र्वृतम्। तथा पतत्रिभिर्दिव्यैरुपेतं सुमनोहरैः ॥ ४ ॥ असुरै-
र्न्नित्यमुदितैः शूलर्ष्टिमुषलायुधैः। चापमुद्गरहस्तैश्च स्रग्विभिः
सर्व्वतो वृतम् ॥ ५ ॥ तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनम्।
अपृच्छं मातलिं राजन् किमिदं वर्त्ततेऽद्भुतम् ॥ ६ ॥

मातलिरुवाच। पुलोमा नाम दैतेयी कालका च महासुरी।
दिव्यं वर्षसहस्रन्ते चेरतुः परमं तपः ॥ ७ ॥ तपसोऽन्ते ततस्ताभ्यां
स्वयम्भूरददद्वरम्। अगृह्णीतां वरन्ते तु सुतानामल्पदुःखिताम्
॥ ८ ॥ अवध्यताञ्च राजेन्द्र सुरराक्षसपन्नगैः। पुरं सुरमणीयञ्च
खचरं सुमहाप्रभम् ॥ ९ ॥ सर्व्वरत्नैः समुदितं दुर्द्धर्षममरैरपि।
महर्षियक्षगन्धर्व्वपन्नगासुरराक्षसैः ॥ १० ॥ सर्व्वकामगुणोपेतं
वीतशोकमनामयम्। ब्रह्मणा भरतश्रेष्ठ कालकेयकृते कृतम्
॥ ११ ॥ तदेतत् खपुरं दिव्यं चरत्यमरवर्ज्जितम्। पौलोमा-
ध्युषितं वीर कालकञ्जैश्च दानवैः ॥ १२ ॥ हिरण्यपुरमित्येवं
ख्यायते नगरं महत्। रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः
॥ १३ ॥ तत्र ते मुदिता राजन्नवध्याः सर्व्वदैवतैः। निवसन्त्युत

राजेन्द्र गतोद्वेगा निरुत्सुकाः ॥ १४ ॥ मानुषान्मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा । एतानपि रणे पार्थ कालकञ्जान् दुरासदान् । वज्रास्त्रेण नयस्वाशु विनाशं सुमहाबलान् ॥ १५ ॥

अर्जुन उवाच । सुरासुरैरवध्यन्तदहं ज्ञात्वा विशाम्पते । अब्रुवं मातलिं हृष्टो याह्येतत् पुरमञ्जसा । त्रिदशेशद्विषो यावत् क्षयमस्त्रैर्नयाम्यहम् ॥ १६ ॥ न कथञ्चिद्धि मे पापा न वध्या ये सुरद्विषः । उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात् ॥१७॥ रथेन तेन दिव्येन हरियुक्तेन मातलिः । ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः ॥ १८ ॥ समुत्पेतुर्महावेगा रथानास्थाय दंशिताः । ततो नालीकनाराचैर्भल्लैः शक्त्यृष्टितोमरैः ॥ १९ ॥ प्रत्यघ्नन् दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः । तदहं शरवर्षेण महता प्रत्यवारयम् ॥ २० ॥ शस्त्रवर्षं महद्राजन् विद्याबलमुपाश्रितः । व्यमोहयञ्च तान् सर्वान् रथमार्गैश्चरन् रणे ॥ २१ ॥ तेऽन्योन्यमभिसम्मूढाः पातयन्ति स्म दानवाः । तेषामेवं विमूढानामन्योन्यमभिधावताम् ॥ २२ ॥ शिरांसि विशिखैर्दीप्तैर्न्यहनं शतसङ्घशः । ते वध्यमाना दैतेयाः पुरमास्थाय तत् पुनः ॥ २३ ॥ समुत्पेतुः स्वनगरान्मायामास्थाय दानवीम् । ततोऽहं शरवर्षेण महता कुरुनन्दन ॥ २४ ॥ मार्गमावृत्य दैत्यानां गतिं चैषामवारयम् । तत् पुरं खेचरं दिव्यं कामगं सूर्य्यसप्रभम् ॥ २५ ॥ दैतेयैर्वरदानेन धार्य्यते स्म यथासुखम् । अन्तर्भूमौ निपतितं पुनरूर्द्ध्वं प्रतिष्ठते ॥ २६ ॥ पुनस्तिर्य्यक् प्रयात्याशु पुनरप्सु निमज्जति । अमरावतिसङ्काशं तत् पुरं कामगं महत् ॥ २७ ॥ अहमस्त्रैर्बहुविधैः प्रत्यगृह्णं परन्तप । ततोऽहं शरजालेन दिव्यास्त्रमुदितेन च ॥ २८ ॥ न्यगृह्णं सह दैतेयैस्तत् पुरं पुरुषर्षभ । विक्षतं चायसैर्बाणैर्मत्प्रयुक्तैरजिह्मगैः ॥ २९ ॥ महीमभ्यपतद्राजन् प्रभग्नं पुरमासुरम् । ते वध्यमाना मद्बाणैर्व-

वैगैर्यमयैः ॥ ३० ॥ पर्य्यभ्रमन्त वै राजन्नसुराः कालचोदिताः।
ततो मातलिरासह्य पुरस्तान्निपतन्निव ॥ ३१ ॥ महीमवातरत्
क्षिप्रं रथेनादित्यवर्चसा। ततो रथसहस्राणि षष्टिस्तेषाममर्षिणाम्
॥ ३२ ॥ युयुत्सूनां मया सार्द्धं पर्य्यवर्त्तन्त भारत।
तान्यहं निशितैर्वाणैर्व्यधमङ्गार्द्धराजितैः ॥ ३३ ॥ ते युद्धे संन्यवर्त्तन्त
समुद्रस्य यथोर्मयः। नेमे शक्या मनुष्येण युद्धेनेति प्रचिन्त्य
तत् ॥ ३४ ॥ ततोऽहमानुपूर्व्येण दिव्यान्यस्त्राण्ययोजयम्। ततस्तानि
सहस्राणि रथिनां चित्रयोधिनाम् ॥ ३५ ॥ अस्त्राणि मम
दिव्यानि प्रत्यघ्नञ्छतकैरिव। रथमार्गान् विचित्रांस्ते विचरन्तो
महाबलाः ॥ ३६ ॥ प्रत्यदृश्यन्त संग्रामे शतशोऽथ सहस्रशः।
विचित्रमुकुटापीड़ा विचित्रकवचध्वजाः ॥ ३७ ॥ विचित्राभरणाश्चैव
नन्दयन्तीव मे मनः। अहन्तु शरवर्षैस्तानस्त्रप्रचदितैरणे
॥ ३८ ॥ नाशक्नुवं पीड़यितुं ते तु मां प्रत्यपीड़यन्। तैः पीड्यमानो
बहुभिः कृतास्त्रैः कुशलैर्युधि ॥ ३९ ॥ व्यथितोऽस्मि महायुद्धे
भयं चागान्महन्मम। ततोऽहं देवदेवाय रुद्राय प्रयतो
रणे ॥ ४० ॥ स्वस्ति भूतेभ्य इत्युक्त्वा महास्त्रं समचोदयम्। यत्तद्रौद्रमिति
ख्यातं सर्व्वामित्रविनाशनम् ॥ ४१ ॥ ततोऽपश्यं त्रिशिरसं
पुरुषं नवलोचनम्। त्रिमुखं षड्भुजं दीप्तमर्कज्वलनमूर्द्धजम्
॥ ४२ ॥ लेलिहानैर्महानागैः कृतापीड़मरिन्दम। विभीस्ततस्तदस्त्रन्तु
घोरं रौद्रं सनातनम् ॥ ४३ ॥ दृष्ट्वा गाण्डीवसंयोगमानीय
भरतर्षभ। नमस्कृत्वा त्रिनेत्राय शर्व्वायामिततेजसे ॥ ४४ ॥
मुक्तवान् दानवेन्द्राणामभावाय परन्तप। मुक्तमात्रे ततस्तस्मिन्
रूपाण्यासन् सहस्रशः ॥ ४५ ॥ मृगाणामथ सिंहानां व्याघ्राणाञ्च
विशाम्पते। ऋक्षाणां महिषाणाञ्च पन्नगानां तथा गवाम्
॥ ४६ ॥ शरभाणां गजानाञ्च वानराणाञ्च सङ्घशः। ऋषभाणां
वराहाणां मार्जाराणां तथैव च ॥ ४७ ॥ शालावृकाणां प्रेतानां

मुरुण्डानाञ्च सर्वशः। गृध्राणां गरुडानाञ्च चमराणां तथैव च ॥ ४८॥ वृकाणां पर्वतानाञ्च समुद्राणां तथैव च। देवानाञ्च ऋषीणाञ्च गन्धर्वाणाञ्च सर्वश। पिशाचानां सयक्षाणां तथैव च सुरद्विषाम् ॥ ४९ ॥ गुह्यकानाञ्च संग्रामे नैर्ऋतानां तथैव च। झषाणां गजवक्त्राणामुलूकानां तथैव च ॥ ५० ॥ मीनवाजिस्वरूपाणां नानाशस्त्रासिपाणिनाम्। तथैव यातुधानानां गदामुद्गरधारिणाम् ॥ ५१ ॥ एतैश्चान्यैश्च बहुभिर्नानारूपधरैस्तथा। सर्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्जिते ॥ ५२ ॥ त्रिशिरोभिश्चतुर्दंष्ट्रैश्चतुरास्यैश्चतुर्भुजैः। अनेकरूपसंयुक्तैर्मांसमेदोवसास्थिभिः ॥ ५३ ॥ अभीक्ष्णं वध्यमानास्ते दानवा नाशमागताः। अर्कज्वलनतेजोभिर्वज्राशनिसमप्रभैः ॥ ५४ ॥ अद्रिसारमयैश्चान्यैर्बाणैरपि निबर्हणैः। न्यहनं दानवान् सर्वान् मुहूर्त्तेनैव भारत ॥ ५५ ॥ गाण्डीवास्त्रप्रणुन्नांस्तान् गतासून्नभसश्च्युतान्। दृष्ट्वाहं प्राणमं भूयस्त्रिपुरघ्नाय वेधसे ॥ ५६ ॥ तथा रौद्रास्त्रनिष्पिष्टान् दिव्याभरणभूषितान्। निशम्य परमं हर्षमगमद्देवसारथिः ॥ ५७ ॥ तदसह्यं कृतं कर्म देवैरपि दुरासदम्। दृष्ट्वा मां पूजयामास मातलिः शक्रसारथिः ॥ ५८ ॥ उवाच वचनञ्चेदं प्रीयमाणः कृताञ्जलिः। सुरासुरैरसह्यं हि कर्म यत् साधितं त्वया ॥ ५९ ॥ न ह्येतत् संयुगे कर्त्तुमपि शक्तः सुरेश्वरः। सुरासुरैरवध्यं हि पुरमेतत् खगं महत् ॥ ६० ॥ त्वया विमथितं वीर स्ववीर्य्यतपसो बलात्। विध्वस्तेऽथ पुरे तस्मिन् दानवेषु हतेषु च ॥ ६१ ॥ विनदन्त्यः स्त्रियः सर्वा निष्पेतुर्नगराद्बहिः। प्रकीर्णकेश्यो व्यथिताः कुरर्य्य इव दुःखिताः ॥ ६२ ॥ पेतुः पुत्रान् पितॄन् भ्रातॄन् शोचमाना महीतले। रुदन्त्यो दीनकण्ठास्ता निनदन्त्यो हतेश्वराः ॥ ६३ ॥ उरांसि परिनिघ्नन्त्यो विस्रस्तस्रग्विभूषणाः। तच्छोकयुक्तमश्रीकं दुःख-

दन्यसमाहतम् ॥ ६४ ॥ न बभौ दानवपुरं हतत्विट्कं हतेश्वरम्। गन्धर्व्वनगराकारं हतनागमिव ह्रदम् ॥ ६५ ॥ शुष्कवृक्षमिवारण्यमदृश्यमभवत् पुरम्। मान्तु संहृष्टमनसं चिप्रं मातलिरानयत् ॥ ६६ ॥ देवराजस्य भवनं कृतकर्म्माणमाहवात्। हिरण्यपुरमुत्सृज्य निहत्य च महासुरान् ॥ ६७ ॥ निवातकवचांश्चैव ततोऽहं शक्रमागमम्। मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत् ॥ ६८ ॥ सर्व्वं विश्रावयामास यथाभूतं महाद्युते। हिरण्यपुरघातञ्च मायानाञ्च निवारणम् ॥ ६९ ॥ निवातकवचानाञ्च बधं संख्ये महौजसाम्। तच्छ्रुत्वा भगवान् प्रीतः सहस्राक्षः पुरन्दरः ॥ ७० ॥ मरुद्भि सहितः श्रीमान् साधु साध्वित्यथाब्रवीत्। ततो मां देवराजो वै समाश्वास्य पुनः पुनः ॥ ७१ ॥ अब्रवीद्विबुधैः सार्द्धमिदं सुमधुरं वचः। अतिदेवासुरं कर्म कृतमेव त्वया रणे ॥ ७२ ॥ गुर्व्वर्थश्च कृतः पार्थ महाशत्रून् हता मम। एवमेव सदा भाव्यं स्थिरेणाजौ धनञ्जय ॥ ७३ ॥ असंमूढेन चास्त्राणां कर्त्तव्यं प्रतिपादनम्। अविषह्यो रणे हि त्वं देवदानवराक्षसैः ॥ ७४ ॥ सयक्षासुरगन्धर्व्वैः सपक्षिगणपन्नगैः। वसुधाञ्चापि कौन्तेय त्वद्बाहुबलनिर्जिताम्। पालयिष्यति धर्म्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ ७५

इति आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि हिरण्यपुरदैत्यबधे विंशत्यधिकशततोऽध्यायः ॥ १७३ ॥

---

अर्जुन उवाच। ततो मामभिविश्वस्तं संरूढशरविक्षतम्। देवराजो विगृह्येदं काले वचनमब्रवीत् ॥ १ ॥ दिव्यान्यस्त्राणि सर्व्वाणि त्वयि तिष्ठन्ति भारत। न त्वाभिभवितुं शक्तो मानुषो भुवि कश्चन ॥ २ ॥ भीष्मो द्रोणः कृपः कर्णः शकुनिः सह

राजभिः । संग्रामस्थस्य ते पुत्र कलां नार्हन्ति षोड़शीम् ॥ ३ ॥
इदञ्च मे तनुत्राणं प्रायच्छन्मघवान् प्रभुः । अभेद्यं कवचं दिव्यं
स्रजञ्चैव हिरण्मयीम् ॥ ४ ॥ देवदत्तञ्च मे शङ्खं पुनः प्रादा-
न्महारवम् । दिव्यञ्चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ॥ ५ ॥
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च । प्रादाच्छक्रो
ममैतानि रुचिराणि बृहन्ति च ॥ ६ ॥ एवं संपूजितस्तत्र सुख-
मस्म्युषितो नृप । इन्द्रस्य भवने पुण्ये गन्धर्वशिशुभिः सह ॥ ७ ॥
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह । समयोऽर्जुन गन्तुं ते
भ्रातरो हि स्मरन्ति ते ॥ ८ ॥ एवमिन्द्रस्य भवने पञ्च वर्षाणि
भारत । उषितानि मया राजन् स्मरता द्यूतजं कलिम् ॥ ९ ॥
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम् । गन्धमादनपादस्थ
पर्वतस्यास्य मूर्द्धनि ॥ १० ॥

युधिष्ठिर उवाच । दिष्ट्या धनञ्जयास्त्राणि त्वया प्राप्तानि
भारत । दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ॥ ११ ॥
दिष्ट्या च भगवान् स्थाणुर्देव्या सह परन्तप । साक्षाद्दृष्टः स्वयुद्धेन
तोषितश्च त्वयानघ ॥ १२ ॥ दिष्ट्या च लोकपालैस्त्वं समेतो भरत-
र्षभ । दिष्ट्या वर्द्धामहे पार्थ दिष्ट्यासि पुनरागतः ॥ १३ ॥ अद्य
कृत्स्नां महीं देवीं विजितां पुरमालिनीम् । मन्ये च धृतराष्ट्रस्य
पुत्रानपि वशीकृतान् ॥ १४ ॥ इच्छामि तानि चास्त्राणि द्रष्टुं
दिव्यानि भारत । यैस्तथावीर्य्यवन्तस्ते निवातकवचा हताः ॥१५॥

अर्जुन उवाच । श्वः प्रभाते भवान् द्रष्टा दिव्यान्यस्त्राणि
सर्वशः । निवातकवचा घोरा यैर्मया विनिपातिताः ॥ १६ ॥

वैशम्पायन उवाच । एवमागमनं तत्र कथयित्वा धनञ्जयः ।
भ्रातृभिः सहितः सर्वैः रजनीं तामुवास ह ॥१७॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि अस्त्रदर्शने
चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

वैशम्पायन उवाच। तस्यां रात्र्यां व्यतीतायां धर्म्मराजो युधिष्ठिरः। उत्थायावश्यकार्य्याणि कृतवान् भ्रातृभिः सह ॥ १ ॥ ततः सञ्चोदयामास सोऽर्जुनं मातृनन्दनम्। दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया ॥ २ ॥ ततो धनञ्जयो राजन् देवैर्दत्तानि पाण्डवः। अस्त्राणि तानि दिव्यानि दर्शयामास भारत ॥ ३ ॥ यथान्यायं महातेजाः शौचं परममास्थितः। गिरिकूवरपादाक्षं शुभवेणुत्रिवेणुमत् ॥ ४ ॥ पार्थिवं रथमास्थाय शोभमानो धनञ्जयः। दिव्येन संवृतस्तेन कवचेन सुवर्चसा ॥ ५ ॥ धनुरादाय गाण्डीवं देवदत्तं सवारिजम्। शोशुभ्यमानः कौन्तेय आनुपूर्व्या महाभुजः ॥ ६ ॥ अस्त्राणि तानि दिव्यानि दर्शना-योपचक्रमे। अथ प्रयोक्ष्यमाणेषु दिव्येष्वस्त्रेषु तेषु च ॥ ७ ॥ समाक्रान्ता मही पद्‌भ्यां समाकम्पत सद्रुमा। क्षुभिताः सरितश्चैव तथैव च महोदधिः ॥ ८ ॥ शैलाश्चापि व्यदीर्य्यन्त न ववौ च समीरणः। न बभासे सहस्रांशुर्न जज्वाल च पावकः ॥ ९ ॥ न वेदाः प्रतिभान्ति स्म द्विजातीनां कथञ्चन। अन्तर्भूमिगता ये च प्राणिनो जनमेजय ॥ १० ॥ पीड्यमानाः समुत्थाय पाण्डवं पर्य्यवारयन्। वेपमानाः प्राञ्जलयस्ते सर्व्वे विकृताननाः ॥ ११ ॥ दह्यमानास्तदास्त्रैस्ते याचन्ति स्म धनञ्जयम्। ततो ब्रह्मर्षय-श्चैव सिद्धा ये च महर्षयः ॥ १२ ॥ जङ्गमानि च भूतानि सर्व्वा-ण्येवावतस्थिरे। देवर्षयश्च प्रवरास्तथैव च दिवौकसः ॥ १३ ॥ यक्षराक्षसगन्धर्व्वास्तथैव च पतत्त्रिणः। खेचराणि च भूतानि सर्व्वाण्येवावतस्थिरे ॥ १४ ॥ ततः पितामहश्चैव लोकपालाश्च सर्व्वशः। भगवांश्च महादेवः सगणोऽभ्याययौ तदा ॥ १५ ॥ ततो वायुर्महाराज दिव्यैर्माल्यैः समन्वितः। अभितः पाण्डवञ्चित्रै-रवचक्रे समन्ततः ॥ १६ ॥ जगुश्च गाथा विविधा गन्धर्व्वाः सुर-चोदिताः। ननृतुः संघशश्चैव राजन्नप्सरसां गणाः ॥ १७ ॥

तस्मिंश्च तादृशे काले नारदप्रोदित सुरैः। आगम्याह वचः
पार्थ श्रवणीयमिदं नृप ॥ १८ ॥ अर्जुनार्जुन मा युङ्क्ष्व दिव्या-
न्यस्त्राणि भारत। नैतानि निरधिष्ठाने प्रयुज्यन्ते कथञ्चन ॥१९॥
अधिष्ठाने न चानार्त्तः प्रयुञ्जीत कदाचन। प्रयोगेषु महान्
दोषो ह्यस्त्राणां कुरुनन्दन॥ २० ॥ एतानि रक्ष्यमाणानि धन-
ञ्जय यथागमम्। बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः
॥ २१ ॥ अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव। भवन्ति
स्म विनाशाय मैवं भूयः कृथाः क्वचित् ॥ २२ ॥ अजातशत्रो
त्वञ्चैव द्रक्ष्यसे तानि संयुगे। योज्यमानानि पार्थेन द्विषतामव-
मर्द्दने ॥ २३ ॥

वैशम्पायन उवाच। निवार्य्याथ ततः पार्थं सर्वे देवा यथा-
गतम्। जग्मुरन्ये च ये तत्र समाजग्मुर्नरर्षभ ॥ २४ ॥ तेषु
सर्वेषु कौरव्य प्रतियातेषु पाण्डवाः। तस्मिन्नेव वने हृष्टास्त
ऊषुः सह कृष्णया ॥ २५ ॥

इति आरण्यपर्वणि निवातकवचयुद्धपर्वणि अस्त्रदर्शने
पञ्चसप्तत्यधिकशततोऽध्यायः ॥ १७५ ॥

---

## अथ आजगरपर्व ॥

जनमेजय उवाच। तस्मिन् कृतास्त्रे रथिनां प्रवीरे प्रत्या-
गते भवनाद्वृत्रहन्तुः। अतः परं किमकुर्वन्त पार्थाः समेत्य
शूरेण धनञ्जयेन ॥ १ ॥

वैशम्पायन उवाच। वनेषु तेष्वेव तु ते नरेन्द्राः सहार्जुने-
नेन्द्रसमेन वीराः। तस्मिंश्च शैलप्रवरे सुरम्ये धनेश्वराक्रीड़गता
विजह्रुः ॥ २ ॥ वेश्मानि तान्यप्रतिमानि पश्यन् क्रीड़ाश्च नाना-
द्रुमसन्निबद्धाः। चचार धन्वी बहुधा नरेन्द्र सोऽस्त्रेषु यत्तः

सततं किरीटी ॥ ३ ॥ अवाप्य वासं नरदेवपुत्राः प्रसादजं वैश्रवणस्य राज्ञः। न प्राणिनां ते स्पृहयन्ति राजञ्छिवश्च कालः स बभूव तेषाम् ॥ ४ ॥ समेत्य पार्थेन यथैकरात्रमूषुः समास्तत्र तदा चतस्रः। पूर्वाश्च षट् ता दश पाण्डवानां शिवा बभूवुर्वसतां वनेषु ॥ ५ ॥ ततोऽब्रवीद्वायुसुतस्तरस्वी जिष्णुश्च राजानमुपोपविश्य। यमौ च वीरौ सुरराजकल्पाविकान्तमास्थाय हितं प्रियञ्च ॥ ६ ॥ तव प्रतिज्ञां कुरुराज सत्यां चिकीर्षमाणास्त्वदनुप्रियञ्च। ततो न गच्छाम वनान्यपास्य सुयोधनं सानुचरं निहन्तुम् ॥ ७ ॥ एकादशं वर्षमिदं वसामः सुयोधनेनात्तसुखाः सुखार्हाः। तं वञ्चयित्वाधमबुद्धिशीलमज्ञातवासं सुखमाप्नुयामः ॥ ८ ॥ तवाज्ञया पार्थिव निर्विशङ्का विहाय मानं विचरन् वनानि। समीपवासेन विलोभितास्ते ज्ञास्यन्ति नास्मानपकृष्टदेशान् ॥ ९ ॥ सम्वत्सरं तत्र विहृत्य गूढं नराधमं तं सुखमुद्धरेम। निर्य्यात्य वैरं सफलं सपुष्पं तस्मै नरेन्द्राधमपूरुषाय ॥१०॥ सुयोधनायानुचरैर्वृताय ततो महीमाहर धर्मराज। स्वर्गोपमं शैलमिमं चरद्भिः शक्यो विहन्तुं नरदेव शोकः ॥ ११ ॥ कीर्त्तिस्तु ते भारत पुण्यगन्धा नश्येद्धि लोकेषु चराचरेषु। तत् प्राप्य राज्यं कुरुपुङ्गवानां शक्यं महत् प्राप्तुमथ क्रियाश्च ॥ १२ ॥ इदन्तु शक्यं सततं नरेन्द्र प्राप्तुं त्वया यल्लभसे कुवेरात्। कुरुष्व बुद्धिं द्विषतां वधाय कृतागसां भारत निग्रहे च ॥ १३ ॥ तेजस्तवोग्रं न सहेत राजन् समेत्य साक्षादपि वज्रपाणिः। न हि व्यथां जातु करिष्यतस्तौ समेत्य देवैरपि धर्मराज ॥ १४ ॥ तवार्थसिद्ध्यर्थमभिप्रवृत्तौ सुपर्णकेतुश्च शिनेश्च नप्ता। तथैव कृष्णोऽप्रतिमो बलेन तथैव चाहं नरदेववर्य्य ॥ १५ ॥ तवार्थसिद्ध्यर्थमभिप्रपन्नो यथैव कृष्णः सह यादवैस्तैः। तथैव चाहं नरदेववर्य्य यमौ च वीरौ कृतिनौ प्रयोगे। त्वदर्थयोगप्रभवप्रधानाः शमं करिष्याम परान् समेत्य ॥ १६ ॥

वैशम्पायन उवाच। ततस्तदाज्ञाय मतं महात्मा तेषान्तु धर्मस्य सुतो वरिष्ठः। प्रदक्षिणं वैश्रवणाधिवासं चकार धर्मार्थविदुत्तमौजाः। आमन्त्र्य वेश्मानि नदीः सरांसि सर्वाणि रक्षांसि च धर्मराजः ॥ १७ ॥ यथागतं मार्गमवेक्षमाणः पुनर्गिरिञ्चैव निरीक्षमाणः। ततो महात्मा स विशुद्धबुद्धिः संप्रार्थयामास नगेन्द्रवर्थ्यम् ॥ १८ ॥ समाप्तकर्मा सहितः सुहृद्भिर्जित्वा सपत्नान् प्रतिलभ्य राज्यम्। शैलेन्द्र भूयस्तपसे जितात्मा द्रष्टा तवास्मीति मतिञ्चकार ॥ १९ ॥ वृतश्च सर्वैरनुजैर्द्विजैश्च तेनैव मार्गेण पतिः कुरूणाम्। उवाह चैतान् गणशस्तथैव घटोत्कचः पर्वतनिर्झरेषु ॥ २० ॥ तान् प्रस्थितान् प्रीतमना महर्षिः पितेव पुत्राननुशिष्य सर्वान्। स लोमशः प्रीतमना जगाम दिवौकसां पुण्यतमं निवासम् ॥ २१ ॥ तेनार्ष्टिषेणेन तथानुशिष्टास्तीर्थानि रम्याणि तपोवनानि। महान्ति चान्यानि सरांसि पार्थाः संपश्यमानाः प्रययुर्नराग्र्याः ॥ २२ ॥

इति आरण्यपर्वणि आजगरपर्वणि लोमशगमने
षट्सप्तत्यधिकशततोऽध्यायः ॥ १७६ ॥

---

वैशम्पायन उवाच। नगोत्तमं प्रस्रवणैरुपेतं दिशाङ्गजैः किन्नरपक्षिभिश्च। सुखं निवासं जहतां हि तेषां न प्रीतिरासीद्भरतर्षभाणाम् ॥ १ ॥ ततस्तु तेषां पुनरेव हर्षः कैलासमालोक्य महान् बभूव। कुवेरकान्तं भरतर्षभाणां महीधरं वारिधरप्रकाशम् ॥ २ ॥ समुच्छ्रयान् पर्वतसन्निरोधान् गोष्ठान् दरीणां गिरिसेतुमालाः। बहून् प्रपातांश्च समीक्ष्य वीराः स्थलानि निम्नानि च तत्र तत्र ॥ ३ ॥ तथैव चान्यानि महावनानि मृगद्विजानेकनिषेवितानि। आलोकयन्तोऽभिययुः प्रतीतास्ते धन्विनः

खड्गधरा नराग्र्याः ॥ ४ ॥ वनानि रम्याणि नदीः सरांसि गुहा गिरीणां गिरिगह्वराणि । एते निवासाः सततं बभूवुर्निवासिनिम्मं प्राप्य नरर्षभाणाम् ॥ ५ ॥ ते दुर्गवासं बहुधा निरुष्य व्यतीत्य कैलासमचिन्त्यरूपम् । आसेदुरत्यर्थमनोरमन्ते तमाश्रमाग्र्यं वृषपर्वणस्तु ॥ ६ ॥ समेत्य राज्ञा वृषपर्वणा ते प्रत्यर्च्चितास्तेन च वीतमोहाः । षट्सप्तरात्रं विस्तरशः प्रवासं गिरौ यथावद्वृषपर्वणस्ते ॥ ७ ॥ सुखोषितास्तस्य त एकरात्रं पुण्याश्रमे देवमहर्षिजुष्टे । अभ्याययुस्ते वदरीं विशालां सुखेन वीराः पुनरेव वासम् ॥ ८ ॥ ऊषुस्ततस्तत्र महानुभावा नारायणस्थानगताः समग्राः । कुवेरकान्तां नलिनीं विशोकाः संपश्यमानाः सुरसिद्धजुष्टाम् ॥ ९ ॥ ताञ्चाथ दृष्ट्वा नलिनीं विशोकाः पाण्डोः सुताः सर्वनरप्रधानाः । ते रेमिरे नन्दनवासमेत्य द्विजर्षयो वीतमला यथैव ॥ १० ॥ ततः क्रमेणोपययुर्नृवीरा यथागतेनैव पथा समग्राः । विहृत्य मासं सुखिनो वदर्य्यां किरातराज्ञो विषयं सुवाहोः ॥ ११ ॥ चीनांस्तुखारान् दरदांश्च सर्व्वान् देशान् कुलिन्दस्य च भूरिरत्नान् । अतीत्य दुर्गं हिमवत्प्रदेशं पुरं सुवाहोर्ददृशुर्नृवीराः ॥ १२ ॥ श्रुत्वा च तान् पार्थिवपुत्रपौत्रान् प्राप्तान् सुबाहुर्विषये समग्रान् । प्रत्युद्ययौ प्रीतियुतः स राजा तञ्चाभ्यनन्दन्नृषभाः कुरूणाम् ॥ १३ ॥ समेत्य राज्ञा तु सुबाहुना ते सूतैर्विशोकप्रमुखैश्च सर्व्वैः । सहेन्द्रसेनैः परिचारकैश्च पौरोगवैर्य्यैश्च महानसस्थाः ॥ १४ ॥ सुखोषितास्तत्र त एकरात्रं सूतान् समादाय रथांश्च सर्व्वान् । घटोत्कचं सानुचरं विसृज्य ततोऽभ्ययुर्यामुनमद्रिराजम् ॥ १५ ॥ तस्मिन् गिरौ प्रस्रवणोपपन्ने हिमोत्तरीयारुणपाण्डुसानौ । विशाखयूपं समुपेत्य चक्रुस्तदा निवासं पुरुषप्रवीराः ॥ १६ ॥ वराहनानामृगपक्षिजुष्टं महावनञ्चैत्ररथप्रकाशम् । शिवेन पार्था मृगयाप्रधानाः सम्वत्सरं तत्र वने विजह्रुः ॥ १७ ॥ तत्राससादा-

तिवलं भुजङ्गं क्षुधार्दितं मृत्युमिवोग्ररूपम्। वृकोदरः पर्वतकन्दरायां विषादमोहव्यथितान्तरात्मा॥ १८॥ द्वीपोऽभवद्यत्र वृकोदरस्य युधिष्ठिरो धर्मभृतां वरिष्ठः। अमोचयद्यस्तमनन्ततेजा ग्राहेण संवेष्टितसर्वगात्रम्॥ १९॥ ते द्वादशं वर्षमुपोपयातं वने विहर्त्तुं कुरवः प्रतीताः। तस्माद्वनाच्चैत्ररथप्रकाशाच्छ्रिया ज्वलन्तस्तपसा च युक्ताः॥ २०॥ ततश्च यात्वा मरुधन्वपार्श्वं सदा धनुर्वेदरतिप्रधानाः। सरस्वतीमेत्य निवासकामाः सरस्वतो द्वैतवनं प्रतीयुः॥ २१॥ समीक्ष्य तान् द्वैतवने निविष्टान् निवासिनस्तत्र ततोऽभिजग्मुः। तपोदमाचारसमाधियुक्तास्तृणोदपात्राहरणाश्मकुट्टाः॥ २२॥ प्लक्षाक्षरौहीतकवेतसाश्च तथा वदर्य्यः खदिराः शिरीषाः। बिल्वेङ्गुदाः पीलुशमीकरीराः सरस्वतीतीररुहा बभूवुः॥ २३॥ तां यक्षगन्धर्वमहर्षिकान्तामगारभूतामिव देवतानाम्। सरस्वतीं प्रीतियुताश्चरन्तः सुखं विजह्रुर्नरदेवपुत्राः॥ २४॥

इति आरण्यपर्वणि आजगरपर्वणि पुनर्द्वैतवनप्रवेशे सप्तसप्तत्यधिकशततोऽध्यायः॥ १७७॥

---

जनमेजय उवाच। कथं नागायुतप्राणो भीमो भीमपराक्रमः। भयमाहारयत्तीव्रं तस्मादजगरान्मुने॥ १॥ पौलस्त्यं धनदं युद्धे य आह्वयति दर्पितः। नलिन्यां कदनं कृत्वा निहन्ता यक्षरक्षसाम्॥ २॥ तं शंससि भयाविष्टमापन्नमरिसूदनम्। एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे॥ ३॥

वैशम्पायन उवाच। बह्वाश्चर्य्ये वने तेषां वसतामुग्रधन्विनाम्। प्राप्तानामाश्रमं राजन् राजर्षेर्वृषपर्वणः॥ ४॥ यदृच्छया धनु-

श्वापिर्बद्धखड्गो वृकोदरः। ददर्श तद्वनं रम्यं देवगन्धर्वसेवितम् ॥ ५ ॥ स ददर्श शुभान् देशान् गिरेर्हिमवतस्तदा। देवर्षि-सिद्धचरितानप्सरोगणसेवितान् ॥ ६ ॥ चकोरैश्चक्रवाकैश्च पक्षि-भिर्जीवजीवकैः। कोकिलैर्भृङ्गराजैश्च तत्र तत्र निनादितान् ॥ ७ ॥ नित्यपुष्पफलैर्वृक्षैर्हिमसंस्पर्शकोमलैः। उपेतान् बहुल-च्छायैर्मनोनयननन्दनैः ॥ ८ ॥ स सम्पश्यन् गिरिनदीर्वैदूर्य्य-मणिसन्निभैः। सलिलैर्हिमसङ्काशैर्हंसकारण्डवायुतैः ॥ ९ ॥ वनानि देवदारूणां मेघानामिव वागुराः। हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि ॥ १० ॥ मृगयां परिधावन् स समेषु मरु-धन्वसु। विध्यन्मृगाञ्छरैः शुद्धैश्चचार सुमहाबलः ॥ ११ ॥ भीम-सेनस्तु विख्यातो महान्तं दंष्ट्रिणं बलात्। निघ्नन्नागशतप्राणो वने तस्मिन्महाभुजः ॥ १२ ॥ मृगाणां च वराहाणां महिषाणां महाभुजः। विनिघ्नंस्तत्र तत्रैव भीमो भीमपराक्रमः ॥ १३ ॥ स मातङ्गशतप्राणो मनुष्यशतवारणः। सिंहशार्दूलविक्रान्तो वने तस्मिन् महाबलः ॥ १४ ॥ वृक्षानुत्पाटयामास तरसा वै बभञ्ज च। पृथिव्याश्च प्रदेशान् वै नादयंस्तु वनानि च ॥ १५ ॥ पर्वताग्राणि वै मृद्नन्नादयानश्च विज्वरः। प्रक्षिपन् पादपांश्चापि नादेनापूरयन्महीम् ॥ १६ ॥ वेगेन न्यपतद्भीमो निर्भयश्च पुनः पुनः। आस्फोटयन् क्ष्वेडयंश्च तलतालांश्च वादयन् ॥ १७ ॥ चिरसम्वृद्धदर्पस्तु भीमसेनो वने तदा। गजेन्द्राश्च महासत्त्वा मृगेन्द्राश्च महाबलाः ॥ १८ ॥ भीमसेनस्य नादेन व्यमुञ्चन्त गुहा-भयात्। क्वचित् प्रधावंस्तिष्ठंश्च क्वचिच्चोपविशंस्तथा ॥ १९ ॥ मृगप्रेप्सुर्महारौद्रे वने चरति निर्भयः। स तत्र मनुजव्याघ्रो वने वनचरोपमः ॥ २० ॥ पद्भ्यामपि समापेदे भीमसेनो महा-बलः। स प्रविष्टो महारण्ये नादान्नदति चाद्भुतान् ॥ २१ ॥ त्रासयन् सर्वभूतानि महासत्त्वपराक्रमः। ततो भीमस्य शब्देन

भीताः सर्पा गुहाशयाः ॥ २२ ॥ अतिक्रान्तस्तु वेगेन जगामानुसृतः शनैः। ततोऽमरवरप्रख्यो भीमसेनो महाबलः ॥ २३ ॥ स ददर्श महाकायं भुजङ्गं लोमहर्षणम्। गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् ॥ २४ ॥ पर्वताभोगवर्ष्माणमतिकायं महाबलम्। चित्राङ्गमङ्गजैश्चित्रैर्हरिद्रासदृशच्छविम् ॥ २५ ॥ गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता। दीप्ताक्षेणातिताम्रेण लिहानं सृक्किणी मुहुः ॥ २६ ॥ त्रासनं सर्वभूतानां कालान्तकयमोपमम्। निश्वासक्ष्वेड़नादेन भर्त्सयन्तमिव स्थितम् ॥ २७ ॥ स भीमं सहसाभ्येत्य पृदाकुः कुपितो भृशम्। जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ २८ ॥ तेन संस्पृष्टगात्रस्य भीमसेनस्य वै तदा। संज्ञा मुमोह सहसा वरदानेन तस्य हि ॥ २९ ॥ दशनागसहस्राणि धारयन्ति हि यद्बलम्। तद्बलं भीमसेनस्य भुजयोरसमं परैः ॥ ३० ॥ स तेजस्वी तथा तेन भुजगेन वशीकृतः। विस्फुरन् शनकैर्भीमो न शशाक विचेष्टितुम् ॥ ३१ ॥ नागायुतसमप्राणः सिंहस्कन्धो महाभुजः। गृहीतो व्यजहात् सत्त्वं वरदानविमोहितः ॥ ३२ ॥ स हि प्रयत्नमकरोत्तीव्रमात्मविमोचने। न चैनमशकद्वीरः कथञ्चित् प्रतिबाधितुम् ॥ ३३ ॥

इति आरण्यपर्वणि आजगरपर्वणि भीमस्याजगरग्रहणे अष्टसप्तत्यधिकशततोऽध्यायः ॥ १७८ ॥

---

वैशम्पायन उवाच। स भीमसेनस्तेजस्वी तथा सर्पवशङ्गतः। चिन्तयामास सर्पस्य वीर्य्यमत्यद्भुतं महत् ॥ १ ॥ उवाच च महासर्पं कामया ब्रूहि पन्नग। कस्त्वं भो भुजगश्रेष्ठ किं मया च करिष्यसि ॥ २ ॥ पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः।

नागायुतसमप्राणस्त्वया नीतः कथं वशम् ॥ ३ ॥ सिंहाः केसरिणो व्याघ्रा महिषा वारणास्तथा। समागताश्च बहवो निहताश्च मया युधि ॥ ४ ॥ राक्षसाश्च पिशाचाश्च पन्नगाश्च महाबलाः। भुजवेगमशक्ता मे सोढुं पन्नगसत्तम ॥ ५ ॥ किन्तु विद्याबलं किन्तु वरदानमथो तव। उद्योगमपि कुर्वाणो वशगोऽस्मि कृतस्त्वया ॥ ६ ॥ असत्यो विक्रमो नृणामिति मे धीयते मतिः। यथेदं मे त्वया नाग बलं प्रतिहतं महत् ॥ ७ ॥

वैशम्पायन उवाच। इत्येवं वादिनं वीरं भीममक्लिष्टकारिणम्। भोगेन महता गृह्य समन्तात् पर्य्यवेष्टयत् ॥ ८ ॥ निगृह्यैनं महाबाहुं ततः स भुजगस्तदा। विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ ९ ॥ दिष्ट्या त्वं क्षुधितस्याद्य देवैर्भक्ष्यो महाभुज। दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनाम् ॥ १० ॥ यथा त्विदं मया प्राप्तं सर्परूपमरिन्दम। तथावश्यं मया ख्याप्यं तवाद्य शृणु सत्तम ॥ ११ ॥ इमामवस्थां सम्प्राप्तो ह्यहं कोपान्महर्षिणाम्। शापस्यान्तं परिप्रेप्सुः सर्वं तत् कथयामि ते ॥ १२ ॥ नहुषो नाम राजर्षिर्व्यक्तन्ते श्रोत्रमागतः। तवैव पूर्व्वः पूर्व्वेषामायोर्वंशधरः सुतः ॥ १३ ॥ सोऽहं शापादगस्त्यस्य ब्राह्मणानवमन्य च। इमामवस्थामापन्नः पश्य दैवमिदं मम ॥ १४ ॥ त्वाञ्चेदवध्यं दायादमतीवप्रियदर्शनम्। अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम् ॥ १५ ॥ न हि मे मुच्यते कश्चित् कथञ्चित् ग्रहणं गतः। गजो वा महिषो वापि षष्ठे काले नरोत्तम ॥ १६ ॥ नासि केवलवीर्य्येण तिर्य्यग्योनिषु वर्त्तता। गृहीतः कौरवश्रेष्ठ वरदानमिदं मम ॥ १७ ॥ पतता हि विमानाग्रान्मया शक्रासनाद्द्रुतम्। कुरु शापान्तमित्युक्तो भगवान्मुनिसत्तमः ॥ १८ ॥ स मामुवाच तेजस्वी कृपयाभिपरिप्लुतः। मोक्षस्ते भविता राजन् कस्माच्चित् कालपर्य्ययात् ॥ १९ ॥ ततोऽस्मि पतितो भूमौ न

च मामजहात् स्मृतिः । स्मार्त्तमस्ति पुराणं मे यथैवाधिगतं तथा ॥ २० ॥ यस्तु ते व्याहृतान् प्रश्नान् प्रतिब्रूयाद्विभागवित् । स त्वां मोचयिता शापादिति मामब्रवीदृषिः ॥ २१ ॥ गृहीतस्य त्वया राजन् प्राणिनोऽपि बलीयसः । सत्त्वभ्रंशोऽधिकस्यापि सर्वस्याशु भविष्यति ॥ २२ ॥ इति चाप्यहमश्रौषं वचस्तेषां दयावताम् । मयि सञ्जातहार्द्दानामथ तेऽन्तर्हिता द्विजाः ॥ २३ ॥ सोऽहं परमदुष्कर्मा वसामि निरयेऽशुचौ । सर्पयोनिमिमां प्राप्य कालाकाङ्क्षी महाद्युते ॥ २४ ॥ तमुवाच महाबाहुर्भीमसेनो भुजङ्गमम् । न च कुप्ये महासर्प न चात्मानं विगर्हये ॥ २५ ॥ यस्मादभावि भावी वा मनुष्यः सुखदुःखयोः । आगमे यदि वापाये न तत्र ग्लपयेन्मनः ॥ २६ ॥ दैवं पुरुषकारेण को वञ्चयितुमर्हति । दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ॥ २७ ॥ पश्य दैवोपघाताद्धि भुजवीर्यव्यपाश्रयम् । इमामवस्थां सम्प्राप्तमनिमित्तमिहाद्य माम् ॥ २८ ॥ किन्तु नाद्यानुशोचामि तथात्मानं विनाशितम् । यथा तु विपिने न्यस्तान् भ्रातॄन् राज्यपरिच्युतान् ॥ २९ ॥ हिमवांश्च सुदुर्गोऽयं यक्षराक्षससङ्कुलः । मां समुद्वीक्षमाणास्ते प्रपतिष्यन्ति विह्वलाः ॥ ३० ॥ विनष्टमथ मां श्रुत्वा भविष्यन्ति निरुद्यमाः । धर्मशीला मया ते हि बाध्यन्ते राज्यगृद्धिना ॥ ३१ ॥ अथवा नार्जुनो धीमान् विषादमुपयास्यति । सर्वास्त्रविदनाधृष्यो देवगन्धर्वराक्षसैः ॥ ३२ ॥ समर्थः स महाबाहुरेकोऽपि सुमहाबलः । देवराजमपि स्थानात् प्रच्यावयितुमञ्जसा ॥ ३३ ॥ किं पुनर्धृतराष्ट्रस्य पुत्रं दुर्द्यूतदेविनम् । विद्विष्टं सर्वलोकस्य दम्भमोहपरायणम् ॥ ३४ ॥ मातरञ्चैव शोचामि कृपणां पुत्रगृद्धिनीम् । यास्माकं नित्यमाशास्ते महत्त्वमधिकं परैः ॥ ३५ ॥ तस्याः कथं त्वनाथाया मद्विनाशाद्भुजङ्गम । अफलास्ते भविष्यन्ति मयि सर्वे मनोरथाः ॥ ३६ ॥ नकुलः सह-

देवस्य यमौ च गुरुवर्त्तिनौ । महाकुलबलसंगुप्तौ नित्यं पुरुष-
मानिनौ ॥ ३७ ॥ भविष्यतो निरुत्साहौ भ्रष्टवीर्य्यपराक्रमौ ।
मद्विनाशात् परिद्यूनाविति मे वर्त्तते मतिः ॥ ३८ ॥ एवंविधं
बहु तदा विललाप वृकोदरः । भुजङ्गभोगसंरुद्धो नाशकच्च
विचेष्टितुम् ॥ ३९ ॥ युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतनः ।
अनिष्टदर्शनान् घोरानुत्पातान् परिचिन्तयन् ॥ ४० ॥ दारुणं
ह्यशिवं नादं शिवा दक्षिणतः स्थिता । दीप्तायां दिशि वित्रस्ता
रौति तस्याश्रमस्य च ॥ ४१ ॥ एकपक्षाक्षिचरणा वर्त्तिका घोर-
दर्शना । रक्तं वमन्ती ददृशे प्रत्यादित्यमभास्वरा ॥ ४२ ॥ प्रववौ
चानिलो रूक्षश्चण्डः शर्कंरकर्षणः । अपसव्यानि सर्व्वाणि मृग-
पक्षिरुतानि च ॥ ४३ ॥ पृष्ठतो वायसः कृष्णो याहि याहीति
शंसति । मुहुर्मुहुः स्फुरति च दक्षिणोऽस्य भुजस्तदा ॥ ४४ ॥
हृदयं चरणश्चापि वामोऽस्य परिवर्त्तते । सव्यस्याक्ष्णो विकार-
श्चाप्यनिष्टः समपद्यत ॥ ४५ ॥ धर्मराजोऽपि मेधावी मन्यमानो
महद्भयम् । द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ॥ ४६ ॥
शशंस तस्मै पाञ्चाली चिरयातं वृकोदरम् । स प्रतस्थे महा-
बाहुर्धौम्येन सहितो नृप ॥ ४७ ॥ द्रौपद्या रक्षणं कार्य्यमित्यु-
वाच धनञ्जयम् । नकुलं सहदेवञ्च व्यादिदेश द्विजान् प्रति
॥ ४८ ॥ स तस्य पदमुन्नीय तस्मादेवाश्रमात् प्रभुः । मृगयामास
कौन्तेयो भीमसेनं महावने ॥ ४९ ॥ स प्राचीं दिशमास्थाय
महतो गजयूथपान् । ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्नि-
ताम् ॥ ५० ॥ ततो मृगसहस्राणि मृगेन्द्राणां शतानि च ।
पतितानि वने दृष्ट्वा मार्गं तस्याविशन्नृपः ॥ ५१ ॥ धावतस्तस्य
वीरस्य मृगार्थं वातरंहसः । ऊरुवातविनिर्भग्ना द्रुमा व्याव-
र्त्तिताः पथि ॥ ५२ ॥ स गत्वा तैस्तदा चिह्नैर्ददर्श गिरि-
गह्वरे । रूक्षमारुतभूयिष्ठे निष्पत्रद्रुमसंकुले ॥ ५३ ॥ दूरिणे

निर्जने देशे कण्टकिद्रुमसंकुले। अश्मस्थाणुक्षुपाकीर्णे सुदुर्गे विषमोत्कटे। गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तदा॥ ५४॥

इति आरण्यपर्वणि अजगरपर्वणि युधिष्ठिरभीमदर्शने एकोनाशीत्यधिकशततोऽध्यायः॥ १७९॥

---

वैशम्पायन उवाच। युधिष्ठिरस्तमासाद्य सर्पभोगेन वेष्टितम्। दयितं भ्रातरं धीमानिदं वचनमब्रवीत्॥ १॥ कुन्तीमातः कथमिमामापदं त्वमवाप्तवान्। कश्चायं पर्वताभोगप्रतिमः पन्नगोत्तमः॥ २॥ स धर्मराजमालक्ष्य भ्राता भ्रातरमग्रजम्। कथयामास तत् सर्वं ग्रहणादिविचेष्टितम्॥ ३॥

भीमसेन उवाच। अयमार्य्य महासत्त्वो भक्ष्यार्थं मां गृहीतवान्। नहुषो नाम राजर्षिः प्राणवानिव संस्थितः॥ ४॥

युधिष्ठिर उवाच। मुच्यतामयमायुष्मन् भ्राता मेऽमितविक्रमः। वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम्॥ ५॥

सर्प उवाच। आहारो राजपुत्रोऽयं मया प्राप्तो मुखागतः। गम्यतां नेह स्थातव्यं श्वो भवानपि मे भवेत्॥ ६॥ व्रतमेतन्महाबाहो विषयं मम यो व्रजेत्। स मे भक्ष्यो भवेत्तात त्वञ्चापि विषये मम॥ ७॥ चिरेणाद्य मयाहारः प्राप्तोऽयमनुजस्तव। नाहमेनं विमोक्ष्यामि न चान्यमभिकाङ्क्षये॥ ८॥

युधिष्ठिर उवाच। देवो वा यदि वा दैत्य उरगो वा भगवान् यदि। सत्यं सर्प वचो ब्रूहि पृच्छति त्वां युधिष्ठिरः॥९॥ किमर्थञ्च त्वया ग्रस्तो भीमसेनो भुजङ्गम। किमाहृत्य विदित्वा वा प्रीतिस्ते स्याद्भुजङ्गम। किमाहारं प्रयच्छामि कथं मुञ्चेद्भवानिमम्॥ १०॥

सर्प उवाच। नहुषो नाम राजाहमासं पूर्वस्तवानघ।

प्रथितः पञ्चमः सोमादायोः पुत्रो नराधिप ॥ ११ ॥ क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च । त्रैलोक्यैश्वर्य्यमव्यग्रं प्राप्तोऽहं विक्रमेन च ॥ १२ ॥ तदैश्वर्य्यं समासाद्य दर्पो मामगमत्तदा । सहस्रं हि द्विजातीनामुवाह शिविकां मम ॥ १३ ॥ ऐश्वर्य्यमदमत्तोऽहमवमन्य ततो द्विजान् । इमामगस्त्येन दशामानीतः पृथिवीपते ॥ १४ ॥ न तु मामजहात् प्रज्ञा यावदद्येति पाण्डव । तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः ॥ १५ ॥ षष्ठे काले ममाहारः प्राप्तोऽयमनुजस्तव । नाहमेनं विमोक्ष्यामि न चान्यदपि कामये ॥ १६ ॥ प्रश्नानुच्चारितानाद्य व्याहरिष्यसि चेन्मम । अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ १७ ॥

युधिष्ठिर उवाच । ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः । अपि चेच्छक्नुयां प्रीतिमाहर्त्तुं ते भुजङ्गम ॥ १८ ॥ वेद्यञ्च ब्राह्मणेनेह तद्भवान् वेत्ति केवलम् । सर्पराज ततः श्रुत्वा प्रतिवक्ष्यामि ते वचः ॥ १९ ॥

सर्प उवाच । ब्राह्मणः को भवेद्राजन् वेद्यं किञ्च युधिष्ठिर । अवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥ २० ॥

युधिष्ठिर उवाच । सत्यं दानं क्षमा शीलमानृशंस्यन्तपो घृणा । दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतिः ॥ २१ ॥ वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखञ्च यत् । यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् ॥ २२ ॥

सर्प उवाच । चातुर्वर्ण्यं प्रमाणञ्च सत्यञ्च ब्रह्म चैव हि । शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव च ॥ २३ ॥ आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर । वेद्यं यच्चात्र निर्दुःखमसुखञ्च नराधिप । ताभ्यां हीनं पदञ्चान्यन्न तदस्तीति लक्षये ॥ २४ ॥

युधिष्ठिर उवाच । शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते । न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ २५ ॥

यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः। यत्रैतन्न भवेत् सर्प तं शूद्रमिति निर्दिशेत् ॥ २६ ॥ यत् पुनर्भवता प्रोक्तं न वेद्यं विद्यतीति च। ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि ॥ २७ ॥ एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते। यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥ २८ ॥ एवं वै सुखदुःखाभ्यां हीनं नास्ति पदं क्वचित्। एषा मम मतिः सर्प यथा वा मन्यते भवान् ॥ २९ ॥

सर्प उवाच। यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः। वृथा जातिस्तदायुष्मन् कृतिर्यावन्न विद्यते ॥ ३० ॥

युधिष्ठिर उवाच। जातिरत्र महासर्प मनुष्यत्वे महामते। सङ्करात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ ३१ ॥ सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः। वाङ्मैथुनमथो जन्म मरणञ्च समं नृणाम् ॥ ३२ ॥ इदमार्षं प्रमाणञ्च ये यजामह इत्यपि। तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ३३ ॥ प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयते। तदास्य माता सावित्री पिता त्वाचार्य्य उच्यते ॥ ३४ ॥ तावच्छूद्रसमो ह्येष यावद्वेदे न जायते। तस्मिन्नेवं मतिद्वैधे मनुः स्वायम्भुवोऽब्रवीत् ॥ ३५ ॥ कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते। सङ्करस्तत्र नागेन्द्र बलवान् प्रसमीक्षितः ॥ ३६ ॥ यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते। तं ब्राह्मणमहं पूर्वमुक्तवान् भुजगोत्तम ॥ ३७ ॥

सर्प उवाच। श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर। भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ३८ ॥

इति आरण्यपर्वणि आजगरपर्वणि अजगरयुधिष्ठिरसंवादे अशीत्यधिकशततोऽध्यायः ॥ १८० ॥

---

युधिष्ठिर उवाच । भवानेतादृशो लोके वेदवेदाङ्गपारगः । ब्रूहि किं कुर्व्वतः कर्म्म भवेद्गतिरनुत्तमा ॥ १ ॥

सर्प उवाच । पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत । अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्म्मम ॥ २ ॥

युधिष्ठिर उवाच । दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते । अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम् ॥ ३ ॥

सर्प उवाच । दानस्य सत्यं तत्त्वं वा अहिंसा प्रियमेव च । एषां कार्य्यगरीयस्त्वाद्दृश्यते गुरुलाघवम् ॥ ४ ॥ कस्माच्चिद्दान-योगाद्धि सत्यमेव विशिष्यते । सत्यवाक्याच्च राजेन्द्र किञ्चिद्दानं विशिष्यते ॥ ५ ॥ एवमेव महेष्वास प्रियवाक्यान्महीपते । अहिंसा दृश्यते गुर्व्वी ततश्च प्रियमिष्यते ॥ ६ ॥ एवमेतद्भवेद्राजन् कार्य्या-पेक्षमनन्तरम् । यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम् ॥ ७ ॥

युधिष्ठिर उवाच । कथं स्वर्गे गतिः सर्प कर्म्मणाञ्च फलं ध्रुवम् । अशरीरस्य दृश्येत प्रब्रूहि विषयांश्च मे ॥ ८ ॥

सर्प उवाच । तिस्रो वै गतयो राजन् परिदिष्टाः स्वकर्म्मभिः । मानुष्यं स्वर्गवासश्च तिर्य्यग्योनिश्च तत्त्रिधा ॥ ९ ॥ तत्र वै मानुषा-ल्लोकाद्दानादिभिरतन्द्रितः । अहिंसार्थसमायुक्तैः कारणैः स्वर्ग-मश्नुते ॥ १० ॥ विपरीतैश्च राजेन्द्र कारणैर्म्मानुषो भवेत् । तिर्य्यग्योनिस्तथा तात विशेषश्चात्र वच्यते ॥ ११ ॥ कामक्रोधसमा-युक्तो हिंसालोभसमन्वितः । मनुष्यत्वात् परिभ्रष्टस्तिर्य्यग्योनौ प्रसूयते ॥ १२ ॥ तिर्य्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते । गवादिभ्यस्तथाश्वेभ्यो देवत्वमपि दृश्यते ॥ १३ ॥ सोऽयमेता गती-स्तात जन्तुश्चरति कार्य्यवान् । नित्ये महति चात्मानमवस्थापयते द्विजः ॥ १४ ॥ जातो जातश्च बलवान् भुङ्क्ते चात्मा स देहवान् । फलार्थंस्तात निस्सृतः प्रजालचणभावनः ॥ १५ ॥

युधिष्ठिर उवाच । शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः ।

तस्याधिष्ठानमव्यग्रो ब्रूहि सर्प यथातथम्॥ १६॥ किं न खल्वात्मा विषयान् युगपत्त्वं महामते। एतावदुच्यतां चोक्तं सर्वं पन्नगसत्तम॥ १७॥

सर्प उवाच। यदात्मद्रव्यमायुष्मन् देहसंश्रयणान्वितम्। करणाधिष्ठितं भोगानुपभुङ्क्ते यथाविधि॥ १८॥ ज्ञानञ्चैवात्र बुद्धिश्च मनश्च भरतर्षभ। तस्य भोगाधिकरणे करणानि निबोध मे॥ १९॥ मनसा तात पर्य्येति क्रमशो विषयानिमान्। विषयायतनस्थेन भूतात्मा क्षेत्रनिःसृतः॥ २०॥ तत्र चापि नरव्याघ्र मनो जन्तोर्विधीयते। तस्माद्युगपदत्रास्य ग्रहणं नोपपद्यते॥ २१॥ स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः। बुद्धिं द्रव्येषु सृजति विविधेषु परावराम्॥ २२॥ बुद्धेरुत्तरकालाच्च वेदना दृश्यते बुधैः। एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः॥ २३॥

युधिष्ठिर उवाच। मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम्। एतदध्यात्मविदुषां परं कार्य्यं विधीयते॥ २४॥

सर्प उवाच। बुद्धिरात्मानुगातीव उत्पातेन विधीयते। तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत्॥ २५॥ बुद्धिरुत्पद्यते कार्य्यान्मनस्तूत्पन्नमेव हि। बुद्धेर्गुणविधिर्नास्ति मनस्तद्गुणवद्भवेत्॥ २६॥ एतद्विशेषणं तात मनोबुद्ध्योर्यदन्तरम्। त्वमप्यत्राभिसम्बुद्धः कथं वा मन्यते भवान्॥ २७॥

युधिष्ठिर उवाच। अहो बुद्धिमतां श्रेष्ठो शुभा बुद्धिरियं तव। विदितं वेदितव्यन्ते कस्मात् मामनुपृच्छसि॥ २८॥ सर्वज्ञं त्वां कथं मोह आविशत् स्वर्गवासिनम्। एवमद्भुतकर्माणमिति मे संशयो महान्॥ २९॥

सर्प उवाच। सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम्। वर्त्तमानः सुखे सर्वो मुह्यतीति मतिर्मम॥ ३०॥ सोऽहमैश्वर्य्यमोहेन मदाविष्टो युधिष्ठिर। पतितः प्रतिसम्बुद्धस्त्वान्तु सम्बो-

यथाभ्यहम् ॥ ३१ ॥ कृतं कार्य्यं महाराज त्वया मम परन्तप ।
क्षीणः शापः सुकृच्छ्रो मे त्वया सम्भाष्य साधुना ॥ ३२ ॥ अहं-
हि दिवि दिव्येन विमानेन चरन् पुरा । अभिमानेन मत्तः
सन् कञ्चिन्नान्यमचिन्तयम् ॥ ३३ ॥ ब्रह्मर्षिदेवगन्धर्व्वयक्षराक्षस-
पन्नगाः । करान्मम प्रयच्छन्ति सर्व्वे त्रैलोक्यवासिनः ॥ ३४ ॥
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते । तस्य तेजो हराम्याशु
तद्धि दृष्टेर्बलं मम ॥ ३५ ॥ ब्रह्मर्षीणां सहस्रं हि उवाह
शिविकां मम । स मामपनयो राजन् भ्रंशयामास वै श्रियः
॥ ३६ ॥ तत्र ह्यगस्त्य पादेन वहन् स्पृष्टो मया मुनिः । अग-
स्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ ३७ ॥ ततस्तस्मा-
द्विमानाग्रात् प्रच्युतश्च्युतलक्षणः । प्रपतन् बुबुधेऽऽत्मानं व्याली-
भूतमधोमुखम् ॥ ३८ ॥ अयाचन्तमहं विप्रं शापस्यान्तो भवे-
दिति । प्रमादात् संप्रमूढस्य भगवन् क्षन्तुमर्हसि ॥ ३९ ॥ ततः
स मामुवाचेदं प्रपतन्तं कृपान्वितः । युधिष्ठिरो धर्म्मराजः
शापात्त्वां मोचयिष्यति ॥ ४० ॥ अभिमानस्य घोरस्य पापस्य च
नराधिप । फले क्षीणे महाराज फलं पुण्यमवाप्स्यसि ॥ ४१ ॥
ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलम् । ब्रह्म च ब्राह्मणत्वञ्च
येन त्वाहमचूचुदम् ॥ ४२ ॥ सत्यं दमस्तपो दानमहिंसा धर्म्म-
नित्यता । साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ ४३ ॥
अरिष्ट एष ते भ्राता भीमसेनो महाबलः । स्वस्ति तेऽस्तु महा-
राज गमिष्यामि दिवं पुनः ॥ ४४ ॥

वैशम्पायन उवाच । इत्युक्त्वाजगरं देहं मुक्त्वा स नहुषो
नृपः । दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥ ४५ ॥ युधि-
ष्ठिरोऽपि धर्म्मात्मा भ्रात्रा भीमेन सङ्गतः । धौम्येन सहितः श्रीमा-
नाश्रमं पुनरागमत् ॥ ४६ ॥ ततो द्विजेभ्यः सर्व्वेभ्यः समेतेभ्यो
यथातथम् । कथयामास तत्सर्व्वं धर्म्मराजो युधिष्ठिरः ॥ ४७ ॥

तच्छ्रुत्वा ते द्विजाः सर्वे भ्रातरश्चास्य ते त्रयः। आसन् सुव्रीडिता राजन् द्रौपदी च यशस्विनी ॥ ४८ ॥ ते तु सर्वे द्विजश्रेष्ठाः पाण्डवानां हितेप्सया। मैवमित्यब्रुवन् भीमं गर्हयन्तोऽस्य साहसम् ॥ ४९ ॥ पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम्। हर्षमाहारयाञ्चक्रुर्विजह्रुश्च मुदा युताः ॥ ५० ॥

इति आरण्यपर्वणि आजगरपर्वणि भीममोचने एकाशीत्यधिकशततोऽध्यायः ॥ समाप्ताजगरपर्व ॥ १८१ ॥

---

## अथ मार्कण्डेयसमास्यापर्व ॥

वैशम्पायन उवाच। निदाघान्तकरः कालः सर्वभूतसुखावहः। तत्रैव वसतां तेषां प्रावृट् समभिपद्यत ॥ १ ॥ छादयन्तो महाघोषा खं दिशश्च बलाहकाः। प्रववर्षुर्दिवारात्रमसिताः सततं तदा ॥ २ ॥ तपात्ययनिकेताश्च शतशोऽथ सहस्रशः। अपेतार्कप्रभाजाला सविद्युद्विमलप्रभा ॥ ३ ॥ विरूढशस्या धरणी मत्तदंशसरीसृपा। बभूव पयसा सिक्ता शान्ता सर्वमनोरमा ॥ ४ ॥ न स्म प्रज्ञायते किञ्चिदम्भसा समवस्तृते। समं वा विषमं वापि नद्यो वा स्थावराणि च ॥ ५ ॥ क्षुब्धतोया महावेगाः श्वसमाना इवाशुगाः। सिन्धवः शोभयाञ्चक्रुः काननानि तपात्यये ॥ ६ ॥ नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः। वृष्टिभिश्छाद्यमानानां वराहमृगपक्षिणाम् ॥ ७ ॥ स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह। मत्ताः परिपतन्ति स्म दर्दुराश्चैव दर्पिताः ॥ ८ ॥ तथा बहुविधाकारा प्रावृण्मेघानुनादिता। अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ॥ ९ ॥ क्रौञ्चहंससमाकीर्णा शरत् प्रमुदिताभवत्। रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ॥ १० ॥ विमलाकाशनक्षत्रा शरत्तेषां शिवाभवत्।

मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ॥ ११ ॥ ददृशुस्ते
शान्तरजसः क्षपा जलदशीतलाः । ग्रहनक्षत्रसङ्घैश्च सोमेन च
विराजिताः ॥ १२ ॥ कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः ।
नदीः पुष्करिणीश्चैव ददृशुः समलंकृताः ॥ १३ ॥ आकाश-
नीकाशतटां तीरवानीरसंकुलाम् । बभूव चरतां हर्षः पुण्य-
तीर्थां सरस्वतीम् ॥ १४ ॥ ते वै मुमुदिरे वीराः प्रसन्नसलिलां
शिवाम् । पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ १५ ॥
तेषां पुण्यतमा रात्रिः पर्वसन्धौ स्म शारदी । तत्रैव वसतामासीत्
कार्त्तिकी जनमेजय ॥ १६ ॥ पुण्यकृद्भिर्महासत्त्वैस्तापसैः सह
पाण्डवाः । तत् सर्वं भरतश्रेष्ठाः समूहुर्योगमुत्तमम् ॥ १७ ॥
तमिस्राभ्युदये तस्मिन् धौम्येन सह पाण्डवाः । सूतैः पौरोगवैश्चैव
काम्यकं प्रययुर्वनम् ॥ १८ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि काम्यकप्रत्यागमने
द्व्यशीत्यधिकशततोऽध्यायः ॥ १८२ ॥

---

वैशम्पायन उवाच । काम्यकं प्राप्य कौरव्य युधिष्ठिरपुरो-
गमाः । कृतातिथ्या मुनिगणैर्निषेदुः सह कृष्णया ॥ १ ॥ तत-
स्तान् परिविश्वस्तान् वसतः पाण्डुनन्दनान् । ब्राह्मणा बहवस्तत्र
समन्तात् पर्य्यवारयन् ॥ २ ॥ अथाब्रवीद्द्विजः कश्चिदर्जुनस्य
प्रियः सखा । स एष्यति महाबाहुर्वशी शौरिरुदारधीः ॥ ३ ॥
विदिता हि हरेर्यूयमिहायाताः कुरूद्वहाः । सदा हि दर्शना-
कांक्षी श्रेयोऽन्वेषी च वो हरिः ॥ ४ ॥ बहुवत्सरजीवी च मार्क-
ण्डेयो महातपाः । स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान् समेष्यति
॥ ५ ॥ तथैव ब्रुवतस्तस्य प्रत्यदृश्यत केशवः । शैव्यसुग्रीवयुक्तेन
रथेन रथिनाम्वरः ॥ ६ ॥ मघवानिव पौलोम्या सहितः सत्य-

भामया। उपायाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ॥ ७ ॥
अवतीर्य्य रथात् कृष्णो धर्मराजं यथाविधि। ववन्दे मुदितो
धीमान् भीमञ्च बलिनाम्वरम् ॥ ८ ॥ पूजयामास धौम्यं स
यमाभ्यामभिवादितः। परिष्वज्य गुडाकेशं द्रौपदीं पर्य्यसान्त्व-
यत् ॥ ९ ॥ स दृष्ट्वा फाल्गुनं वीरं चिरस्य प्रियमागतम्। पर्य्य-
ष्वजत दाशार्हः पुनः पुनररिन्दमम् ॥ १० ॥ तथैव सत्यभामापि
द्रौपदीं परिषष्वजे। पाण्डवानां प्रियां भार्य्यां कृष्णस्य महिषी
प्रिया ॥ ११ ॥ ततस्ते पाण्डवाः सर्व्वे सभार्य्याः सपुरोहिताः।
आनर्च्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्व्वशः ॥ १२ ॥ कृष्णस्तु पार्थेन
समेत्य विद्वान् धनञ्जयेनासुरतर्ज्जनेन। बभौ यथा भूतपतिर्महात्मा
समेत्य साक्षाद्भगवान् गुहेन ॥ १३ ॥ ततः समस्तानि किरीट-
माली वनेषु वृत्तानि गदाग्रजाय। उक्त्वा यथावत् पुनरन्वपृच्छत्
कथं सुभद्रा च स चाभिमन्युः ॥ १४ ॥ स पूजयित्वा मधुहा यथा-
वत् पार्थंश्च कृष्णाञ्च पुरोहितञ्च। उवाच राजानमभिप्रशंसन्
युधिष्ठिरं तत्र सहोपविश्य ॥ १५ ॥ धर्म्मः परः पाण्डव राज्य-
लाभात्तस्यार्थमाहुस्तप एव राजन्। सत्यार्जवाभ्यां चरता स्वधर्म्मं
जितस्त्वयायञ्च परश्च लोकः ॥ १६ ॥ अधीतमग्रे चरता व्रतानि
सम्यग्धनुर्व्वेदमवाप्य कृत्स्नम्। क्षात्रेण धर्म्मेण वसूनि लब्ध्वा
सर्व्वे ह्यवाप्ताः क्रतवः पुराणाः ॥ १७ ॥ न ग्राम्यधर्म्मेषु रति-
स्तवास्ति कामान्न किञ्चित् कुरुषे नरेन्द्र। न चार्थलोभात् प्रज-
हासि धर्म्मं तस्मात् प्रभावादसि धर्म्मराजः ॥ १८ ॥ दानञ्च सत्यञ्च
तपश्च राजन् श्रद्धा च बुद्धिश्च क्षमा धृतिश्च। अवाप्य राष्ट्राणि
वसूनि भोगानेषा परा पार्थ सदा रतिस्ते ॥ १९ ॥ यदा जनौघः
कुरुजाङ्गलानां कृष्णां सभायामवशामपश्यत्। अपेतधर्म्मव्यवहार-
वृत्तं सहेत तत् पाण्डव कस्त्वदन्यः ॥ २० ॥ असंशयं सर्व्वसमृद्ध-
कामः क्षिप्रं प्रजाः पालयितासि सम्यक्। इमे वयं निग्रहणे

कुरूणां यदि प्रतिज्ञा भवतः समाप्ता ॥ २१ ॥ धौम्यञ्च भीमञ्च युधिष्ठिरञ्च यमौ च कृष्णाञ्च दशार्हसिंहः । उवाच दिष्ट्या भवता भवेन प्राप्तः किरीटी मुदितः कृतास्त्रः ॥ २२ ॥ प्रोवाच कृष्णामपि याज्ञसेनीं दशार्हभर्त्ता सहितः सुहृद्भिः । दिष्ट्या समग्रासि धनञ्जयेन समागतेत्येवमुवाच कृष्णा ॥ २३ ॥ कृष्णे धनुर्वेदरतिप्रधानास्तवात्मजास्ते शिशवः सुशीलाः । सद्भिः सदैवाचरितं सुहृद्भिश्चरन्ति पुत्रास्तव याज्ञसेनि ॥ २४ ॥ राज्येन राष्ट्रैश्च निमन्त्र्यमाणाः पित्रा च कृष्णे तव सोदरैश्च । न यज्ञसेनस्य न मातुलानां गृहेषु बाला रतिमाप्नुवन्ति ॥ २५ ॥ आनर्त्तमेवाभिमुखाः शिवेन गत्वा धनुर्वेदरतिप्रधानाः । तवात्मजा वृष्णिपुरं प्रविश्य तदैव तेभ्यः स्पृहयन्ति कृष्णे ॥ २६ ॥ यथा त्वमेवार्हसि तेषु वृत्तं प्रयोक्तुमार्य्या च यथैव कुन्ती । तेष्वप्रमादेन तथा करोति तथैव भूयश्च सदा सुभद्रा ॥ २७ ॥ यथानिरुद्धस्य यथाभिमन्योर्यथा सुनीथस्य यथैव भानोः । तथा विनेता च गतिश्च कृष्णे तवात्मजानामपि रौक्मिणेयः ॥ २८ ॥ गदासिचर्मग्रहणेषु शूरानस्त्रेषु शिक्षासु रथाश्वयाने । सम्यग्विनेता विनयेदतन्द्रीस्तांश्चाभिमन्युः सततं कुमारः ॥ २९ ॥ स चापि सम्यक् प्रणिधाय शिक्षां शस्त्राणि चैषां विधिवत् प्रदाय । तवात्मजानाञ्च तथाभिमन्योः पराक्रमैस्तुष्यति रौक्मिणेयः ॥ ३० ॥ यदा विहारं प्रसमीक्षमाणाः प्रयान्ति पुत्रास्तव याज्ञसेनि । एकैकमेषामनुयान्ति तत्र रथाश्वयानानि च दन्तिनश्च ॥ ३१ ॥ अथाब्रवीद्धर्मराजन्तु कृष्णो दशार्हयोधाः कुकुरान्धकाश्च । एते निदेशं तव पालयन्तस्तिष्ठन्तु यत्रेच्छसि तत्र राजन् ॥ ३२ ॥ आवर्त्ततां कार्मुकवेगवाता हलायुधप्रग्रहणा मधूनाम् । सेना तवार्थेषु नरेन्द्र यत्ता ससादिपत्त्यश्वरथा सनागा ॥ ३३ ॥ प्रस्थाप्यतां पाण्डव धार्त्तराष्ट्रः सुयोधनः पापकृतांवरिष्ठः । सहानुबन्धः

वसुदेवस्य चौभस्य सौभाधिपतेश्च मार्गम्॥ ३४॥ कामं तथा तिष्ठ नरेन्द्र तस्मिन् यथा कृतस्ते समयः सभायाम्। दृष्टाहं-शेषैस्तु हतारियोधं प्रतीक्षतां नागपुरं भवन्तम्॥ ३५॥ अपेत-मन्युर्व्यपनीतपाप्मा विहृत्य यत्रेच्छसि तत्र कामम्। ततः प्रसिद्धं प्रथमं विशोकः प्रपत्स्यसे नागपुरं सुराष्ट्रम्॥ ३६॥ तत-स्तदाज्ञाय मतं महात्मा यथावदुक्तं पुरुषोत्तमेन। प्रशस्य विप्रेक्ष्य च धर्मराजः कृताञ्जलिः केशवमित्युवाच॥ ३७॥ असंशयं केशव पाण्डवानां भवान् गतिस्त्वच्छरणा हि पार्थाः। कालोदये तच्च ततश्च भूयः कर्त्ता भवान् कर्म न संशयोऽस्ति॥ ३८॥ यथा-प्रतिज्ञं विहृतश्च कालः सर्वाः समा द्वादश निर्जनेषु। अज्ञात-चर्य्यां विधिवत् समाप्य भवन्तुतः केशव पाण्डवेयाः॥ ३९॥ एषैव बुद्धिर्जुषतां सदा त्वां सत्ये स्थिताः केशव पाण्डवेयाः। स-दानधर्माः सजनाः सदाराः सबान्धवास्त्वच्छरणा हि पार्थाः॥४०॥

वैशम्पायन उवाच। तथा वदति वार्ष्णेये धर्मराजे च भारत। अथ पश्चात्तपोवृद्धो बहुवर्षसहस्रधृक्॥ ४१॥ प्रत्य-दृश्यत धर्मात्मा मार्कण्डेयो महातपाः। अजरश्चामरश्चैव रूपौ-दार्य्यगुणान्वितः॥ ४२॥ व्यदृश्यत तथा युक्तो यथास्यात् पञ्च-विंशकः। तमागतमृषिं वृद्धं बहुवर्षसहस्रिणम्॥ ४३॥ आनर्चु-र्ब्राह्मणाः सर्वे कृष्णश्च सह पाण्डवैः। तमर्चितं सुविश्वस्तमासीन-मृषिसत्तमम्। ब्राह्मणानां मतेनाह पाण्डवानाञ्च केशवः॥ ४४॥

कृष्ण उवाच। शुश्रूषवः पाण्डवास्ते ब्राह्मणाश्च समागताः। द्रौपदि सत्यभामा च तथाहं परमं वचः॥ ४५॥ पुरावृत्ताः कथाः पुण्याः सदाचारान् सनातनान्। राज्ञां स्त्रीणामृषीणाञ्च मार्कण्डेय विचक्ष्व नः॥ ४६॥

वैशम्पायन उवाच। तेषु तत्रोपविष्टेषु देवर्षिरपि नारदः। आजगाम विशुद्धात्मा पाण्डवानवलोककः॥ ४७॥ तमप्यथ

महात्मानं सर्वे ते पुरुषर्षभाः । पाद्यार्घ्याभ्यां यथान्यायमुपतस्थु-
र्मनीषिणः ॥ ४८ ॥ नारदस्त्वथ देवर्षिर्ज्ञात्वा तांस्तु कृतक्षणान् ।
मार्कण्डेयस्य वदतस्तां कथामन्वमोदत ॥ ४९ ॥ उवाच चैनं
कालज्ञः स्मयन्निव सनातनः । ब्रह्मर्षे कथ्यतां यत्ते पाण्डवेषु
विवक्षितम् ॥ ५० ॥ एवमुक्तः प्रत्युवाच मार्कण्डेयो महातपाः ।
क्षणं कुरुध्वं विपुलमाख्यातव्यं भविष्यति ॥ ५१ ॥ एवमुक्ता
क्षणञ्चक्रुः पाण्डवाः सह तैर्द्विजैः । मध्यन्दिने यथादित्यं प्रेक्ष-
न्तस्ते महामुनिम् ॥ ५२ ॥

वैशम्पायन उवाच । तं विवक्षन्तमालक्ष्य कुरुराजो महा-
मुनिम् । कथासञ्जननार्थाय चोदयामास पाण्डवः ॥ ५३ ॥
भवान् दैवतदैत्यानामृषीणाञ्च महात्मनाम् । राजर्षीणाञ्च सर्वेषां
चरितज्ञः पुरातनः ॥ ५४ ॥ सेव्यश्चोपासितव्यश्च मतो नः
काङ्क्षितश्चिरम् । अयञ्च देवकीपुत्रः प्राप्तोऽस्मानवलोककः ॥ ५५ ॥
भवत्येव हि मे बुद्धिर्दृष्ट्वात्मानं सुखाच्च्युतम् । धार्त्तराष्ट्रांश्च
दुर्वृत्तानृध्यतः प्रेक्ष्य सर्वशः ॥ ५६ ॥ कर्मणः पुरुषः कर्त्ता शुभ-
स्याप्यशुभस्य वा । स फलं तदुपाश्नाति कथं कर्त्ताखिदीश्वरः
॥ ५७ ॥ कुतो वा सुखदुःखेषु नृणां ब्रह्मविदाम्वर । इह वा
कृतमन्वेति परदेहेऽथ वा पुनः ॥ ५८ ॥ देही च देहं सन्त्यज्य
मृग्यमाणः शुभाशुभैः । कथं संयुज्यते प्रेत्य इह वा द्विजसत्तम
॥ ५९ ॥ ऐहलौकिकमेवेह उताहो पारलौकिकम् । क्व च
कर्माणि तिष्ठन्ति जन्तोः प्रेतस्य भार्गव ॥ ६० ॥

मार्कण्डेय उवाच । त्वद्युक्तोऽयमनुप्रश्नो यथावद्वदताम्वर ।
विदितं वेदितव्यन्ते स्थित्यर्थं त्वन्तु पृच्छसि । अत्र ते कथयि-
ष्यामि तदिहैकमनाः शृणु ॥ ६१ ॥ यथेहामुत्र च नरः सुख-
दुःखमुपाश्नुते । निर्मलानि शरीराणि विशुद्धानि शरीरिणाम्
॥ ६२ ॥ ससर्ज धर्मतन्त्राणि पूर्वोत्पन्नः प्रजापतिः । अमोघ-

फलसङ्कल्पाः सुव्रताः सत्यवादिनः ॥ ६३ ॥ ब्रह्मभूता नराः पुण्याः पुराणाः कुरुसत्तम। सर्वे देवैः समायान्ति स्वच्छन्देन नभस्तलम् ॥ ६४ ॥ ततश्च पुनरायान्ति सर्वे स्वच्छन्दचारिणः। स्वच्छन्दमरणाश्चासन् नराः स्वच्छन्दजीविनः ॥ ६५ ॥ अल्पाबाधा निरातङ्काः सिद्धार्था निरुपद्रवाः। द्रष्टारो देवसङ्घानामृषीणाञ्च महात्मनाम् ॥ ६६ ॥ प्रत्यक्षाः सर्वधर्माणां दान्ता विगतमत्सराः। आसन् वर्षसहस्रीयास्तथा पुत्रसहस्रिणः ॥ ६७ ॥ ततः कालान्तरेऽन्यस्मिन् पृथिवीतलचारिणः। कामक्रोधाभिभूतास्ते मायाव्याजोपजीविन ॥ ६८ ॥ लोभमोहाभिभूतास्ते त्यक्ता देहैस्ततो नराः। अशुभैः कर्मभिः पापास्तिर्य्यङ्निरयगामिनः ॥ ६९ ॥ संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः। मोघेष्टा मोघसङ्कल्पा मोघज्ञाना विचेतसः ॥ ७० ॥ सर्वाभिशङ्किनश्चैव संवृत्ताः क्लेशदायिनः। अशुभैः कर्मभिश्चापि प्रायशः परिचिह्निताः ॥ ७१ ॥ दौष्कुल्या व्याधिबहुला दुरात्मानोऽप्रतापिनः। भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः ॥ ७२ ॥ नाथन्तः सर्वकामानां नास्तिका भिन्नचेतसः। जन्तोः प्रेतस्य कौन्तेय गतिः स्वैरिह कर्मभिः ॥ ७३ ॥

युधिष्ठिर उवाच। प्राज्ञस्य हीनबुद्धेश्च कर्मकोषः क्व तिष्ठति। क्वस्थस्तत् समुपाश्नाति सुकृतं यदि वेतरत् ॥ ७४ ॥

मार्कण्डेय उवाच। इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु। अयमादिशरीरेण देवसृष्टेन मानवः ॥ ७५ ॥ शुभानामशुभानाञ्च कुरुते सञ्चयं महत्। आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम् ॥ ७६ ॥ सम्भवत्येव युगपद्योनौ नास्त्यन्तराभवः। तत्रास्य स्वकृतं कर्म छायेवानुगतं तदा ॥ ७७ ॥ फलत्यथ सुखार्हो वा दुःखार्हो वाथ जायते। कृतान्तविधिसंयुक्तः स जन्तुर्लक्षणैः शुभैः ॥ ७८ ॥ अशुभैर्वा निरादानो लक्ष्यते ज्ञानदृष्टिभिः। एषा तावदबुद्धीनां

गतिरुक्ता युधिष्ठिर ॥ ७९ ॥ अतः परं ज्ञानवतां निबोध गतिमुत्तमाम् । मनुष्यास्तप्ततपसः सर्वागमपरायणाः ॥ ८० ॥ स्थिरव्रताः सत्यपरा गुरुशुश्रूषणे रताः । सुशीलाः शुक्लजातीयाः क्षान्ता दान्ताः सुतेजसः ॥ ८१ ॥ शुचियोन्यन्तरगताः प्रायशः शुभलक्षणाः । जितेन्द्रियत्वाद्वशिनः शुक्लत्वान्मन्दरोगिणः ॥ ८२ ॥ अल्पाबाधपरित्रासाद्भवन्ति निरुपद्रवाः । च्यवन्तं जायमानञ्च गर्भस्थञ्चैव सर्वशः ॥ ८३ ॥ स्वमात्मानं परञ्चैव बुध्यन्ते ज्ञानचक्षुषा । ऋषयस्ते महात्मानः प्रत्यक्षागमबुद्धयः ॥ ८४ ॥ कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम् । किञ्चिद्दैवाद्धठात् किञ्चित् किञ्चिदेव स्वकर्मभिः ॥ ८५ ॥ प्राप्नुवन्ति नरा राजन् मा तेऽस्त्वन्या विचारणा । इमामत्रोपमाञ्चापि निबोध वदतांवर ॥ ८६ ॥ मनुष्यलोके यच्छ्रेयः परं मन्ये युधिष्ठिर । इह वै कस्य नामुत्र अमुत्रैकस्य नो इह । इह चामुत्र वैकस्य नामुत्रैकस्य नो इह ॥ ८७ ॥ धनानि येषां विपुलानि सन्ति नित्यं रमन्ते सुविभूषिताङ्गाः । तेषामयं शत्रुवरघ्न लोको नासौ सदा देहसुखे रतानाम् ॥ ८८ ॥ ये योगयुक्तास्तपसि प्रसक्ताः स्वाध्यायशीला जरयन्ति देहान् । जितेन्द्रियाः प्राणिवधे निवृत्तास्तेषामसौ नायमरिघ्न लोकः ॥ ८९ ॥ ये धर्ममेव प्रथमं चरन्ति धर्मेण लब्ध्वा च धनानि काले । दारानवाप्य क्रतुभिर्यजन्ते तेषामयञ्चैव परश्च लोकः ॥ ९० ॥ ये नैव विद्यां न तपो न दानं न चापि मूढाः प्रजने यतन्ति । न चानुगच्छन्ति सुखानुभोगांस्तेषामयं नैव परश्च लोकः ॥ ९१ ॥ सर्वे भवन्तस्त्वतिवीर्य्यसत्त्वा दिव्यौजसः संहननोपपन्नाः । लोकादमुष्मादवनिं प्रपन्नाः स्वधीतविद्याः सुरकार्य्यहेतोः ॥ ९२ ॥ कृत्वैव कर्माणि महान्ति शूरास्तपोदमाचारविहारशीलाः । देवानृषीन् प्रेतगणांश्च सर्वान् सन्तर्पयित्वा विधिना परेण ॥ ९३ ॥ स्वर्गं परं पुण्यकृतो

निवासं क्रमेण सम्प्राप्स्यथ कर्मभिः स्वैः । मा भूद्विमना तव कौरवेन्द्र दृष्ट्वात्मनः क्लेशमिमं सुखार्हम् ॥ ९४ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि मार्कण्डेयकथायां त्र्यशीत्यधिकशततोऽध्यायः ॥ १८३ ॥

---

वैशम्पायन उवाच । मार्कण्डेयं महात्मानमूचुः पाण्डुसुतास्तदा । माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यताम् ॥ १ ॥ एवमुक्तः स भगवान् मार्कण्डेयो महातपाः । उवाच सुमहातेजाः सर्वशास्त्रविशारदः ॥ २ ॥

मार्कण्डेय उवाच । हैहयानां कुलकरो राजा परपुरञ्जयः । कुमारो रूपसम्पन्नो मृगयां व्यचरद्बली ॥ ३ ॥ चरमाणस्तु सोऽरण्ये तृणवीरुत्समावृते । कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके ॥ ४ ॥ स तेन निहतोऽरण्ये मन्यमानेन वै मृगम् । व्यथितः कर्म तत् कृत्वा शोकोपहतचेतनः ॥ ५ ॥ जगाम हैहयानां वै सकाशं प्रथितात्मनाम् । राज्ञां राजीवनेत्रोऽसौ कुमारः पृथिवीपतिः ॥ ६ ॥ तेषाञ्च तद्यथावृत्तं कथयामास वै तदा । तत्रापि हिंसितं तात मुनिं मूलफलाशिनम् ॥ ७ ॥ श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः । कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः ॥ ८ ॥ जग्मुश्चारिष्टनेम्नोऽथ तार्क्ष्यस्याश्रममञ्जसा । तेऽभिवाद्य महात्मानं तं मुनिं नियतव्रतम् ॥ ९ ॥ तस्थुः सर्वे स तु मुनिस्तेषां पूजामथाहरत् । ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने ॥ १० ॥ त्वत्तोऽर्हाः कर्मदोषेण ब्राह्मणो हिंसितो हि नः । तानब्रवीत् स विप्रर्षिः कथं वो ब्राह्मणो हतः ॥ ११ ॥ क्व चासौ ब्रूत सहिताः पश्यध्वं मे तपोबलम् । ते तु तत् सर्वमखिलमाचख्यायास्मै यथातथम् ॥ १२ ॥ नापश्यन् तमृषिं

तत्र गतास्ते समागताः। अन्वेषमाणाः सव्रीड़ाः स्वप्नवन्नष्ट-
चेतनाः॥ १३॥ तानब्रवीत्तत्र मुनिस्ताक्ष्यः परपुरञ्जय। स्यादयं
ब्राह्मणः सोऽथ युष्माभिर्यो विनाशितः॥ १४॥ पुत्रो ह्ययं मम
नृपास्तपोबलसमन्वितः। ते च दृष्ट्वैव तमृषिं विस्मयं परमं
गताः॥ १५॥ महदाश्चर्य्यमिति वै ते ब्रुवाणा महीपते। हतो
ह्ययमुपानीतः कथं जीवितमाप्नवान्॥ १६॥ किमेतत्तपसो वीर्य्यं
येनायं जीवितः पुनः। श्रोतुमिच्छामहे विप्र यदि श्रोतव्य-
मित्युत॥ १७॥ न तानुवाच नास्माकं मृत्युः प्रभवते नृपाः।
कारणं वः प्रवक्ष्यामि हेतुयोगसमासतः॥ १८॥ सत्यमेवाभि-
जानीमो नानृते कुर्महे मनः। स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं
न नः॥ १९॥ यद्ब्राह्मणानां कुशलं तदेषां कथयामहे। नैषां
दुश्चरितं ब्रूमस्तस्मान्मृत्युभयं न नः॥ २०॥ अतिथीनन्नपानेन
भृत्यानत्यशनेन च। संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः
॥ २१॥ शान्ता दान्ताः क्षमाशीलास्तीर्थदानपरायणाः। पुण्य-
देशनिवासाच्च तस्मान्मृत्युभयं न नः॥ २२॥ तेजस्विदेशवासाच्च
तस्मान्मृत्युभयं न नः। एतद्वै लेशमात्रं वः समाख्यातं विमत्-
सराः॥ २३॥ गच्छध्वं सहिताः सर्व्वे न पापाद्भयमस्ति वः।
एवमस्त्विति ते सर्व्वे प्रतिपूज्य महामुनिम्। स्वदेशमगमन् हृष्टा
राजानो भरतर्षभ॥ २४॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणमाहात्म्य-
कथने चतुरशीत्यधिकशतोऽध्यायः॥ १८४॥

---

मार्कण्डेय उवाच। भूय एव महाभाग्यं ब्राह्मणानां निबोध
मे। वैण्यो नामेह राजर्षिरश्वमेधाय दीक्षितः॥ १॥ तमत्रि-
र्गन्तुमारेभे वित्तार्थमिति नः श्रुतम्। भूयोऽर्थं नानुरुध्यत् स

धर्मव्यक्तिनिदर्शनात् ॥ २ ॥ स विचिन्त्य महातेजा वनमेवान्वरोचयत्। धर्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह ॥ ३ ॥ प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवम्। अरण्यगमनं क्षिप्रं रोचतां वो गुणाधिकम् ॥ ४ ॥ तं भार्य्या प्रत्युवाचाथ धर्ममेवानुतन्वती। वैन्यं गत्वा महात्मानमर्थयस्व धनं बहु ॥ ५ ॥ स ते दास्यति राजर्षिर्यजमानोऽर्थितो धनम्। तत आदाय विप्रर्षे प्रतिगृह्य धनं बहु ॥ ६ ॥ भृत्यान् सुतान् संविभज्य ततो व्रज यथेप्सितम्। एष वै परमो धर्मो धर्मविद्भिरुदाहृतः ॥ ७ ॥

अत्रिरुवाच। कथितो मे महाभागे गौतमेन महात्मना। वैन्यो धर्मार्थसंयुक्तः सत्यव्रतसमन्वितः ॥ ८ ॥ किन्त्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः। यथा मे गौतमः प्राह ततो न व्यवसाम्यहम् ॥ ९ ॥ तत्र स्म वाचं कल्याणीं धर्मकामार्थसंहिताम्। मयोक्तामन्यथा ब्रूयुस्ततस्ते वै निरर्थिकाम् ॥ १० ॥ गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव। गाश्च मे दास्यते वैन्यः प्रभूतञ्चार्थसञ्चयम् ॥ ११ ॥

मार्कण्डेय उवाच। एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः। गत्वा च यज्ञायतनमत्रिस्तुष्टाव तं नृपम् ॥ १२ ॥ वाक्यैर्मङ्गलसंयुक्तैः पूजयानोऽब्रवीद्वचः।

अत्रिरुवाच। राजन् धन्यस्त्वमीशश्च भुवि त्वं प्रथमो नृपः। स्तुवन्ति त्वां मुनिगणास्त्वदन्यो नास्ति धर्मवित्। तमब्रवीदृषिः क्रुद्धो वचनं वै महातपाः ॥ १३ ॥

गौतम उवाच। मैवमत्रे पुनर्ब्रूया न ते प्रज्ञा समाहिता। अत्र नः प्रथमं स्थाता महेन्द्रो वै प्रजापतिः। अथात्रिरपि राजेन्द्र गौतमं प्रत्यभाषत ॥ १४ ॥

अत्रिरुवाच। अयमेव विधाता हि यथैवेन्द्रः प्रजापतिः। त्वमेव मुह्यसे मोहान्न प्रज्ञानन्तवास्ति ह ॥ १५ ॥

गौतम उवाच । जानामि नाहं मुह्यामि त्वमेवात्र विमुह्यसे । स्तौषि त्वं दर्शनप्रेप्सू राजानं जनसंसदि ॥ १६ ॥ न वेत्थ परमं धर्मं न चावैषि प्रयोजनम् । बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना ॥ १७ ॥

मार्कण्डेय उवाच । विवदन्तौ तथा तौ तु मुनीनां दर्शने स्थितौ । ये तस्य यज्ञे संवृत्तास्तेऽपृच्छन्त कथन्त्विमौ । प्रवेशः केन दत्तोऽयमुभयोर्वैण्यसंसदि ॥ १८ ॥ उच्चैः समभिभाषन्तौ केन कार्य्येण धिष्ठितौ । ततः परमधर्मात्मा काश्यपः सर्वधर्मवित् ॥ १९ ॥ विवादिनावनुप्राप्तौ तावुभौ प्रत्यवेदयत् । अथाब्रवीत् सदस्यांस्तु गौतमो मुनिसत्तमान् ॥ २० ॥

गौतम उवाच । आवयोर्व्याहृतं प्रश्नं शृणुत द्विजसत्तमाः । वैण्यं विधातेत्याहात्रिरत्र नौ संशयो महान् ॥ २१ ॥

मार्कण्डेय उवाच । श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन् द्रुतम् । सनत्कुमारं धर्मज्ञं संशयच्छेदनाय वै ॥२२॥ स च तेषां वचः श्रुत्वा यथातत्त्वं महातपाः । प्रत्युवाचाथ तानेवं धर्मार्थसहितं वचः ॥२३॥

सनत्कुमार उवाच । ब्रह्म क्षत्रेण सहितं क्षत्रञ्च ब्रह्मणा सह । संयुक्तौ दहतः शत्रून् वनानीवाग्निमारुतौ ॥ २४ ॥ राजा वै प्रथितो धर्मः प्रजानां पतिरेव च । स एव शक्रः शुक्रश्च स धाता च बृहस्पतिः ॥ २५ ॥ प्रजापतिर्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः । य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ २६ ॥ पुरायोनिर्युधाजिच्च अभियामुदितो भवः । स्वर्णेता सहजिद्बभ्रुरिति राजाभिधीयते ॥ २७ ॥ सत्ययोनिः पुराविच्च सत्यधर्मप्रवर्त्तकः । अधर्मादृषयो भीता बलं क्षत्रे समादधन् ॥ २८ ॥ आदित्यो दिवि देवेषु तमो नुदति तेजसा । तथैव नृपतिर्भूमावधर्मान्नुदते भृशम् ॥ २९ ॥ ततो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् । उत्तरः सिध्यते पक्षो येन राजेति भाषितम् ॥ ३० ॥

मार्कण्डेय उवाच। ततः स राजा संहृष्टः सिद्धे पक्षे महामनाः। तमत्रिमब्रवीत् प्रीतः पूर्वं येनाभिसंस्तुतः ॥ ३१ ॥ यस्मात् पूर्वं मनुष्येषु ज्यायांसं मामिहाब्रवीः। सर्वदेवैश्च विप्रर्षे सम्मितं श्रेष्ठमेव च ॥ ३२ ॥ तस्मात्तेऽहं प्रदास्यामि विविधं वसु भूरि च। दासीसहस्रं श्यामानां सुवस्त्राणामलङ्कृतम् ॥ ३३ ॥ दश-कोटिर्हिरण्यस्य रुक्मभारांस्तथा दश। एतद्ददानि विप्रर्षे सर्वज्ञस्त्वं मतो हि मे ॥ ३४ ॥ तदत्रिर्न्यायतः सर्वं प्रतिगृह्याभिसत्कृतः। प्रत्युज्जगाम तेजस्वी गृहानेव महातपाः ॥ ३५ ॥ प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान्। तपः समभिसन्धाय वनमेवान्वपद्यत ॥ ३६ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि ब्राह्मणमाहात्म्य-कथने पञ्चाशीत्यधिकशततोऽध्यायः ॥ १८५ ॥

---

मार्कण्डेय उवाच। अत्रैव च सरस्वत्या गीतं परपुरञ्जय। पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता ॥ १ ॥

तार्क्ष्य उवाच। किन्नु श्रेयः पुरुषस्येह भद्रे कथं कुर्वन्न च्यवते स्वधर्मात्। आचक्ष्व मे चारुसर्वाङ्गि कुर्य्यां त्वया शिष्टो न च्यवेयं स्वधर्मात् ॥ २ ॥ कथं वाग्निं जुहुयां पूजये वा कस्मिन् काले केन धर्मो न नश्येत्। एतत् सर्वं सुभगे प्रब्रवीहि यथा लोकान् विरजाः सञ्चरेयम् ॥ ३ ॥

मार्कण्डेय उवाच। एवं पृष्टा प्रीतियुक्तेन तेन शुश्रूषुमीक्ष्योत्तमबुद्धियुक्तम्। तार्क्ष्यं विप्रं धर्मयुक्तं हितञ्च सरस्वती वाक्यमिदं बभाषे ॥ ४ ॥

सरस्वत्युवाच। यो ब्रह्म जानाति यथाप्रदेशं स्वाध्यायनित्यः शुचिरप्रमत्तः। स वै पारं देवलोकस्य गन्ता सहामरैः

प्राप्नुयात् प्रीतियोगम् ॥ ५ ॥ तत्र स्म रम्या विपुला विशोकाः सुपुष्पिताः पुष्करिण्यः सुपुण्याः । अकर्द्दमा मीनवत्यः सुतीर्था हिरण्मयैरावृताः पुण्डरीकैः ॥ ६ ॥ तासां तीरेष्वासते पुण्य-भाजो महीयमानाः पृथगप्सरोभिः । सुपुण्यगन्धाभिरलङ्कृताभि-र्हिरण्यवर्णाभिरतीव हृष्टाः ॥ ७ ॥ परं लोकं गोप्रदास्त्वाप्नुवन्ति दत्त्वानड्वाहं सूर्य्यलोकं व्रजन्ति । वासो दत्त्वा चान्द्रमसन्तु लोकं दत्त्वा हिरण्यममरत्वमेति ॥ ८ ॥ धेनुं दत्त्वा सुप्रभां सुप्रदोहां कल्याणवत्सामपलायिनीञ्च । यावन्ति रोमाणि भवन्ति तस्या-स्तावन्ति वर्षाण्यासते देवलोके ॥ ९ ॥ अनड्वाहं सुव्रतं यो ददाति हलस्य वोढारमनन्तवीर्य्यम् । धुरन्धरं बलवन्तं युवानं प्राप्नोति लोकान् दशधेनुदस्य ॥ १० ॥ ददाति यो वै कपिलां सचेलां कांस्योपदोहां द्रविणैरुत्तरीयैः । तैस्तैर्गुणैः कामदुघाय भूत्वा नरं प्रदातारमुपैति सा गौः ॥ ११ ॥ यावन्ति रोमाणि भवन्ति धेन्वास्तावत् फलं भवति गोप्रदाने । पुत्रांश्च पौत्रांश्च कुलञ्च सर्व-मासप्तमं तारयते परत्र ॥ १२ ॥ सदक्षिणां काञ्चनचारुशृङ्गीं कांस्योपदोहां द्रविणैरुत्तरीयैः । धेनुं तिलानां ददतो द्विजाय लोका वसूनां सुलभा भवन्ति ॥ १३ ॥ स्वकर्म्मभिर्हीनवसंनिरुद्धे तीव्रान्धकारे नरके पतन्तम् । महार्णवे नौरिव वातयुक्ता दानं गवां तारयते परत्र ॥ १४ ॥ यो ब्रह्मदेयान्तु ददाति कन्यां भूमिप्रदानञ्च करोति विप्रे । ददाति दानं विधिना च यश्च स लोकमाप्नोति पुरन्दरस्य ॥ १५ ॥ यः सप्तवर्षाणि जुहोति तार्क्ष्य हव्यन्त्वग्नौ नियतः साधुशीलः । सप्तावरान् सप्तपूर्व्वान् पुनाति पितामहानात्मनः कर्म्मभिः स्वैः ॥ १६ ॥

तार्क्ष्य उवाच । किमग्निहोत्रस्य व्रतं पुराणमाचक्ष्व मे पृच्छतस्त्वानुरूपं । त्वयानुशिष्टोऽहमिहाद्य विद्यां यदग्निहोत्रस्य व्रतं पुराणम् ॥ १७ ॥

सरस्वत्युवाच। न चाशुचिर्नाप्यनिर्णिक्तपाणिर्नाब्रह्मवि-
ज्जुहुयान्नाविपश्चित्। बुभुक्षवः शुचिकामा हि देवा नाश्रद्द-
धानाद्धि हविर्जुषन्ति ॥ १८ ॥ नाश्रोत्रियं देवहव्ये नियुञ्ज्या-
न्मोघं पुरा सिञ्चति तादृशो हि। अपूर्णमश्रोत्रियमाह तार्क्ष्य न
वै तादृग्जुहुयादग्निहोत्रम् ॥ १९ ॥ कृशाश्च ये जुह्वति श्रद्द-
धानाः सत्यव्रता हुतशिष्टाशिनश्च। गवां लोकं प्राप्यते पुण्यगन्धं
पश्यन्ति देवं परमञ्चापि सत्यम् ॥ २० ॥

तार्क्ष्य उवाच। क्षेत्रज्ञभूतां परलोकभावे कर्मोदये बुद्धि-
मतिप्रविष्टाम्। प्रज्ञाञ्च देवीं सुभगे विमृश्य पृच्छामि त्वां का
ह्यसि चारुरूपे ॥ २१ ॥

सरस्वत्युवाच। अग्निहोत्रादहमभ्यागतास्मि विप्रर्षभाणां
संशयच्छेदनाय। त्वत्संयोगादहमेतमब्रुवं भावे स्थिता तथ्य-
मर्थं यथावत् ॥ २२ ॥

तार्क्ष्य उवाच। न हि त्वया सदृशी काचिदस्ति विभ्रा-
जसेऽत्यतिमात्रं यथा श्रीः। रूपञ्च ते दिव्यमनन्तकान्ति प्रज्ञाञ्च
देवीं सुभगे बिभर्षि ॥ २३ ॥

सरस्वत्युवाच। श्रेष्ठानि यानि द्विपदां वरिष्ठ यज्ञेषु
विद्वन्नुपपादयन्ति। तैरेव चाहं सम्प्रवृद्धा भवामि चाप्यायिता
रूपवती च विप्र ॥ २४ ॥ यच्चापि द्रव्यमुपयुज्यते ह वानस्पत्य-
मायसं पार्थिवं वा। दिव्येन रूपेण च प्रज्ञया च तवैव सिद्धि-
रिति विद्धि विद्वन् ॥ २५ ॥

तार्क्ष्य उवाच। इदं श्रेयः परमं मन्यमाना व्यायच्छन्ते
मुनयः सम्प्रतीताः। आचक्ष्व मे तं परमं विशोकं मोक्षं परं यं
प्रविशन्ति धीराः ॥ २६ ॥ साङ्ख्या योगाः परमं यं विदन्ति परं
पुराणं तमहं न वेद्मि।

सरस्वत्युवाच। तं वै परं वेदविदः प्रपन्नाः परं परेभ्यः

प्रथितं पुराणम् । स्वाध्यायवन्तो व्रतपुण्ययोगैस्तपोधना वीत-शोका विमुक्ताः ॥ २७ ॥ तस्याथ मध्ये वेतसः पुण्यगन्धः सहस्र-शाखो विपुलो विभाति । तस्य मूलात् सरितः प्रस्रवन्ति मधू-दकप्रस्रवणाः सुपुण्याः ॥ २८ ॥ शाखां शाखां महानद्यः संयान्ति सिकताशयाः । धानापूपा मांसशाकाः सदा पायसकर्द्दमाः ॥२९ ॥ यस्मिन्नग्निमुखा देवाः सेन्द्राः सहमरुद्गणाः । ईजिरे क्रतुभिः श्रेष्ठैस्तत्पदं परमं मम ॥ ३० ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि सरस्वतीतार्च्यसंवादे षड़शीत्यधिकशततोऽध्यायः ॥ १८६ ॥

---

वैशम्पायन उवाच । ततः स पाण्डवो विप्रं मार्कण्डेय-मुवाच ह । कथयस्वेति चरितं मनोर्वैवस्वतस्य च ॥ १ ॥

मार्कण्डेय उवाच । विवस्वतः सुतो राजन् महर्षिः सुप्रताप-वान् । बभूव नरशार्दूल प्रजापतिसमद्युतिः ॥ २ ॥ ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः । अतिचक्राम पितरं मनुः स्वञ्च पितामहम् ॥ ३ ॥ ऊर्द्ध्वबाहुर्विशालायां बदर्य्यां स नरा-धिपः । एकपादस्थितस्तीव्रं चचार सुमहत्तपः ॥ ४ ॥ अवाक्-शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम् । सोऽतप्यत तपो घोरं वर्षाणामयुतं तदा ॥ ५ ॥ तं कदाचित्तपस्यन्तमार्द्रचीरं जटा-धरम् । चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत् ॥ ६ ॥ भगवन् क्षुद्रमत्स्योऽस्मि बलवद्भ्यो भयं मम । मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत ॥ ७ ॥ दुर्व्वलं बलवन्तो हि मत्स्या मत्स्यं विशे-षतः । आस्वदन्ति सदा वृत्तिर्विहिता नः सनातनी ॥ ८ ॥ तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः । त्रातुमर्हसि कर्त्तास्मि कृते प्रतिकृतं तव ॥ ९ ॥ स मत्स्यवचनं श्रुत्वा कृपयाभिपरि-

प्लुतः। मनुर्वैवस्वतोऽगृह्णात्तं मत्स्यं पाणिना स्वयम् ॥ १० ॥
उद्कान्तमुपानीय मत्स्यं वैवस्वतो मनुः। अलिञ्जरे प्राक्षि-
पत्तं चन्द्रांशुसदृशप्रभं ॥ ११ ॥ स तत्र ववृधे राजन् मत्स्यः
परमसत्कृतः। पुत्रवत् स्वीकरोत्तस्मै मनुर्भावं विशेषतः ॥ १२ ॥
अथ कालेन महता स मत्स्यः सुमहानभूत्। अलिञ्जरे यथा
चैव नासौ समभवत् किल ॥ १३ ॥ अथ मत्स्यो मनुं दृष्ट्वा पुन-
रेवाभ्यभाषत। भगवन् साधु मेऽन्यत् स्थानं सम्प्रतिपादय
॥ १४ ॥ उद्धृत्यालिञ्जरात्तस्मात्ततः स भगवान् मनुः। तं
मत्स्यमनयद्वापीं महतीं स मनुस्तदा ॥ १५ ॥ तत्र तं प्राक्षिप-
च्चापि मनुः परपुरञ्जयं। अथावर्द्धत मत्स्यः स पुनर्वर्षगणान्
बहून् ॥ १६ ॥ द्वियोजनायता वापी विस्तृता चापि योजनम्।
तस्यां नासौ समभवन्मत्स्यो राजीवलोचन ॥ १७ ॥ विचेष्टितुञ्च
कौन्तेय मत्स्यो वाप्यां विशाम्पते। मनुं मत्स्यस्ततो दृष्ट्वा पुन-
रेवाभ्यभाषत ॥ १८ ॥ नय मां भगवन् साधो समुद्रमहिषीं
प्रियाम्। गङ्गां तत्र निवत्स्यामि यथा वा तात मन्यसे ॥ १९ ॥
निदेशे हि मया तुभ्यं स्थातव्यमनसूयता। वृद्धिर्हि परमा
प्राप्ता त्वत्कृते हि मयानघ ॥ २० ॥ एवमुक्तो मनुर्मत्स्यमनय-
द्भगवान् वशी। नदीं गङ्गां तत्र चैनं स्वयं प्राक्षिपदच्युतः ॥ २१ ॥
स तत्र ववृधे मत्स्यः कञ्चित्कालमरिन्दम। ततः पुनर्मनुं दृष्ट्वा
मत्स्यो वचनमब्रवीत् ॥ २२ ॥ गङ्गायां हि न शक्नोमि बृहत्त्वा-
च्चेष्टितुं प्रभो। समुद्रं नय मामाशु प्रसीद भगवन्निति ॥ २३ ॥
उद्धृत्य गङ्गासलिलात्ततो मत्स्यं मनुः स्वयम्। समुद्रमनयत्
पार्थ तत्र चैनमवासृजत् ॥ २४ ॥ सुमहानपि मत्स्यस्तु स मनो-
र्नयतस्तदा। आसीद्यथेष्टहार्य्यश्च स्पर्शगन्धसुखश्च वै ॥ २५ ॥
यदा समुद्रे प्रक्षिप्तः स मत्स्यो मनुना तदा। तत एनमिदं
वाक्यं स्मयमान इवाब्रवीत् ॥ २६ ॥ भगवन् हि कृता रक्षा त्वया

सर्व्वा विशेषतः । प्राप्तकालन्तु यत्कार्य्यं त्वया तच्छ्रूयतां मम ॥ २७ ॥ अचिराद्भगवन् भौममिदं स्थावरजङ्गमम् । सर्व्वमेव महाभाग प्रलयं वै गमिष्यति ॥ २८ ॥ संप्रचालनकालोऽयं लोकानां समुपस्थितः । तस्मात्त्वां बोधयाम्यद्य यत्ते हितमनुत्तमम् ॥ २९ ॥ त्रसानां स्थावराणाञ्च यच्चेङ्गं यच्च नेङ्गति । तस्य सर्व्वस्य संप्राप्तः कालः परमदारुणः ॥ ३० ॥ नौश्च कारयितव्या ते दृढा युक्तवटारका । तत्र सप्तर्षिभिः सार्द्धमारुहेथा महामुने ॥ ३१ ॥ वीजानि चैव सर्व्वाणि यथोक्तानि द्विजैः पुरा । तस्यामारोपयेर्नावि सुसङ्गुप्तानि भागशः ॥ ३२ ॥ नौस्थश्च मां प्रतीक्षेथास्ततो मुनिजनप्रिय । आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ॥ ३३ ॥ एवमेतत्त्वया कार्य्यमापृष्टोऽसि व्रजाम्यहम् । ता न शक्या महत्यो वै आपस्तर्त्तुं मया विना ॥ ३४ ॥ नाभिशङ्क्यमिदञ्चापि वचनं मे त्वया विभो । एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत ॥ ३५ ॥ जग्मतुश्च यथाकाममनुज्ञाप्य परस्परम् । ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह ॥ ३६ ॥ वीजान्यादाय सर्व्वाणि सागरं पुप्लुवे तदा । नौकया शुभया वीर महोर्म्मिणमरिन्दम ॥ ३७ ॥ चिन्तयामास च मनुस्तं मत्स्यं पृथिवीपते । स च तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरञ्जय ॥ ३८ ॥ शृङ्गी तत्राजगामाशु तदा भरतसत्तम । तं दृष्ट्वा मनुजव्याघ्र मनुर्मत्स्यं जलार्णवे ॥ ३९ ॥ शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् । वटारकमयं पाशमथ मत्स्यस्य मूर्द्धनि ॥ ४० ॥ मनुर्मनुजशार्दूल तस्मिन् शृङ्गे न्यवेशयत् । संयतस्तेन पाशेन मत्स्यः परपुरञ्जय ॥ ४१ ॥ वेगेन महता नावं प्राकर्षल्लवणाम्भसि । स च तांस्तारयन्नावा समुद्रं मनुजेश्वर ॥ ४२ ॥ नृत्यमानमिवोर्म्मिभिर्गर्ज्जमानमिवाम्भसा । क्षोभ्यमाणा महावातैः सा नौस्तस्मिन्महोदधौ ॥ ४३ ॥ घूर्णते चपलेव स्त्री मत्ता परपुरञ्जय । नैव भूमिर्न

च दिशः प्रदिशो वा चकाशिरे ॥ ४४ ॥ सर्वमाम्भसमेवासीत् खं
द्यौश्च नरपुङ्गव। एवम्भूते तदा लोके संकुले भरतर्षभ ॥ ४५ ॥
अदृश्यन्तर्षयः सप्त मनुर्मत्स्यस्तथैव ह। एवं बहून् वर्षगणांस्तां
नावं सोऽथ मत्स्यकः ॥ ४६ ॥ चकर्षातन्द्रितो राजंस्तस्मिन् सलिल-
सञ्चये। ततो हिमवतः शृङ्गं यत्परं भरतर्षभ ॥ ४७ ॥ तत्रा-
कर्षत्ततो नावं स मत्स्यः कुरुनन्दन। अथाब्रवीत्तदा मत्स्य-
स्तानृषीन् प्रहसन् शनैः ॥ ४८ ॥ अस्मिन् हिमवतः शृङ्गे नावं
बध्नीत मा चिरम्। सा बद्धा तत्र तैस्तूर्णमृषिभिर्भरतर्षभ ॥ ५० ॥
नौर्मत्स्यस्य वचः श्रुत्वा शृङ्गे हिमवतस्तदा। तच्च नौबन्धनं
नाम शृङ्गं हिमवतः परम् ॥ ५१ ॥ ख्यातमद्यापि कौन्तेय
तद्विद्धि भरतर्षभ। अथाब्रवीदनिमिषस्तानृषीन् सहितांस्तदा
॥ ५२ ॥ अहं प्रजापतिर्ब्रह्मा मत्परं नाधिगम्यते। मत्स्यरूपेण
यूयञ्च मयास्मान्मोक्षिता भयात् ॥ ५३ ॥ मनुना च प्रजाः सर्वाः
सदेवासुरमानुषाः। स्रष्टव्याः सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति
॥ ५४ ॥ तपसा चापि तीव्रेण प्रतिभास्य भविष्यति। मत्प्रसा-
दात् प्रजासर्गे न च मोहं गमिष्यति ॥ ५५ ॥ इत्युक्त्वा वचनं
मत्स्यः क्षणेनादर्शनङ्गतः। स्रष्टुकामः प्रजाश्चापि मनुर्वैवस्वतः
स्वयम् ॥ ५६ ॥ प्रमूढोऽभूत् प्रजासर्गे तपस्तेपे महत्ततः।
तपसा महता युक्तः सोऽथ स्रष्टुं प्रचक्रमे ॥ ५७ ॥ सर्वाः प्रजा
मनुः साक्षाद्यथावद्भरतर्षभ। इत्येतन्मात्स्यकं नाम पुराणं परि-
कीर्त्तितम् ॥ ५८ ॥ आख्यानमिदमाख्यातं सर्वपापहरं मया।
य इदं शृणुयान्नित्यं मनोश्चरितमादितः। स सुखी सर्वपूर्णार्थः
स्वर्गलोकमियान्नरः ॥ ५९ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि वैवस्वतोपाख्याने
सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

---

वैशम्पायन उवाच । ततः स पुनरेवाथ मार्कण्डेयं यशस्विनम् । पप्रच्छ विनयोपेतो धर्म्मराजो युधिष्ठिरः ॥ १ ॥ नैके युगसहस्रान्तास्त्वया दृष्टा महामुने । न चापीह समः कश्चिदायुष्मान् दृश्यते तव ॥ २ ॥ वर्ज्जयित्वा महात्मानं ब्रह्माणं परमेष्ठिनम् । न तेऽस्ति सदृशः कश्चिदायुषा ब्रह्मवित्तम ॥ ३ ॥ अनन्तरीक्षे लोकेऽस्मिन् देवदानववर्ज्जिते । त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसे ॥ ४ ॥ प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे । त्वमेकः सृज्यमानानि भूतानीह प्रपश्यसि ॥ ५ ॥ चतुर्व्विधानि विप्रर्षे यथावत् परमेष्ठिना । वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः ॥ ६ ॥ त्वया लोकगुरुः साक्षात् सर्व्वलोकपितामहः । आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ॥ ७ ॥ स्वप्रमाणमथो विप्र त्वया कृतमनेकशः । घोरेणाविश्य तपसा वेधसो निर्ज्जितास्त्वया ॥ ८ ॥ नारायणाङ्कप्रख्यस्त्वं साम्पराये-ऽतिपठ्यसे । भगवानेकशः कृत्वा त्वया विष्णोश्च विश्वकृत् ॥ ९ ॥ कर्णिकोदरणं दिव्यं ब्रह्मणः कामरूपिणः । रत्नालङ्कारयोग्याभ्यां दृग्भ्यां दृष्टस्त्वया पुरा ॥ १० ॥ तस्मात् सर्व्वान्तको मृत्युर्ज्जरा वा देहनाशिनी । न त्वां विशति विप्रर्षे प्रसादात् परमेष्ठिनः ॥ ११ ॥ यदा नैव रविर्न्नाग्निर्न वायुर्न च चन्द्रमाः । नैवान्तरीक्षं नैवोर्व्वी शेषं भवति किञ्चन ॥ १२ ॥ तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे । नष्टे देवासुरगणे समुत्सन्नमहोरगे ॥ १३ ॥ शयानममितात्मानं पद्मोत्पलनिकेतनम् । त्वमेकः सर्व्वभूतेशं ब्रह्माणमुपतिष्ठसे ॥ १४ ॥ एतत् प्रत्यक्षतः सर्व्वं पूर्व्ववृत्तं द्विजोत्तम । तस्मादिच्छाम्यहं श्रोतुं सर्व्वहेत्वात्मिकां कथाम् ॥ १५ ॥ अनुभूतं हि बहुशस्त्वयैकेन द्विजोत्तम । न तेऽस्त्यविदितं किञ्चित् सर्व्वलोकेषु नित्यदा ॥ १६ ॥

मार्कण्डेय उवाच । हन्त ते वर्त्तयिष्यामि नमस्कृत्वा स्वय-

श्रुते। पुरुषाय पुराणाय शाश्वतायाव्ययाय च ॥ १७ ॥ अव्यक्ताय सुसूक्ष्माय निर्गुणाय गुणात्मने। य एष पुरुषव्याघ्र पीतवासा जनार्दनः ॥ १८ ॥ एष कर्त्ता विकर्त्ता च भूतात्मा भूतकृत् प्रभुः। अचिन्त्यं महदाश्चर्य्यं पवित्रमिति चोच्यते ॥ १९ ॥ अनादिनिधनं भूतं विश्वमव्ययमक्षयम्। एष कर्त्ता न क्रियते कारणञ्चापि पौरुषे ॥ २० ॥ यद्येष पुरुषो देवा वेदा अपि न तं विदुः। सर्वमाश्चर्य्यमेवैतन्निर्वृत्तं राजसत्तम ॥ २१ ॥ आदितो मनुजव्याघ्र कृत्स्नस्य जगतः क्षये। चत्वार्य्याहुः सहस्राणि वर्षाणां तत् कृतं युगम् ॥ २२ ॥ तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः। त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ॥ २३ ॥ तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परम्। तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः ॥ २४ ॥ तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च तथाविधः। सहस्रमेकं वर्षाणां तथा कलियुगं स्मृतम् ॥ २५ ॥ तस्य वर्षशतं सन्धिः सन्ध्यांशश्च ततः परम्। सन्धिसन्ध्यांशयोस्तुल्यं प्रमाणमुपधारय ॥ २६ ॥ क्षीणे कलियुगे चैव प्रवर्त्तति कृतं युगम्। एषा द्वादशसाहस्री युगाख्या परिकीर्त्तिता ॥ २७ ॥ एतत् सहस्रपर्य्यन्तमहर्ब्राह्ममुदाहृतम्। विश्वं हि ब्रह्मभवने सर्वतः परिवर्त्तते ॥ २८ ॥ लोकानां मनुजव्याघ्र प्रलयन्तं विदुर्बुधाः। अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ ॥ २९ ॥ सहस्रान्ते नराः सर्वे प्रायशोऽनृतवादिनः। यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ॥ ३० ॥ व्रतप्रतिनिधिश्चैव तस्मिन् काले प्रवर्त्तते। ब्राह्मणाः शूद्रकर्माणस्तथा शूद्रा धनार्जकाः ॥ ३१ ॥ क्षत्रधर्मेण चाप्यत्र वर्त्तयन्ति गते युगे। निवृत्तयज्ञस्वाध्याया दण्डाजिनविवर्जिताः ॥ ३२ ॥ ब्राह्मणाः सर्वभक्षाश्च भविष्यन्ति कलौ युगे। अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः ॥ ३३ ॥ विपरीते तदा लोके पूर्वरूपं क्षयस्य तत्। बहवो म्लेच्छराजानः

पृथिव्यां मनुजाधिप ॥ ३४ ॥ मृषानुशासिनः पापा मृषावाद-
परायणाः । अन्ध्रा शकाः पुलिन्दाश्च यवनाश्च नराधिपाः ॥ ३५ ॥
काम्बोजा वाह्लिकाः शूरास्तथाभीरा नरोत्तम । युगान्ते मनुज-
व्याघ्र तथाकाराश्च भारत । न तदा ब्राह्मणः कश्चित् स्वधर्म-
मुपजीवति ॥ ३६ ॥ क्षत्रियाश्चापि वैश्याश्च विकर्मस्था नराधिप ।
अल्पायुषः स्वल्पबला स्वल्पवीर्य्यपराक्रमाः ॥ ३७ ॥ अल्प-
साराल्पदेहाश्च तथा सत्याल्पभाषिणः । बहुशून्या जनपदा
मृगव्यालावृता दिशः ॥ ३८ ॥ युगान्ते समनुप्राप्ते वृथा च
ब्रह्मवादिनः । भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्य्यवादिनः ॥ ३९ ॥
युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः । न तथा घ्राणयुक्ताश्च
सर्वगन्धा विशाम्पते ॥ ४० ॥ रसाश्च मनुजव्याघ्र न तथा स्वादु-
योगिनः । बहुप्रजा ह्रस्वदेहाः शीलाचारविवर्ज्जिताः ॥ ४१ ॥
मुखेभगास्स्त्रियो राजन् भविष्यन्ति युगक्षये । अट्टशूला जनपदाः
शिवशूलाश्चतुष्पथाः ॥ ४२ ॥ केशशूलाः स्त्रियो राजन् भविष्यन्ति
युगक्षये । अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप ॥ ४३ ॥
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः । ब्रह्मवध्यानुलिप्तानां
तथा मिथ्याभिशंसिनाम् ॥ ४४ ॥ नृपाणां पृथिवीपाल प्रति-
गृह्णन्ति वै द्विजाः । लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः
॥ ४५ ॥ भिक्षार्थं पृथिवीपाल चक्रूर्य्यन्ते द्विजैर्दिशः । कर-
भारभयाद्भीता गृहस्थाः परिमोषकाः ॥ ४६ ॥ मुनिच्छद्मा-
कृतिच्छन्ना वाणिज्यमुपजीविनः । मिथ्या च नखरोमाणि
धारयन्ति तदा द्विजा ॥ ४७ ॥ अर्थलोभान्नरव्याघ्र तथा च
ब्रह्मचारिणः । आश्रमेषु वृथाचाराः पानपा गुरुतल्पगाः ॥ ४८ ॥
ऐहलौकिकमीहन्ते मांसशोणितवर्द्धनम् । बहुपाषण्डसङ्कीर्णाः
परान्नगुणवादिनः ॥ ४९ ॥ आश्रमा मनुजव्याघ्र भविष्यन्ति युग-
क्षये । यथर्त्तुवर्षी भगवान्न तथा पाकशासनः ॥ ५० ॥ न

चापि सर्वबीजानि सम्यग्रोहन्ति भारत। हिंसाभिरामश्च जन-
स्तथा सम्पद्यतेऽशुचिः ॥ ५१ ॥ अधर्मफलमत्यर्थं तदा भवति
मानद। तदा च पृथिवीपाल यो भवेद्धर्मसंयुत ॥ ५२ ॥
अल्पायुः स हि मन्तव्यो न हि धर्मोऽस्ति कश्चन। भूयिष्ठं कूट-
मानैश्च पण्यं विक्रीयते जनाः ॥ ५३ ॥ वणिजश्च नरव्याघ्र बहु-
माया भवन्त्युत। धर्मिष्ठाः परिहीयन्ते पापीयान् वर्द्धते जनः
॥ ५४ ॥ धर्मस्य बलहानिः स्यादधर्मस्य बली तथा। अल्पायुषो
दरिद्राश्च धर्मिष्ठा मानवास्तथा ॥ ५५ ॥ दीर्घायुषः समृद्धाश्च
विधर्माणो युगक्षये। नगराणां विहारेषु विधर्माणो युगक्षये
॥ ५६ ॥ अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत। सञ्चयेन तथा-
ल्पेन भवन्त्याढ्यमदान्विताः ॥ ५७ ॥ धनं विश्वासतो न्यस्तं
मिथो भूयिष्ठशो नराः। हर्त्तुं व्यवसिता राजन् पापाचारसम-
न्विताः ॥ ५८ ॥ नैतदस्तीति मनुजा वर्त्तन्ते निरपत्रपाः।
पुरुषादीनि सत्त्वानि पक्षिणोऽथ मृगास्तथा ॥ ५९ ॥ नगराणां
विहारेषु चैत्येष्वपि च शेरते। सप्तवर्षाष्टवर्षा च स्त्रियो गर्भ-
धरा नृप ॥ ६० ॥ दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते।
भवन्ति षोडशे वर्षे नराः पलितिनस्तथा ॥ ६१ ॥ आयुःक्षयो
मनुष्याणां क्षिप्रमेव प्रपद्यते। । क्षीणायुषो महाराज तरुणा
वृद्धशीलिनः ॥ ६२ ॥ तरुणानाञ्च यच्छीलं तद्वृद्धेषु प्रजायते।
विपरीतास्तदा नार्यो वञ्चयित्वाऽर्हतः पतीन् ॥ ६३ ॥ व्युच्चर-
न्त्यपि दुःशीला दासैः पशुभिरेव च। वीरपत्न्यस्तथा नार्यः
संश्रयन्ति नरान्नृप ॥ ६४ ॥ भर्त्तारमपि जीवन्तमन्यान् व्यभि-
चरन्त्युत। तस्मिन् युगसहस्रान्ते सम्प्राप्ते चायुषः क्षये ॥ ६५ ॥
अनावृष्टिर्महाराज जायते बहुवार्षिकी। ततस्तान्यल्पसाराणि
सत्त्वानि क्षुधितानि वै ॥ ६६ ॥ प्रलयं यान्ति भूयिष्ठं पृथिव्यां
पृथिवीपते। ततो दिनकरैर्दीप्तैः सप्तभिर्मनुजाधिप ॥ ६७ ॥

दीयते सलिलं सर्व्वं समुद्रेषु सरित्सु च। यच्च काष्ठं तृणञ्चापि शुष्कमार्द्रञ्च भारत ॥ ६८ ॥ सर्व्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ। ततः सम्वर्त्तको वह्निर्वायुना सह भारत ॥ ६९ ॥ लोकमाविशते पूर्णमादित्यैरुपशोषितम्। ततः स पृथिवीं भित्त्वा प्रविश्य च रसातलम् ॥ ७० ॥ देवदानवयक्षाणां भयं जनयते महत्। निर्दहन्नागलोकञ्च यच्च किञ्चित् क्षिताविह ॥ ७१ ॥ अधस्तात् पृथिवीपाल सर्व्वं नाशयते क्षणात्। ततो योजनविंशानां सहस्राणि शतानि च ॥ ७२ ॥ निर्दहत्यशिवो वायुः स च सम्वर्त्तकोऽनलः। सदेवासुरगन्धर्व्वं सयक्षोरगराक्षसम् ॥ ७३ ॥ ततो दहति दीप्तः स सर्व्वमेव जगद्विभुः। ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः ॥ ७४ ॥ उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः। केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः ॥ ७५ ॥ केचित् किञ्जल्कसङ्काशाः केचित्पीताः पयोधराः। केचिद्धारिद्रसङ्काशाः काकाण्डकनिभास्तथा ॥ ७६ ॥ केचित्कमलपत्राभाः केचिद्धिङ्गुलसप्रभाः। केचित् पुरवराकाराः केचिद्गजकुलोपमाः ॥ ७७ ॥ केचिदञ्जनसङ्काशाः केचिन्मकरसन्निभाः। विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः ॥ ७८ ॥ घोररूपा महाराज घोरस्वननिनादिताः। ततो जलधराः सर्व्वे व्याप्नुवन्ति नभस्तलम् ॥ ७९ ॥ तैरियं पृथिवी सर्व्वा सपर्व्वतवनाकरा। आपूर्य्यते महाराज सलिलौघपरिप्लुता ॥ ८० ॥ ततस्ते जलदा घोरा राविणः पुरुषर्षभ। सर्व्वतः प्लावयन्त्याशु चोदिताः परमेष्ठिना ॥ ८१ ॥ वर्षमाणा महत्तोयं पूरयन्तो वसुन्धराम्। सुघोरमशिवं रौद्रं नाशयन्ति च पावकम् ॥ ८२ ॥ ततो द्वादशवर्षाणि पयोदास्त उपप्लवे। धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ॥ ८३ ॥ ततः समुद्रः स्वां वेलामतिक्रामति भारत। पर्व्वताश्च विदीर्य्यन्ते मही चाप्सु निमज्जति ॥ ८४ ॥ सर्व्वतः

सहसा भ्रान्तास्ते पयोदा नभस्तलम्। संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः॥ ८५॥ ततस्तं मारुतं घोरं स्वयम्भूर्मनुजाधिप। आदिः पद्मालयो देवः पीत्वा स्वपिति भारत॥ ८६॥ तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे। नष्टे देवासुरगणे यक्षराक्षसवर्जिते॥ ८७॥ निर्मनुष्ये महीपाल निःश्वापदमहीरुहे। अनन्तरीक्षे लोकेऽस्मिन् भ्रमाम्येकोऽहमाहतः॥ ८८॥ एकार्णवजले घोरे विचरन् पार्थिवोत्तम। अपश्यन् सर्वभूतानि वैक्लव्यमगमं ततः॥ ८९॥ ततः सुदीर्घं गत्वाहं प्लवमानो नराधिप। श्रान्तः क्वचिन्न शरणं लभाम्यहमतन्द्रितः॥ ९०॥ ततः कदाचित् पश्यामि तस्मिन् सलिलसञ्चये। न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते॥ ९१॥ शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप। पर्य्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते॥ ९२॥ उपविष्टं महाराज पद्मेन्दुसदृशाननम्। फुल्लपद्मविशालाक्षं बालं पश्यामि भारत॥ ९३॥ ततो मे पृथिवीपाल विस्मयः सुमहानभूत्। कथन्त्वयं शिशुः शेते लोके नाशमुपागते॥ ९४॥ तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये। भूतं भव्यं भविष्यञ्च जानन्नपि नराधिप॥ ९५॥ अतसीपुष्पवर्णाभः श्रीवत्सकृतभूषणः। साक्षाल्लक्ष्म्या इवावासः स तदा प्रतिभाति मे॥ ९६॥ ततो मामब्रवीद्बालः स पद्मनिभलोचनः। श्रीवत्सधारी द्युतिमान् वाक्यं श्रुतिसुखावहम्॥ ९७॥ जानामि त्वां परिश्रान्तं तात विश्रामकाङ्क्षिणम्। मार्कण्डेय इहास्स्व त्वं यावदिच्छसि भार्गव॥ ९८॥ अभ्यन्तरशरीरं मे प्रविश्य मुनिसत्तम। आस्स्व भो विहितो वासः प्रसादस्ते कृतो मया॥ ९९॥ ततो बालेन तेनैवमुक्तस्यासीत्तदा मम। निर्वेदो जीविते दीर्घे मनुष्यत्वे च भारत॥ १००॥ ततो बालेन तेनास्यं सहसा विवृतं कृतम्। तस्याहमवशो वक्त्रं दैवयोगात् प्रवेशितः॥ १०१॥ ततः प्रविष्ट-

स्तत्कुक्षिं सहसा मनुजाधिप। सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीम् ॥ १०२ ॥ गङ्गां शतद्रुं सीताञ्च यमुनामथ कौशिकीम्। चर्म्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीम् ॥ १०३ ॥ सिन्धुञ्चैव विपाशाञ्च नदीं गोदावरीमपि। वस्वोकसारां नलिनीं नर्म्मदाञ्चैव भारत ॥ १०४ ॥ नदीं ताम्राञ्च वेणाञ्च पुण्यतोयां शुभावहाम्। सुवेणां कृष्णवेणाञ्च इरामाञ्च महानदीम् ॥ १०५ ॥ वितस्ताञ्च महाराज कावेरीञ्च महानदीम्। शोणञ्च पुरुषव्याघ्र विशल्यां किम्पुनामपि ॥ १०६ ॥ एताश्चान्याश्च नद्योऽहं पृथिवीव्यां या नरोत्तम। परिक्रामन् प्रपश्यामि तस्य कुक्षौ महात्मनः ॥ १०७ ॥ ततः समुद्रं पश्यामि यादोगणनिषेवितम्। रत्नाकरममितञ्च पयसोनिधिमुत्तमम् ॥ १०८ ॥ तत्र पश्यामि गगनं चन्द्रसूर्य्यविराजितम्। जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभम् ॥ १०९ ॥ पश्यामि च महीं राजन् काननैरुपशोभिताम्। यजन्ते हि तदा राजन् ब्राह्मणा बहुभिर्मखैः ॥ ११० ॥ क्षत्रियाश्च प्रवर्त्तन्ते सर्व्ववर्णानुरञ्जनैः। वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप ॥ १११ ॥ शुश्रूषायाञ्च निरता द्विजानां वृषलास्तदा। ततः परिपतन् राजंस्तस्य कुक्षौ महात्मनः ॥ ११२ ॥ हिमवन्तञ्च पश्यामि हेमकूटञ्च पर्व्वतम्। निषधञ्चापि पश्यामि श्वेतञ्च रजतान्वितम् ॥ ११३ ॥ पश्यामि च महीपाल पर्व्वतं गन्धमादनम्। मन्दरं मनुजव्याघ्र नीलञ्चापि महागिरिम् ॥ ११४ ॥ पश्यामि च महाराज मेरुं कनकपर्व्वतम्। महेन्द्रञ्चैव पश्यामि विन्ध्यञ्च गिरिमुत्तमम् ॥ ११५ ॥ मलयञ्चैव पश्यामि पारिपात्रञ्च पर्व्वतम्। एते चान्ये च बहवो यावन्तः पृथिवीधराः ॥ ११६ ॥ तस्योदरे मया दृष्टाः सर्व्वे रत्नविभूषिताः। सिंहान् व्याघ्रान् वराहांश्च पश्यामि मनुजाधिप ॥ ११७ ॥ पृथिव्यां यानि चान्यानि सत्त्वानि जगतीपते। तानि सर्व्वाण्यहं तत्र पश्यन् पर्य्यचरं

वदा ॥ ११८ ॥ कुक्षौ तस्य नरव्याघ्र प्रविष्टः सञ्चरन् द्विजः ।
शक्रादींश्चापि पश्यामि कृत्स्नान् देवगणानहम् ॥ ११९ ॥ साध्यान्
रुद्रांस्तथादित्यान् गुह्यकान् पितरस्तथा । सर्पान्नागान् सुप-
र्णांश्च वसूनप्यश्विनावपि ॥ १२० ॥ गन्धर्वाप्सरसो यक्षानृषींश्चैव
महीपते । दैत्यदानवसङ्घांश्च कालेयांश्च नराधिप ॥ १२१ ॥
सिंहिकातनयांश्चापि ये चान्ये सुरशत्रवः । यच्च किञ्चिन्मया लोके
दृष्टं स्थावरजङ्गमम् ॥ १२२ ॥ सर्वं पश्याम्यहं राजंस्तस्य कुक्षौ
महात्मनः । चरमाणः फलाहारः कृत्स्नं जगदिदं विभो ॥ १२३ ॥
अन्तःशरीरे तस्याहं वर्षाणामधिकं शतम् । न च पश्यामि
तस्याहं देहस्यान्तं कदाचन ॥ १२४ ॥ सततं धावमानश्च चिन्त-
यानो विशाम्पते । आसादयानि नैवान्तं तस्य राजन्महात्मनः
॥ १२५ ॥ ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा । वरेण्यं
वरदं देवं मनसा कर्मणैव च ॥ १२६ ॥ ततोऽहं सहसा राजन्
वायुवेगेन निःसृतः । महात्मनो मुखात्तस्य विवृतात् पुरुषो-
त्तम ॥ १२७ ॥ ततस्तस्यैव शाखायां न्यग्रोधस्य विशाम्पते । आस्ते
मनुजशार्दूल कृत्स्नमादाय वै जगत् ॥ १२८ ॥ तेनैव बालवेशेन
श्रीवत्सकृतलक्षणम् । आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम्
॥ १२९ ॥ ततो मामब्रवीद्बालः स प्रीतः प्रहसन्निव । श्रीवत्सधारी
द्युतिमान् पीतवासा महाद्युतिः ॥ १३० ॥ अपीदानीं शरीरे-
ऽस्मिन्मामके मुनिसत्तम । उषितस्त्वं परिश्रान्तो मार्कण्डेय ब्रवीमि
ते ॥ १३१ ॥ मुहूर्त्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा । यया
निर्मुक्तमात्मानमपश्यं लब्धचेतसम् ॥ १३२ ॥ तस्य ताम्रतलौ तात
चरणौ सुप्रतिष्ठितौ । सुजातौ मृदुरक्ताभिरङ्गुलीभिर्विराजितौ
॥ १३३ ॥ प्रयत्नेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ । दृष्ट्वा-
परिमितं तस्य प्रभावममितौजसः ॥ १३४ ॥ विनयेनाञ्जलिं कृत्वा
प्रयत्नेनोपगम्य ह । दृष्टो मया स भूतात्मा देवः कमललोचनः

॥ १३५ ॥ तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रुवम् । ज्ञातुमिच्छामि
देव त्वां मायाञ्चैतां तवोत्तमाम् ॥ १३६ ॥ आस्येनानुप्रविष्टोऽहं
शरीरे भगवंस्तव । दृष्टवानखिलान् सर्व्वान् समस्तान् जठरे स्थि
ते ॥ १३७ ॥ तव देव शरीरस्था देवदानवराक्षसाः । यक्षा
गन्धर्व्वनागाश्च जगत् स्थावरजङ्गमम् ॥ १३८ ॥ त्वत्प्रसादाच्च मे
देव स्मृतिर्न परिहीयते । द्रुतमन्तःशरीरे ते सततं परिवर्त्तिनः
॥ १३९ ॥ निर्गतोऽहमकामस्तु इच्छया ते महाप्रभो । इच्छामि
पुण्डरीकाक्ष ज्ञातुं त्वाहमनिन्दितम् ॥ १४० ॥ इह भूत्वा शिशुः
साक्षात् किं भवानवतिष्ठते । पीत्वा जगदिदं सर्व्वमेतदाख्यातु-
मर्हसि ॥ १४१ ॥ किमर्थञ्च जगत् सर्व्वं शरीरस्थं तवानघ ।
कियन्तञ्च त्वया कालमिहस्थेयमरिन्दम ॥ १४२ ॥ एतदिच्छामि
देवेश श्रोतुं ब्राह्मणकाम्यया । त्वत्तः कमलपत्राक्ष विस्तरेण
यथातथम् ॥ १४३ ॥ महद्ध्येतदचिन्त्यञ्च यदहं दृष्टवान् प्रभो ।
इत्युक्तः स मया श्रीमान् देवदेवो महाद्युतिः । सान्त्वयन्
मामिदं वाक्यमुवाच वदताम्वरः ॥ १४४ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि मार्कण्डेयप्रश्ने
अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

---

देव उवाच । कामं देवापि मां विप्र न हि जानन्ति तत्त्वतः ।
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् ॥ १ ॥ पितृभक्तो-
ऽसि विप्रर्षे माञ्चैव शरणङ्गतः । ततो दृष्टोऽस्मि ते साक्षात् ब्रह्म-
चर्य्यञ्च ते महत् ॥ २ ॥ अपां नारा इति पुरा संज्ञाकर्म कृतं
मया । तेन नारायणोऽप्युक्तो मम तत्त्वयनं सदा ॥ ३ ॥ अहं
नारायणो नाम प्रभवो शाश्वतोऽव्ययः । विधाता सर्व्वभूतानां
संहर्त्ता च द्विजोत्तम ॥ ४ ॥ अहं विष्णुरहं ब्रह्मा शक्रश्चाहं

सुराधिपः । अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ ५ ॥
अहं शिवश्च सोमश्च काश्यपोऽथ प्रजापतिः । अहं धाता विधाता
च यज्ञश्चाहं द्विजोत्तम ॥ ६ ॥ अग्निरास्यं क्षितिः पादौ चन्द्रा-
दित्यौ च लोचने । द्यौर्मूर्द्धा खं दिशः श्रोत्रे तथापः स्वेद-
सम्भवाः ॥ ७ ॥ सदिशञ्च नभः कायो वायुर्मनसि मे स्थितः ।
मया क्रतुशतैरिष्टं बहुभिः स्वाप्तदक्षिणैः ॥ ८ ॥ यजन्ते वेद-
विदांसो मां देवयजने स्थितम् । पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः
स्वर्गकाङ्क्षिणः ॥ ९ ॥ यजन्ते मां तथा वैश्याः स्वर्गलोकजिगी-
षवः । चतुःसमुद्रपर्य्यन्तां मेरुमन्दरभूषणाम् ॥ १० ॥ शेषो
भूत्वाहमेवैतां धारयामि वसुन्धराम् । वाराहं रूपमास्थाय मयेयं
जगती पुरा ॥ ११ ॥ मज्जमाना जले विप्र वीर्य्येणासीत् समु-
द्धृता । अग्निश्च वड़वावक्त्रो भूत्वाहं द्विजसत्तम ॥ १२ ॥ पिबा-
म्यपः समाविद्धास्ताश्चैव विसृजाम्यहम् । ब्रह्म वक्त्रं भुजौ क्षत्र-
मूरू मे संस्थिता विशः ॥ १३ ॥ पादौ शूद्रा भवन्तीमे विक्रमेण
क्रमेण च । ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्व्वणः ॥ १४ ॥
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च । यतयः शान्तिपरमा
यतात्मानो बुभुत्सवः ॥ १५ ॥ कामक्रोधद्वेषमुक्ता निःसङ्गा वीत-
कल्मषाः । सत्त्वस्था निरहङ्कारा नित्यमध्यात्मकोविदाः ॥ १६ ॥
मामेव सततं विप्राश्चिन्तयन्त उपासते । अहं सम्वर्त्तको वह्नि-
रहं सम्वर्त्तकोऽनिलः ॥ १७ ॥ अहं सम्वर्त्तकः सूर्य्यस्त्वहं सम्व-
र्त्तकोऽनलः । तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ॥ १८ ॥
मम वै रोमकूपाणि विद्धि त्वं द्विजसत्तम । रत्नाकराः समुद्राश्च
सर्व्व एव चतुर्द्दिशम् ॥ १९ ॥ वसनं शयनञ्चैव निलयञ्चैव विद्धि
मे । मयैव सुविभक्तास्ते देवकार्य्यार्थसिद्धये ॥ २० ॥ कामक्रोधञ्च
हर्षञ्च भयं मोहं तथैव च । ममैव विद्धि रोमाणि सर्व्वाण्येतानि
सत्तम ॥ २१ ॥ प्राप्नुवन्ति नरा विप्र यत् कृत्वा कर्म्म शोभनम् ।

सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु ॥ २२ ॥ मद्विधानेन
विहिता मम देहविहारिणः । मयाभिभूतविज्ञाना विचेष्टन्ते न
कामतः ॥ २३ ॥ सम्यग्वेदमधीयाना यजन्ते विविधैर्मखैः ।
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ २४ ॥ प्राप्तुं
न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः । लोभाभिभूतैः कृपणै-
रनार्य्यैरकृतात्मभिः ॥ २५ ॥ तन्मान्महाफलं विद्धि नराणां
भावितात्मनाम् । सुदुष्प्रापं विमूढानां मार्गं योगैर्निषेवितम्
॥ २६ ॥ यदा यदा च धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थान-
मधर्मस्य तदात्मानं सृजाम्यहम् ॥ २७ ॥ दैत्या हिंसानुरक्ताश्च
अवध्याः सुरसत्तमैः । राक्षसाश्चापि लोकेऽस्मिन् यदोत्पत्स्यन्ति
दारुणाः ॥ २८ ॥ तदाहं संप्रसूयामि गृहेषु शुभकर्मणाम् ।
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥२९॥ सृष्ट्वा देवमनुष्यांस्तु
गन्धर्वोरगराक्षसान् । स्थावराणि च भूतानि संहराम्यात्ममायया
॥ ३० ॥ कर्मकाले पुनर्देहमविचिन्त्यं सृजाम्यहम् । आविश्य
मानुषं देहं मर्य्यादाबन्धकारणात् ॥ ३१ ॥ श्वेतः कृतयुगे वर्णः
पीतस्त्रेतायुगे मम । रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा
॥ ३२ ॥ त्रयो भागा ह्यधर्मस्य तस्मिन् काले भवन्ति च । अन्त-
काले च संप्राप्ते कालो भूत्वातिदारुणः ॥ ३३ ॥ त्रैलोक्यं नाश-
याम्येकः कृत्स्नं स्थावरजङ्गमम् । अहं त्रिवर्त्मा विश्वात्मा सर्व-
लोकसुखावहः ॥ ३४ ॥ अभिभूः सर्वगोऽनन्तो हृषीकेश उरु-
क्रमः । कालचक्रं नयाम्येको ब्रह्मन्नहमरूपकम् ॥ ३५ ॥ शमनं
सर्वभूतानां सर्वलोककृतोद्यमम् । एवं प्रणिहितः सम्यङ् ममात्मा
मुनिसत्तम ॥ ३६ ॥ सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ।
सर्वलोके च मां भक्ताः पूजयन्ति च सर्वशः ॥ ३७ ॥ यच्च किञ्चित्
त्वया प्राप्तं मयि क्लेशात्मकं द्विज । सुखोदयाय तत्सर्वं श्रेयसे
च तवानघ ॥ ३८ ॥ यच्च किञ्चित्त्वया लोके दृष्टं स्थावरजङ्गमम् ।

विदितं सर्वथैवासौ ममात्मा भूतभावनः ॥ ३९ ॥ अहं मम शरीरस्थ सर्वलोकपितामहः। अहं नारायणो नाम शङ्खचक्रगदाधरः ॥ ४० ॥ यावद्युगानां विप्रर्षे सहस्रपरिवर्त्तनात्। तावत् स्वपिमि विश्वात्मा सर्वभूतानि मोहयन् ॥ ४१ ॥ एवं सर्वमहं कालमिहासे मुनिसत्तम। अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ४२ ॥ मया च दत्तो विप्राग्र्य वरस्ते ब्रह्मरूपिणा। असकृत् परितुष्टेन विप्रर्षिगणपूजित ॥ ४३ ॥ सर्वमेकार्णवं दृष्ट्वा नष्टस्थावरजङ्गमम्। विक्लवोऽसि मया ज्ञातस्ततस्ते दर्शितं जगत् ॥ ४४ ॥ अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम। दृष्ट्वा लोकं समस्तञ्च विस्मितो नावबुध्यसे ॥ ४५ ॥ ततोऽसि वक्त्राद्विप्रर्षे द्रुतं निःसारितो मया। आख्यातस्ते मया चात्मा दुर्ज्ञेयो हि सुरासुरैः ॥ ४६ ॥ यावत्स भगवान् ब्रह्मा न बुध्येत महातपाः। तावत्त्वमिह विप्रर्षे विस्रब्धश्चर वै सुखम् ॥४७॥ ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे। एकीभूतो हि स्रक्ष्यामि शरीराणि द्विजोत्तम ॥ ४८ ॥ आकाशं पृथिवीं ज्योतिर्वायुः सलिलमेव च। लोके यच्च भवेच्छेषमिह स्थावरजङ्गमम् ॥४९॥

मार्कण्डेय उवाच। इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः। प्रजाश्चेमाः प्रपश्यामि विचित्रा विविधाः कृताः ॥ ५० ॥ एवं दृष्टं मया राजंस्तस्मिन् प्राप्ते युगक्षये। आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृताम्वर ॥ ५१ ॥ यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः। स एष पुरुषव्याघ्रः सम्बन्धी ते जनार्दनः ॥ ५२ ॥ अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम्। दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं मम ॥५३॥ स एष कृष्णो वार्ष्णेयः पुराणः पुरुषो विभुः। आस्ते हरिरचिन्त्यात्मा क्रीड़न्निव महाभुजः ॥ ५४ ॥ एष धाता विधाता च संहर्त्ता चैव शाश्वतः। श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः ॥ ५५ ॥ दृष्ट्वेमं वृष्णिप्रवरं स्मृतिर्मामियमागता।

आदिदेवमजं विष्णुं पुरुषं पीतवाससम् ॥ ५६ ॥ सर्वेषामेव भूतानां पिता माता च माधवः । गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः ॥ ५७ ॥

वैशम्पायन उवाच । एवमुक्तास्ते पार्था यमौ च भरतर्षभौ । द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम् ॥ ५८ ॥ स चैतान् पुरुषव्याघ्र साम्ना परमवल्गुना । सान्त्वयामास मानार्हो मन्यमानो यथाविधि ॥ ५९ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि मार्कण्डेयनारायणसंवादे एकोननवत्यधिकशततोऽध्यायः ॥ १८९ ॥

---

वैशम्पायन उवाच । युधिष्ठिरस्तु कौन्तेयो मार्कण्डेयं महामुनिम् । पुनः पप्रच्छ साम्राज्ये भविष्यां जगतो गतिम् ॥ १ ॥

युधिष्ठिर उवाच । आश्चर्य्यभूतं भवतः श्रुतं नो वदताम्वर । मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययम् ॥ २ ॥ अस्मिन् कलियुगे ऽस्ति पुनः कौतूहलं मम । समाकुलेषु धर्म्मेषु किन्तु शेषं भविष्यति ॥ ३ ॥ किंवीर्य्या मानवास्तत्र किमाहारविहारिणः किमायुषः किंवसना भविष्यन्ति युगक्षये ॥ ४ ॥ काञ्च काष्ठां समासाद्य पुनः सम्पत्स्यते कृतम् । विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ॥ ५ ॥ इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत । रमयन् वृष्णिशार्दूलं पाण्डवांश्च महानृषिः ॥ ६ ॥

मार्कण्डेय उवचा । शृणु राजन्मया दृष्टं यत् पुरा श्रुतमेव च । अनुभूतञ्च राजेन्द्र देवदेवप्रसादजम् ॥ ७ ॥ भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ । कलुषं कालमासाद्य कथ्यमानं निबोध मे ॥ ८ ॥ कृते चतुष्पात् सकलो निर्व्याजोपाधिवर्जितः । वृषः प्रतिष्ठितो धर्म्मो मनुष्ये भरतर्षभ ॥ ९ ॥ अधर्मपादविद्धस्तु

त्रिभिरंशैः प्रतिष्ठितः । त्रेतायां द्वापरेऽर्द्धेन व्यामिश्रो धर्म्म उच्यते ॥ १० ॥ त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति । तामसं युगमासाद्य तदा भरतसत्तम ॥ ११ ॥ चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति । आयुर्वीर्य्यमथो बुद्धिर्बलन्तेजश्च पाण्डव ॥ १२ ॥ मनुष्याणामनुयुगं ह्रसतीति निबोध मे । राजानो ब्राह्मणा वैश्या शूद्राश्चैव युधिष्ठिर ॥ १३ ॥ व्याजैर्धर्मञ्चरिष्यन्ति धर्मवैतंसिका नराः । सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः ॥ १४ ॥ सत्यहान्या ततस्तेषामायुरल्पं भविष्यति । आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपजीवितुम् ॥ १५ ॥ विद्याहीनानविज्ञानाल्लोभोऽप्यभिभविष्यति । लोभक्रोधपरा मूढाः कामासक्ताश्च मानवाः ॥ १६ ॥ वैरबद्धा भविष्यन्ति परस्परवधैषिणः । ब्राह्मणाः क्षत्रिया वैश्याः संकीर्य्यन्त परस्परम् ॥ १७ ॥ शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः । अन्त्या मध्या भविष्यन्ति मध्याश्चान्त्या न संशयः ॥ १८ ॥ ईदृशो भविता लोको युगान्ते पर्य्युपस्थिते । वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः ॥१९॥ भार्य्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये । मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम् ॥ २० ॥ गोषु नष्टासु पुरुषा येऽपि नित्यं धृतव्रताः । तेऽपि लोभसमायुक्ता भविष्यन्ति युगक्षये ॥ २१ ॥ अन्योऽन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः । अजपा नास्तिकास्तेना भविष्यन्ति युगक्षये ॥ २२ ॥ सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः । ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये ॥ २३ ॥ श्राद्धे दैवेऽपि पुरुषा येऽपि नित्यं धृतव्रताः । तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम् ॥ २४ ॥ पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च । अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये ॥ २५ ॥ न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः । न यक्ष्यन्ति न होष्यन्ति हेतुवादविमोहिताः ॥ २६ ॥ निम्ने-

व्रीडां करिष्यन्ति हेतुवादविमोहिताः । निम्ने कृषिं करिष्यन्ति योच्यन्ति धुरि धेनुकाः ॥ २७ ॥ एकहायनवत्सांश्च योजयिष्यन्ति मानवाः । पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ॥ २८ ॥ निरुद्वेगो वृहद्वादी न निन्दामुपलप्स्यते । म्लेच्छभूतं जगत् सर्वं निष्क्रियं यज्ञवर्ज्जितम् ॥ २९ ॥ भविष्यति निरानन्दमनुत्सवमथो तथा । प्रायशः कृपणानां हि तथा बन्धुमतामपि ॥ ३० ॥ विधवानाञ्च वित्तानि हरिष्यन्तीह मानवाः । स्वल्पवीर्य्यबलास्तब्धा लोभमोहपरायणाः ॥ ३१ ॥ तत्कथादानसन्तुष्टा दुष्टानामपि मानवाः । प्रतिग्रहं करिष्यन्ति मायाचारपरिग्रहाः ॥ ३२ ॥ समाह्वयन्तः कौन्तेय राजानः पापबुद्धयः । परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः ॥ ३३ ॥ भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः । अरक्षितारो लुब्धाश्च मानाहङ्कारदर्पिताः ॥ ३४ ॥ केवलं दण्डरुचयो भविष्यन्ति युगक्षये । आक्रम्याक्रम्य साधूनां दारांश्चापि धनानि च ॥ ३५ ॥ भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत । न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते ॥ ३६ ॥ स्वयंग्राहा भविष्यन्ति युगान्ते समुपस्थिते । राजानश्चाप्यसन्तुष्टाः परार्थान् मूढचेतसः ॥ ३७ ॥ सर्व्वोपायैर्हरिष्यन्ति युगान्ते पर्य्युपस्थिते । म्लेच्छीभूतं जगत् सर्वं भविष्यति न संशयः ॥ ३८ ॥ हस्तो हस्तं परिमुषेद्युगान्ते समुपस्थिते । सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः ॥ ३९ ॥ स्थविरा बालमतयो बालाः स्थविरबुद्धयः । भीरवस्तथा शूरमानी शूरा भीरुविषादिनः ॥ ४० ॥ न विश्वसन्ति चान्योऽन्यं युगान्ते पर्य्युपस्थिते । एकहार्य्यं युगं सर्वं लोभमोहव्यवस्थितम् ॥ ४१ ॥ अधर्म्मो वर्द्धते तत्र न तु धर्म्मः प्रवर्त्तते । ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप ॥ ४२ ॥ एकवर्णास्तदा लोको भविष्यति युगक्षये । न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं

तथा॥ ४३॥ भार्य्याश्च पतिशुश्रूषां न करिष्यन्ति संक्षये। ये यवान्ना जनपदा गोधूमान्नास्तथैव च॥ ४४॥ तान् देशान् संश्रयिष्यन्ति युगान्ते पर्य्युपस्थिते। स्वैराचाराश्च पुरुषा योषितश्च विशाम्पते॥ ४५॥ अन्योऽन्यं न सहिष्यन्ति युगान्ते पर्य्युपस्थिते। म्लेच्छीभूतं जगत् सर्वं भविष्यति युधिष्ठिर॥ ४६॥ न श्राद्धैस्तर्पयिष्यन्ति दैवतानीह मानवाः। न कश्चित् कस्यचिच्छ्रोता न कश्चित् कस्यचिद्गुरुः॥ ४७॥ तमोग्रस्तस्तदा लोको भविष्यति जनाधिप। परमायुश्च भविता तदा वर्षाणि षोडश॥ ४८॥ ततः प्राणान् विमोक्ष्यन्ति युगान्ते समुपस्थिते। पञ्चमे वाथ षष्ठे वा वर्षे कन्या प्रसूयते॥ ४९॥ सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा। पत्यौ स्त्री तु तदा राजन् पुरुषो वा स्त्रियं प्रति॥ ५०॥ युगान्ते राजशार्दूल न तोषमुपयास्यति। अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति॥ ५१॥ न कश्चित् कस्यचिद्दाता भविष्यति युगक्षये। अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः॥ ५२॥ केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये। म्लेच्छाचाराः सर्वभक्षा दारुणाः सर्वकर्मसु॥ ५३॥ भाविनः पश्चिमे काले मनुष्या नात्र संशयः। क्रयविक्रयकाले च सर्वः सर्वस्य वञ्चनम्॥ ५४॥ युगान्ते भरतश्रेष्ठ वित्तलोभात् करिष्यति। ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा॥ ५५॥ आत्मच्छन्देन वर्त्तन्ते युगान्ते समुपस्थिते। स्वभावात् क्रूरकर्माणश्चान्योऽन्यमभिशंसिनः॥ ५६॥ भवितारो जनाः सर्वे संप्राप्ते तु युगक्षये। आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः॥ ५७॥ भविता संशयो लोके जीवितस्य हि देहिनाम्। तथा लोभाभिभूताश्च भविष्यन्ति नरा नृप॥ ५८॥ ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः। हाहाकृता द्विजाश्चैव भयार्त्ता वृषलार्दिताः॥ ५९॥ त्रातारमलभन्तो वै भ्रमिष्यन्ति महीं-

मिमाम्। जीवितान्तकराः क्रूरा रौद्राः प्राणिविहिंसकाः ॥ ६० ॥ यदा भविष्यन्ति नरास्तदा संक्षेप्स्यते युगम्। आश्रयिष्यन्ति च नदीः पर्व्वतान् विषमाणि च ॥ ६१ ॥ प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह। दस्युभिः पीड़िता राजन् काका इव द्विजोत्तमाः ॥ ६२ ॥ कुराजभिश्च सततं करभारप्रपीड़िताः। धैर्य्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये ॥ ६३ ॥ विकर्म्माणि करिष्यन्ति शूद्राणां परिचारकाः। शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्य्युपासकाः ॥ ६४ ॥ श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः। विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः ॥ ६५ ॥ एड़ूकान् पूजयिष्यन्ति वर्ज्जयिष्यन्ति देवताः। शूद्राः परिचरिष्यन्ति न द्विजान् युगसंक्षये ॥ ६६ ॥ आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च। देवस्थानेषु चैत्येषु नागानामालयेषु च ॥ ६७ ॥ एड़ूकचिह्ना पृथिवी न देवगृहभूषिता। भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् ॥ ६८ ॥ यदा रौद्रा धर्म्महीना मांसादाः पानपास्तथा। भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगम् ॥ ६९ ॥ पुष्पं पुष्पे यदा राजन् फले वा फलमाश्रितम्। प्रजास्यति महाराज तदा संक्षेप्स्यते युगम् ॥ ७० ॥ अकालवर्षी पर्ज्जन्यो भविष्यति गते युगे। अक्रमेण मनुष्याणां भविष्यन्ति तदा क्रियाः ॥ ७१ ॥ विरोधमथ यास्यन्ति वृषला ब्राह्मणैः सह। मही म्लेच्छजनाकीर्णा भविष्यति ततोऽचिरात् ॥ ७२ ॥ करभारभयाद्विप्रा भजिष्यन्ति दिशो दश। निर्विशेषा जनपदास्तदा विष्टिकरार्द्दिताः ॥ ७३ ॥ आश्रमानुपलप्स्यन्ति फलमूलोपजीविनः। एवं पर्य्याकुले लोके मर्य्यादा न भविष्यति ॥ ७४ ॥ न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः। आचार्य्योऽपनिधिश्चैव भर्त्स्यते तदनन्तरम् ॥ ७५ ॥ अर्थयुक्त्या प्रवत्स्यन्ति मित्रसम्बन्धिबान्धवाः। अभावः सर्व्वभूतानां युगान्ते सम्भविष्यति ॥ ७६ ॥ दिशः प्रज्व-

लिता सर्वा नक्षत्राण्यप्रभाणि च । ज्योतींषि प्रतिकूलानि वाताः पर्य्याकुलास्तथा ॥ ७७ ॥ उल्कापाताश्च बहवो महाभयनिदर्शकाः । षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ॥ ७८ ॥ तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्व्वशः । कबन्धान्तर्हितो भानुरुदयास्तमने तदा ॥ ७९ ॥ अकालवर्षी भगवान् भविष्यति सहस्रदृक् । सस्यानि च न रोक्ष्यन्ति युगान्ते पर्य्युपस्थिते ॥ ८० ॥ अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः । भर्तृणां वचने चैव न स्थास्यन्ति तदा स्त्रियः ॥ ८१ ॥ पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये । सूदयिष्यन्ति च पतीन् स्त्रियः पुत्रानपाश्रिताः ॥ ८२ ॥ अपर्व्वणि महाराज सूर्य्यं राहुरुपैष्यति । युगान्ते हुतभुक् चापि सर्व्वतः प्रज्वलिष्यति ॥ ८३ ॥ पानीयं भोजनञ्चापि याचमानास्तदाध्वगाः । न लप्स्यन्ते निवासञ्च निरस्ताः पथि शेरते ॥ ८४ ॥ निर्घाता वायसा नागाः शकुनाः समृगद्विजाः । रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्य्युपस्थिते ॥ ८५ ॥ मित्रं सम्बन्धिनश्चापि सन्त्यक्ष्यन्ति नरास्तदा । जनं परिजनञ्चापि युगान्ते पर्य्युपस्थिते ॥ ८६ ॥ अथ देशान् दिशश्चापि पत्तनानि पुराणि च । क्रमशः संश्रयिष्यन्ति युगान्ते पर्य्युपस्थिते ॥ ८७ ॥ हा तात हा सुतेत्येवं तदा वाच सुदारुणाः । विक्रोशमानश्चान्योऽन्यं जनो गां पर्य्यटिष्यति ॥ ८८ ॥ ततस्तुमुलसङ्घाते वर्त्तमाने युगक्षये । द्विजातिपूर्व्वको लोकः क्रमेण प्रभविष्यति ॥ ८९ ॥ ततः कालान्तरेऽन्यस्मिन् पुनर्लोकविवृद्धये । भविष्यति पुनर्दैवमनुकूलं यदृच्छया ॥ ९० ॥ यदा सूर्य्यश्च चन्द्रश्च तथा तिष्यबृहस्पती । एकराशौ समेष्यन्ति प्रवर्त्स्यति तदा कृतम् ॥ ९१ ॥ कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च । प्रदक्षिणाः ग्रहाश्चापि भविष्यन्त्यनुलोमगाः ॥ ९२ ॥ क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् । कल्की विष्णुयशा नाम द्विजः

कालप्रचोदितः ॥ ९४ ॥ उत्पत्स्यते महावीर्य्यो महाबुद्धिपराक्रम । सम्भूतः सम्भलग्रामे ब्राह्मणावसथे शुभे ॥ ९५ ॥ मनसा तस्य सर्व्वाणि वाहनान्यायुधानि च । उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च ॥ ९६ ॥ स धर्म्मविजयी राजा चक्रवर्त्ती भविष्यति । स चेमं संकुलं लोकं प्रसादमुपनेष्यति ॥ ९७ ॥ उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः । संक्षेपको हि सर्व्वस्य युगस्य परिवर्त्तकः ॥ ९८ ॥ स सर्व्वत्र गतान् क्षुद्रान् ब्राह्मणैः परिवारितः । उत्सादयिष्यति तदा सर्व्वम्लेच्छगणान् द्विजः ॥ ९९ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि कलियुगकृत्यकथने नवत्यधिकशततोऽध्यायः ॥ १९० ॥

---

मार्कण्डेय उवाच । ततश्चौरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् । वाजिमेधे महायज्ञे विधिवत् कल्पयिष्यति ॥ १ ॥ स्थापयित्वा च मर्य्यादाः स्वयम्भूविहिताः शुभाः । वनं पुण्ययशःकर्म्मा रमणीयं प्रवेक्ष्यति ॥ २ ॥ तच्छीलमनुवर्त्स्यन्ति मनुष्या लोकवासिनः । विप्रैश्चौरक्षये चैव कृते क्षेमं भविष्यति ॥ ३ ॥ कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च । स्थापयन् द्विजशार्दूलो देशेषु विजितेषु च ॥ ४ ॥ संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान् । कल्किश्चरिष्यति महीं सदा दस्युवधे रत ॥ ५ ॥ हा मातस्तात पुत्रेति तास्ता वाचः सुदारुणाः । विक्रोशमानान् सुभृशं दस्यूनेष्यति संक्षयम् ॥ ६ ॥ ततोऽधर्म्मविनाशो वै धर्म्मवृद्धिश्च भारत । भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ॥ ७ ॥ आरामाश्चैव चैत्याश्च तड़ागावसथास्तथा । पुष्करिण्यश्च विविधा देवतायतनानि च ॥ ८ ॥ यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे । ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः ॥ ९ ॥

आश्रमाः सहपाषण्डाः स्थिताः सत्यजनाः प्रजाः । प्ररोहन्ति सर्व-
बीजानि रोप्यमाणानि चैव ह ॥ १० ॥ सर्वेष्वृतुषु राजेन्द्र सर्वं
सस्यं भविष्यति । नरा दानेषु निरता व्रतेषु नियमेषु च ॥ ११ ॥
जप्ययज्ञपरा विप्रा धर्मकामा मुदायुताः । पालयिष्यन्ति राजानो
धर्मेणेमां वसुन्धराम् ॥ १२ ॥ व्यवहाररता वैश्या भविष्यन्ति कृते
युगे । षट्कर्मनिरता विप्राः क्षत्रिया विक्रमे रताः ॥ १३ ॥
शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च । एष धर्मः कृतयुगे
त्रेतायां द्वापरे तथा ॥ १४ ॥ पश्चिमे युगकाले च यः स ते
संप्रकीर्त्तितः । सर्वलोकस्य विदिता युगसङ्ख्या च पाण्डव ॥ १५ ॥
एतत्ते सर्वमाख्यातमतीतानागतं तथा । वायुप्रोक्तमनुस्मृत्य पुराण-
मृषिसंस्तुतम् ॥ १६ ॥ एवं संसारमार्गा मे बहुशश्चिरजीविनः ।
दृष्टाश्चैवानुभूताश्च तांस्ते कथितवानहम् ॥ १७ ॥ इदञ्चैवापरं
भूयः सह भ्रातृभिरच्युत । धर्मसंशयमोक्षार्थं निबोध वचनं
मम ॥ १८ ॥ धर्मे त्वयात्मा संयोज्यो नित्यं धर्मभृतांवर ।
धर्मात्मा हि सुखं राजन् प्रेत्य चेह च विन्दति ॥ १९ ॥ निबोध
च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ । न ब्राह्मणे परिभवः
कर्त्तव्यस्ते कदाचन । ब्राह्मणः कुपितो हन्यादपि लोकान्
प्रतिज्ञया ॥ २० ॥

वैशम्पायन उवाच । मार्कण्डेयवचः श्रुत्वा कुरूणां प्रवरो
नृपः । उवाच वचनं धीमान् परमं परमद्युतिः ॥ २१ ॥

युधिष्ठिर उवाच । कस्मिन् धर्मे मया स्थेयं प्रजाः संरक्षता
मुने । कथञ्च वर्त्तमानो वै न च्यवेयं स्वधर्मतः ॥ २२ ॥

मार्कण्डेय उवाच । दयावान् सर्वभूतेषु हितो रक्तोऽनसूयकः ।
सत्यवादी मृदुर्दान्तः प्रजानां रक्षणे रतः ॥ २३ ॥ चर धर्मं
त्यजाधर्मं पितॄन् देवांश्च पूजय । प्रमादात् यत् कृतं तेऽभूत्
सम्यग्दानेन तज्जय ॥ २४ ॥ अलन्ते मानमाश्रित्य सततं पर-

वान् भव । विजित्य पृथिवीं सर्वां मोदमानः सुखी भव ॥ २५ ॥ एष भूतो भविष्यश्च धर्म्मस्ते समुदीरितः । न तेऽस्त्यविदितं किञ्चिदतीतानागतं भुवि ॥ २६ ॥ तस्मादिदं परिक्लेशं त्वं तात हृदि मा कृथाः । प्राज्ञास्तात न मुह्यन्ति कालेनापि प्रपीड़िताः ॥ २७ ॥ एष कालो महाबाहो अपि सर्व्वदिवौकसाम् । मुह्यन्ति हि प्रजास्तात कालेनापि प्रचोदिताः ॥ २८ ॥ मा च तत्र विशङ्का भूद्यन्मयोक्तं तवानघ । आशङ्क्य मद्वचो ह्येतद्धर्म्मलोपो भवेत्तव ॥ २९ ॥ जातोऽसि प्रथिते वंशे कुरूणां भरतर्षभ । कर्म्मणा मनसा वाचा सर्व्वमेतत् समाचर ॥ ३० ॥

युधिष्ठिर उवाच । यत्त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरम् । तथा करिष्ये यत्नेन भवतः शासनं विभो ॥ ३१ ॥ न मे लोभोऽस्ति विप्रेन्द्र न भयं न च मत्सरः । करिष्यामि हि तत् सर्व्वमुक्तं यत्ते मयि प्रभो ॥ ३२ ॥

वैशम्पायन उवाच । श्रुत्वा तु वचनं तस्य मार्कण्डेयस्य धीमतः । संहृष्टाः पाण्डवा राजन् सहिताः शार्ङ्गधन्वना ॥ ३३ ॥ विप्रर्षभाश्च ते सर्व्वे ये तत्रासन् समागताः । तथा कथां शुभां श्रुत्वा मार्कण्डेयस्य धीमतः । विस्मिताः समपद्यन्त पुराणस्य निवेदनात् ॥ ३४ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि युधिष्ठिरानुशासने एकनवत्यधिकशतोऽध्यायः ॥ १९१ ॥

---

जनमेजय उवाच । भूय एव ब्राह्मणानां माहात्म्यं वक्तुमर्हसि । पाण्डवानां यथाचष्ट मार्कण्डेयो महातपाः ॥ १ ॥

वैशम्पायन उवाच । भूय एव ब्राह्मणमहाभाग्यं वक्तुमर्ह-

सोऽब्रवीत् पाण्डवेयो मार्कण्डेयम् । अथाचष्ट मार्कण्डेयोऽपूर्वमिदं श्रूयतां ब्राह्मणानाञ्चरितम् ॥ २ ॥

मार्कण्डेय उवाच । अयोध्यायामिक्ष्वाकुकुलोद्वहः पार्थिवः परिक्षिन्नाम मृगयामगमत् । तमेकाश्वेन मृगमनुसरन्तं मृगो दूरमपाहरत् ॥ ३ ॥ अथाध्वनि जातश्रमः क्षुत्तृष्णाभिभूतश्चैकस्मिन्देशे नीलं गहनं वनखण्डमपश्यत् । तच्चाविवेश ततस्तस्य वनखण्डस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा साश्व एव व्यगाहत ॥ ४ ॥ अथाश्वस्तः स बिसमृणालमश्वायाग्रतो निक्षिप्य पुष्करिणीतीरे संविवेश । ततः शयानो मधुरं गीतशब्दमशृणोत् ॥ ५ ॥ स श्रुत्वा चिन्तयन्नेह मनुष्यगतिं पश्यामि कस्य खल्वयं गीतशब्द इति । अथापश्यत् कन्यां परमरूपदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीञ्च । अथ सा राज्ञः समीपे पर्य्यक्रामत् ॥ ६ ॥ तामब्रवीद्राजा कस्यासि भद्रे का वा त्वमिति । सा प्रत्युवाच कन्यास्मीति तां राजोवाचार्थी त्वयाहमिति ॥ ७ ॥ अथोवाच कन्या समयेनाहं शक्या त्वया लब्धुं नान्यथेति राजा तां समयमपृच्छत् । कन्योवाच नोदकं मे दर्शयितव्यमिति ॥ ८ ॥ स राजा तां वाढ़मित्युक्त्वा तामुपयेमे कृतोद्वाहश्च राजा परीक्षित् क्रीड़मानो मुदा परमया युक्तस्तूष्णीं सङ्गम्य तया सहास्ते । ततस्तत्रैवासीने राजनि सेनान्वगच्छत् ॥ ९ ॥ पदं पदेन दृष्ट्वा च राजानं परिवार्य्यातिष्ठत् । पर्य्याश्वस्तश्च राजा तयैव सह शिविकया प्रायादवघोटितया स्वनगरमनुप्राप्य रहसि तया सहास्ते ॥ १० ॥ तत्राभ्यासस्थोऽपि कश्चिन्नापश्यदथ प्रधानामात्योऽभ्याशचरास्तस्य स्त्रियोऽपृच्छत् । किमत्र प्रयोजनं वर्त्तत इत्यथाब्रुवंस्ताः स्त्रियः ॥ ११ ॥ अपूर्व्वमिव पश्याम उदकं नात्र नीयत इत्यथामात्योऽनुदकं वनं कारयित्वोदारवृक्षं बहुपुष्पफलमूलं तस्य मध्ये मुक्ताजालमयीं पार्श्वे वापीं सगूढ़ां सुधासलिलालिप्तां च रहस्युप-

शस्य राजानमब्रवीत् ॥ १ ॥ वनमिदमुदारमनुद्दकं साध्वत्र रम्यतामिति। स तस्य वचनात्तयैव सह देव्या तद्वनं प्राविशत् ॥ १३ ॥ स कदाचित्तस्मिन् कानने रम्ये तयैव सह व्यवहरत्। अथ क्षुत्तृष्णार्दितः श्रान्तोऽतिमुक्तकागारमपश्यत्तत् प्रविश्य राजा-प्रियया सुधाकृतां विमलां सलिलपूर्णां वापीमपश्यत् ॥ १४ ॥ दृष्ट्वैव तां तस्याश्च तीरे सहैव तया देव्यावतिष्ठत। अथ तां देवीं स राजाब्रवीत् साध्ववतर वापीसलिलमिति। सा तद्वचः श्रुत्वावतीर्य्य वापीं न्यमज्जन्न पुनरुदमज्जत् ॥ १५ ॥ तां मृगय-माणो राजा नापश्यद्वापीमथ निःस्राव्य मण्डूकं श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास ॥ १६ ॥ स राजा सर्व्वत्र मण्डूकवधः क्रियता-मिति यो मयार्थी स मां मृतमण्डूकोपायनमादायोपतिष्ठेदिति ॥ १७ ॥ अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्व्वासु मण्डू-कान् भयमाविवेश ते भीता मण्डूकराज्ञे यथावृत्तं न्यवेदयन् ॥ १८ ॥ ततो मण्डूकराट् तापसवेशधारी राजानमभ्यगच्छ-दुपेत्य चैनमुवाच ॥ १९ ॥ मा राजन् क्रोधवशं गमः प्रसादं कुरु नार्हसि मण्डूकानामनपराधिनां वधं कर्त्तुमिति श्लोकौ चात्र भवतः ॥ २० ॥ मा मण्डूकान् जिघांस त्वं कोपं सन्धा-रयाच्युत। प्रक्षीयते धनोद्रेको जनानामविजानताम् ॥ २१ ॥ प्रतिजानीहि नैतांस्त्वं प्राप्य क्रोधं विमोक्ष्यसि। अलं कृत्वा तवाधर्मं मण्डूकैः किं हतैर्हि ते। तमेवंवादिनमिष्टजनशोक-परीतात्मा राजाथोवाच ॥ २२ ॥ न हि क्षम्यते तन्मया हनि-ष्याम्येतानेतैर्दुरात्मभिः प्रिया मे भक्षिता सर्व्वथैव मे वध्या मण्डूकानार्हसि विद्वन्मामुपरोद्धुमिति ॥२३॥ स तद्वाक्यमुपलभ्य व्यथितेन्द्रियमना प्रोवाच प्रसीद राजन्नहमायुर्नाम मण्डूकराजो मम सा दुहिता सुशोभना नाम। तस्या हि दौःशील्यमेत-द्बहवस्तया राजानो विप्रलब्धपूर्व्वा इति ॥ २४ ॥ तमब्रवी-

द्राजा तयास्य हन्यर्थी सा मे दीयतामिति । अथैनां राज्ञे पिता ददावब्रवीच्चैनामेनं राजानं शुश्रूषस्वेति ॥ २५ ॥ स एवमुक्त्वा दुहितरं क्रुद्ध शशाप यस्मात्त्वया राजानो विप्रलब्धा बहवस्तस्मादब्रह्मण्यानि तवापत्यानि भविष्यन्तीत्यनृतकत्वात्तवेति ॥ २६ ॥ स च राजा तामुपलभ्य तस्यां सुरतगुणनिबद्धहृदयो लोकत्रयैश्वर्य्यमिवोपलभ्य हर्षेण बाष्पकलया वाचा प्रणिपत्याभिपूज्य मण्डूकराजमब्रवीत् अनुगृहीतोऽस्मीति । स च मण्डूकराजो दुहितरमनुज्ञाप्य यथागतमगच्छत् ॥ २७ ॥ अथ कस्य चित् कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः सम्बभूवुः । शलो दलो बलश्चेति ततस्तेषां ज्येष्ठं शलं समये पिता राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम ॥ २८ ॥ अथ कदाचिच्छलो मृगयामनुचरन् मृगमासाद्य रथेनान्वधावत् । सूतञ्चोवाच शीघ्रं मां वाहयस्वेति स तथोक्तः सूतो राजानमब्रवीत् ॥ २९ ॥ न क्रियतामनुबन्धो नैष शक्यस्त्वया मृगोऽयं ग्रहीतुम् । यद्यपि ते रथे युक्तौ वाम्यौ स्यातामिति ॥ ३० ॥ ततोऽब्रवीद्राजा सूतमाचक्ष्व मे वाम्यौ हन्मि वा त्वामिति । स एवमुक्तो राजभयभीतः सूतो वामदेवशापभीतश्च सन्नाचख्यौ राज्ञे ॥ ३१ ॥ ततः पुनः स राजा खड्गमुद्यम्य शीघ्रं कथयस्वेति तमाह हनिष्ये त्वामिति । स तदाह राजभयभीत सूतो वामदेवस्याश्वौ वाम्यौ मनोजवाविति ॥ ३२ ॥ अथैनमेवं ब्रुवाणमब्रवीद्राजा वामदेवाश्रमं याहीति । स गत्वा वामदेवाश्रमं तमृषिमब्रवीत् ॥ ३३ ॥ भगवन् मृगो मे विद्धः पलायते सम्भावयितुमर्हसि वाम्यौ दातुमिति । तमब्रवीदृषिर्ददानि ते वाम्यौ कृतकार्य्येण भवता मम वाम्यौ निर्यात्यौ क्षिप्रमिति ॥ ३४ ॥ स च तावश्वौ प्रतिगृह्यानुज्ञाप्य ऋषिं प्रायाद्वामिप्रयुक्तेन रथेन मृगं प्रति गच्छं चाब्रवीत् सूतमश्वरत्नाविमौ अयोग्यौ ब्राह्मणानां नैतौ प्रतिदेयौ वामदेवाय-

त्यक्त्वा मृगमवाप्य स्वनगरमेत्याश्वावन्तःपुरेऽस्थापयत् ॥ ३५ ॥ अथर्षिश्चिन्तयामास तरुणो राजपुत्रः कल्याणं पुत्रमासाद्य रमते। न मे प्रतिनिर्य्यातयत्यहो कष्टमिति ॥ ३६ ॥ स मनसा विचिन्त्य मासि पूर्णे शिष्यमब्रवीत्। गच्छात्रेय राजानं ब्रूहि यदि पर्य्याप्तं तदा निर्य्यातयोपाध्यायवाम्याविति ॥ ३७ ॥ स गत्वैव तं राजानमब्रवीत् तं राजा प्रत्युवाच राज्ञामेतद्वाहनमनर्हा ब्राह्मणा रत्नानामेवं विधानां किं ब्राह्मणानामश्वैः कार्य्यं साधु गम्यताम् ॥ ३८ ॥ स गत्वैतदुपाध्यायायाचष्ट तच्छ्रुत्वा वचनमप्रियं वामदेवः क्रोधपरीतात्मा स्वयमेव राजानमभिगम्याश्वार्थमचोदयन्न चाददद्राजा ॥ ३९ ॥

वामदेव उवाच। प्रयच्छ वाम्यौ मम पार्थिव त्वं कृतं हि ते कार्य्यमास्यामशक्यम्। मा त्वावधीद्वरुणो घोरपाशैर्ब्रह्मक्षत्रस्यान्तरे वर्त्तमानम् ॥ ४० ॥

राजोवाच। अनड्वाहौ सुव्रतौ साधुदान्तावेतद्विप्राणां वाहनं वामदेव। ताभ्यां याहि त्वं यत्र कामो महर्षे छन्दांसि वै त्वादृशं संवहन्ति ॥ ४१ ॥

वामदेव उवाच। छन्दांसि वै मादृशं संवहन्ति लोकेऽमुष्मिन् पार्थिव यानि सन्ति। अस्मिंस्तु लोके मम यानमेतदस्मद्विधानामपरेषाञ्च राजन् ॥ ४२ ॥

राजोवाच। चत्वारस्त्वां गर्द्दभाः संवहन्तु श्रेष्ठाश्वतर्य्यो हरयो वातरंहाः। तैस्त्वं याहि क्षत्रियस्यैष वाहो ममैव वाम्यौ न तवैतौ हि विद्धि ॥ ४३ ॥

वामदेव उवाच। घोरं व्रतं ब्राह्मणस्यैतदाहुरेतद्राजन् यदिह जीवमानः। अयस्मया घोररूपा महान्तश्चत्वारो वा यातुधानाः सुरौद्राः। मया प्रयुक्तास्त्वद्वधमीप्समाना वहन्तु त्वां शित शूलाश्चतुर्धा ॥ ४४ ॥

राजोवाच। ये त्वां विदुर्ब्राह्मणं वामदेव वाचा हन्तुं मनसा कर्मणा वा। ते त्वां सशिष्यमिह पातयन्तु मदाज्ञयतुन्नाः शितशूलहस्ताः ॥ ४५ ॥

वामदेव उवाच। ममैतौ वाम्यौ प्रतिगृह्य राजन् पुनर्ददामीति प्रपद्यसे त्वम्। प्रयच्छ शीघ्रं मम वाम्यौ त्वमश्वौ यद्यात्मानं जीवितुं ते क्षमं स्यात् ॥ ४६ ॥

राजोवाच। न ब्राह्मणेभ्यो मृगया प्रसूता न त्वानुशास्मोऽद्यप्रभृति ह्यसत्यम्। तवैवाज्ञां संप्रणिधाय सर्वां तथा ब्रह्मन् पुण्यलोकं लभेयम् ॥ ४७ ॥

वामदेव उवाच। नानुयोगा ब्राह्मणानां भवन्ति वाचो राजन् मनसा कर्मणा वा। यस्त्वेवं ब्रह्म तपसान्वेति विद्वांस्तेन श्रेष्ठो भवति हि जीवमानः ॥ ४८ ॥

मार्कण्डेय उवाच। एवमुक्ते वामदेवेन राजन् समुत्तस्थू राक्षसा घोररूपाः। तैः शूलहस्तैर्वध्यमानः स राजा प्रोवाचेदं वाक्यमुच्चैस्तदानीम् ॥४९॥ इक्ष्वाकवो यदि ब्रह्मन् दलो वा विधेया मे यदि वेमे विशोऽपि। नोत्स्रक्ष्येऽहं वामदेवस्य वाम्यौ नैवंविधा धर्मशीला भवन्ति ॥ ५० ॥ एवं ब्रुवन्नेव स यातुधानैर्हतो जगामाशु महीं क्षितीशः। ततो विदित्वा नृपतिं निपातितमिक्ष्वाकवो वै दलमभ्यषिञ्चन् ॥ ५१ ॥ राज्ये तदा तत्र गत्वा स विप्रः प्रोवाचेदं वचनं वामदेवः। दलं राजानं ब्राह्मणानां हि देयमेवं राजन् सर्वधर्मेषु दृष्टम् ॥ ५२ ॥ बिभेषि चेत्त्वमधर्मान्नरेन्द्र प्रयच्छ मे शीघ्रमेवाद्य वाम्यौ। एतच्छ्रुत्वा वामदेवस्य वाक्यं स पार्थिवः सूतमुवाच रोषात् ॥ ५३ ॥ एकं हि मे सायकञ्चित्ररूपं दिग्धं विषेणाहर सङ्गृहीतम्। येन विद्धो वामदेवः शयीत सन्दृश्यमानः श्वभिरार्त्तरूपः ॥ ५४ ॥

वामदेव उवाच। जानामि पुत्रं दशवर्षं तवाहं जातं

महिषीं श्येनजितं नरेन्द्र। तं जहि त्वं मद्वचनात् प्रणुन्नस्तूर्णं प्रियैः प्रायकैर्घोररूपे ॥ ५५ ॥

मार्कण्डेय उवाच। एवमुक्तो वामदेवेन राजन्नन्तःपुरे राजपुत्रं जघान। स सायकिस्तिग्मतेजा विसृष्टः श्रुत्वा दलस्तत्र वाक्यं बभाषे ॥ ५६ ॥

राजोवाच। इक्ष्वाकवो हन्त चरामि वः प्रियं निबर्हणीमं विप्रमद्य प्रमथ्य। आनीयतामपरस्तिग्मतेजाः पश्यध्वं मे वीर्य्यमद्य क्षितीशाः ॥ ५७ ॥

वामदेव उवाच। यत्त्वमेनं सायकं घोररूपं विषेण दिग्धं मम सन्दधासि। नत्वेतं त्वं शरवर्यं विमोक्तुं सन्धातुं वा शक्ष्यसे मानवेन्द्र ॥ ५८ ॥

राजोवाच। इक्ष्वाकवः पश्यत मां गृहीतं न वै शक्नोम्येष शरं विमोक्तुम्। न चास्य कर्त्तुं नाशमभ्युत्सहामि आयुष्मान् वै जीवतु वामदेवः ॥ ५९ ॥

वामदेव उवाच। संस्पृश्यैनां महिषीं सायकेन ततस्तस्मादेनसो मोक्ष्यसे त्वम्। ततस्तथा कृतवान् पार्थिवस्तु ततो मुनिं राजपुत्री बभाषे ॥ ६० ॥

राजपुत्र्युवाच। यथायुक्ता वामदेवाहमेनं दिने दिने सन्दिशन्ती नृशंसम्। ब्राह्मणेभ्यो मृगयती सूनृतानि तथा ब्रह्मन् पुण्यलोकं लभेयम् ॥ ६१ ॥

वामदेव उवाच। त्वया त्रातं राजकुलं शुभेक्षणे वरं वृणीष्वाप्रतिमं ददामि ते। प्रशाधीमं स्वजनं राजपुत्रि इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये ॥ ६२ ॥

राजपुत्र्युवाच। वरं वृणे भगवन्नेवमेव विमुच्यतां किल्विषादद्य भर्त्ता। शिवेन च ध्याहि सपुत्रबान्धवं वरो वृतो ह्येष मया द्विजाग्र्य ॥ ६३ ॥

मार्कण्डेय उवाच। श्रुत्वा वचः स मुनी राजपुत्रास्तथास्त्विति प्राह कुरुप्रवीर। ततः स राजा मुदितो बभूव वाम्यौ चास्मै प्रददौ सम्प्रणम्य॥ ६४॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि वामदेवचरिते द्विनवत्यधिकशततोऽध्यायः॥ १९२॥

---

वैशम्पायन उवाच। मार्कण्डेयमृषयो ब्राह्मणा युधिष्ठिरश्च पर्य्यपृच्छन्नृषिः केन दीर्घायुरासीद्वकः। मार्कण्डेयस्तु तान् सर्वानुवाच महातपा दीर्घायुश्च बको राजर्षिर्नात्र कार्य्या विचारणा॥ १॥ एतच्छ्रुत्वा तु कौन्तेयो भ्रातृभिः सह भारत। मार्कण्डेयं पर्य्यपृच्छद्धर्मराजो युधिष्ठिरः॥ २॥ बकदाल्भ्यौ महात्मानौ श्रूयेते चिरजीविनौ। सखायौ देवराजस्य तावृषी लोकसम्मतौ॥ ३॥ एतदिच्छामि भगवन् बकशक्रसमागमम्। सुखदुःखसमायुक्तं तत्त्वेन कथयस्व मे॥ ४॥

मार्कण्डेय उवाच। वृत्ते देवासुरे राजन् संग्रामे लोमहर्षणे। त्रयाणामपि लोकानामिन्द्रो लोकाधिपोऽभवत्॥ ५॥ सम्यग्वर्षति पर्ज्जन्यः शस्यसम्पद उत्तमाः। निरामयाः सुधर्मिष्ठाः प्रजा धर्मपरायणाः॥ ६॥ मुदितश्च जनः सर्वः स्वधर्मेषु व्यवस्थितः। ताः प्रजा मुदिताः सर्वा दृष्ट्वा बलनिसूदनः॥ ७॥ ततस्तु मुदितो राजन् देवराजः शतक्रतुः। ऐरावतं समास्थाय ताः पश्यन्मुदिताः प्रजाः॥ ८॥ आश्रमांश्च विचित्रांश्च नदीश्च विविधाः शुभाः। नगराणि समृद्धानि खेटान् जनपदांस्तथा॥९॥ प्रजापालनदक्षांश्च नरेन्द्रान् धर्मचारिणः। उदपानं प्रपा वापीस्तडागानि सरांसि च॥ १०॥ नानाब्रह्मसमाचारैः सेवितानि द्विजोत्तमैः। ततोऽवतीर्य्य रम्यायां पृथ्व्यां राजन् शतक्रतुः॥११॥

तत्र रम्ये शिवे देशे बहुवृक्षसमाकुले। पूर्वस्यान्दिशि रम्यायां समुद्राभ्याशतो नृप॥ १२॥ तत्राश्रमपदं रम्यं मृगद्विजनिषेवितम्। तत्राश्रमपदे रम्ये वकं पश्यति देवराट्॥ १३॥ वकस्तु दृष्ट्वा देवेन्द्रं दृढ़ं प्रीतमनाभवत्। पाद्यासनार्घ दानेन फलमूलैरथार्चयत्॥ १४॥ सुखोपविष्टो वरदस्ततस्तु बलसूदनः। ततः प्रश्नं वकं देव उवाच त्रिदशेश्वरः॥ १५॥ शतं वर्षसहस्राणि मुने जातस्य तेऽनघ। समाख्याहि मम ब्रह्मन् किं दुःखं चिरजीविनाम्॥ १६॥

वक उवाच। अप्रियैः सह संवासः प्रियैश्चापि विना भवः। असद्भिः सम्प्रयोगश्च तद्दुःखं चिरजीविनाम्॥ १७॥ पुत्रदार विनाशोऽत्र ज्ञातीनां सुहृदामपि। परेष्वायत्तताकृच्छ्रं किन्नु दुःखतरं ततः॥ १८॥ नान्यद्दुःखतरं किञ्चिल्लोकेषु प्रतिभाति मे। अर्थैर्विहीनः पुरुषः परैः सम्परिभूयते॥ १९॥ अकुलानां कुले भावं कुलीनानां कुलक्षयम्। संयोगं विप्रयोगञ्च पश्यन्ति चिरजीविनः॥ २०॥ अपि प्रत्यक्षमेवैतत्तव देव शतक्रतो। अकुलानां समृद्धानां कथं कुलविपर्य्ययः॥ २१॥ देवदानवगन्धर्व्व मनुष्योरगराक्षसाः। प्राप्नुवन्ति विपर्य्यासं किन्नु दुःखतरं ततः॥ २२॥ कुले जाताश्च क्लिश्यन्ते दौष्कुलेयवशानुगाः। आढ्यैर्दरिद्रावमताः किन्नु दुःखतरं ततः॥ २३॥ लोके वैधर्म्यमेतत्तु दृश्यते बहुविस्तरम्। हीनप्रज्ञानाश्च हृष्यन्ते क्लिश्यन्ते प्राज्ञकोविदाः। बहुदुःखपरिक्लेशं मानुष्यमिह दृश्यते॥ २४॥

इन्द्र उवाच। पुनरेव महाभाग देवर्षिगणसेवित। समाख्याहि मम ब्रह्मन् किं सुखं चिरजीविनाम्॥ २५॥

वक उवाच। अष्टमे द्वादशे वापि शाकं यः पचते गृहे। कुमित्राण्यनपाश्रित्य किं वै सुखतरं ततः॥ यत्राहानि न गण्यन्ते नैनमाहुर्महाशनम्॥ २६॥ अपि शाकं पचानस्य सुखं वै मघ-

वन् गृहे। अर्जितं स्वेन वीर्य्येण नाप्यपाश्रित्य कञ्चन ॥ २७ ॥ फलं शाकमपि श्रेयो भोक्तुं ह्यकृपणं गृहे। परस्य तु गृहे भोक्तुः परिभूतस्य नित्यशः ॥ २८ ॥ सुमृष्टमपि न श्रेयो विकल्पोऽयमतः सताम्। श्ववत् कीलालपो यस्तु परान्नं भोक्तुमिच्छति ॥ २९ ॥ धिगस्तु तस्य तद्भुक्तं कृपणस्य दुरात्मनः। यो दत्त्वातिथिभूतेभ्यः पितृभ्यश्च द्विजोत्तमः ॥ ३० ॥ शिष्टान्यन्नानि यो भुङ्क्ते किं वै सुखतरं ततः। अतो मृष्टतरं नान्यत् पुतं किञ्चित् शतक्रतो ॥ ३१ ॥ दत्त्वा यस्त्वतिथिभ्योऽन्नं भुङ्क्ते तेनैव नित्यशः। यावतो ह्यन्धसः पिण्डानश्नाति सततं द्विजः ॥ ३२ ॥ तावतां गोसहस्राणां फलं प्राप्नोति दायकः। यदेनो यौवनकृतं तत्सर्वं नश्यते ध्रुवम् ॥ ३३ ॥ सदक्षिणस्य भुक्तस्य द्विजस्य तु करे गतम्। यद्वारि वारिणा सिञ्चेत्तद्ध्येनस्तरते क्षणात् ॥ ३४ ॥ एतांश्चान्यांश्च वै वह्वी कथयित्वा कथाः शुभाः। बकेन सह देवेन्द्र आपृच्छ्य त्रिदिवं गतः ॥ ३५ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि बकशक्रसंवादे त्रिनवत्यधिकशततोऽध्यायः ॥ १९३ ॥

---

वैशम्पायन उवाच। ततः पाण्डवाः पुनर्मार्कण्डेयमूचुः कथितं ब्राह्मणमहाभाग्यं राजन्यमहाभाग्यमिदानीं शुश्रूषाम इति तानुवाच मार्कण्डेयो महर्षिः श्रूयतामिदानीं राजन्यानां महाभाग्यमिति ॥ १ ॥ कुरूणामन्यतमः सुहोत्रो नाम राजा महर्षीनभिगम्य निवृत्य रथस्थमेव राजानमौशीनरिं शिबिं ददर्शाभिमुखं तौ समेत्य परस्परेण यथावयः पूजां प्रयुज्य गुणसाम्येन परस्परेण तुल्यात्मानौ विदित्वान्योऽन्यस्य पन्थानं न ददतुस्तत्र नारदः प्रादुरासीत् किमिदं भवन्तौ परस्परस्य पन्थान-

मांहल्य तिष्ठत इति ॥ २ ॥ तावूचतुर्नारदं नैतद्भगवन् पूर्व-
कर्म्मकृतादिभिर्विशिष्टस्य पन्था उपदिश्यते समर्थाय वा आराच्च
सख्यं परस्परेणोपगतौ ॥ ३ ॥ तच्चावधानतो युक्तृष्टमधरो-
त्तरं परिभ्रष्टं नारदस्त्वेवमुक्तः श्लोकत्रयमपठत् ॥ ४ ॥ क्रूरः
कौरव्य मृदवे मृदुः क्रूरे च कौरव। साधुश्चासाधवे साधुः साध-
वे नाप्नुयात् कथम् ॥ ५ ॥ कृतं शतगुणं कुर्य्यान्नास्ति देवेषु
निश्चयः। औशीनरः साधुशीली भवतो वै महीपति ॥ ६ ॥
जयेत् कदर्य्यं दानेन सत्येनानृतवादिनम्। क्षमया क्रूरकर्म्माण-
मसाधुं साधुना जयेत् ॥ ७ ॥ तदुभावेव भवन्तावुदारौ य
इदानीं भवद्भ्यामन्यतमः सोऽपसर्पतु एतद्वै निदर्शनमित्युक्त्वा तूष्णीं
नारदो बभूव ॥ ८ ॥ एतच्छ्रुत्वा तु कौरव्यः शिविं प्रदक्षिणं
कृत्वा पन्थानं दत्त्वा बहुकर्म्मभिः प्रशस्य प्रययौ। तदेतद्राज्ञो
महाभाग्यमित्युक्तवान्नारदः ॥ ९ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि शिबिमहाभाग्य
कथने चतुर्नवत्यधिकशतोऽध्यायः ॥ १९४ ॥

---

मार्कण्डेय उवाच। इदमन्यच्छ्रूयतां ययातिर्नाहुषो राजा
राज्यस्थः पौरजनावृत आसाञ्चक्रे गुर्व्वर्थी ब्राह्मण उपेत्य अब्रवीत्
भो राजन् गुर्व्वर्थं भिक्षेयं समयादिति ॥ १ ॥

राजोवाच। ब्रवीतु भगवान् समयमिति।

ब्राह्मण उवाच। विद्वेषणं परमं जीवलोके कुर्य्यान्नरः
पार्थिव याच्यमानः। तत्त्वां पृच्छामि कथन्तु राजन् दद्याद्भवान्
दयितञ्च मेऽद्य ॥ २ ॥

राजोवाच। न चानुकीर्त्तयेदद्य दत्त्वा अयाच्यमर्थं न च
संशृणोमि प्राप्यमर्थञ्च संश्रुत्य तच्चापि दत्त्वा सुमुखो भवामि ॥ ३ ॥

ददामि ते रोहिणीनां सहस्रं प्रियो हि मे ब्राह्मण याच्यमानः।
न मे मनः कुप्यति याच्यमाने दत्तं न शोचामि कदाचिदर्थम्
॥ ४ ॥ इत्युक्त्वा ब्राह्मणाय राजा गोसहस्रं ददौ प्राप्तवांश्च गवां
सहस्रं ब्राह्मण इति ॥ ५ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि नाहुषचरित्रे
पञ्चनवत्यधिकशतोऽध्यायः ॥ १९५ ॥

---

वैशम्पायन उवाच। भूय एव महाभाग्यं कथ्यतामित्यब्रवीत् पाण्डवः। अथाचष्ट मार्कण्डेयो महाराज वृषदर्भसेदुकनामानौ राजानौ नीतिमार्गरतौ अस्त्रोपास्त्रकृतिनौ ॥ १ ॥ सेदुको वृषदर्भस्य बालस्यैव उपांशुव्रतमभ्यजानन् कुप्यमदेयं ब्राह्मणस्य ॥ २ ॥ अथ तं सेदुकं ब्राह्मणः कश्चिद्वेदाध्ययनसम्पन्नः आशिषं दत्त्वा गुर्वर्थी भिक्षितवान् ॥ ३ ॥ अश्वसहस्रं मे भवान् दद्यादिति तं सेदुको ब्राह्मणमब्रवीत्। नास्ति सम्भवो गुर्वर्थं दातुमिति ॥ ४ ॥ स त्वं गच्छ वृषदर्भसकाशं राजा परमधर्मज्ञो ब्राह्मण तं भिक्षस्व। स ते दास्यति तस्यैत दुपांशुव्रतमिति ॥ ५ ॥ अथ ब्राह्मणो वृषदर्भसकाशं गत्वा अश्वसहस्रमयाचत। स राजा तं कशेनाताड़यत् ॥ ६ ॥ तं ब्राह्मणोऽब्रवीत् किं हिंस्यनागसं मामिति। एवमुक्त्वा तं शपन्तं राजाह विप्र किं यो न ददाति तुभ्यमताहोस्वित् ब्राह्मण्यमेतत् ॥ ७ ॥

ब्राह्मण उवाच। राजाधिराज तव समीपं सेदुकेन प्रेषितो भिक्षितुमागतः। तेनानुशिष्टेन मया त्वं भिक्षितोऽसि ॥ ८ ॥

राजोवाच। पूर्वाह्णे ते दास्यामि यो मेऽद्य बलिरागमिष्यति। यो हन्यते कशया कथं मोघं क्षेपणं तस्य स्यात् ॥ ९ ॥ इत्युक्त्वा ब्राह्मणाय दैवसिकामुत्पत्तिं प्रादात्। अधिकस्याश्व-

सहस्रस्य मूल्यमेवाददादिति ॥ १० ॥ देवानां कथा संजाता महीतलं गत्वा महीपतिं शिविमौशीनरं साध्वेनं शिविं जिज्ञास्याम इति । एवं भो इत्युक्त्वा अग्नीन्द्रावुपतिष्ठेताम् ॥ ११ ॥ अग्निः कपोतरूपेण तमभ्यधावदामिषार्थमिन्द्रः श्येनरूपेण । अथ कपोतो राज्ञो दिव्यासनासीनस्य उत्सङ्गं न्यपतत् ॥ १२ ॥ अथ पुरोहितो राजानमब्रवीत् । प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्यते ॥ १३ ॥ वसु ददातु अन्तवान् पार्थिवोऽस्य निष्कृतिं कुर्य्यात् घोरं कपोतस्य निपातमाहुः ॥ १४ ॥ अथ कपोतो राजानमब्रवीत् प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्ये । अङ्गैरङ्गानि प्राप्यार्थी मुनिर्भूत्वा प्राणांस्त्वां प्रपद्ये । १५ ॥ स्वाध्यायेन कर्षितं ब्रह्मचारिणं मां विद्धि तपसा दमेन युक्तमाचार्य्यस्याप्रतिकूलभाषिणं एवं युक्तमपापं मां विद्धि ॥ १६ ॥ गदामि वेदान् विचिनोमि छन्दः सर्वे वेदा अक्षरशो मे अधीताः । न साधु दानं श्रोत्रियस्य प्रदानं मा प्रदाः श्येनाय न कपोतोऽस्मि । अथ श्येनो राजानमब्रवीत् ॥ १७ ॥ पर्य्यायेण वसतिर्मा भवेषु सर्गे जातः पूर्वमस्मात् कपोतात् । त्वमाददानोऽद्य कपोतमेनं मा त्वं राजन् विघ्नकर्त्ता भवेथाः ॥ १८ ॥

राजोवाच । केनेदृशी जातु परा हि दृष्टा वागुच्यमाना शकुनेन संस्कृता । यो वै कपोतो वदति यश्च श्येन उभौ विदित्वा कथमस्तु साधु ॥ १९ ॥ नास्य वर्षति वर्षकाले नास्य बीजं रोहति काल उप्तम् । भीतं प्रपन्नं यो हि ददाति शत्रवे न त्राणं लभते त्राणमिच्छन् स काले ॥ २० ॥ जाता ह्रस्वा प्रजा प्रमीयते सदा न वै वासं पितरोऽस्य कुर्वते । भीतं प्रपन्नं यो हि ददाति शत्रवे नास्य देवाः प्रतिगृह्णन्ति हव्यम् ॥ २१ ॥ मोघमन्नं विन्दति चाप्रचेताः स्वर्गाल्लोकाद्भ्रश्यति शीघ्रमेव । भीतं प्रपन्नं यो हि ददाति शत्रवे सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ २२ ॥

उक्षाणं पक्का सह औदनेन अस्मात् कपोतात् प्रति ते नयन्तु।
यस्मिन् देशे रमसेऽतीव श्येन तत्र मांसं शिवयस्ते वहन्तु॥ २३॥

श्येन उवाच। नोक्षाणं राजन् प्रार्थयेयं न चान्यदस्मा-
न्मांसमधिकं वा कपोतात्। देवैर्दत्तः सोऽद्य ममैष भक्षस्तन्मे
ददस्व शकुनानामभावात्॥ २४॥

राजोवाच। उक्षाणं वेहत मनूनं नयन्तु ते पश्यन्तु पुरुषा
ममैव। भयाद्धितस्य दायं ममान्तिकं त्वां प्रापयन्तु त्वं श्येनं
मा हिंसीः॥ २५॥ त्यजे प्राणानेव दद्यां कपोतं सौम्यो ह्ययं
किन्नु जानासि श्येन। यथाक्लेशं मा कुरुष्वेह सौम्य नाहं
कपोतमर्पयिष्ये कथञ्चित्॥ २६॥ यथा मां हि वै साधुवादैः
प्रसन्नाः प्रशंसेयुः शिवयः कर्मणा तु। यथा श्येन प्रियमेव कुर्य्यां
प्रशाधि मां यद्वदेस्तत् करोमि॥ २७॥

श्येन उवाच। ऊरोर्दक्षिणादुत्कृत्य स्वपिशितं तावद्राजन्
यावन्मांसं कपोतेन समम्। तथा त्वस्मात् साधु त्रातः कपोतः
प्रशंसेयुः शिवयः कृतश्च प्रियं स्यान्ममेति॥ २८॥ अथ स दक्षि-
णादूरोरुत्कृत्य स्वमांसपेशीं तुलया धारयन् गुरुतर एवं कपोत
आसीत्॥ २९॥ पुनरन्यमुच्चकर्त्त गुरुतर एव कपोतः। एवं
सर्वं समधिकृत्य शरीरं तुलायामारोपयामास तत्तथापि गुरुतर
एव कपोत आसीत्॥ ३०॥ अथ राजा स्वयमेव तुलामारुरोह।
न च व्यलीकमासीद्राज्ञ एतद्वृत्तान्तं दृष्ट्वा त्रात इत्युक्त्वा प्राणीयत
श्येनः अथ राजा अब्रवीत्॥ ३१॥ कपोतं विद्युः शिवयस्त्वां
कपोत पृच्छामि ते शकुने को नु श्येन। नानीश्वर ईदृशं जातु
कुर्य्यादितं प्रश्नं भगवन्मे विचक्ष्व॥ ३२॥

कपोत उवाच। वैश्वानरोऽहं ज्वलनो धूमकेतुरथैव श्येनो
वज्रहस्तः शचीपतिः। साधु त्वातुं त्वामृषभं सौरथेयं नौ
जिज्ञासया त्वत्सकाशं प्रपन्नौ॥ ३३॥ यामेतां पेशीं मम

निष्क्रयाय प्रादाद्भवानशिनोत्कृत्य राजन् एतद्वो लक्ष्म शिवं करोमि हिरण्यवर्णं रुचिरं पुण्यगन्धम् ॥ ३४ ॥ एतासां प्रजानां पालयिता यशस्वी सुरर्षीणामथ सम्मतो भृशं एतस्मात् पार्श्वात् पुरुषो जनिष्यति कपोतरोमेति च तस्य नाम ॥ ३५ ॥ कपोतरोमाणं शिबिनोद्भिदं पुत्रं प्राप्स्यति नृपवृषं संहननं यशोदीप्यमानं द्रष्टासि शूरमृषभं सौरथानाम् ॥ ३६ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि शिविचरिते षणवत्यधिकशततोऽध्यायः ॥ १९६ ॥

---

वैशम्पायन उवाच। भूय एव महाभाग्यं कथ्यतामित्यब्रवीत् पाण्डवो मार्कण्डेयम् । अथाचष्ट मार्कण्डेयः अष्टकस्य वैश्वामित्रेरश्वमेधे सर्व्वे राजानः प्रागच्छन्त ॥ १ ॥ भ्रातरश्चास्य प्रतर्द्दनो वसुमना शिविरौशीनर इति स च समाप्तयज्ञो भ्रातृभिः सह रथेन प्रायात्ते च नारदमागच्छन्तं तमभिवाद्यारोहतु भवान् रथमित्यब्रुवन् ॥ २ ॥ तांस्तथेत्युक्त्वा रथमारुरोह अथ तेषामेकः सुरर्षिं नारदमब्रवीत् । प्रसाद्य भगवन्तं किञ्चिदिच्छेयं प्रष्टुमिति ॥ ३ ॥ पृच्छेत्यब्रवीदृषिः सोऽब्रवीदायुष्मन्तः सर्व्वगुणसमुदिताः । अथायुष्मन्तं स्वर्गविशेषं चतुर्भिर्यातव्यं स्यात् कस्त्ववतरेत् । अयमष्टकोऽवतरेदित्यब्रवीदृषिः ॥ ४ ॥ किं कारणमित्यपृच्छत् । अथाचष्ट अष्टकस्य गृहे मया उषितं स मां रथेनानुप्रावहद्वयापश्यमनेकानि गोसहस्राणि वर्णशो विविक्तानि तमहमपृच्छं कस्येमा गाव इति ॥ ५ ॥ सोऽब्रवीत् मया निसृष्टा इत्येतास्तेनैव स्वयं श्लाघितं कथितेन एषोऽवतरेदथ त्रिभिर्यातव्यं साम्प्रतं कोऽवतरेत् ॥ ६ ॥ प्रतर्द्दन इत्यब्रवीदृषिः । तत्र किं कारणं प्रतर्द्दनस्यापि गृहे मयोषितम् । स मां रथेनानुप्रावहत् ॥ ७ ॥ अथैनं ब्राह्मणो भिक्षे-

ताश्वं मम ददातु भवान्निवृत्तो दास्यामीत्यब्रवीत् ब्राह्मणं त्वरित-मेव दीयतामित्यब्रवीद्ब्राह्मणस्त्वरितमेव ब्राह्मणस्यैवमुक्त्वा दक्षिणं पार्श्वमददत्॥ ८॥ अथान्योऽप्यश्वार्थी ब्राह्मण आगच्छत्। तथैव चैनमुक्त्वा वामपार्श्णिमभ्यददादथ प्रायात् पुनरपि चान्योऽप्य-श्वार्थी ब्राह्मण आगच्छत्। त्वरितोऽथ तस्मै अपनह्य वासं धूर्य्यमददत्॥ ९॥ अथ प्रायात् पुनरन्य आगच्छदश्वार्थी ब्राह्मण-स्तमब्रवीद्दतियातो दास्यामि त्वरितमेव दीयतामित्यब्रवीद्ब्राह्मण स्तस्मै दत्वाश्वं रथधुरं गृह्णता व्याहृतं ब्राह्मणानां साम्प्रतं नास्ति किञ्चिदिति॥ १०॥ य एष ददाति चासूयति च तेन व्याहृतेन तथावतरेत्। अथ द्वाभ्यां यातव्यमिति कोऽवतरेत्॥ ११॥ वसुमना अवतरेदित्यब्रवीदृषिः। किं कारणमित्यपृच्छदथाचष्ट-नारदः। अहं परिभ्रमन् वसुमनसो गृहमुपस्थितः॥ १२॥ स्वस्तिवाचनमासीत् पुष्परथस्य प्रयोजनेन तमहमन्वगच्छं स्वस्तिं वाचितेषु ब्राह्मणेषु रथो ब्राह्मणानां दर्शितः॥ १३॥ तमहं रथं प्राशंसमथ राजाब्रवीद्भगवता रथः प्रशस्तः एष भगवतो भवतो रथ इति॥१४॥ अथ कदाचित् पुनरप्यहमुपस्थितः। पुनरेव रथप्रयो-जनमासीत्॥ १५॥ सम्यगयमेष भगवत इत्येवं राजाब्रवीदिति। पुनरेव च तृतीयं स्वस्तिवाचनं समभावयमथ राजा ब्राह्मणानां दर्शयन् मामभिप्रेक्ष्याब्रवीत्॥ १६॥ अथो भगवता पुष्परथस्य स्वस्तिवाचनानि सुष्ठु सम्भावितानि एतेन द्रोहवचनेनावतरेत्॥१७॥ अथैकेन यातव्यं स्यात् कोऽवतरेत् पुनर्नारद आह॥ १८॥ शिविर्यायादहमवतरेयम्। अत किं कारणमित्यब्रवीत्। असावहं शिविना न समानोऽस्मि यतस्तं शिविं ब्राह्मणोऽभ्यागच्छत्स चैन-मब्रवीत्॥ १९॥ शिवे अन्नार्थ्यस्मीति तमब्रवीच्छिविः किं क्रियतामाज्ञापयतु भवानिति॥ २०॥ अथैनं ब्राह्मणोऽब्रवीत् य एष ते पुत्रो वृहद्गर्भो नाम एष प्रमातव्य इति तमेनं संस्कुरु॥ २१॥

अन्नं चोपपादय ततोऽहं प्रतीक्ष्य इति । ततः पुत्रं प्रमाथ्य संस्कृत्य विधिना साधयित्वा पात्रामर्पयित्वा शिरसा प्रतिगृह्य ब्राह्मणमन्वगयत् ॥ २२ ॥ अथास्य मृगयमाणस्य कश्चिदाचष्ट एष ते ब्राह्मणो नगरं प्रविश्य दहति ते गृहं कोषागारमायुधागारमश्वशालां हस्तिशालाञ्च क्रुद्ध इति ॥ २३ ॥ अथ शिबिस्तथैवाविकृतमुखवर्णो नगरं प्रविश्य ब्राह्मणं तमब्रवीत् सिद्धं भगवन्नन्नमिति ब्राह्मणो न किञ्चिद्व्याजहार विस्मयादधोमुख आसीत् ॥ २४ ॥ ततः प्रासादयद्‌ब्राह्मणं भगवन् भुज्यतामिति । मुहूर्त्तादुद्वीक्ष्य शिबिमब्रवीत् ॥ २५ ॥ त्वमेवैतदश्नानेति तथाह तथेति शिबिस्तथैवाविमना महित्वा कपालमस्युद्धार्थे भोक्तुमैच्छत् ॥ २६ ॥ अथास्य ब्राह्मणो हस्तमग्रहात् । अब्रवीच्चैनं जितक्रोधोऽसि न ते किञ्चिदपरित्याज्यं ब्राह्मणार्थे ब्राह्मणोऽपि तं महाभागं समभाजयत् ॥ २७ ॥ स ऊर्द्ध्वमीक्षमाणः पुत्रमपश्यत् अग्रे तिष्ठन्तं देवकुमारमिव पुण्यगन्धान्वितमलङ्कृतम् । सर्वञ्च तमर्थं विधाय ब्राह्मणोऽन्तरधीयत ॥ २८ ॥ तस्य राजर्षेर्विधाता तेनैव वेशेन परीक्षार्थमागत इति तस्मिन्नन्तर्हिते अमात्या राजानमूचुः किं प्रेप्सुना भवता इदमेवं जानता कृतमिति ॥ २९ ॥

शिबिरुवाच । नैवाहमेतद्यशसे ददानि न चार्थहेतोर्न च भोगतृष्णया । पापैरनासेवित एष मार्ग इत्येवमेतत् सकलं करोमि ॥ ३० ॥ सद्भिः सदाध्यासितन्तु प्रशस्तं तस्मात् प्रशस्तं श्रयते मतिर्मे । एतन्महाभाग्यवरं शिबिस्तु तस्मादहं वेद यथावदेतत् ॥ ३१ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि राजन्यमहाभाग्यकथने सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

---

वैशम्पायन उवाच। मार्कण्डेयमृषयः पाण्डवाः पर्य्यपृच्छ-न्नस्ति कश्चिद्भवतश्चिरजाततर इति॥१॥ स तानुवाचास्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात् प्रच्युतः कीर्त्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठदथ प्रत्यभिजानाति मां भवानिति॥२॥ तमहमब्रूवं न वयं वासायनिकाः कार्य्यचेष्टाकुलत्वान्न प्रत्यभिजाना-म्यात्मनोऽर्थानामनुष्ठानं न आरोपतापेनात्मनः समारभामोऽर्थाना-मनुष्ठानम्॥३॥ स मामुवाच अस्त्यन्यस्त्वत्तश्चिरजात इति तमह-मब्रूवं अस्ति खलु हिमवति प्रावारकर्णो नामोलूकः प्रतिवसति स मत्तश्चिरजातो भवन्तं यदि जानीयादितः प्रकृष्टे चाध्वनि हिमवां स्तत्रासौ प्रतिवसतीति॥४॥ ततः स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः अथैनं स राजा पप्रच्छ प्रतिजानाति मां भवानिति॥५॥ स मुहूर्त्तमिव ध्यात्वाब्रवीदेनं नाभिजानामि भवन्तमिति। स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः॥६॥ अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाड़ीजङ्घो नाम बकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं पृच्छेति। तत इन्द्रद्युम्नो मामुलूकमादाय तत् सरोऽगच्छ-द्यत्रासौ नाड़ीजङ्घो नाम बको बभूव॥७॥ सोऽस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानाति स एनं मुहूर्त्तं ध्यात्वाब्रवी-न्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति॥८॥ ततः सोऽस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोऽस्तीति स नोऽब्रवीदस्ति खल्वस्मि-न्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति स मत्तश्चिरजाततरः स यदि कथञ्चिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति॥९॥ ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास। अस्त्य-स्माकमभिप्रेतं भवन्तं कश्चिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति॥१०॥ तच्छ्रुत्वा कच्छपस्तस्मात् सरसः उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतञ्चैनं वयं पृच्छाम भवानिम-

मिन्द्रद्युम्नं राजानमभिजानातीति ॥ ११ ॥ स मुहूर्त्तं ध्यात्वा वाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् । किमहमेनं न प्रत्यभिज्ञास्यामीह ह्यनेन सहस्रकृत्वः क्षितिषु यूपा आहिताः ॥ १२ ॥ सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतम् । अत्र चाहं प्रतिवसामीति ॥ १३ ॥ अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्त्तिमानस्य व्यग्रो याहीति ॥ १४ ॥ भवन्ति चात्र श्लोकाः दिवं स्पृशति भूमिञ्च शब्दः पुण्यस्य कर्मणः । यावत् स शब्दो भवति तावत् पुरुष उच्यते ॥ १५ ॥ अकीर्त्तिः कीर्त्त्यते लोके यस्य भूतस्य कस्यचित् । स पतत्यधमान् लोकान् यावत् शब्दः प्रकीर्त्त्यते ॥ १६ ॥ तस्मात् कल्याणवृत्तः स्यादनन्ताय नरः सदा । विहाय चित्तं पापिष्ठं धर्ममेव समाश्रयेत् ॥ १७ ॥ एतच्छ्रुत्वा स राजाब्रवीत्तिष्ठ तावद्यावदिमौ वृद्धौ यथास्थानं प्रतिपादयामीति ॥ १८ ॥ स मां प्रावारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य तेनैव यानेन संस्थितौ यथोचितस्थानं प्रतिपेदे तन्मयानुभूतं चिरजीविनेदृशमिति पाण्डवानुवाच मार्कण्डेयः ॥ १९ ॥ पाण्डवाश्चोचुः साधु शोभनं भवता कृतं राजानमिन्द्रद्युम्नं स्वर्गलोकाच्च्युतं स्वस्थाने प्रतिपादयतेत्यथैतानब्रवीदसौ ननु देवकीपुत्रेणापि कृष्णेन नरके मज्जमानो राजर्षिर्नृगस्तस्मात् कृच्छ्रात् पुनः समुद्धृत्य स्वर्गं प्रापित इति ॥ २० ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि इन्द्रद्युम्नोपाख्याने अष्टनवत्यधिकशततोऽध्यायः ॥ १९८ ॥

---

वैशम्पायन उवाच। श्रुत्वा स राजा राजर्षिरिन्द्रद्युम्नस्य तत्तदा। मार्कण्डेयान्महाभागात् स्वर्गस्य प्रतिपादनम् ॥ १ ॥ युधिष्ठिरो महाराजः पुनः पप्रच्छ तं मुनिम्। कीदृशीषु ह्यवस्थासु दत्वा दानं महामुने ॥ २ ॥ इन्द्रलोकं त्वनुभवेत् पुरुषस्त्वं ब्रवीहि मे। गार्हस्थ्येऽप्यथवा बाल्ये यौवने स्थाविरेऽपि वा ॥ ३ ॥ यथा फलं समश्नाति तथा त्वं कथयस्व मे।

मार्कण्डेय उवाच। वृथा जन्मानि चत्वारि वृथा दानानि षोड़श। वृथा जन्म ह्यपुत्रस्य ये च धर्मवहिष्कृताः। परपाकेषु येऽश्नन्ति आत्मार्थन्तु पचेत्तु यः ॥ ४ ॥ पर्य्यश्नन्ति वृथा यत्र तदसत्यं प्रकीर्त्तयते। आरूढपतिते दत्तमन्यायोपहितञ्च यत् ॥ ५ ॥ व्यर्थन्तु पतिते दानं ब्राह्मणे तस्करे तथा। गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके ॥ ६ ॥ वेदविक्रयिणे दत्तं तथा वृषलपाचके। ब्रह्मबन्धुषु यद्दत्तं यद्दत्तं वृषलीपतौ ॥ ७ ॥ स्त्रीजनेषु च यद्दत्तं व्यालग्राहे तथैव च। परिचारकेषु यद्दत्तं वृथा दानानि षोड़श ॥ ८ ॥ तमोवृतस्तु यो दद्याद्भयात् क्रोधात् तथैवच। भुङ्क्ते च दानं तत्सर्वं गर्भस्थस्तु नरः सदा ॥ ९ ॥ ददद्दानं द्विजातिभ्यो वृद्धभावेन मानवः। तस्मात् सर्वास्ववस्थासु सर्वदानानि पार्थिव। दातव्यानि द्विजातिभ्यः स्वर्गमार्गजिगीषया ॥ १० ॥

युधिष्ठिर उवाच। चातुर्वर्ण्यस्य सर्वस्य वर्त्तमानाः प्रतिग्रहे। केन विप्रा विशेषेण तारयन्ति तरन्ति च ॥ ११ ॥

मार्कण्डेय उवाच। जपैर्मन्त्रैश्च होमैश्च स्वाध्यायाध्ययनेन च। नावं वेदमयीं कृत्वा तारयन्ति तरन्ति च। ब्राह्मणांस्तोषयेद्यस्तु तुष्यन्ते तस्य देवताः ॥ १२ ॥ वचनाच्चापि विप्राणां स्वर्गलोकमवाप्नुयात्। पितृदैवतपूजाभिर्ब्राह्मणाभ्यर्च्चनेन च ॥ १३ ॥ अनन्तं पुण्यलोकञ्च गन्तासि त्वं न संशयः। श्लेष्मादिभिर्व्याप्ततनुर्म्रियमाणो विचेतनः ॥ १४ ॥ ब्राह्मणा एव सम्पूज्याः पुण्यं

स्वर्गमभीप्सता। श्राद्धकाले तु यत्नेन भोक्तव्या ह्यजुगुप्सिताः
॥ १५ ॥ दुर्व्वर्णः कुनखी कुष्ठी मायावी कुण्डगोलकौ। वर्ज्ज-
नीयाः प्रयत्नेन काण्डपृष्ठाश्च देहिनः ॥ १६ ॥ जुगुप्सितं हि
यच्छ्राद्धं दहत्यग्निरिवेन्धनम्। ये ये श्राद्धे नियुज्यन्ते मूकान्ध-
वधिरादयः ॥ १७ ॥ तेऽपि सर्व्वे नियोक्तव्या मिश्रिता वेदपारगैः।
प्रतिग्रहश्च वै देयः शृणु यस्य युधिष्ठिर ॥ १८ ॥ प्रदातारं तथा-
त्मानं यस्तारयति शक्तिमान्। तस्मिन् देये द्विजे दानं सर्व्वागम-
विजानता ॥ १९ ॥ प्रदातारं तथात्मानं तारयेद्यः स शक्तिमान्।
न तथा हविषो होमैर्न पुष्पैर्नानुलेपनैः ॥ २० ॥ अग्नयः पार्थ
तुष्यन्ति यथा ह्यतिथिभोजने। तस्मात्त्वं सर्व्वयत्नेन यतस्वातिथि-
भोजने ॥ २१ ॥ पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम्। प्रय-
च्छन्ति तु ये राजन् नोपसर्पन्ति ते यमम् ॥ २२ ॥ देवमाल्याप-
नयनं द्विजोच्छिष्टावमार्ज्जनम्। आकल्पपरिचर्य्या च गात्रसंवाह-
नानि च ॥ २३ ॥ अवैकैकं नृपश्रेष्ठ गोदानाद्वप्रतिरिच्यते। कपि-
लायाः प्रदानात्तु मुच्यते नात्र संशयः ॥ २४ ॥ तस्मादलङ्कृतां
दद्यात् कपिलान्तु द्विजातये। श्रोत्रियाय दरिद्राय गृहस्थाया-
ग्निहोत्रिणे ॥ २५ ॥ पुत्रदाराभिभूताय तथा ह्यनुपकारिणे।
एवंविधेषु दातव्या न समृद्धेषु भारत ॥ २६ ॥ को गुणो भरत-
श्रेष्ठ समृद्धेष्वभिवर्जितम्। एकस्यैका प्रदातव्या न बहूनां कदाचन
॥ २७ ॥ सा गौर्व्विक्रयमापन्ना हन्यात्त्रिपुरुषं कुलम्। न तार-
यति दातारं ब्राह्मणं नैव नैव तु ॥ २८ ॥ सुवर्णस्य विशुद्धस्य
सुवर्णं यः प्रयच्छति। सुवर्णानां शतं तेन दत्तं भवति शाश्वतम्
॥ २९ ॥ अनड्वाहन्तु यो दद्याद्बलवन्तं धुरन्धरम्। स निस्त-
रति दुर्गाणि स्वर्गलोके च गच्छति ॥ ३० ॥ वसुन्धरान्तु यो
दद्यात् द्विजाय विदुषात्मने। दातारं ह्यनुगच्छन्ति सर्व्वे कामा-
भिवाञ्छिताः ॥ ३१ ॥ पृच्छन्ति चान्नदातारं वदन्ति पुरुषा भुवि।

अध्वनि क्षीणगात्राश्च पांशुपादावगुण्ठिताः ॥ ३२ ॥ तेषामेवं श्रमार्त्तानां यो ह्यन्नं कथयेद्बुधः । अन्नदातृसमः सोऽपि कीर्त्त्यते नात्र संशयः ॥ ३३ ॥ तस्मात्त्वं सर्वदानानि हित्वान्नं सम्प्रयच्छ च । न हीदृशं पुण्यफलं विचित्रमिह दृश्यते ॥ ३४ ॥ यथाशक्ति च यो दद्यादन्नं विप्रे सुसंस्कृतम् । स तेन कर्मणा प्रैति प्रजापतिसलोकताम् ॥ ३५ ॥ अन्नमेव विशिष्टं हि यस्मात् परतरं न च । अन्नं प्रजापतिश्चोक्तः स च सम्वत्सरो मतः ॥ ३६ ॥ सम्वत्सरस्तु यज्ञोऽसौ सर्वं यज्ञे प्रतिष्ठितम् । तस्मात् सर्वाणि भूतानि स्थावराणि चराणि च । तस्मादन्नं विशिष्टं हि सर्वेभ्य इति विश्रुतम् ॥ ३७ ॥ येषां तडागानि महोदकानि वाप्यश्च कूपाश्च प्रतिश्रयाश्च । अन्नस्य दानं मधुरा च वाणी यमस्य ते निर्वचना भवन्ति ॥ ३८ ॥ धान्यं श्रमेणार्जितवित्तसञ्चितं विप्रे सुशीले च प्रयच्छते यः । वसुन्धरा तस्य भवेत् सुतुष्टा धारां वसूनां प्रतिमुञ्चतीव ॥ ३९ ॥ अन्नदाः प्रथमं यान्ति सत्यवाक् तदनन्तरम् । अयाचितप्रदाता च समं यान्ति त्रयो जनाः ॥ ४० ॥

वैशम्पायन उवाच । कौतूहलसमुत्पन्नः पर्य्यपृच्छद्युधिष्ठिरः । मार्कण्डेयं महात्मानं पुनरेव सहानुजः ॥ ४१ ॥ यमलोकस्य चाध्वानमन्तरं मानुषस्य च । कीदृशं किं प्रमाणं वा कथं वा तन्महामुने । तरन्ति पुरुषाश्चैव येनोपायेन शंस मे ॥ ४२ ॥

मार्कण्डेय उवाच । सर्वगुह्यतमं प्रश्नं पवित्रमृषिसंस्तुतम् । कथयिष्यामि ते राजन् धर्मं धर्मभृतांवर ॥ ४३ ॥ षडशीतिसहस्राणि योजनानां नराधिप । यमलोकस्य चाध्वानमन्तरं मानुषस्य च ॥ ४४ ॥ आकाशं तदपानीयं घोरकान्तारदर्शनम् । न तत्र वृक्षच्छाया वा पानीयं केतनानि च ॥ ४५ ॥ विश्रमेद्यत्र वै श्रान्तः पुरुषोऽध्वानकर्षितः । नीयन्ते यमदूतैस्तु यमस्याज्ञाकरैर्बलात् ॥ ४६ ॥ नराः स्त्रियस्तथैवान्ये पृथिव्यां जीवसंज्ञिता ।

ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पार्थिव ॥ ४७ ॥ छत्रादीनां प्रकृष्टानि तेऽध्वानं यान्ति वै नराः । सन्निवार्य्यातपं यान्ति छत्रे-णैव हि छत्रदाः ॥ ४८ ॥ तृप्ताश्चैवान्नदातारो ह्यतृप्ता ह्यप्यन-न्नदाः । वस्त्रिणो वस्त्रदा यान्ति अवस्त्रा यान्त्यवस्त्रदाः ॥ ४९ ॥ हिरण्यदाः सुखं यान्ति पुरुषाश्चाप्यलङ्कृताः भूमिदास्तु सुखं यान्ति सर्व्वकामैः सुतर्पिताः ॥ ५० ॥ यान्ति चैवापरिक्लिष्टा नराः शस्यप्रदायकाः । नराः सुखतरं यान्ति विमानेषु गृहप्रदाः ॥ ५१ ॥ पानीयदा ह्यतृषिताः प्रहृष्टमनसो नराः । पन्थानं द्योतयन्तश्च यान्ति दीपप्रदाः सुखम् ॥ ५२ ॥ गोप्रदास्तु सुखं यान्ति निर्मुक्ताः सर्व्वपातकैः । विमानैर्हंससंयुक्तैर्यान्ति मासोपवासिनः ॥ ५३ ॥ तथा वह्निप्रयुक्तैश्च षष्ठरात्रोपवासिनः । त्रिरात्रं क्षपते यस्तु एकभक्तेन पाण्डव ॥ ५४ ॥ अन्तरा चैव नाश्नाति तस्य लोका-ह्यनामयाः । पानीयस्य गुणा दिव्याः प्रेतलोकसुखावहाः ॥५५॥ तत्र पुष्पोदका नाम नदी तेषां विधीयते । शीतलं सलिलं तत्र पिवन्ति ह्यमृतोपमम् ॥ ५६ ॥ ये च दुष्कृतकर्म्माणः पूयं तेषां विधीयते । एवं नदी महाराज सर्व्वकामप्रदा हि सा ॥ ५७ ॥ तस्मात्त्वमपि राजेन्द्र पूजयैनान् यथाविधि । अध्वनि क्षीनगात्रश्च पथि पांशुसमन्वितः ॥ ५८ ॥ पृच्छते ह्यन्नदातारं गृहमायाति चाशया । तं पूजयेत् प्रयत्नेन सोऽतिथिर्ब्राह्मणश्च सः ॥ ५९ ॥ तं यान्तमनुगच्छन्ति देवाः सर्व्वे सवासवाः । तस्मिन् संपूजिते प्रीता निराशा यान्त्यपूजिते ॥ ६० ॥ तस्मात्त्वमपि राजेन्द्र पूजयैनं यथा-विधि । एतत्ते प्रथमः प्रोक्तं किं भूयः श्रोतुमिच्छसि ॥ ६१ ॥

युधिष्ठिर उवाच । पुनः पुनरहं श्रोतुं कथां धर्म्मसमाश्रयाम् । पुण्यामिच्छामि धर्म्मज्ञ कथ्यमानां त्वया विभो ॥ ६२ ॥

मार्कण्डेय उवाच । धर्म्मान्तरं प्रति कथां कथ्यमानां मया नृप । सर्व्वपापहरां नित्यं शृणुष्वावहितो मम ॥ ६३ ॥ कपि-

स्नायान्तु दत्तायां यत् फलं ज्येष्ठपुष्करे। तत् फलं भरतश्रेष्ठ विप्राणां पादधावने ॥ ६४ ॥ द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी। तावत् पुष्करपर्णेन पिबन्ति पितरो जलम् ॥ ६५ ॥ स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः। पितरः पादशौचेन अन्नाद्येन प्रजापतिः ॥ ६६ ॥ यावद्वत्सस्य वै पादौ शिरश्चैव प्रदृश्यते। तस्मिन् काले प्रदातव्या प्रयतेनान्तरात्मना ॥ ६७ ॥ अन्तरीक्षगतो वत्सो यावद्योन्यां प्रदृश्यते। तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ ६८ ॥ यावन्ति तस्या रोमाणि वत्सस्य च युधिष्ठिर। तावद्युगसहस्राणि स्वर्गलोके महीयते ॥ ६९ ॥ सुवर्ण-नासां यः कृत्वा सुखुरां कृष्णधेनुकाम्। तिलैः प्रच्छादितां दद्यात् सर्वरत्नैरलङ्कृताम् ॥ ७ ॥ प्रतिग्रहं गृहीत्वा यः पुनर्ददाति साधवे। फलानां फलमश्नाति तदा दत्त्वा च भारत ॥ ७१ ॥ ससमुद्रगुहा तेन सशैलवनकानना। चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥ ७२ ॥ अन्तर्जानुशयो यस्तु भुङ्क्ते सक्तभाजनः। यो द्विजः शब्दरहितं स क्षमस्तारणाय वै ॥ ७३ ॥ अपानपा न गदितास्तथान्ये ये द्विजातयः। जपन्ति संहितां सम्यक् ते नित्यं तारणक्षमाः ॥ ७४ ॥ हव्यं कव्यञ्च यत् किञ्चित् सर्वं तत् श्रोत्रियोऽर्हति। दत्तं हि श्रोत्रिये साधौ ज्वलितेऽग्नौ यथाहुतम् ॥ ७५ ॥ मन्युप्रहरणा विप्रा न विप्राः शस्त्रयोधिनः। निहन्यु-र्मन्युना विप्रा वज्रपाणिरिवासुरान् ॥ ७६ ॥ धर्माश्रितेयन्तु कथा कथितेयं तवानघ। यां श्रुत्वा मुनयः प्रीता नैमिषारण्यवासिनः ॥ ७७ ॥ वीतशोकभयक्रोधा विपाप्मानस्तथैव च श्रुत्वेमान्तु कथां राजन् भवन्तीह मानवाः ॥ ७८ ॥

युधिष्ठिर उवाच। किन्तच्छौचं भवेद्येन विप्रः शुचिः सदा भवेत्। तदिच्छामि महाप्राज्ञ श्रोतुं धर्मभृताम्वर ॥ ७९ ॥

मार्कण्डेय उवाच। वाक्शौचं कर्मशौचञ्च यच्च शौचं जला-

त्मकम्। त्रिभिः शौचैरुपेतो यः स स्वर्गी नात्र संशयः॥ ८०॥ सायं प्रातश्च सन्ध्यां यो ब्राह्मणोऽभ्युपसेवते। प्रजपन् पावनीं देवीं गायत्रीं वेदमातरम्॥ ८१॥ स तया पावितो देव्या ब्राह्मणो नष्टकिल्बिषः। न सीदेत् प्रतिगृह्णानो महीमपि ससागराम्॥ ८२॥ ये चास्य दारुणाः केचिद्ग्रहाः सूर्य्यादयो दिवि। ते चास्य सौम्या जायन्ते शिवाः शिवतराः सदा॥ ८३॥ सर्व्वं नानुगतञ्चैनं दारुणाः पिशिताशिनः। घोररूपा महाकाया धर्षयन्ति द्विजोत्तमम्॥ ८४॥ नाध्यापनाद्याजनाद्वा अन्यस्माद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलिताग्निसमा द्विजाः॥ ८५॥ दुर्व्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा। ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः॥ ८५॥ यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति। एवं विद्वानविद्वान् वा ब्राह्मणो दैवतं महत्॥ ८७॥ प्राकारैश्च पुरद्वारैः प्रासादैश्च पृथग्विधैः। नगराणि न शोभन्ते हीनानि ब्राह्मणोत्तमैः॥ ८८॥ वेदाढ्या वृत्तसम्पन्ना ज्ञानवन्तस्तपस्विनः। यत्र तिष्ठन्ति वै विप्रास्तन्नाम नगरं नृप॥ ८९॥ व्रजे वाप्यथ वारण्ये यत्र सन्ति बहुश्रुताः। तत्तन्नगरमित्याहुः पार्थ तीर्थञ्च तद्भवेत्॥ ९०॥ रक्षितारञ्च राजानं ब्राह्मणञ्च तपस्विनम्। अभिगम्याभिपूज्याथ सद्यः पापात् प्रमुच्यते॥ ९१॥ पुण्यतीर्थाभिषेकञ्च पवित्राणाञ्च कीर्त्तनम्। सद्भिः सम्भाषणञ्चैव प्रशस्तं कीर्त्त्यते बुधैः॥ ९२॥ साधुसङ्गमपूतेन वाक्सुभाषितवारिणा। पवित्रीकृतमात्मानं सन्तो मन्यन्ति नित्यशः॥ ९३॥ त्रिदण्डधारणं मौनं जटाभारोऽथ मुण्डनम्। वल्कलाजिनसंवेष्टं व्रतचर्य्याभिषेचनम्॥ ९४॥ अग्निहोत्रं वने वासः शरीरपरिशोषणम्। सर्व्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्म्मलः॥ ९५॥ न दुष्करमनाश्लिलं सुकरं त्यजनं विना। विशुद्धिश्च दुरादीनां षण्णामिन्द्रियगामिनाम्॥ ९६॥ विकारि तेषां

राजेन्द्र सुदुष्करतरं मनः। ये पापानि न कुर्वन्ति मनोवाक्कर्मबुद्धिभिः॥ ९७॥ ते तपन्ति महात्मानो न शरीरस्य शोषणम्। न ज्ञातिभ्यो दया यस्य शुक्लदेहोऽविकल्मषः॥ ९८॥ हिंसा सा तपसस्तस्य नानाशित्वं तपः स्मृतम्। तिष्ठन् गृहेचैव मुनिर्नित्यं शुचिरलङ्कृतः॥ ९९॥ यावज्जीवं दयावांश्च सर्वपापैः प्रमुच्यते। न हि पापानि कर्माणि शुध्यन्त्यनशनादिभिः॥ १००॥ शीर्यत्यनशनादेव मांसशोणितलेपनः। अज्ञातं कर्म कृत्वा च क्लेशो नान्यत् प्रहीयते॥ १०१॥ नाग्निर्दहति कर्माणि भावशून्यस्य देहिनः। पुण्यादेव प्रव्रजन्ति शुध्यन्त्यनशनानि च॥ १०२॥ न मूलफलभक्षित्वान्न मौनान्नानिलाशनात्। शिरसो मुण्डनाद्वापि न स्थानकुटिकाशनात्॥ १०३॥ न जटाधारणाद्वापि न तु स्थण्डिलशय्यया। नित्यं ह्यनशनाद्वापि नाग्निशुश्रूषणादपि॥ १०४॥ न चोदकप्रवेशेन न च क्ष्माशयनादपि। ज्ञानेन कर्मणा वापि जरा मरणमेव च॥ १०५॥ व्याधयश्च प्रहीयन्ते प्राप्यते चोत्तमं पदम्। बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा॥ १०६॥ ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संयुज्यते पुनः। आत्मना विप्रहीणानि काष्ठकुड्योपमानि च॥ १०७॥ विनश्यन्ति न सन्देहः फेनानीव महार्णवे। आत्मानं विन्दते येन सर्वभूतगुहाशयम्॥ १०८॥ श्लोकेन यदि वार्द्धेन क्षीणं तस्य प्रयोजनम्। द्व्यक्षरादभिसन्धाय केचित् श्लोकपदाङ्कितैः॥ १०९॥ शतैरन्यैः सहस्रैश्च प्रत्ययो मोक्षलक्षणम्। नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥ ११०॥ जपन्नानविदो वृद्धाः प्रत्ययो मोक्षलक्षणम्। विदितार्थस्तु वेदानां परिवेदप्रयोजनम्॥ १११॥ उद्विजेत् स तु वेदेभ्यो दावाग्नेरिव मानवः। शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम्॥ ११२॥ एकाक्षराभिसम्बन्धं तत्त्वं हेतुभिरिच्छसि। बुद्धिर्न तस्य सिध्येत साधनस्य विपर्ययात्॥ ११३॥ वेदपूर्वं

वेदितव्यं प्रयत्नात्तद्वै वेदस्तस्य वेदः शरीरम् । वेदस्तत्त्वं तत्-समासोपलब्धो क्लीवस्त्वात्मा तस्य वेद्यस्य वेद्यम् ॥ ११४ ॥ वेदोक्ता-मायुर्देवानामाशिषश्चैव कर्म्मणाम् । फलत्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥ ११५ ॥ इन्द्रियाणां प्रसादेन तदेतत् परिवर्ज्ज-येत् । तस्मादनशनं दिव्यं निरुद्धेन्द्रियगोचरम् ॥ ११६ ॥ तपसा स्वर्गगमनं भोगो दानेन जायते । ज्ञानेन मोक्षो विज्ञेयस्तीर्थ-स्नानादघक्षयः ॥ ११७ ॥

वैशम्पायन उवाच । एवमुक्तस्तु राजेन्द्र प्रत्युवाच महायशाः । भगवन् श्रोतुमिच्छामि प्रदानविधिमुत्तमम् ॥ ११८ ॥

मार्कण्डेय उवाच । यत्त्वमिच्छसि राजेन्द्र दानधर्मं युधि-ष्ठिर । इष्टञ्चेदं सदा मह्यं राजन् गौरवतस्तथा ॥ ११९ ॥ शृणु दानरहस्यानि श्रुतिस्मृत्युदितानि च । छायायां करिणः श्राद्धं तत्कर्णपरिवीजितम् ॥ १२० ॥ दशकल्पायुतानीह न क्षीयेत युधिष्ठिर । जीवनाय समाक्लिन्नं वसु दत्त्वा महीपते ॥ १२१ ॥ वैश्यन्तु वारयेद्यस्तु सर्व्वयज्ञैः स इष्टवान् । प्रतिस्रोतश्चित्रवाहाः पर्य्यन्योऽन्नानुसञ्चरन् ॥ १२२ ॥ महाधुरि यथा नावा महापापैः प्रमुच्यते । विप्लवे विप्रदत्तानि दधिमस्त्वक्षयानि च ॥ १२३ ॥ पर्व्वसु द्विगुणं दानमृतौ दशगुणं भवेत् । अब्दे शतगुणं प्रोक्त-मनन्तं विषुवे भवेत् ॥ १२४ ॥ अयने विषुवे चैव षड़शीतिमुखेषु च । चन्द्रसूर्य्योपरागे च दत्तमक्षयमश्नुते ॥ १२५ ॥ ऋतुषु दशगुणं वदन्ति दत्तं शतगुणमृत्वयनादिषु ध्रुवम् । भवति सहस्र-गुणं दिनस्य राहोर्विषुवति चाक्षयमश्नुते फलम् ॥ १२६ ॥ ना-भूमिदो भूमिमश्नाति राजन्नायानदो यानमारुह्य याति । यान् यान् कामान् ब्राह्मणेभ्यो ददाति तांस्तान् कामान् जायमानः स भुङ्क्ते ॥ १२७ ॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्व्वैष्णवी सूर्य्य-सुताश्च गावः । लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गाश्च

महीञ्च दद्यात्॥१२८॥ परं हि दानान्न बभूव शाश्वतं भव्यं त्रिलोके भवते कुतः पुनः। तस्मात् प्रधानं परमं हि दानं वदन्ति लोकेषु विशिष्टबुद्धयः॥१२९॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि दानकथने
एकोनद्विशतोऽध्यायः॥१९९॥

---

वैशम्पायन उवाच। श्रुत्वा तु राजा राजर्षेरिन्द्रद्युम्नस्य तत्तथा। मार्कण्डेयान्महाभागात् स्वर्गस्य प्रतिपादनम्॥१॥ युधिष्ठिरो महाराज प्रपच्छ भरतर्षभः। मार्कण्डेयं तपोवृद्धं दीर्घायुषमकल्मषम्॥२॥ विदितास्तव धर्मज्ञ देवदानवराक्षसाः। राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः॥३॥ न तेऽस्त्यविदितं किञ्चिदस्मिन् लोके द्विजोत्तम। कथां वेत्सि मुने दिव्यां मनुष्योरगरक्षसाम्॥४॥ देवगन्धर्वयक्षाणां किन्नराप्सरसां तथा। इदमिच्छाम्यहं श्रोतुं तत्त्वेन द्विजसत्तम॥५॥ कुवलाश्व इति ख्यात इक्ष्वाकुरपराजितः। कथं नामविपर्य्यासाद्धुन्धुमारत्वमागतः॥६॥ एतदिच्छामि तत्त्वेन ज्ञातुं भार्गवसत्तम। विपर्य्यस्तं तथा नाम कुवलाश्वस्य धीमतः॥७॥

वैशम्पायन उवाच। युधिष्ठिरेणैवमुक्तो मार्कण्डेयो महामुनिः। धौन्धुमारमुपाख्यानं कथयामास भारत॥८॥

मार्कण्डेय उवाच। हन्त ते कथयिष्यामि शृणु राजन् युधिष्ठिर। धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु॥९॥ यथा स राजा इक्ष्वाकुः कुवलाश्वो महीपतिः। धुन्धुमारत्वमगमत् तच्छृणुष्व महीपते॥१०॥ महर्षिर्विश्रुतस्तात उतङ्क इति भारत। मरुधन्वसु रम्येषु आश्रमस्तस्य कौरव॥११॥ उतङ्कस्तु महाराज तपोऽतप्यत् सुदुश्चरम्। आरिराधयिषुर्विष्णुं बहून्

सर्पगणान् विभुः ॥ १२ ॥ तस्य प्रीतः स भगवान् साक्षाद्दर्शनमेयिवान्। दृष्ट्वैव चर्षिः प्रह्वस्तं तुष्टाव विविधैस्तवैः ॥ १३ ॥

उतङ्क उवाच। त्वया देव प्रजाः सर्व्वाः ससुरासुरमानवा। स्थावराणि च भूतानि जङ्गमानि तथैव च ॥ १४ ॥ ब्रह्म वेदाश्च वेद्यञ्च त्वया सृष्टं महाद्युते। शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ ॥ १५ ॥ निश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत। बाहवस्ते दिशः सर्व्वाः कुक्षिश्चापि महार्णवः ॥ १६ ॥ जङ्घे ते पर्व्वता देव खं जङ्घे मधुसूदन। पादौ ते पृथिवी देवी रोमाण्योषधयस्तथा ॥ १७ ॥ इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः। प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैः स्तवैः ॥ १८॥ त्वया व्याप्तानि सर्व्वाणि भूतानि भुवनेश्वर। योगिनः सुमहावीर्य्याः स्तुवन्ति त्वां महर्षयः ॥ १९ ॥ त्वयि तुष्टे जगत् स्वस्थं त्वयि क्रुद्धे महद्भयम्। भयानामपनेतासि त्वमेकः पुरुषोत्तम ॥ २० ॥ देवानां मानुषाणाञ्च सर्व्वभूतसुखावहः। त्रिभिर्व्विक्रमणैर्देव त्रयो लोकास्त्वया हृताः ॥ २१ ॥ असुराणां समृद्धानां विनाशश्च त्वया कृतः। तव विक्रमणैर्देवा निर्व्वाणमगमन् परम् ॥ २२ ॥ पराभूताश्च दैत्येन्द्रास्त्वयि क्रुद्धे महाद्युते। त्वं हि कर्त्ता विकर्त्ता च भूतानामिह सर्व्वशः। आराधयित्वा त्वां देवाः सुखमेधन्ति सर्व्वशः ॥ २३ ॥

मार्कण्डेय उवाच। एवं स्तुतो हृषीकेश उतङ्केन महात्मना। उतङ्कमब्रवीद्विष्णुः प्रीतस्तेऽहं वरं वृणु ॥ २४ ॥

उतङ्क उवाच। पर्य्याप्तो मे वरो ह्येष यदहं दृष्टवान् हरिम्। पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुम् ॥ २५ ॥

विष्णुरुवाच। प्रीतस्तेऽहमलौल्येन भक्त्या च तव सत्तम। अवश्यं हि त्वया ब्रह्मन् मत्तो ग्राह्यो वरो द्विज ॥ २६ ॥

मार्कण्डेय उवाच। एवं संछन्द्यमानस्तु वरेण हरिणा तदा। उतङ्कः प्राञ्जलिर्व्वव्रे वरं भरतसत्तम ॥ २७ ॥

उतङ्क उवाच। यदि मे भगवान् प्रीतः पुण्डरीकनिभेक्षण। धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा। अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं महेश्वर ॥ २८ ॥

श्रीभगवानुवाच। सर्वमेतद्धि भविता मत्प्रसादात्तव द्विज। प्रतिभास्यति योगश्च येन युक्तो दिवौकसाम्। त्रयाणामपि लोकानां महत् कार्य्यं करिष्यसि ॥ २९ ॥ उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः। तपस्यति तपो घोरं शृणु यस्तं हनिष्यति ॥३०॥ राजा हि वीर्य्यवांस्तात इक्ष्वाकुरपराजितः। बृहदश्व इति ख्यातो भविष्यति महीपतिः ॥३१॥ तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः। स योगबलमास्थाय मामकं पार्थिवोत्तमः ॥ ३२॥ शासनात्तव विप्रर्षे धुन्धुमारो भविष्यति। एवमुक्त्वा तु तं विप्रं विष्णुरन्तरधीयत ॥३३॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि धुन्धुमारो-
पाख्याने द्विशतोऽध्यायः ॥ २०० ॥

---

मार्कण्डेय उवाच। इक्ष्वाकौ संस्थिते राजन् शशादः पृथिवीमिमाम। प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥ १ ॥ शशादस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान्। अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ॥ २ ॥ विष्वगश्वः पृथोः पुत्रस्तस्माद्द्रिश्च जज्ञिवान्। अद्रेश्च युवनाश्वस्तु श्रावस्तस्यात्मजोऽभवत् ॥३॥ तस्य श्रावस्तको ज्ञेयः श्रावस्ती येन निर्मिता। श्रावस्तस्य तु दायादो बृहदश्वो महाबलः ॥ ४ ॥ बृहदश्वस्य दायादः कुवलाश्व इति स्मृतः। कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः ॥ ५ ॥ सर्वे विद्यासु निष्णाता बलवन्तः सुदारुणाः। कुवलाश्वश्च पितृतो गुणैरभ्यधिकोऽभवत् ॥ ६ ॥ समये तं पिता राज्ये बृहदश्वोऽभ्यषिचयत्। कुवलाश्वं महाराज शूरमुत्तमधार्मिकम् ॥ ७॥

पुत्रसङ्क्रामितश्रीस्तु वृहदश्वो महीपतिः । जगाम तपसे धीमां-स्तपोवनममित्रहा ॥ ८ ॥

मार्कण्डेय उवाच । अथ शुश्राव राजर्षिं तमुतङ्को नराधिप । वनं संप्रस्थितं राजन् वृहदश्वं द्विजोत्तमः ॥ ९ ॥ तमुतङ्को महातेजाः सर्वास्त्रविदुषाम्वरम् । न्यवारयदमेयात्मा समासाद्य नरोत्तमम् ॥ १० ॥

उतङ्क उवाच । भवता रक्षणं कार्य्यं तत्तावत् कर्त्तुमर्हसि । निरुद्विग्ना वयं राजंस्त्वत्प्रसादाद्भवेमहि ॥ ११ ॥ त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना । भविष्यतिनिरुद्विग्ना नारण्यं गन्तुमर्हसि ॥ १२ ॥ पालने हि महान् धर्मः प्रजानामिह दृश्यते । न तथा दृश्यतेऽरण्ये माभूत्ते बुद्धिरीदृशी ॥ १३ ॥ ईदृशो न हि राजेन्द्र धर्मः क्वचन दृश्यते । प्रजानां पालने यो वै पुरा राजर्षिभिः कृतः ॥ १४ ॥ रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि । निरुद्विग्नस्तपश्चर्त्तुं न हि शक्नोमि पार्थिव ॥ १५ ॥ ममाश्रमसमीपे वै समेषु मरुधन्वसु । समुद्रो वालुकापूर्णो उज्जालक इति स्मृतः ॥ १६ ॥ बहुयोजनविस्तीर्णो बहुयोजनमायतः । तत्र रौद्रो दानवेन्द्रो महावीर्य्यपराक्रमः ॥ १७ ॥ मधुकैटभयोः पुत्रो धुन्धुर्नाम सुदारुणः । अन्तर्भूमिगतो राजन् वसत्यमितविक्रमः ॥ १८ ॥ तं निहत्य महाराज वनं त्वं गन्तुमर्हसि । शेते लोकविनाशाय तप आस्थाय दारुणम् ॥ १९ ॥ त्रिदशानां विनाशाय लोकानाञ्चापि पार्थिव । अवध्यो देवतानां हि दैत्यानामथ रक्षसाम् ॥ २० ॥ नागानामथ यक्षाणां गन्धर्व्वाणाञ्च सर्वशः । अवाप्य स वरं राजन् सर्व्वलोकपितामहात् ॥ २१ ॥ तं विनाशाय भद्रं ते मा ते बुद्धिरतोऽन्यथा । प्राप्स्यसे महतीं कीर्त्तिं शाश्वतीमव्ययां ध्रुवाम् ॥ २२ ॥ क्रूरस्य तस्य स्वपतो वालुकान्तर्हितस्य च । सम्वत्सरस्य पर्य्यन्ते निश्वासः संप्रवर्त्तते ॥ २३ ॥ यदा तदा भूश्चलति सशैल-

वनकानना। तस्य निश्वासवातेन रज उद्धूयते महत् ॥ २४ ॥ आदित्यपथमाश्रित्य सप्ताहं भूमिकम्पनम्। सविस्फुलिङ्गं सज्वालं धूममिश्रं सुदारुणम् ॥ २५ ॥ तेन राजन्न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे। तं विनाशय राजेन्द्र लोकानां हितकाम्यया ॥ २६ ॥ लोकाः स्वस्था भविष्यन्ति तस्मिन् विनिहतेऽसुरे। त्वं हि तस्य विनाशाय पर्य्याप्त इति मे मतिः ॥ २७ ॥ तेजसा तव तेजश्च विष्णुराप्याययिष्यति। विष्णुना च वरो दत्तः पूर्वं मम महीपते ॥ २८ ॥ यस्तं महासुरं रौद्रं वधिष्यति महीपतिः। तेजस्तं वैष्णवमिति प्रवेक्ष्यति दुरासदम् ॥ २९ ॥ तत्तेजस्त्वं समाधाय राजेन्द्र भुवि दुःसहम्। तं निसूदय राजेन्द्र दैत्यं रौद्रपराक्रमम् ॥ ३० ॥ न हि धुन्धुर्महातेजास्तेजसाल्पेन शक्यते। निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि ॥ ३१ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि धुन्धुमारोपाख्याने एकाधिकद्विशतोऽध्यायः ॥ २०१ ॥

---

मार्कण्डेय उवाच। स एवमुक्तो राजर्षिरुतङ्केनापराजितः। उतङ्कं कौरवश्रेष्ठ कृताञ्जलिरथाब्रवीत् ॥ १ ॥ न तेऽभिगमनं ब्रह्मन् मोघमेतद्भविष्यति। पुत्रो ममायं भगवन् कुवलाश्व इति स्मृतः ॥ २ ॥ धृतिमान् क्षिप्रकारि च वीर्य्येणाप्रतिमो भुवि। प्रियञ्च ते सर्वमेतत् करिष्यति न संशयः ॥ ३ ॥ पुत्रैः परिवृतः सर्वैः शूरैः परिघबाहुभिः। विसर्जयस्व मां ब्रह्मन् न्यस्तशस्त्रोऽस्मि साम्प्रतम् ॥ ४ ॥ तथास्त्विति च तेनोक्तो मुनिनामिततेजसा। स तमादिश्य तनयमुतङ्काय महात्मने। क्रियतामिति राजर्षिर्जगाम वनमुत्तमम् ॥ ५ ॥

युधिष्ठिर उवाच। क एष भगवन् दैत्यो महावीर्य्यस्तपोधन।

कस्य पुत्त्रोऽथ नप्ता वा एतदिच्छामि वेदितुम्। एवं महाबलौ दैत्यो न श्रुतो मे तपोधन ॥ ६ ॥ एवदिच्छामि भगवन् यथातथ्येन वेदितुम्। सर्व्वमेतन्महाप्राज्ञ विस्तरेण तपोधन ॥ ७ ॥

मार्कण्डेय उवाच। शृणु राजन्निदं सर्व्वं यथावृत्तं नराधिप। कथ्यमानं महाप्राज्ञ विस्तरेण यथातथम् ॥ ८ ॥ एकार्णवे तथा लोके नष्टे स्थावरजङ्गमे। प्रनष्टेषु च भूतेषु सर्व्वेषु भरतर्षभ ॥ ९ ॥ प्रभवं लोककर्त्तारं विष्णुं शाश्वतमव्ययम्। यमाहुर्मुनयः सिद्धाः सर्व्वलोकमहेश्वरम् ॥ १० ॥ सुष्वाप भगवान् विष्णुरप्सु योगत एव सः। नागस्य भोगे महति शेषस्यामिततेजसः ॥ ११ ॥ लोककर्त्ता महाभाग भगवानच्युतो हरिः। नागभोगेन महता परिरभ्य महीमिमाम् ॥ १२ ॥ स्वपतस्तस्य देवस्य पद्मं सूर्य्यसमप्रभम्। नाभ्यां विनिःसृतं दिव्यं तत्रोत्पन्नः पितामहः ॥ १३ ॥ साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्य्यसमप्रभे। चतुर्व्वेदश्चतुर्मूर्त्तिस्तथैव च चतुर्मुखः ॥ १४ ॥ स्वप्रभावाद्दुराधर्षौ महाबलपराक्रमः। कस्यचित्त्वथ कालस्य दानवौ वीर्य्यवत्तमौ ॥ १५ ॥ मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम्। शयानं शयने दिव्ये नागभोगे महाद्युतिम् ॥ १६ ॥ बहुयोजनविस्तीर्णे बहुयोजनमायते। किरीटकौस्तुभधरं पीतकौशेयवाससम् ॥ १७ ॥ दीप्यमानं श्रिया राजंस्तेजसा वपुषा तथा। सहस्रसूर्य्यप्रतिममद्भुतोपमदर्शनम् ॥ १८ ॥ विस्मयः सुमहानासीन्मधुकैटभयोस्तदा। दृष्ट्वा पितामहञ्चापि पद्मे पद्मनिभेक्षणम् ॥ १९ ॥ वित्रासयेतामथ तौ ब्रह्माणममितौजसम्। वित्रास्यमानो बहुशो ब्रह्मा ताभ्यां महायशाः ॥ २० ॥ अकम्पयत् पद्मनालं ततोऽबुध्यत केशवः। अथापश्यत गोविन्दो दानवौ वीर्य्यवत्तरौ ॥ २१ ॥ दृष्ट्वा तावब्रवीद्देवः स्वागतं वां महाबलौ। ददामि वां वरं श्रेष्ठं प्रीतिर्हि मम जायते ॥ २२ ॥ तौ प्रहस्य हृषीकेशं महादर्पौ महाबलौ।

प्रत्यब्रूतां महाराज सहितौ मधुसूदनम् ॥ २३ ॥ आवां वरय देव त्वं वरदौ स्वः सुरोत्तम। दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन् ॥ २४ ॥

भगवानुवाच। प्रतिगृह्णे वरं वीरावीप्सितश्च वरो मम। युवां हि वीर्य्यसम्पन्नौ न वामस्ति समः पुमान् ॥ २५ ॥ वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ। एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै ॥ २६ ॥

मधुकैटभावूचतुः। अनृतं नोक्तपूर्वं वै स्वैरेष्वपि कुतोऽन्यथा। सत्ये धर्मे च निरतौ विद्ध्यावां पुरुषोत्तम ॥ २७ ॥ बले रूपे च सौन्दर्य्ये शमे च न समोऽस्ति नौ। धर्मे तपसि दाने च शीलसत्त्वदमेषु च ॥ २८ ॥ उपप्लवो महानस्मानुपावर्त्तत केशव। उक्तं प्रतिकुरुष्व त्वं कालो हि दुरतिक्रमः ॥ २९ ॥ आवामिच्छावहे देव कृतमेकं त्वया विभो। अनावृतेऽस्मिन्नाकाशे वधं सुरवरोत्तम ॥ ३० ॥ पुत्रत्वमधिगच्छावस्तव चापि सुलोचन। वर एष वृतो देव तद्विद्धि सुरसत्तम। अनृतं मा भवेद्देव यद्धि नौ संश्रुतं तदा ॥ ३१ ॥

श्रीभगवानुवाच। बाढमेवं करिष्यामि सर्वमेतद्भविष्यति।

मार्कण्डेय उवाच। विचिन्त्य त्वथ गोविन्दो नापश्यद्यदनावृतम् ॥ ३२ ॥ अवकाशं पृथिव्यां वा दिवि वा मधुसूदनः। स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा ॥ ३३ ॥ मधुकैटभयो राजन् शिरसी मधुसूदनः चक्रेण शितधारेण न्यकृन्तत महायशाः ॥ ३४ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि धुन्धुमारोपाख्याने द्व्यधिकशततोऽध्यायः ॥ २०२ ॥

---

मार्कण्डेय उवाच। धुन्धुर्नाम महाराज तयोः पुत्रो महाद्युतिः। स तपोऽतप्यत महन्महावीर्य्यपराक्रमः॥ १॥ अतिष्ठदेकपादेन कृशो धमनिसन्ततः। तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभुम्॥ २॥ देवदानवयक्षाणां सर्पगन्धर्वरक्षसाम्। अवध्योऽहं भवेयं वै वर एष वृतो मया॥ ३॥ एवं भवतु गच्छेति तमुवाच पितामहः। स एवमुक्तस्तत्पादौ मूर्द्ध्ना स्पृश्य जगाम ह॥ ४॥ स तु धुन्धुर्वरं लब्ध्वा महावीर्य्यपराक्रमः। अनुस्मरन् पितृवधं द्रुतं विष्णुमुपागमत्॥ ५॥ स तु देवान् सगन्धर्वान् जित्वा धुन्धुरमर्षणः। बबाध सर्वानसकृद्विष्णुं देवांश्च वै भृशम्॥ ७॥ समुद्रे वालुकापूर्णे उज्जालक इति स्मृते। आगम्य च स दुष्टात्मा तं देशं भरतर्षभ॥ ८॥ बाधते स्म परं शक्त्या तमुतङ्काश्रमं विभो। अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तथा॥ ९॥ मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः। शेते लोकविनाशाय तपोबलमुपाश्रितः॥ १०॥ उतङ्कस्याश्रमाभ्याशे निःश्वसन् पावकार्च्चिषः। एतस्मिन्नेव काले तु राजा सबलवाहनः॥ ११॥ उतङ्कविप्रसहितः कुबलाश्वो महीपतिः। पुत्रैः सह महीपाल प्रययौ भरतर्षभ॥ १२॥ सहस्रैरेकविंशत्या पुत्राणामरिमर्द्दनः। कुबलाश्वो नरपतिरन्वितो बलशालिनाम्॥ १३॥ तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः। उतङ्कस्य नियोगेन लोकानां हितकाम्यया॥ १४॥ तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत्। एष श्रीमानवध्योऽद्य धुन्धुमारो भविष्यति॥ १५॥ दिव्यैश्च पुष्पैस्तं देवाः समन्तात् पर्य्यवाकिरन्। देवदुन्दुभयश्चापि नेदुः स्वयमनीरिताः॥ १६॥ शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः। विपांशुलां महीं कुर्वन् ववर्ष च सुरेश्वरः॥ १७॥ अन्तरीक्षे विमानानि देवतानां युधिष्ठिर। तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः॥ १८॥ कुबलाश्वस्य धुन्धोश्च युद्धं कौतूहलान्विताः। देव-

गन्धर्वसहिताः समवैक्षन्महर्षयः ॥ १९ ॥ नारायणेन कौरव्य तेजसाप्यायितस्तदा। स गतो नृपतिः क्षिप्रं पुत्रैस्तैः सर्वतो दिशम् ॥ २० ॥ अर्णवं खानयामास कुवलाश्वो महीपतिः। कुवलाश्वस्य पुत्रैश्च तस्मिन् वै वालुकार्णवे ॥ २१ ॥ सप्तभिर्दिवसैः खात्वा दृष्टो धुन्धुर्महाबलः। आसीद्घोरं वपुस्तस्य वालुकान्तर्हितं महत् ॥ २२ ॥ दीप्यमानं यथा सूर्य्यं तेजसा भरतर्षभ। ततो धुन्धुर्महाराज दिशमावृत्य पश्चिमाम् ॥ २३ ॥ सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः। कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः ॥ २४ ॥ अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्मुषलैरपि। पट्टिशैः परिघैः प्रासैः खड्गैश्च विमलैः शितैः ॥ २५ ॥ स वध्यमानः संक्रुद्धः समुत्तस्थौ महाबलः। क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च ॥ २६ ॥ आस्याद्वमन् पावकं स संवर्त्तकसमं तदा। तान् सर्वान्नृपतेः पुत्रानदहत् स्वेन तेजसा ॥ २७ ॥ मुखजेनाग्निना क्रुद्धो लोकानुद्वर्त्तयन्निव। क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः ॥ २८ ॥ सगरस्यात्मजान् क्रुद्धस्तदद्भुतमिवाभवत्। तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम ॥ २९ ॥ तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम्। आससाद महातेजाः कुवलाश्वो महीपतिः ॥ ३० ॥ तस्य वारि महाराज सुस्राव बहु देहतः। तदापीयत तत्तेजो राजा वारिमयं नृप ॥ ३१ ॥ योगी योगेन वह्निञ्च शमयामास वारिणा। ब्रह्मास्त्रेण च राजेन्द्र दैत्यं क्रूरपराक्रमम् ॥ ३२ ॥ ददाह भरतश्रेष्ठ सर्वलोकाभयाय वै। सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरम् ॥ ३३ ॥ सुरशत्रुममित्रघ्नं त्रैलोक्येश इवापरः। धुन्धोर्वधात्तदा राजा कुवलाश्वो महामनाः ॥ ३४ ॥ धुन्धुमार इति ख्यातो नाम्नाप्रतिरथोऽभवत्। प्रीतैश्च त्रिदशैः सर्वैर्महर्षिसहितैस्तदा ॥ ३५ ॥ वरं वृणीष्वेत्युक्तः स प्राञ्जलिः प्रणतस्तदा। अतीव मुदितो राजन्निदं

वचनमब्रवीत् ॥ ३६ ॥ दद्यां वित्तं द्विजाग्र्येभ्यः शत्रूणाञ्चापि दुर्ज्जयः । सख्यञ्च विष्णुना मे स्याद्भूतेष्वद्रोह एव च ॥ ३७ ॥ धर्म्मे रतिश्च सततं स्वर्गे वासस्तथाक्षयः । तथास्त्विति ततो देवैः प्रीतैरुक्तः स पार्थिवः ॥ ३८ ॥ ऋषिभिश्च सगन्धर्व्वैस्तथोत्तङ्केन च धीमता । सम्भाष्य चैनं विविधैराशीर्व्वादैस्ततो नृप ॥ ३९ ॥ देवा महर्षयश्चापि स्वानि स्थानानि भेजिरे । तस्य पुत्रास्त्रयः शिष्टा युधिष्ठिर तदाभवन् ॥ ४० ॥ दृढाश्वः कपिलाश्वश्च चन्द्राश्वश्चैव भारत । तेभ्यः परम्परा राजन्निक्ष्वाकूणां महात्मनाम् ॥ ४१ ॥ वंशस्य सुमहाभाग राज्ञाममिततेजसाम् । एवं स निहतस्तेन कुवलाश्वेन सत्तम ॥ ४२ ॥ धुन्धुर्नाम महादैत्यो मधुकैटभयोः सुतः । कुवलाश्वश्च नृपतिर्धुन्धुमार इति स्मृतः ॥ ४३ ॥ नाम्ना च गुणसंयुक्तस्तदाप्रभृति सोऽभवत् । एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ४४ ॥ धौन्धुमारमुपाख्यानं प्रथितं यस्य कर्म्मणा । इदन्तु पुण्यमाख्यानं विष्णोः समनुकीर्त्तनम् ॥ ४५ ॥ शृणुयाद्यः स धर्म्मात्मा पुत्रवांश्च भवेन्नरः । आयुष्मान् भूतिमांश्चैव श्रुत्वा भवति पर्व्वसु । न च व्याधिभयं किञ्चित् प्राप्नोति विगतज्वरः ॥ ४६ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि धुन्धुमारोपाख्याने त्र्यधिकद्विशततोऽध्यायः ॥ २०३ ॥

---

वैशम्पायन उवाच । ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिम् । पप्रच्छ भरतश्रेष्ठ धर्म्मप्रश्नं सुदुर्व्विदम् ॥ १ ॥

युधिष्ठिर उवाच । श्रोतुमिच्छामि भगवन् स्त्रीणां माहात्म्यमुत्तमम् । कथ्यमानं त्वया विप्र सूक्ष्मधर्म्मञ्च तत्त्वतः ॥ २ ॥ प्रत्यक्षेण हि दृश्यन्ते देवा विप्रर्षिसत्तम । सूर्य्याचन्द्रमसौ वायुः पृथिवी वह्निरेव च ॥ ३ ॥ पिता माता च भगवन् गुरुरेव च सत्तम ।

यच्चान्यद्देवविहितं तच्चापि भृगुनन्दन ॥ ४ ॥ मान्या हि गुरवः सर्वे एकपत्न्यस्तथा स्त्रियः। पतिव्रतानां शुश्रूषा दुष्करा प्रतिभाति मे ॥ ५ ॥ पतिव्रतानां माहात्म्यं वक्तुमर्हसि नः प्रभो। निरुध्य चेन्द्रियग्रामं मनः संरुध्य चानघ ॥ ६ ॥ पतिं दैवतवच्चापि चिन्तयन्त्यः स्थिता हि याः। भगवन् दुष्करं ह्येतत् प्रतिभाति मम प्रभो ॥ ७ ॥ मातापित्रोश्च शुश्रूषा स्त्रीणां भर्त्तरि च द्विज। स्त्रीणां धर्मात् सुघोराद्धि नान्यं पश्यामि दुष्करम् ॥ ८ ॥ साध्वाचाराः स्त्रियो ब्रह्मन् यत् कुर्वन्ति सदादृताः। दुष्करं खलु कुर्वन्ति पितरं मातरञ्च वै ॥ ९ ॥ एकपत्न्यश्च या नार्य्यो याश्च सत्यं वदन्त्युत। कुक्षिणा दशमासांश्च गर्भं सन्धारयन्ति याः ॥ १० ॥ नार्य्यः कालेन सम्भूय किमद्भुततरं ततः। संशयं परमं प्राप्य वेदनामतुलामपि ॥ ११ ॥ प्रजायन्ते सुतान्नर्य्यो दुःखेन महता विभो। पुष्णन्ति चापि महता स्नेहेन द्विजपुङ्गव ॥ १२ ॥ ये च क्रूरेषु सर्व्वेषु वर्त्तमाना जुगुप्सिताः। स्वकर्म कुर्व्वन्ति सदा दुष्करं तच्च मे मतम् ॥ १३ ॥ क्षत्रधर्मसमाचारं तत्त्वं चाख्याहि मे द्विज। धर्मः सुदुर्लभो विप्र नृशंसेन महात्मनाम् ॥ १४ ॥ एतदिच्छामि भगवन् प्रश्नं प्रश्नविदाम्वर। श्रोतुं भृगुकुलश्रेष्ठ शुश्रूषे तव सुव्रत ॥ १५ ॥

मार्कण्डेय उवाच। हन्त ते सर्वमाख्यास्ये प्रश्नमेतं सुदुर्लभम्। तत्त्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे ॥ १६ ॥ मातृस्तु गौरवादन्ये पितॄनन्ये तु मेनिरे। दुष्करं कुरुते माता विवर्द्धयति या प्रजाः ॥ १७ ॥ तपसा देवतेज्याभिर्वन्दनेन तितिक्षया। अभिचारैरुपायैश्चापीहन्ते पितरः सुतान् ॥ १८ ॥ एवं कृच्छ्रेण महता पुत्रं प्राप्य सुदुर्लभम्। चिन्तयन्ति सदा वीर कीदृशोऽयं भविष्यति ॥ १९ ॥ आशंसते हि पुत्रेषु पिता माता च भारत। यशः कीर्त्तिमथैश्वर्य्यं प्रजा धर्मं तथैव च ॥ २० ॥ तयोराशान्तु

सफलां यः करोति स धर्म्मवित्। पिता माता च राजेन्द्र तुष्यतो यस्य नित्यशः ॥ २१ ॥ इह प्रेत्य च तस्याथ कीर्त्तिर्धर्म्मश्च शाश्वतः । नैव यज्ञक्रियाः काश्चिन्न श्राद्धं नोपवासकम् ॥ २२ ॥ या तु भर्त्तरि शुश्रूषा तया स्वर्गं जयत्युत। एतत् प्रकरणं राजन्नधिकृत्य युधिष्ठिर। पतिव्रतानां नियतं धर्म्मञ्चावहितः शृणु ॥ २३ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि पतिव्रतोपाख्याने चतुरधिकद्विशततोऽध्यायः ॥ २०४ ॥

---

मार्कण्डेय उवाच । कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः । तपस्वी धर्म्मशीलश्च कौशिको नाम भारत ॥ १ ॥ साङ्गोपनिषदो वेदानधीते द्विजसत्तमः । स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन् स्थितः ॥ २ ॥ उपरिष्टाच्च वृक्षस्य बलाका संन्यलीयत। तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ॥ ३ ॥ तामवेक्ष्य ततः क्रुद्धः समपध्यायत द्विजः । भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ॥ ४ ॥ अपध्याता च विप्रेण न्यपतद्धरणीतले। बलाकां पतितां दृष्ट्वा गतसत्त्वामचेतनाम् ॥ ५ ॥ कारुण्यादभिसन्तप्तः पर्य्यशोचत तां द्विजः । अकार्य्यं कृतवानस्मि रोषरागबलात्कृतः ॥ ६ ॥

मार्कण्डेय उवाच। इत्युक्त्वा बहुशो विद्वान् ग्रामं भैक्ष्याय संश्रितः । ग्रामे शुचीनि प्रचरन् कुलानि भरतर्षभ ॥ ७ ॥ प्रविष्टस्तत् कुलं यत्र पूर्व्वञ्चरितवांस्तु सः । देहीति याचमानोऽसौ तिष्ठेत्युक्तः स्त्रिया ततः ॥ ८ ॥ शौचन्तु यावत् कुरुते भाजनस्य कुटुम्बिनी। एतस्मिन्नन्तरे राजन् क्षुधा सम्पीड़ितो भृशम् ।९॥ भर्त्ता प्रविष्टः सहसा तस्या भरतसत्तम। सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यवहाय तम् ॥ १० ॥ पाद्यमाचमनीयं वै ददौ भर्त्त-

स्तथासनम्। प्रह्वा पर्य्यचरच्चापि भर्त्तारमसितेक्षणा ॥ ११ ॥
आहारेणाथ भक्ष्यैश्च भोज्यैः सुमधुरैस्तथा। उच्छिष्टं भाविता
भर्त्तुर्भुङ्क्ते नित्यं युधिष्ठिर ॥ १२ ॥ दैवतञ्च पतिं मेने भर्त्तु-
श्चित्तानुसारिणी। कर्म्मणा मनसा वाचा नान्यचिन्ताभ्यगात् पतिम्
॥ १३ ॥ तं सर्वभावोपगता पतिशुश्रूषणे रता। साध्वाचारा
शुचिर्द्दक्षा कुटुम्बस्य हितैषिणी ॥ १४ ॥ भर्त्तुश्चापि हितं यत्तत्
सततं सानुवर्त्तते। देवतातिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा ॥१५॥
शुश्रूषणपरा नित्यं सततं संयतेन्द्रिया। सा ब्राह्मणं तदा दृष्ट्वा
संस्थितं भैक्ष्यकाङ्क्षिणम् ॥ १६ ॥ कुर्वती पतिशुश्रूषां सस्मा-
राथ शुभेक्षणा। व्रीडिता साभवत् साध्वी तदा भरतसत्तम।
भिक्षामादाय विप्राय निर्जगाम यशस्विनी ॥ १७ ॥

ब्राह्मण उवाच। किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने।
उपरोधं कृतवती न विसर्ज्जितवत्यसि ॥ १८ ॥

मार्कण्डेय उवाच। ब्राह्मणं क्रोधसन्तप्तं ज्वलन्तमिव तेजसा।
दृष्ट्वा साध्वी मनुष्येन्द्र सान्त्वपूर्वं वचोऽब्रवीत् ॥ १९ ॥

स्त्र्युवाच। क्षन्तुमर्हसि मे विद्वन् भर्त्ता मे दैवतं महत्।
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया ॥ २० ॥

ब्राह्मण उवाच। ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः
कृतः। गृहस्थधर्म्मे वर्त्तन्ती ब्राह्मणानवमन्यसे। इन्द्रोऽप्येषां
प्रणमते किं पुनर्मानवो भुवि ॥ २१ ॥ अवलिप्ते न जानीषे वृद्धानां
न श्रुतं त्वया। ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि ॥ २२ ॥

स्त्र्युवाच। नाहं बलाका विप्रेन्द्र त्यज क्रोधं तपोधन।
अनया क्रुद्धया दृष्ट्या क्रुद्धः किं मां करिष्यसि ॥ २३ ॥ नावजाना-
म्यहं विप्रान् दैवैस्तुल्यान् मनस्विनः। अपराधमिमं विप्र क्षन्तु-
मर्हसि मेऽनघ ॥ २४ ॥ जानामि तेजो विप्राणां महाभाग्यञ्च
धीमताम्। अपेयः सागरः क्रोधात् कृतो हि लवणोदकः ॥ २५ ॥

तथैव दीप्ततपसां मुनीनां भावितात्मनाम्। येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति ॥ २६ ॥ ब्राह्मणानां परिभवाद्वातापिः स दुरात्मवान्। अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥२७॥ बहुप्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम्। क्रोधः सुविपुलो ब्रह्मन् प्रसादश्च महात्मनाम् ॥ २८ ॥ अस्मिंस्त्वतिक्रमे ब्रह्मन् चन्तु-मर्हसि मेऽनघ। पतिशुश्रूषया धर्मो यः स मे रोचते द्विज ॥ २९ ॥ दैवतेष्वपि सर्व्वेषु भर्त्ता मे दैवतं परम्। अविदूषेण तस्याहं कुर्य्यां धर्मं द्विजोत्तम ॥ ३० ॥ शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम्। वलाका हि त्वया दग्धा रोषात्तद्विदितं मया ॥ ३१ ॥ क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम। यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ३२ ॥ यो वदेदिह सत्यानि गुरुं सन्तोषयीत च। हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ ३३ ॥ जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः। काम-क्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः ॥ ३४ ॥ यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः। सर्व्वधर्म्मेषु चरतस्तं देवा ब्राह्मणं विदुः ॥ ३५ ॥ योऽध्यापयेदधीयीत यजेद्वा याजयीत वा। दद्या-द्वापि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥ ३६ ॥ ब्रह्मचारी च वेदान् योऽप्यधीयाद्द्विजपुङ्गवः। स्वाध्यायी चाप्रमत्तो वै तं देवा ब्राह्मणं विदुः ॥ ३७ ॥ यद्ब्राह्मणानां कुशलं तदेषां परि-कीर्त्तयेत्। सत्यं तथा व्याहरतां नानृते रमते मनः ॥ ३८ ॥ धर्मन्तु ब्राह्मणस्याहुः स्वाध्यायं दममार्ज्जवम्। इन्द्रियाणां निग्र-हञ्च शाश्वतं द्विजसत्तम ॥ ३९ ॥ सत्यार्ज्जवं धर्ममाहुः परं धर्म-विदो जनाः। दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥ ४० ॥ श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम्। बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम ॥ ४१ ॥ भगवानपि धर्मज्ञः स्वाध्यायनिरत शुचिः। न तु तत्त्वेन भगवन् धर्मं वेत्सीति मे मतिः ॥ ४२ ॥

यदि विप्र न जानीषे धर्मं परमकं द्विज। धर्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीम् ॥ ४३ ॥ मातापितृभ्यां शुश्रूषुः सत्यवादी जितेन्द्रियः। मिथिलायां वसेद्व्याधः स ते धर्मान् प्रवक्ष्यति ॥ ४४ ॥ तत्र गच्छस्व भद्रन्ते यथाकामं द्विजोत्तम। अत्युक्तमपि मे सर्वं क्षन्तुमर्हस्यनिन्दित। स्त्रियो ह्यवध्याः सर्वेषां ये धर्ममभिविन्दते ॥ ४५ ॥

ब्राह्मण उवाच। प्रीतोऽस्मि तव भद्रन्ते गतः क्रोधश्च शोभने। उपालम्भस्त्वयात्युक्तो मम निःश्रेयसं परम्। स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ॥ ४६ ॥

मार्कण्डेय उवाच। तया विसृष्टो निर्गम्य स्वमेव भवनं ययौ। विनिन्दन् स स्वमात्मानं कौशिको द्विजसत्तमः ॥ ४७ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि पतिव्रतोपाख्याने पञ्चाधिकद्विशतोऽध्यायः ॥ २०५ ॥

---

मार्कण्डेय उवाच। चिन्तयित्वा तदाश्चर्यं स्त्रिया प्रोक्तमशेषतः। विनिन्दन् स स्वमात्मानमागस्कृत इवावभौ ॥ १ ॥ चिन्तयानः स्वधर्माय सूक्ष्मां गतिमथाब्रवीत्। श्रद्दधानेन वै भाव्यं गच्छामि मिथिलामहम् ॥ २ ॥ कृतात्मा धर्मवित्तस्यां व्याधं निवसते किल। तं गच्छाम्यहमद्यैव धर्मं प्रष्टुं तपोधनम् ॥ ३ ॥ इति सञ्चिन्त्य मनसा श्रद्दधानः स्त्रिया वचः। बलाकाप्रत्ययेनासौ धर्म्यैश्च वचनैः शुभैः ॥ ४ ॥ संप्रतस्थे स मिथिलां कौतूहलसमन्वितः। अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च ॥ ५ ॥ ततो जगाम मिथिलां जनकेन सुरक्षिताम्। धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम् ॥ ६ ॥ गोपुराट्टालकवतीं हर्म्यप्राकारशोभनाम्। प्रविश्य नगरीं रम्यां विमानैर्बहुभिर्युताम् ॥ ७ ॥ पुण्यैश्च

बहुभिर्युक्तां सुविभक्तमहापथाम्। अश्वैरथैस्तथा यानैर्योधैश्च बहुभिर्युताम् ॥ ८ ॥ हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम्। सोऽपश्यद्बहुवृत्तान्तां ब्राह्मणः समतिक्रमन् ॥ ९ ॥ धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः। अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम् ॥ १० ॥ मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम्। आकुलत्वाच्च क्रेतॄणामेकान्ते संस्थितो द्विजः ॥ ११ ॥ स तु ज्ञात्वा द्विजं प्राप्तं सहसा सम्भ्रमान्वितः। आजगाम यतो विप्रः स्थित एकान्तदर्शने ॥ १२ ॥

व्याध उवाच। अभिवादये त्वां भगवन् स्वागतन्ते द्विजोत्तम। अहं व्याधो हि भद्रन्ते किं करोमि प्रशाधि माम् ॥ १३ ॥ एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति। जानाम्येतदहं सर्वं यदर्थं त्वमुपागतः ॥ १४ ॥ श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशविस्मितः। द्वितीयमिदमाश्चर्य्यमित्यचिन्तयत द्विजः ॥ १५ ॥ अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीदिदम्। गृहं गच्छाव भगवन् यदि ते रोचतेऽनघ ॥ १६ ॥

मार्कण्डेय उवाच। बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत्। अग्रतस्तु द्विजं कृत्वा स जगाम गृहं प्रति ॥ १७ ॥ प्रविश्य च गृहं रम्यमासनेनाभिपूजितः। पाद्यमाचमनीयञ्च प्रतिगृह्य द्विजोत्तमः ॥ १८ ॥ ततः सुखोपविष्टस्तं व्याधं वचनमब्रवीत्। कर्म्मैतत्तेन सदृशं भवतः प्रतिभाति मे। अनुतप्ये भृशं तात तव घोरेण कर्म्मणा ॥ १९ ॥

व्याध उवाच। कुलोचितमिदं कर्म्म पितृपैतामहं परम्। वर्त्तमानस्य मे धर्म्मे स्वे मन्युं मा कृथा द्विज। विधात्रा विहितं पूर्वं कर्म्म स्वमनुपालयन् ॥ २० ॥ प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽहं द्विजोत्तम। सत्यं वदे नाभ्यसूये यथाशक्ति ददामि च ॥ २१ ॥ देवतातिथिभृत्यानामवशिष्टेन वर्त्तये। न कुत्सयाम्यहं किञ्चिन्न

गर्हं बलवत्तरम् ॥ २२ ॥ कृतमन्वेति कर्त्तारं पुरा कर्म्म द्विजोत्तम। कृषिगोरक्षवाणिज्यमिह लोकस्य जीवनम् ॥ २३ ॥ दण्डनीतिस्त्रयी विद्या तेन लोको भवत्युत। कर्म्म शूद्रे कृषिर्वैश्ये संग्रामः क्षत्रिये स्मृतः ॥ २४ ॥ ब्रह्मचर्य्यतपोमन्त्राः सत्यञ्च ब्राह्मणे सदा। राजा प्रशास्ति धर्म्मेण स्वधर्म्मनिरताः प्रजाः ॥ २५ ॥ विकर्म्माणश्च ये केचित्तान् युनक्ति स्वकर्म्मसु। भेतव्यं हि सदा राज्ञां प्रजानामधिपा हि ते ॥ २६ ॥ वारयन्ति विकर्म्मस्थं नृपा मृगमिवेषुभिः। जनकस्येह विप्रर्षे विकर्म्मस्थो न विद्यते ॥ २७ ॥ स्वकर्म्मनिरता वर्णाश्चत्वारोऽपि द्विजोत्तम। स एष जनको राजा दुर्वृत्तमपि चेत्सुतम् ॥ २८ ॥ दण्ड्यं दण्डे निक्षिपति तथा न ग्लाति धार्म्मिकम्। स युक्तचारो नृपतिः सर्वं धर्म्मेण पश्यति ॥ २९ ॥ श्रीश्च राज्यञ्च दण्डश्च क्षत्रियाणां द्विजोत्तम। राजानो हि स्वधर्म्मेण श्रियमिच्छन्ति भूयसीम् ॥ ३० ॥ सर्व्वेषामेव वर्णानां त्राता राजा भवत्युत। परेण हि हतान् ब्रह्मन् वराहमहिषानहम् ॥ ३१ ॥ न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम्। न भक्षयामि मांसानि ऋतुगामी तथा ह्यहम् ॥ ३२ ॥ सदोपवासी च तथा नक्तभोजी सदा द्विज। अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ॥ ३३ ॥ प्राणिहिंसारतिश्चापि भवते धार्म्मिकः पुमान्। अभिचान्नरेन्द्राणां धर्म्मः संकीर्य्यते महान् ॥ ३४ ॥ अधर्म्मो वर्त्तते चापि संकीर्य्यन्ते ततः प्रजाः। भेरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च ॥ ३५ ॥ क्लीवाश्चान्धाश्च बधिरा जायन्ते स्तब्धलोचनाः। पार्थिवानामधर्म्मत्वात् प्रजानामभवः सदा ॥ ३६ ॥ स एष राजा जनकः प्रजा धर्म्मेण पश्यति। अनुगृह्णन् प्रजाः सर्वाः स्वधर्म्मे निरताः सदा ॥ ३७ ॥ ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः। सर्वान् सुपरिणीतेन कर्म्मणा तोषयाम्यहम् ॥ ३८ ॥ ये जीवन्ति स्वधर्म्मेण संयुञ्जन्ति च पार्थिवाः। न

किञ्चिदुपजीवन्ति दान्ता उत्थानशीलिनः ॥ ३९ ॥ सत्यान्नदानं
सततं तितिक्षा धर्म्मनित्यता। यथार्हं प्रतिपूजा च सर्व्वभूतेषु वै
सदा ॥ ४० ॥ त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पूरुषे। मृषा-
वादं परिहरेत् कुर्य्यात् प्रियमयाचितः ॥ ४१ ॥ न च कामान्न
संरम्भान्न द्वेषाद्धर्म्ममुत्सृजेत्। प्रिये नातिभृशं हृष्येदप्रिये न च
संज्वरेत् ॥ ४२ ॥ न मुह्येदर्थकृच्छ्रेषु न च धर्म्मं परित्यजेत्।
कर्म्म चेत् किञ्चिदन्यत् स्यादितरन्न तदाचरेत् ॥ ४३ ॥ यत्कल्याण-
मभिध्यायेत्तत्रात्मानं नियोजयेत्। न पापे प्रतिपापः स्यात् साधु-
रेव सदा भवेत् ॥ ४४ ॥ आत्मनैव हतः पापो यः पापं कर्त्तु-
मिच्छति। कर्म्म चैतदसाधूनां वृजिनानामसाधुवत् ॥ ४५ ॥ न
धर्म्मोऽस्तीतिमन्वानाः शुचीनवहसन्ति ये। अश्रद्दधाना धर्म्मस्य
ते नश्यन्ति न संशयः ॥ ४६ ॥ महादृतिरिवाध्मातः पापो भवति
नित्यदा। मूढानामवलिप्तानामसारं भाषितं भवेत् ॥ ४७ ॥ दर्श-
यत्यन्तरात्मा तं दिवारूपमिवांशुमान्। न लोके राजते मूर्खः
केवलात्मप्रशंसया ॥ ४८ ॥ अपि चेह श्रिया हीनः कृतविद्यः
प्रकाशते। अब्रुवन् कस्यचिन्निन्दामात्मपूजामवर्णयन् ॥ ४९ ॥ न
कश्चिद्गुणसम्पन्नः प्रकाशो भुवि दृश्यते। विकर्म्मणा तप्यमानः
पापाद्धि परिमुच्यते ॥ ५० ॥ न तत् कुर्य्यां पुनरिति द्वितीयात्
परिमुच्यते। कर्म्मणा येन तेनेह पापाद्विजवरोत्तम। एवं श्रुति-
रियं ब्रह्मन् धर्म्मेषु परिदृश्यते ॥ ५१ ॥ पापान्यबुद्ध्वेह पुराकृतानि
प्राग्धर्म्मशीलोऽपि विहन्ति पश्चात्। धर्म्मो राजन्नुदते पुरुषाणां
यत् कुर्व्वते पापमिह प्रमादात् ॥ ५२ ॥ पापं कृत्वा हि मन्येत
नाहमस्मीति पूरुषः। तन्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः
॥ ५३ ॥ चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः। वसनस्येव
छिद्राणि साधूनां विवृणोति यः ॥ ५४ ॥ पापञ्चेत् पुरुषः कृत्वा
कल्याणमभिपद्यते। मुच्यते सर्व्वपापेभ्यो महाभ्रेणेव चन्द्रमाः

॥ ५५ ॥ यथादित्यः समुद्यन् वै तमः पूर्वं व्यपोहति । एवं कल्याणमातिष्ठन् सर्वपापैः प्रमुच्यते ॥ ५६ ॥ पापानां विद्ध्यधिष्ठानां लोभमेव द्विजोत्तम । लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ॥ ५७ ॥ अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः । तेषां दमः पवित्राणि प्रलापा धर्मसंश्रिताः । सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥ ५८ ॥

मार्कण्डेय उवाच । स तु विप्रो महाप्राज्ञो धर्मव्याधमपृच्छत । शिष्टाचारं कथमहं विद्यामिति नरोत्तम ॥ ५९ ॥ एतदिच्छामि भद्रन्ते श्रोतुं धर्मभृताम्वर । त्वत्तो महामते व्याध तद्ब्रवीहि यथातथम् ॥ ६० ॥

व्याध उवाच । यज्ञो दानं तपो वेदाः सत्यञ्च द्विजसत्तम । पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ६१ ॥ कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् । धर्ममित्येव सन्तुष्टास्ते शिष्टाः शिष्टसम्मताः ॥ ६२ ॥ न तेषां विद्यते वृत्तं यज्ञस्वाध्यायशीलिनाम् । आचारपालनञ्चैव द्वितीयं शिष्टलक्षणम् ॥ ६३ ॥ गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च । एतच्चतुष्टयं ब्रह्मन् शिष्टाचारेषु नित्यदा ॥ ६४ ॥ शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः । यामयं लभते वृत्तिं सा न शक्या ह्यतोऽन्यथा ॥ ६५ ॥ वेदस्योपनिषत् सत्यः सत्यस्योपनिषद्दमः । दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ६६ ॥ ये तु धर्मानसूयन्ते बुद्धिमोहान्विता नराः । अपथा गच्छतां तेषामनुयाता च पीड्यते ॥ ६७ ॥ ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः । धर्मपन्थानमारूढाः सत्यधर्मपरायणाः ॥ ६८ ॥ नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता जनाः । उपाध्यायमते युक्ताः स्थित्वा धर्मार्थदर्शिनः ॥ ६९ ॥ नास्तिकान् भिन्नमर्य्यादान् क्रूरान् पापमतौ स्थितान् । त्यज तान् ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ॥ ७० ॥ कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम् ।

नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर ॥ ७१ ॥ क्रमेण सञ्चितो धर्मो बुद्धियोगमयो महान्। शिष्टाचारे भवेत् साधू रागः शुक्लेव वाससि ॥ ७२ ॥ अहिंसा सत्यवचनं सर्व्वभूतहितं परम्। अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः ॥ ७३ ॥ सत्ये कृत्वा प्रतिष्ठान्तु प्रवर्त्तन्ते प्रवृत्तयः। सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ॥ ७४ ॥ आचारश्च सतां धर्म्मः सन्तश्चाचारलक्षणाः। यो यथाप्रकृतिर्ज्जन्तुः स स्वां प्रकृतिमश्नुते ॥ ७५ ॥ पापात्मा क्रोधकामादीन् दोषानाप्नोत्यनात्मवान्। आरम्भो न्याययुक्तो यः स हि धर्म्म इति स्मृतः ॥ ७६ ॥ अनाचारस्त्वधर्म्मेति एतत् शिष्टानुशासनम्। अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ॥ ७७ ॥ ऋजवः शमसम्पन्नाः शिष्टाचारा भवन्ति ते। त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः ॥ ७८ ॥ गुरुशुश्रूषवो दान्ता शिष्टाचारा भवन्त्युत। तेषामहीनसत्त्वानां दुष्कराचारकर्म्मणाम् ॥ ७९ ॥ स्वैः कर्म्मभिः सत्कृतानां घोरत्वं सम्प्रणश्यति। तं सदाचारमाश्चर्य्यं पुराणं शाश्वतं ध्रुवम् ॥ ८० ॥ धर्म्मं धर्म्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः। आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ॥ ८१ ॥ श्रुतवृत्तोपसम्पन्नाः सन्तः स्वर्गनिवासिनः। वेदोक्तः परमो धर्म्मो धर्म्मशास्त्रेषु चापरः ॥ ८२ ॥ शिष्टाचारश्च शिष्टानां त्रिविधं धर्म्मलक्षणम्। पारणञ्चापि विद्यानां तीर्थानामवगाहनम् ॥ ८३ ॥ क्षमासत्यार्जवं शौचं सतामाचारदर्शनम्। सर्व्वभूतदयावन्तो अहिंसानिरताः सदा ॥ ८४ ॥ परुषञ्च न भाषन्ते सदा सन्तो द्विजप्रियाः। शुभानामशुभानाञ्च कर्म्मणां फलसञ्चये ॥ ८५ ॥ विपाकमभिजानन्तस्ते शिष्टाः शिष्टसम्मताः। न्यायोपेता गुणोपेताः सर्व्वलोकहितैषिणः ॥ ८६ ॥ सन्तः स्वर्गजिताः शुक्लाः सन्निविष्टाश्च सत्पथे। दातारः संविभक्तारो दीनानुग्रहकारिणः ॥ ८७ ॥ सर्व्वपूज्याः श्रुतधनास्तथैव च तपस्विनः। सर्व्वभूतदयावन्तस्ते शिष्टाः

शिष्टसम्मताः ॥ ८८ ॥ दाननिष्ठाः सुखांल्लोकानाप्नुवन्तीह च श्रियम्। पीड़या च कलत्रस्य भृत्यानाञ्च समाहिताः ॥ ८९ ॥ अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः। लोकयात्राञ्च पश्यन्तो धर्ममात्महितानि च ॥ ९० ॥ एवं सन्तो वर्त्तमानास्त्वेधन्ते शाश्वतीः समाः। अहिंसा सत्यवचनमानृशंस्यमथार्ज्जवम् ॥ ९१ ॥ अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः। धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ॥ ९२ ॥ अकामद्वेषसंयुक्तास्ते सन्तो लोकसाक्षिणः। त्रीण्येव तु पदान्याहुः सन्तः पदमनुत्तमम् ॥ ९३ ॥ न चैव द्रुह्येद्दद्याच्च सत्यञ्चैव सदा वदेत्। सर्व्वत्र च दयावन्तः सन्तः करुणवेदिनः ॥ ९४ ॥ गच्छन्तीह सन्तुष्टा धर्म्मपन्थानमुत्तमम्। शिष्टाचारा महात्मनो येषां धर्म्मः सुनिश्चितः ॥ ९५ ॥ अनसूया क्षमा शान्तिः सन्तोषः प्रियवादिता। कामक्रोधपरित्यागः शिष्टाचारनिषेवणम् ॥ ९६ ॥ कर्म्म च श्रुतसम्पन्नं सतां मार्गमनुत्तमम्। शिष्टाचारं निषेवन्ते नित्यं धर्म्ममनुव्रताः ॥ ९७ ॥ प्रज्ञाप्रासादमारुह्य मुच्यन्ते महतो भयात्। प्रेक्षन्ते लोकवृत्तानि विविधानि द्विजोत्तम ॥ ९८ ॥ अतिपुण्यानि पापानि तानि द्विजवरोत्तम। एतत्ते सर्व्वमाख्यातं यथाप्रश्नं यथाश्रुतम्। शिष्टाचारगुणं ब्रह्मन् पुरस्कृत्य द्विजर्षभ ॥ ९९ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणव्याधसंवादे षड़धिकद्विशतोऽध्यायः ॥ २०६ ॥

---

मार्कण्डेय उवाच। स तु विप्रमथोवाच धर्म्मव्याधो युधिष्ठिर। यदहमाचरे कर्म्म घोरमेतदसंशयम् ॥ १ ॥ विधिस्तु बलवान् ब्रह्मन् दुस्तरं हि पुराकृतम्। पुराकृतस्य पापस्य कर्म्मदोषो भवत्ययम् ॥ २ ॥ दोषस्यैतस्य वै ब्रह्मन् विघाते यत्नवा-

नहम्। विधिना हि हते पूर्वं निमित्तं घातको भवेत् ॥ ३ ॥
निमित्तभूता हि वयं कर्म्मणोऽस्य द्विजोत्तम । येषां हतानां
मांसानि विक्रीणामीह वै द्विज ॥ ४ ॥ तेषामपि भवेद्धर्म्म उप-
योगेन भक्षणे। देवतातिथिभृत्यानां पितृणाञ्चापि पूजनम् ॥ ५ ॥
ओषध्यो वीरुधश्चैव पशवो मृगपक्षिणः। अन्नाद्यभूता लोकस्य
इत्यपि श्रूयते श्रुतिः ॥ ६ ॥ आत्ममांसप्रदानेन शिविरौशीनरो
नृपः। स्वर्गंञ्च दुष्करं प्राप्तः क्षमावान् द्विजसत्तम ॥ ७ ॥ राज्ञो
महानसे पूर्वं रन्तिदेवस्य वै द्विज। द्वे सहस्रे तु बध्येते पशूना-
मन्वहं तदा ॥ ८ ॥ अहन्यहनि बध्येते द्वे सहस्रे गवां तथा।
समांसं ददतोह्यन्नं रन्तिदेवस्य नित्यशः ॥ ९ ॥ अतुला कीर्त्ति-
रभवन्नृपस्य द्विजसत्तम । चातुर्मास्ये च पशवो बध्यन्त इति
नित्यशः ॥ १० ॥ अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः।
यज्ञेषु पशवो ब्रह्मन् बध्यन्ते सततं द्विजैः ॥ ११ ॥ संस्कृताः किल
मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन्। यदि नैवाग्नयो ब्रह्मन् मांसकामा-
भवन् पुरा ॥ १२ ॥ भक्ष्यं नैवाभवन्मांसं कस्यचिद्द्विजसत्तम।
अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे ॥ १३ ॥ देवतानां पितृ-
णाञ्च भुङ्क्ते दत्त्वापि यः सदा। यथाविधि यथाश्राद्धं न प्रदु-
ष्यति भक्षणात् ॥ १४ ॥ अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः।
भार्य्यां गच्छन् ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥ १५ ॥ सत्या-
नृते विनिश्चित्य अत्रापि विधिरुच्यते। सौदासेन तदा राज्ञा
मानुषा भक्षिता द्विज ॥ १६ ॥ शापाभिभूतेन भृशमत्र किं प्रति-
भाति ते। स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ॥ १७ ॥
पुराकृतमिति ज्ञात्वा जीवाम्येतेन कर्म्मणा। स्वकर्म त्यजतो ब्रह्म-
न्नधर्म इति दृश्यते ॥ १८ ॥ स्वकर्मनिरतो यस्तु धर्मः स इति
निश्चयः। पूर्वं हि विहितं कर्म्म देहिनं न विमुञ्चति ॥ १९ ॥
धात्रा विधिरयं दृष्टो बहुधा कर्म्मनिर्णये। द्रष्टव्या तु भवेत् प्रज्ञा

क्रूरे कर्म्मणि वर्त्तता ॥ २० ॥ शुभं कर्म्म कथं कुर्य्यां कथं मुच्य पराभवात्। कर्म्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् ॥ २१ ॥ दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा। द्विजातिपूजने चाहं धर्म्मे च निरतः सदा ॥ २२ ॥ अभिमानातिवादाभ्यां निवृत्तोऽस्मि द्विजोत्तम। कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता ॥ २३ ॥ कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान् बहून्। जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते ॥ २४ ॥ धान्यबीजानि यान्याहु-र्व्रीह्यादीनि द्विजोत्तम। सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते ॥ २५ ॥ अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च। वृक्षांस्तथौषधींश्चापि छिन्दन्ति पुरुषा द्विज ॥ २६ ॥ जीवा हि बहवो ब्रह्मन् वृक्षेषु च फलेषु च। उदके बहवश्चापि तत्र किं प्रतिभाति ते ॥ २७ ॥ सर्वं व्याप्तमिदं ब्रह्मन् प्राणिभिः प्राणिजीवनैः मत्स्यान् ग्रसन्ते मत्स्याश्च तत्र किं प्रतिभाति ते ॥ २८ ॥ सत्त्वैः सत्त्वानि जीवन्ति बहुधा द्विजसत्तम। प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते ॥ २९ ॥ चंक्रम्यमानान् जीवांश्च धरणीसंश्रितान् बहून्। पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ॥ ३० ॥ उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः। ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते ॥ ३१ ॥ जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा। अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते ॥ ३२ ॥ अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा। के न हिंसन्ति जीवान् वै लोकेऽस्मिन् द्विजसत्तम ॥ ३३ ॥ बहु सञ्चिन्त्य इति वै नास्ति कश्चिदहिंसकः। अहिंसायान्तु निरता यतयो द्विजसत्तम ॥ ३४ ॥ कुर्वन्त्येव हि हिंसान्ते यत्नादल्पतरा भवेत्। अलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः ॥ ३५ ॥ महाघोराणि कर्म्माणि कृत्वा लज्जन्ति वै न च। सुहृदः सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ॥ ३६ ॥ सम्यक् प्रवृत्तान् पुरुषान्

सम्यगनुपश्यतः। समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ॥ ३७ ॥ गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः। बह्वाश्चर्य्यं लोके विपर्य्यस्तं दृश्यते द्विजसत्तम ॥ ३८ ॥ धर्म्मयुक्तमधर्म्मञ्च तत्र किं प्रतिभाति ते। वक्तुं बहुविधं शक्यं धर्म्माधर्म्मेषु कर्म्मसु। स्वकर्म्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥ ३९ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणव्याध-संवादे सप्ताधिकद्विशततोऽध्यायः ॥ २०७ ॥

---

मार्कण्डेय उवाच। धर्म्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर। विप्रर्षभमुवाचेदं सर्व्वधर्म्मभृतांवरः ॥ १ ॥

व्याध उवाच। श्रुतिप्रमाणो धर्म्मोऽयमिति वृद्धानुशासनम्। सूक्ष्मा गतिर्हि धर्म्मस्य बहुशाखा ह्यनन्तिका ॥ २ ॥ प्राणान्तिके विवाहे च वक्तव्यमनृतं भवेत्। अनृतेन भवेत्सत्यं सत्येनैवानृतं भवेत् ॥ ३ ॥ यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा। विपर्य्ययकृतो धर्म्मः पश्य धर्म्मस्य सूक्ष्मताम् ॥ ४ ॥ यत्करोत्यशुभं कर्म्म शुभं वा यदि सत्तम। अवश्यं तत् समाप्नोति पुरुषो नात्र संशयः ॥ ५ ॥ विषमाञ्च दशां प्राप्तो देवान् गर्हति वै भृशम्। आत्मनः कर्म्मदोषाणि न विजानात्यपण्डितः ॥ ६ ॥ मूढो नैकृतिकस्यापि चपलस्य द्विजोत्तम। सुखदुःखविपर्य्यासान् सदा समुपपद्यते ॥ ७ ॥ नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम्। यो यमिच्छेद्यथा कामं तं तं कामं समाचरेत् ॥ ८ ॥ यदि स्यादपराधीनं पौरुषस्य क्रियाफलम्। संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ॥ ९ ॥ दृश्यन्ते निष्फलाः सन्तः प्रहीनाः स्वस्वकर्म्मभिः। भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ॥ १० ॥ वञ्चनायाञ्च लोकस्य स सुखी जीवते सदा। अचेष्टमपि चासीनं श्रीः कञ्चिदुपतिष्ठति ॥ ११ ॥

कश्चित् कर्माणि कुर्वन् हि न प्राप्यमधिगच्छति। देवानिष्ठ्वा तपः कृत्वा कृपणैः पुत्रगृद्धिभिः ॥ १२ ॥ दशमासधृता गर्भे जायन्ते कुलपांसनाः। अपरे धनधान्यैश्च भोगैश्च पितृसञ्चितैः ॥ १३ ॥ विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः। कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः ॥ १४ ॥ आधिभिश्चैव बाध्यन्ते व्याधैः क्षुद्रमृगा इव। ते चापि कुशलैर्वैद्यैर्निपुणैः सम्भृतौषधैः ॥ १५ ॥ व्याधयो विनिवार्य्यन्ते मृगा व्याधैरिव द्विज। येषामस्ति च भोक्तव्यं ग्रहणीदोषपीड़िताः ॥ १६ ॥ न शक्नुवन्ति ते भोक्तुं पश्य धर्म्मभृताम्वर। अपरे बाहुबलिनः क्लिश्यन्ति बहवो जनाः ॥ १७ ॥ दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम। इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ॥१८॥ स्रोतसासकृदाक्षिप्तं ह्रियमाणं बलीयसा। न म्रियेयुर्न जीर्य्येयुः सर्व्वे स्युः सर्वकामिकाः ॥ १९ ॥ नाप्रियं प्रतिपश्येयुर्वशित्वं यदि वै भवेत्। उपर्य्युपरि लोकस्य सर्व्वो गन्तुं समीहते ॥ २० ॥ यतते च तथाशक्ति न च तद्वर्त्तते तथा। बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ॥ २१ ॥ महत्तु फलवैषम्यं दृश्यते कर्मसन्धिषु। न केचिदीशते ब्रह्मन् स्वयं ग्राह्यस्य सत्तम ॥ २२ ॥ कर्म्मणां प्राक्कृतानां हि इह सिद्धिः प्रदृश्यते। यथा श्रुतिरियं ब्रह्मन् जीवः किल सनातनः ॥ २३ ॥ शरीरमध्रुवं लोके सर्व्वेषां प्राणिनामिह। बध्यमाने शरीरे तु देहनाशो भवत्युत। जीवः संक्रमतेऽन्यत्र कर्मबन्धनिबन्धनः ॥ २४ ॥

ब्राह्मण उवाच। कथं कर्मविदां श्रेष्ठ जीवो भवति शाश्वतः। एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदताम्वर ॥ २५ ॥

व्याध उवाच। न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्म्रियतीति मूढाः। जीवस्तु देहान्तरितः प्रयाति दशार्द्धतैवास्य शरीरभेदः ॥ २६ ॥ अन्यो हि नाश्नाति कृतं हि कर्म मनुष्यलोके मनुजस्य कश्चित्। यत्तेन किञ्चिद्धि कृतं हि कर्म तदश्नुते नास्ति

कृतस्य नाशः ॥ २७ ॥ सपुण्यशीला हि भवन्ति पुण्या नराधमाः पापकृतो भवन्ति। नरोऽनुजातस्त्विह कर्म्मभिः स्वैस्ततः समुत्पद्यति भावितस्तैः ॥ २८ ॥

ब्राह्मण उवाच। कथं संभवते योनौ कथं वा पुण्यपापयोः। जातीः पुण्यास्त्वपुण्याश्च कथं गच्छति सत्तम ॥ २९ ॥

व्याध उवाच। गर्भाधानसमायुक्तं कर्म्मेदं सम्प्रदृश्यते। समासेन तु ते क्षिप्रं प्रवच्छ्यामि द्विजोत्तम ॥ ३० ॥ यथासम्भृतसम्भारः पुनरेव प्रजायते। शुभकृत् शुभयोनीषु पापकृत् पापयोनिषु। शुभैः प्रयोगैर्द्देवत्वं व्यामिश्रैर्मानुषो भवेत् ॥ ३१ ॥ मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः। जातिमृत्युजरादुःखैः सततं समभिद्रुतः ॥ ३२ ॥ संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः। तिर्य्यग्योनिसहस्राणि गत्वा नरकमेव च ॥ ३३ ॥ जीवाः संपरिवर्त्तन्ते कर्म्मबन्धनिबन्धनाः। जन्तुस्तु कर्म्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ॥ ३४ ॥ तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते। ततः कर्म्म समादत्ते पुनरन्यन्नवं बहु ॥ ३५ ॥ पच्यते तु पुनस्तेन भुक्त्वा पथ्यमिवातुरः। अजस्रमेव दुःखार्त्तोऽदुःखितः सुखसंज्ञकः ॥ ३६ ॥ ततोऽनिवृत्तबन्धत्वात् कर्म्मणामुदयादपि। परिक्रामति संसारे चक्रवद्बहुवेदनः ॥ ३७ ॥ स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्म्मभिः। तपोयोगसमारम्भं कुरुते द्विजसत्तम ॥ ३८ ॥ कर्म्मभिर्बहुभिश्चापि लोकानश्नाति मानवः। स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्म्मभिः ॥ ३९ ॥ प्राप्नोति सुकृतांल्लोकान् यत्र गत्वा न शोचति। पापं कुर्व्वन् पापवृत्तः पापस्यान्तं न गच्छति ॥ ४० ॥ तस्मात् पुण्यं यतितव्यं वर्ज्जयीत च पापकम्। अनसूयुः कृतज्ञश्च कल्याणानि च सेवते ॥ ४१ ॥ सुखानि धर्म्ममर्थञ्च स्वर्गञ्च लभते नरः। संस्कृतस्य च दान्तस्य नियतस्य यतात्मनः ॥ ४२ ॥ प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च। सतां धर्म्मेण वर्त्तेत क्रियां

शिष्टवदाचरेत् ॥ ४३ ॥ असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विज। सन्ति ह्यागमविज्ञानाः शिष्टाः शास्त्रे विचक्षणाः ॥ ४४ ॥ स्वधर्मेण क्रिया लोके कर्मणः सोऽप्यसङ्करः। प्राज्ञो धर्मेण रमते धर्मञ्चैवोपजीवति ॥ ४५ ॥ तस्माद्धर्मादवाप्तेन धनेन द्विजसत्तम। तस्यैव सिञ्चते मूलं गुणान् पश्यति यत्र वै ॥ ४६ ॥ धर्मात्मा भवति ह्येवं चित्तञ्चास्य प्रसीदति। स मित्रजनसन्तुष्ट इह प्रेत्य च नन्दति ॥ ४७ ॥ शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम। प्रभुत्वं लभते चापि धर्मस्यैतत् फलं विदुः ॥ ४८ ॥ धर्मस्य च फलं लब्ध्वा न तुष्यति महाद्विज। अतृप्यमाणो निर्वेदमापेदे ज्ञानचक्षुषा ॥ ४९ ॥ प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते। विरज्यते यथाकामं न च धर्मं विमुञ्चति ॥ ५० ॥ सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम्। ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ५१ ॥ एवं निर्वेदमादत्ते पापं कर्म जहाति च। धार्मिकश्चापि भवति मोक्षञ्च लभते परम् ॥ ५२ ॥ तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः। तेन सर्वानवाप्नोति कामान् यान्मनसेच्छति ॥ ५३ ॥ इन्द्रियाणां निरोधेन सत्येन च दमेन च। ब्रह्मणः पदमाप्नोति यत् परं द्विजसत्तम ॥ ५४ ॥

ब्राह्मण उवाच। इन्द्रियाणि तु यान्याहुः कानि तानि यतव्रत। निग्रहश्च कथं कार्य्यो निग्रहस्य च किं फलम् ॥ ५५ ॥ कथञ्च फलमाप्नोति तेषां धर्मभृताम्वर। एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं निबोध मे ॥ ५६ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्विजव्याधसंवादे अष्टाधिकद्विशततोऽध्यायः ॥ २०८ ॥

---

मार्कण्डेय उवाच। एवमुक्तस्तु विप्रेण धर्म्मव्याधो युधिष्ठिर। प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप॥ १॥

व्याध उवाच। विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्त्तते। तत् प्राप्य कामं भजते रोषञ्च द्विजसत्तम॥ २॥ ततस्तदर्थं यतते कर्म्म चारभते महत्। इष्टानां रूपगन्धानामभ्यासञ्च निषेवते॥ ३॥ ततो रागः प्रभवति द्वेषश्चैतदनन्तरम्। ततो लोभः प्रभवति मोहश्च तदनन्तरम्॥ ४॥ ततो लोभाभिभूतस्य रागद्वेषहतस्य च। न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च॥ ५॥ व्याजेन चरतो धर्म्ममर्थं व्याजेन रोचते। व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम॥ ६॥ तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति। सुहृद्भिर्वार्य्यमाणश्च पण्डितैश्च द्विजोत्तम॥ ७॥ उत्तरं श्रुतिसम्बन्धं ब्रवीत्यश्रुतियोजितम्। अधर्म्मस्त्रिविधस्तस्य वर्त्तते रागदोषजः॥ ८॥ पापञ्चिन्तयते चैव ब्रवीति च करोति च। तस्याधर्मे प्रवृत्तस्य गुणा नश्यन्ति साधवः॥ ९॥ एकशीलैश्च मित्रत्वं भजन्ते पापकर्म्मिणः। स तेन दुःखमाप्नोति परत्र च विपद्यते॥ १०॥ पापात्मा भवति ह्येवं धर्म्मलाभन्तु मे शृणु। यस्त्वेतान् प्रज्ञया दोषान् पूर्वमेवानुपश्यति॥ ११॥ कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते। तस्य साधुसमारम्भाद्बुद्धिर्धर्मेषु जायते॥ १२॥

ब्राह्मण उवाच। ब्रवीषि सूनृतं धर्मं यस्य वक्ता न विद्यते। दिव्यप्रभावः सुमहानृषिरेव मतोऽसि मे॥ १२॥

व्याध उवाच। ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा। तेषां सर्वात्मना कार्य्यं प्रियं लोके मनीषिणा॥ १४॥ यत्तेषाञ्च प्रियं तत्ते वक्ष्यामि द्विजसत्तम। नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे॥ १५॥ इदं विश्वं जगत्सर्वमजय्यञ्चापि सर्वशः। महाभूतात्मकं ब्रह्म नातः परतरं भवेत्॥ १५॥ महाभूतानि खं वायुरग्निरापस्तथा च भूः। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च

तद्गुणाः ॥ १७ ॥ तेषामपि गुणाः सर्वे गुणवृत्तिः परस्परम्। पूर्वपूर्वगुणाः सर्वे क्रमशो गुणिषु त्रिषु ॥ १८ ॥ षष्ठस्तु चेतना नाम मन इत्यभिधीयते। सप्तमी तु भवेद्बुद्धिरहङ्कारस्ततः परम् ॥ १९ ॥ इन्द्रियाणि च पञ्चात्मा रजः सत्त्वं तमस्तथा। इत्येष सप्तदशको राशिरव्यक्तसञ्ज्ञकः ॥ २० ॥ सर्वैरिन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृतैः। चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः। एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ २१ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्विजव्याध-
संवादे नवाधिकद्विशततोऽध्यायः ॥ २०९ ॥

---

मार्कण्डेय उवाच। एवमुक्तः स विप्रस्तु धर्मव्याधेन भारत। कथामकथयद्भूयो मनसः प्रीतिवर्द्धनीम् ॥ १ ॥

ब्राह्मण उवाच। महाभूतानि यान्याहुः पञ्च धर्मभृतांवर। एकैकस्य गुणान् सम्यक् पञ्चानामपि मे वद ॥ २ ॥

व्याध उवाच। भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च। गुणोत्तराणि सर्वाणि तेषां वक्ष्यामि ते गुणान् ॥ ३ ॥ भूमिः पञ्चगुणा ब्रह्मन्नुदकञ्च चतुर्गुणम्। गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः ॥ ४ ॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः। एते गुणाः पञ्च भूमेः सर्वेभ्यो गुणवत्तराः ॥ ५ ॥ शब्दः स्पर्शश्च रूपञ्च रसश्चापि द्विजोत्तम। अपामेते गुणा ब्रह्मन् कीर्त्तितास्तव सुव्रत ॥ ६ ॥ शब्दः स्पर्शश्च रूपञ्च तेजसोऽथ गुणास्त्रयः। शब्दः स्पर्शश्च वायौ तु शब्द आकाश एव तु ॥ ७ ॥ एते पञ्चदश ब्रह्मन् गुणा भूतेषु पञ्चसु। वर्त्तन्ते सर्वभूतेषु येषु लोकाः प्रतिष्ठिताः ॥ ८ ॥ अन्योऽन्यं नातिवर्त्तन्ते सम्यक् च भवति द्विज। यदा तु विषमं भावमाचरन्ति चराचराः ॥ ९ ॥ तदा देही देहमन्यं व्यतिरोहति

कालतः । आनुपूर्व्व्यां विनश्यन्ति जायन्ते चानुपूर्व्वशः ॥ १० ॥ तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः । यैराव्रतमिदं सर्व्वं जगत्स्थावरजङ्गमम् ॥ ११ ॥ इन्द्रियैः सृज्यते यद्यत्तत्तद्व्यक्तमिति स्मृतम् । तदव्यक्तमिति ज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ १२ ॥ यथास्वं ग्राहकाण्येषां शब्दादीनामिमानि तु । इन्द्रियाणि यदा देही धारयन्निव तप्यते ॥ १३ ॥ लोके विततमात्मानं लोकञ्चात्मनि पश्यति । परापरज्ञः सक्तः सन् स तु भूतानि पश्यति ॥ १४ ॥ पश्यतः सर्व्वभूतानि सर्व्वावस्थासु सर्व्वदा । ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ॥ १५ ॥ ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य पौरुषम् । लोकवृत्तिप्रकाशेन ज्ञानमार्गेण गम्यते ॥ १६ ॥ अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम् । अनौपम्यममूर्त्तञ्च भगवानाह बुद्धिमान् ॥ १७ ॥ तपोमूलमिदं सर्व्वं यन्मां विप्रानुपृच्छसि । इन्द्रियाण्येव संयम्य तपो भवति नान्यथा ॥ १८ ॥ इन्द्रियाण्येव तत् सर्व्वं यत् स्वर्गनरकावुभौ । निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ १९ ॥ एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम् । एतन्मूलं हि तपसः कृत्स्नस्य नरकस्य च ॥ २० ॥ इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् । संनियम्य तु तान्येव ततः सिद्धिं समाप्नुयात् ॥ २१ ॥ षस्मामात्मनि नित्यानामैश्वर्य्यं योऽधिगच्छति । न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ २२ ॥ रथः शरीरं पुरुषस्य दृष्टमात्मा नियन्तेन्द्रियाण्याहुरश्वान् । तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥ २३ ॥ षस्मामात्मनि युक्तानामिन्द्रियाणां प्रमाथिनाम् । यो धीरो धारयेद्रश्मीन् स स्यात् परमसारथिः ॥ २४ ॥ इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु । धृतिं कुर्व्वीत सारथ्ये धृत्वा तानि जयेद्ध्रुवम् ॥ २५ ॥ इन्द्रियाणां विचरतां यन्मनोऽनुविधीयते । तदस्य हरते बुद्धिं नावं वायुरिवाम्भसि ॥ २६ ॥ येषु विप्रतिपद्यन्ते

षट्सु मोहात्फलागमे। तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलम् ॥ २७ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्विजव्याध-संवादे दशाधिकद्विशततोऽध्यायः ॥ २१० ॥

---

मार्कण्डेय उवाच। एवन्तु सूक्ष्मे कथिते धर्म्मव्याधेन भारत। ब्राह्मणः स पुनः सूक्ष्मं पप्रच्छ सुसमाहितः ॥ १ ॥

ब्राह्मण उवाच। सत्त्वस्य रजसश्चैव तमसश्च यथातथम्। गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः ॥ २ ॥

व्याध उवाच। हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि। एषां गुणान् पृथक्त्वेन निबोध गदतो मम ॥ ३ ॥ मोहात्मकं तमस्तेषां रज एषां प्रवर्त्तकम्। प्रकाशबहुलत्वाच्च सत्त्वं ज्याय इहोच्यते ॥ ४ ॥ अविद्याबहुलो मूढः स्वप्नशीलो विचेतनः। दुर्हृषीकस्तमोध्वस्तः सक्रोधस्तामसोऽलसः ॥ ५ ॥ प्रवृत्तवाक्यो मन्त्री च यो नराग्र्योऽनसूयकः। विधित्समानो विप्रर्षे स्तब्धो मानी स राजसः ॥६॥ प्रकाशबहुलो धीरो निर्विधित्सोऽनसूयकः। अक्रोधनो नरो धीमान् दान्तश्चैव स सात्त्विकः ॥ ७ ॥ सात्त्विकस्त्वथ संबुद्धो लोकवृत्तेन क्लिश्यते। यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते ॥ ८ ॥ विरागस्य च रूपन्तु पूर्वमेव प्रवर्त्तते। मृदुर्भवत्यहङ्कारः प्रसीदत्यार्जवञ्च यत् ॥ ९ ॥ ततोऽस्य सर्वद्वन्द्वानि प्रशाम्यन्ति परस्परम्। न चास्य संशयो नाम क्वचिद्भवति कश्चन ॥ १० ॥ शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः। वैश्यत्वं लभते ब्रह्मन् क्षत्रियत्वं तथैव च ॥ ११ ॥ आर्ज्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते। गुणास्ते कीर्त्तिताः सर्वे किं भूयः श्रोतुमिच्छसि ॥१२॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्विजव्याध-संवादे एकादशाधिकद्विशततोऽध्यायः ॥ २११ ॥

ब्राह्मण उवाच। पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं भवेत्। अवकाशविशेषेण कथं वर्त्तयतेऽनिलः ॥ १ ॥

मार्कण्डेय उवाच। प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर। व्याधस्तु कथयामास ब्राह्मणाय महात्मने ॥ २ ॥

व्याध उवाच। मूर्द्धानमाश्रितो वह्निः शरीरं परिपालयन्। प्राणो मूर्द्धनि चाग्नौ च वर्त्तमानो विचेष्टते ॥ ३ ॥ भूतं भव्यं भविष्यञ्च सर्वं प्राणे प्रतिष्ठितम्। श्रेष्ठं तदेव भूतानां ब्रह्मयोनिमुपास्महे ॥ ४ ॥ स जन्तुः सर्व्वभूतात्मा पुरुषः स सनातनः। महान् बुद्धिरहङ्कारो भूतानां विषयश्च सः ॥ ५ ॥ एवन्त्विह स सर्व्वत्र प्राणेन परिपाल्यते। पृष्ठतस्तु समानेन स्वां स्वां गतिमपाश्रितः ॥ ६ ॥ वस्तिमूले गुदे चैव पावकं समुपाश्रितः। वहन्मूत्रं पुरीषं चाप्यपानः परिवर्त्तते ॥ ७ ॥ प्रयत्ने कर्म्मणि बले य एकस्त्रिषु वर्त्तते। उदानमिति तं प्राहुरध्यात्मविदुषो जनाः ॥ ८ ॥ सन्धौ सन्धौ सन्निविष्टः सर्व्वेष्वपि तथानिलः। शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ ९ ॥ धातुष्वग्निस्तु विततः स तु वायुसमीरितः। रसान् धातूंश्च दोषांश्च वर्त्तयन् परिधावति ॥ १० ॥ प्राणानां सन्निपातात्तु सन्निपातः प्रजायते। ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ ११ ॥ समानोदानयोर्मध्ये प्राणापानौ समाहितौ। समन्वितस्त्वधिष्ठानं सम्यक् पचति पावकः ॥ १२ ॥ तस्यापि पायुपर्य्यन्तस्तथा स्याद्गुदसंज्ञितः। स्रोतांसि तस्माज्जायन्ते सर्व्वप्राणेषु देहिनाम् ॥ १३ ॥ अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते। स ऊर्द्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ १४ ॥ पक्वाशयस्त्वधो नाभ्यामूर्द्ध्वमामाशयः स्थितः। नाभिमध्ये शरीरस्य प्राणाः सर्व्वे प्रतिष्ठिताः ॥ १५ ॥ प्रवृत्ता हृदयात् सर्व्वास्तिर्य्यगूर्द्ध्वमधस्तथा। वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः ॥ १६ ॥ योगिनामेष मार्गस्तु येन गच्छन्ति तत्परम्। जितक्लमाः

समा धीरा मूर्द्धन्यात्मानमादधुः ॥ १७ ॥ एवं सर्व्वेषु विततौ प्राणापानौ हि देहिषु। एकादशविकारात्मा कलासम्भारसम्भृतः ॥ १८ ॥ मूर्त्तिमन्तं हि तं विद्धि नित्यं कर्म्मजितात्मकम्। तस्मिन् यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः ॥ १९ ॥ आत्मानं हि विजानीहि नित्यं योगिजितात्मकम्। देवो यः संस्थितस्तस्मिन्नविन्दुरिव पुष्करे ॥ २० ॥ क्षेत्रज्ञं तं विजानीहि नित्यं योगजितात्मकम्। जीवात्मकानि जानीहि रजः सत्त्वं तमस्तथा जीवमात्मगुणं विद्धि तथात्मानं परात्मकम् ॥ २१ ॥ अचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्व्वम्। ततः परं क्षेत्रविदो वदन्ति प्रावर्त्तयद्यो भुवनानि सप्त ॥ २२ ॥ एवं भूतेषु सर्व्वेषु भूतात्मा संप्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया ज्ञानवेदिभिः ॥ २३ ॥ चित्तस्य हि प्रसादेन हन्ति कर्म्म शुभाशुभम्। प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते ॥ २४ ॥ लक्षणन्तु प्रसादस्य यथा तृप्तः सुखं स्वपेत्। निवाते वा यथा दीपो दीप्येत् कुशलदीपितः ॥ २५ ॥ पूर्व्वरात्रे परे चैव युञ्जानः सततं मनः। लघ्वाहारो विशुद्धात्मा पश्यन्नात्मानमात्मनि ॥ २६ ॥ प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति। दृष्ट्वात्मनं निरात्मानं स तदा विप्रमुच्यते ॥ २७ ॥ सर्व्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः। एतत् पवित्रं लोकानां तपो वै संक्रमो मतः ॥ २८ ॥ नित्यं क्रोधात्तपो रक्षेत् धर्म्मं रक्षेच्च मत्सरात्। विद्यां मानापमानाभ्यामात्मानन्तु प्रमादतः ॥ २९ ॥ आनृशंस्यं परो धर्म्मः क्षमा च परमं बलम्। आत्मज्ञानं परं ज्ञानं सत्यं व्रतपरं व्रतम् ॥ ३० ॥ सत्यस्य वचनं श्रेयः सत्यं ज्ञानं हितं भवेत्। यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतम् ॥ ३१ ॥ यस्य सर्व्वे समारम्भा निराशीर्बन्धनाः सदा। त्यागे यस्य हुतं सर्व्वं स त्यागी च स बुद्धिमान् ॥ ३२ ॥ यतो न गुरुरप्येनं श्रावयेदुपपादयेत्। तं विद्याद्ब्रह्मणो योगं वियोगं

योगसंज्ञितम् ॥ ३३ ॥ न हिंस्यात् सर्वभूतानि मैत्रायणगति-
श्चरेत्। नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ ३४ ॥
आकिञ्चन्यं सुसन्तोषो निराशिलमचापलम्। एतदेव परं ज्ञानं
सदात्मज्ञानमुत्तमम् ॥ ३५ ॥ परिग्रहं परित्यज्य भवेद्बुद्ध्या यत-
व्रतः। अशोकं स्थानमासाद्य निश्चलं प्रेत्य चेह च ॥ ३६ ॥ तपो-
नित्येन दान्तेन मुनिना संयतात्मना। अजितं जेतुकामेन भाव्यं
सङ्गेष्वसङ्गिना ॥ ३७ ॥ गुणागुणमनासङ्गमेकार्य्यमनन्तरम्।
एतत्तु ब्राह्मणो वृत्तमाहुरेकपदं सुखम् ॥ ३८ ॥ परित्यजति यो
दुःखं सुखञ्चाप्युभयं नरः। ब्रह्म प्राप्नोति सोऽत्यन्तमसङ्गेन च
गच्छति ॥ ३९ ॥ यथाश्रुतमिदं सर्वं समासेन द्विजोत्तम। एतत्ते
सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ४० ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि ब्राह्मणव्याध-
संवादे द्वादशाधिकद्विशततोऽध्यायः ॥ २१२ ॥

---

मार्कण्डेय उवाच। एवं सङ्कथिते कृत्स्ने मोक्षधर्मे युधि-
ष्ठिर। दृढं प्रीतमना विप्रो धर्म्मव्याधमुवाच ह ॥ १ ॥ न्याययुक्त-
मिदं सर्वं भवता परिकीर्त्तितम्। न तेऽस्त्यविदितं किञ्चिद्धर्म्मेष्विह
हि दृश्यते ॥ २ ॥

व्याध उवाच। प्रत्यक्षं मम यो धर्म्मस्तञ्च पश्य द्विजोत्तम।
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ॥ ३ ॥ उत्तिष्ठ भगवन्
क्षिप्रं प्रविश्याभ्यन्तरं गृहम्। द्रष्टुमर्हसि धर्म्मज्ञ मातरं पितरञ्च
मे ॥ ४ ॥

मार्कण्डेय उवाच। इत्युक्तः स प्रविश्याथ ददर्श परमा-
र्च्चितम्। सौधं हृद्यञ्चतुःशालमतीव च मनोरमम् ॥ ५ ॥ देवता-
गृहसङ्काशं दैवतैश्च सुपूजितम्। शयनासनसम्बाधं गन्धैश्च परमै-

युतम् ॥ ६ ॥ तत्र शुक्लाम्बरधरौ पितरावस्य पूजितौ । कृताहारौ सुसन्तुष्टावुपविष्टौ वरासने ॥ ७ ॥ धर्म्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसापतत् ।

वृद्धावूचतुः । उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु । प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि । गतिमिष्टां तथा ज्ञानं मेधाञ्च परमाङ्गतः ॥ ८ ॥ सत्पुत्रेण त्वया पुत्र नित्यं काले सुपूजितौ । न तेऽन्यद्दैवतं किञ्चिद्दैवतेष्वपि वर्त्तते ॥ ९ ॥ प्रयतत्वाद्द्विजातीनां दमेनासि समन्वितः । पितुः पितामहा ये च तथैव प्रपितामहाः ॥ १० ॥ प्रीतास्ते सततं पुत्र दमेनावाञ्च पूजया । मनसा कर्मणा वाचा शुश्रूषा नैव हीयते ॥ ११ ॥ न चान्या हि तथाबुद्धिर्दृश्यते साम्प्रतं तव । जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ॥ १२ ॥ तथा त्वया कृतं सर्वं तद्विशिष्टञ्च पुत्रक । ततस्तं ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत् ॥ १३ ॥ तौ स्वागतेन तं विप्रमर्च्चयामासतु स्तदा । प्रतिपूज्य च तां पूजां द्विजः पप्रच्छ तावुभौ ॥ १४ ॥ सपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे । अनामयञ्च वां कच्चित् सदैवेह शरीरयोः ॥ १५ ॥

वृद्धावूचतुः । कुशलं नौ गृहे विप्र भृत्यवर्गे च सर्वशः । कच्चित्त्वमप्यविघ्नेन संप्राप्तो भगवन्निति ॥ १६ ॥

मार्कण्डेय उवाच । वाढमित्येव तौ विप्रः प्रत्युवाच मुदान्वितः । धर्मव्याधो निरीक्ष्याथ ततस्तं वाक्यमब्रवीत् ॥ १७ ॥

व्याध उवाच । पिता माता च भगवन्नेतौ मे दैवतं परम् । यद्दैवतेभ्यः कर्त्तव्यं तदेताभ्यां करोम्यहम् ॥ १८ ॥ त्रयस्त्रिंशद्यथा देवाः सर्वे शक्रपुरोगमाः । संपूज्याः सर्वलोकस्य तथा वृद्धाविमौ मम ॥ १९ ॥ उपहारानाहरन्तो देवतानां यथा द्विजाः । कुर्वन्ति तद्वदेताभ्यां करोम्यहमतन्द्रितः ॥ २० ॥ एतौ मे परमं ब्रह्मन् पिता माता च दैवतम् । एतौ पुष्पैः फलै रत्नैस्तोषयामि

सदा द्विज ॥ २१ ॥ एतावेवाग्नयो मह्यं यान् वदन्ति मनीषिणः । यज्ञा वेदाश्च चत्वारः सर्व्वमेतौ मम द्विज ॥ २२ ॥ एतदर्थं मम प्राणा भार्य्या पुत्रः सुहृज्जनः । सपुत्रदारः शुश्रूषां नित्यमेव करोम्यहम् ॥ २३ ॥ स्वयञ्च स्नापयाम्येतौ तथा पादौ प्रधावये । आहारं सम्प्रयच्छामि स्वयञ्च द्विजसत्तम ॥ २४ ॥ अनुकूलं तथा वच्मि विप्रियं परिवर्ज्जये । अधर्म्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहम् ॥ २५ ॥ धर्म्ममेव गुरुं ज्ञात्वा करोमि द्विजसत्तम । अतन्द्रितः सदा विप्र शुश्रूषां वै करोम्यहम् ॥ २६ ॥ पञ्चैव गुरवो ब्रह्मन् पुरुषस्य बुभूषतः । पिता माताग्निरात्मा च गुरुश्च द्विजसत्तम ॥ २७ ॥ एतेषु यस्तु वर्त्तेत सम्यगेव द्विजोत्तम । भवेयुरग्नयस्तस्य परिचीर्णास्तु नित्यशः । गार्हस्थ्ये वर्त्तमानस्य एष धर्म्मः सनातनः ॥ २८ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि द्विजव्याध-संवादे त्रयोदशाधिकद्विशततोऽध्यायः ॥ २१३ ॥

---

मार्कण्डेय उवाच । गुरू निवेद्य विप्राय तौ मातापितरावुभौ । पुनरेव स धर्म्मात्मा व्याधो ब्राह्मणमब्रवीत् ॥ १ ॥ प्रवृत्तचक्षुर्जातोऽस्मि संपश्य तपसो बलम् । यदर्थमुक्तोऽसि तया गच्छस्व मिथिलामिति ॥ २ ॥ पतिशुश्रूषपरया दान्तया सत्यशीलया । मिथिलायां वसेद्व्याधः स ते धर्म्मान् प्रवक्ष्यति ॥ ३ ॥

ब्राह्मण उवाच । पतिव्रतायाः सत्यायाः शीलाढ्याया यतव्रत । संस्मृत्य वाक्यं धर्म्मज्ञ गुणवानसि मे मतः ॥ ४ ॥

व्याध उवाच । यत्तदा त्वं द्विजश्रेष्ठ तयोक्तो मां प्रति प्रभो । दृष्टमेव तया सम्यगेकपत्न्या न संशयः ॥ ५ ॥ त्वदनुग्रहबुद्ध्या तु विप्रैतद्दर्शितं मया । वाक्यञ्च शृणु मे तात यत्ते वक्ष्ये हितं द्विज

॥ ६ ॥ त्वया विनिकृता माता पिता च द्विजसत्तम। अनिसृष्टोऽसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित ॥ ७ ॥ वेदोच्चारणकार्य्यार्थमयुक्तं तत्त्वया कृतम्। तव शोकेन वृद्धौ तावन्धीभूतौ मनस्विनौ ॥ ८ ॥ तौ प्रसादयितुं गच्छ मा त्वां धर्मोऽत्यगादयम्। तपस्वी त्वं महात्मा च धर्मे च निरतः सदा ॥ ९ ॥ सर्वमेतदपार्थन्ते क्षिप्रं तौ संप्रसादय। श्रद्दधत्स्व मम ब्रह्मन्नान्यथा कर्त्तुमर्हसि। गम्यतामद्य विप्रर्षे श्रेयस्ते कथयाम्यहम् ॥ १० ॥

ब्राह्मण उवाच। यदेतदुक्तं भवता सर्वं सत्यमसंशयम्। प्रीतोऽस्मि तव भद्रन्ते धर्माचारगुणान्वित ॥ ११ ॥

व्याध उवाच। दैवतप्रतिमो हि त्वं यस्त्वं धर्म्ममनुव्रतः। पुराणं शाश्वतं दिव्यं दुष्प्राप्यमकृतात्मभिः। मातापित्रोः सकाशं हि गत्वा त्वं द्विजसत्तम ॥ १२ ॥ अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम्। अतः परमहं धर्म्मं नान्यं पश्यामि कञ्चन ॥१३॥

ब्राह्मण उवाच। इहाहमागतो दिष्ट्या दिष्ट्या मे सङ्गतं त्वया। ईदृशा दुर्लभा लोके नरा धर्म्मप्रदर्शकाः ॥ १४ ॥ एको नरः सहस्रेषु धर्म्मविद्विद्यते न वा। प्रीतोऽस्मि तव सत्येन भद्रन्ते पुरुषर्षभ ॥ १५ ॥ पतमानोऽद्य नरके भवतास्मि समुद्धृतः। भवितव्यमथैवञ्च यद्दृष्टोऽसि मयानघ ॥ १६ ॥ राजा ययातिर्दौहित्रैः पतितस्तारितो यथा। सद्भिः पुरुषशार्दूल तथाहं भवता त्विह ॥ १७ ॥ मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव। नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् ॥ १८ ॥ दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्त्तते। न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम् ॥ १९ ॥ येन कर्मविशेषेण प्राप्तेयं शूद्रता त्वया। एतदिच्छामि विज्ञातुं तत्त्वेन हि महामते। कामया ब्रूहि मे सर्वं सत्येन प्रयतात्मना ॥ २० ॥

व्याध उवाच। अनतिक्रमणीया वै ब्राह्मणा मे द्विजोत्तम।

शृणु सर्व्वमिदं वृत्तं पूर्व्वदेहे ममानघ ॥ २१ ॥ अहं हि ब्राह्मणः
पूर्व्वमासं द्विजवरात्मजः । वेदाध्यायी सुकुशलो वेदाङ्गानाञ्च पारगः
॥ २२ ॥ आत्मदोषकृतैर्ब्रह्मन्नवस्थामाप्तवानिमाम् । कश्चिद्राजा
मम सखा धनुर्वेदपरायणः ॥ २३ ॥ संसर्गाद्धनुषि श्रेष्ठस्ततोऽहम्-
अभवं द्विज । एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः ॥ २४ ॥
सहितो योधमुख्यैश्च मन्त्रिभिश्च सुसंवृतः । ततोऽभ्यहनम्मृगांस्तत्र
सुबहूनाश्रमं प्रति ॥ २५ ॥ अथ क्षिप्तः शरो घोरो मयापि द्विज-
सत्तम । ताडितश्च ऋषिस्तेन शरेणानतपर्व्वणा ॥ २६ ॥ भूमौ
निपतितो ब्रह्मन्नुवाच प्रतिनादयन् । नापराध्याम्यहं किञ्चित्
केन पापमिदं कृतम् ॥ २७ ॥ मन्वानस्तं मृगञ्चाहं संप्राप्तः
सहसा विभो । अपश्यं तमृषिं विद्धं शरेणानतपर्व्वणा ॥ २८ ॥
अकार्य्यकरणाच्चापि भृशं मे व्यथितं मनः । तमुग्रतपसं विप्रं
निष्टनन्तं महीतले ॥ २९ ॥ अजानता कृतमिदं मयेत्यहमथाब्रुवम् ।
क्षन्तुमर्हसि मे सर्व्वमिति चोक्तो मया मुनिः ॥ ३० ॥ ततः
प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छितः । व्याधस्त्वं भविता क्रूर
शूद्रयोनाविति द्विज ॥ ३१ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मण-
व्याधसंवादे चतुर्द्दशाधिकद्विशततोऽध्यायः ॥ २१४ ॥

---

व्याध उवाच । एवं शप्तोऽहमृषिणा तदा द्विजवरोत्तम ।
अभिप्रसादयमृषिं गिरा त्राहीति मां तदा ॥ १ ॥ अजानता मया
कार्य्यमिदमद्य कृतं मुने । क्षन्तुमर्हसि तत्सर्व्वं प्रसीद भगवन्निति ॥२॥

ऋषिरुवाच । नान्यथा भविता शाप एवमेतदसंशयम् ।
आनृशंस्यात्त्वहं किञ्चित् कर्त्तानुग्रहमद्य ते ॥ ३ ॥ शूद्रयोन्यां
वर्त्तमानो धर्म्मज्ञो हि भविष्यसि । मातापित्रोश्च शुश्रूषां करिष्यसि

न संशयः॥४॥ तया शुश्रूषया सिद्धिं महतीं समवाप्स्यसि। जातिस्मरश्च भविता स्वर्गञ्चैव गमिष्यसि॥५॥ शापक्षये तु निर्वृत्ते भवितासि पुनर्द्विज। एवं शप्तः पुरा तेन ऋषिणास्म्युग्रतेजसा॥६॥ प्रसादश्च कृतस्तेन ममैव द्विपदाम्वर। शरञ्चोद्धृतवानस्मि तस्य वै द्विजसत्तम॥७॥ आश्रमञ्च मया नीतो न च प्राणैर्व्ययुज्यत। एतत्ते सर्वमाख्यातं यथा मम पुराभवत्। अभितश्चापि गन्तव्यं मया स्वर्गं द्विजोत्तम॥८॥

ब्राह्मण उवाच। एवमेतानि पुरुषा दुःखानि च सुखानि च। आप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्त्तुमर्हसि। दुष्करं हि कृतं कर्म्म जानता जातिमात्मनः॥९॥ लोकवृत्तान्ततत्त्वज्ञ नित्यं धर्मपरायण। कर्मदोषश्च वै विद्वन्नात्मजातिकृतेन वै॥१०॥ कञ्चित्कालमुष्यतां वै ततोऽसि भविता द्विजः। साम्प्रतञ्च मतो मेऽसि ब्राह्मणो नात्र संशयः॥११॥ ब्राह्मणः पतनीयेषु वर्त्तमानो विकर्मसु। दाम्भिको दुष्कृतः प्रायः शूद्रेण सदृशो भवेत्॥१२॥ यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः। तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः॥१३॥ कर्मदोषेण विषमां गतिमाप्नोति दारुणाम्। क्षीणदोषमहं मन्ये त्वाभितस्त्वां नरोत्तम॥१४॥ कर्त्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः। लोकवृत्तानुवृत्तज्ञा नित्यं धर्मपरायणाः॥१५॥

व्याध उवाच। प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः। एतद्विज्ञानसामर्थ्यं न बालैः समतामियात्॥१६॥ अनिष्टसंप्रयोगाच्च विप्रयोगात् प्रियस्य च। मनुष्या मानसैर्दुःखैर्युज्यन्ते चाल्पबुद्धयः॥१७॥ गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च। सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते॥१८॥ अनिष्टेनान्वितं पश्यंस्तथा क्षिप्रं विरज्यते। ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमात्॥१९॥ शोचतो न भवेत्किञ्चित् केवलं परितप्यते। परि-

त्यजन्ति ये दुःखं सुखं चाप्युभयं नराः॥ २०॥ त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः। असन्तोषपरा मूढाः सन्तोषं यान्ति पण्डिताः॥ २१॥ असन्तोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम्। न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम्॥ २२॥ न विषादे मनः कार्य्यं विषादो विषमुत्तमम्। मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः॥ २३॥ यं विषादोऽभिभवति विक्रमे समुपस्थिते। तेजसा तस्य हीनस्य पुरुषार्थो न विद्यते॥ २४॥ अवश्यं क्रियमाणस्य कर्म्मणो दृश्यते फलम्। न हि निर्व्वेदमागम्य किञ्चित् प्राप्नोति शोभनम्॥ २५॥ अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे। अशोचन्नारभेतैव मुक्तश्चाव्यसनी भवेत्॥ २६॥ भूतेष्वभावं सञ्चिन्त्य ये तु बुद्धेः परङ्गताः। न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमाङ्गतिम्॥ २७॥ न शोचामि च वै विद्वन् कालाकाङ्क्षी स्थितोऽस्म्यहम्। एतैर्न्निदर्शनैर्ब्रह्मन्नवसीदामि सत्तम॥ २८॥

ब्राह्मण उवाच। कृतप्रज्ञोऽसि मेधावी बुद्धिश्च विपुला तव। नाहं भवन्तं शोचामि ज्ञानतृप्तोऽसि धर्म्मवित्॥ २९॥ आपृच्छे त्वां स्वस्ति तेऽस्तु धर्म्मस्त्वां परिरक्षतु। अप्रमादस्तु कर्त्तव्यो धर्म्मे धर्म्मभृताम्वर॥ ३०॥

मार्कण्डेय उवाच। वाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह। प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः॥ ३१॥ स तु गत्वा द्विजः सर्व्वाः शुश्रूषाः कृतवांस्तदा। मातापितृभ्यां वृद्धाभ्यां यथान्यायं सुसंशितः॥ ३२॥ एतत्ते सर्व्वमाख्यातं निखिलेन युधिष्ठिर। पृष्टवानसि यत्तात धर्म्मं धर्म्मभृताम्वर॥ ३३॥ पतिव्रतायां महात्म्यं ब्राह्मणस्य च सत्तम। मातापित्रोश्च शुश्रूषा धर्म्मव्याधेन कीर्त्तिता॥ ३४॥

युधिष्ठिर उवाच। अत्यद्भुतमिदं ब्रह्मन् धर्म्माख्यानमनुत्तमम्। सर्व्वं धर्म्मविदां श्रेष्ठ कथितं मुनिसत्तम॥ ३५॥ सुख-

अव्यतथा विदन् मुहूर्त्त इव मे गतः। न हि तृप्तोऽस्मि भगवन् शृण्वानो धर्ममुत्तमम् ॥ ३६ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि पतिव्रतोपाख्याने पञ्चदशाधिकद्विशततोऽध्यायः ॥ २१५ ॥

---

वैशम्पायन उवाच। श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम्। पप्रच्छ तमृषिं मार्कण्डेयमिदं तदा ॥ १ ॥

युधिष्ठिर उवाच। कथमग्निर्वनं यातः कथञ्चाप्यङ्गिराः पुनः। नष्टेऽग्नौ हव्यमवहदग्निर्भूत्वा महाद्युतिः ॥ २ ॥ अग्निर्यदा त्वेक एव बहुत्वञ्चास्य कर्मसु। दृश्यते भगवन् सर्वमेतदिच्छामि वेदितुम् ॥ ३ ॥ कुमारश्च यथोत्पन्नो यथा चाग्नेः सुतोऽभवत्। यथा रुद्राच्च सम्भूतो गङ्गायां कृत्तिकासु च ॥ ४ ॥ एतदिच्छाम्यहं त्वत्तः श्रोतुं भार्गवसत्तम। कौतूहलसमाविष्टो यथातथ्यं महामुने ॥ ५ ॥

मार्कण्डेय उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। यथा क्रुद्धो हुतवहस्तपस्तप्तुं वनङ्गतः ॥ ६ ॥ यथा च भगवानग्निः स्वयमेवाङ्गिराभवत्। सन्तापयंश्च प्रभया नाशयंस्तिमिराणि च ॥ ७ ॥ पुराङ्गिरा महाबाहो चचार तप उत्तमम्। आश्रमस्थो महाभागो हव्यवाहं विशेषयन् ॥ ८ ॥ तथा स भूत्वा तु तदा जगत्सर्वं व्यकाशयत्। तपश्चरंस्तु हुतभुक् सन्तप्तस्तस्य तेजसा ॥ ९ ॥ भृशं ग्लानश्च तेजस्वी न च किञ्चित् प्रजज्ञिवान्। अथ सञ्चिन्तयामास भगवान् हव्यवाहनः ॥ १० ॥ अन्योऽग्निरिह लोकानां ब्रह्मणा सम्प्रकल्पितः। अग्नित्वं विप्रनष्टं हि तप्यमानस्य मे तपः ॥ ११ ॥ कथमग्निः पुनरहं भवेयमिति चिन्त्य सः। अपश्यद्गुग्निवल्लोकांस्तापयन्तं महामुनिम् ॥ १२ ॥ सोऽपासर्प-

च्छनैर्भीतस्तमुवाच तदाङ्गिराः। शीघ्रमेव भवस्वाग्निस्त्वं पुनर्लोक-
भावनः ॥ १३ ॥ विज्ञातश्चासि लोकेषु त्रिषु संस्थानचारिषु।
त्वमग्निः प्रथमं सृष्टो ब्रह्मणा तिमिरापहः। स्वस्थानं प्रतिपद्यस्व
शीघ्रमेव तमोनुद ॥ १४ ॥

अग्निरुवाच। नष्टकीर्त्तिरहं लोके भवान् जातो हुताशनः।
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः ॥ १५ ॥ निक्षिपा-
म्यहमग्नित्वं त्वमग्निः प्रथमो भव। भविष्यामि द्वितीयोऽहं प्राजा-
पत्यक एव च ॥ १६ ॥

अङ्गिरा उवाच। कुरु पुण्यं प्रजास्वर्ग्यं भवाग्निस्तिमिरा-
पहः। माञ्च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा ॥ १७ ॥

मार्कण्डेय उवाच। तच्छ्रुत्वाङ्गिरसो वाक्यं जातवेदास्तथा-
करोत्। राजन् वृहस्पतिर्नाम तस्याङ्गिरसः सुतः ॥ १८ ॥ ज्ञात्वा
प्रथमजं तन्तु वह्नेराङ्गिरसं सुतम्। उपेत्य देवाः पप्रच्छुः कारणं
तत्र भारत ॥ १९ ॥ स तु पृष्टस्तदा देवैस्ततः कारणमब्रवीत्।
प्रत्यगृह्णंस्तु देवाश्च तद्वचोऽङ्गिरसस्तदा ॥ २० ॥ तत्र नानाविधा-
नग्नीन् प्रवक्ष्यामि महाप्रभान्। कर्म्मभिर्वहुभिः ख्यातान्नाना-
र्थान् ब्राह्मणेष्विह ॥ २१ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसो-
पाख्याने षोड़शाधिकद्विशततोऽध्यायः ॥ २१६ ॥

---

मार्कण्डेय उवाच। ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलो-
द्वह। तस्याभवत् शुभा भार्य्या प्रजास्तस्याश्च मे शृणु ॥ १ ॥
वृहत्कीर्त्तिर्वृहज्ज्योतिर्वृहद्ब्रह्मा वृहन्मनाः। वृहन्मन्त्रो वृह-
द्भासस्तथा राजन् वृहस्पतिः ॥ २ ॥ प्रजासु तासु सर्व्वासु रूपे-
णाप्रतिमाभवत्। देवी भानुमती नाम प्रथमाङ्गिरसः सुता ॥ ३ ॥

भूतानामेव सर्व्वेषां तस्यां रागस्तदाभवत् । रागाद्रागेति यामाहु-र्द्वितीयाङ्गिरसः सुताम् ॥ ४ ॥ यां कपर्द्दिसुतामाहुर्द्दृश्यादृश्येति देहिनः । तनुत्वात् सा सिनीवाली तृतीयाङ्गिरसः सुता ॥ ५ ॥ पश्यत्यर्च्चिष्मती भाभिर्हविर्भिश्च हविष्मती । षष्ठीमङ्गिरसः कन्यां पुण्यामाहुर्हविष्मतीम् ॥ ६ ॥ महामखेष्वाङ्गिरसी दीप्तिमत्सु महामते । महामतीति विख्याता सप्तमी कथ्यते सुता ॥ ७ ॥ यान्तु दृष्ट्वा भगवतीं जनः कुहुकुहायते । एकानंशेति तामाहुः कुहूमङ्गिरसः सुताम् ॥ ८ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि आङ्गिरसे सप्तदशाधिकद्विशततोऽध्यायः ॥ २१७ ॥

---

मार्कण्डेय उवाच । बृहस्पतेश्चान्द्रमसी भार्य्याभूद्या यशस्विनी । अग्नीन् साजनयत् पुण्यान् षडेकाञ्चापि पुत्रिकाम् ॥ १ ॥ आहुतिष्वेव यस्याग्नेर्हविषाज्यं विधीयते । सोऽग्निर्बृहस्पते पुत्रः शंयुर्नाम महाव्रतः ॥ २ ॥ चातुर्मास्येषु यस्येष्ट्यामश्वमेधेऽग्रजः पशुः । दीप्तो ज्वालैरनेकाभैरग्निरेषोऽथ वीर्य्यवान् ॥ ३ ॥ शंयो-रप्रतिमा भार्य्या सत्यासत्याथ धर्म्मजा । अग्निस्तस्य सुतो दीप्त-स्तिस्रः कन्याश्च सुव्रताः ॥ ४ ॥ प्रथमेनाज्यभागेन पूज्यते योऽग्नि-रध्वरे । अग्निस्तस्य भरद्वाजः प्रथमः पुत्र उच्यते ॥ ५ ॥ पौर्ण-मास्येषु सर्व्वेषु हविषाज्यं स्रुचोद्यतम् । भरतो नामतः सोऽग्नि-र्द्वितीयः शंयुतः सुतः ॥ ६ ॥ तिस्रः कन्या भवन्त्यन्या यासां स भारतः पतिः । भरतस्तु सुतस्तस्य भरत्येका च पुत्रिका ॥ ७ ॥ भरतो भरतस्याग्नेः पावकस्तु प्रजापतेः । महानत्यर्थमहितस्तथा भरतसत्तम ॥ ८ ॥ भरद्वाजस्य भार्य्या तु वीरा वीरस्य पिण्डदा । प्राहुराज्येन तस्येज्यां सोमस्येव द्विजाः शनैः ॥ ९ ॥ हविषा यो

द्वितीयेन सोमेन सह युज्यते। रथप्रभूरथाध्वानः कुम्भरेताः स उच्यते॥ १०॥ भरद्यां जनयन् सिद्धिं भानुं भाभिः समावृणोत्। आग्नेयं मानयन्नित्यमाह्वाने च्वेष स्तूयते॥ ११॥ यस्तु न च्यवते नित्यं यशसा वर्च्चसा श्रिया। अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम्॥ १२॥ विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्च्चिषा ज्वलन्। विपापोऽग्निः सुतस्तस्य सत्यः समयधर्म्मकृत्॥ १३॥ आक्रोशतां हि भूतानां यः करोतीह निष्कृतिम्। अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः॥१४॥ अनुकूर्जन्ति येनेह वेदनार्त्ताः स्वयं जनाः। तस्य पुत्रः स्वनो नाम पावकः स रुजस्करः॥ १५॥ यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति। तं प्राहुरध्यात्मविदो विश्वजिन्नाम-पावकम्॥ १६॥ अन्तरग्निः स्मृतो यस्तु भुक्तं पचति देहिनाम्। स जज्ञे विश्वभुङ्नाम सर्व्वलोकेषु भारत॥१७॥ ब्रह्मचारी यतात्मा च सततं विपुलव्रतः। ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकम्॥ १८॥ पवित्रा गोमती नाम नदी यस्याभवत् प्रिया। तस्मिन् कर्म्माणि सर्व्वाणि क्रियन्ते धर्म्मकर्त्तृभिः॥१९॥ वड़वाग्निः पिबत्यम्भो योऽसौ परमदारुणः। ऊर्द्ध्वभागूर्द्ध्वभाङ्नाम कविः प्राणाश्रितस्तु सः॥ २०॥ उदग्द्वारं हविर्यस्य गृहे नित्यं प्रदीयते। ततः स्विष्टं भवेदाज्यं स्विष्टकृत् परमः स्मृतः॥ २१॥ यः प्रशान्तेषु भूतेषु मन्युर्भवति पावकः। क्रुद्धस्य तरसा जज्ञे मन्यन्ती चाथ पुत्रिका॥ २२॥ स्वाहेति दारुणा क्रूरा सर्व्वभूतेषु तिष्ठति। त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन॥ २३॥ अतुल्यत्वात् कृतो देवैर्नाम्ना कामस्तु पावकः। संहर्षाद्धारयन् क्रोधं धन्वी स्रग्वी रथे स्थितः॥२४॥ समरे नाशयेच्छत्रूनमोघो नाम पावकः। उक्थो नाम महाभाग त्रिभिरुक्थैरभिष्टुतः महावाचन्त्वजनयत् समाश्वासं हि यं विदुः॥२५॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे अष्टादशाधिकद्विशततोऽध्यायः॥ २१८॥

मार्कण्डेय उवाच। कश्यपो ह्यथ वाशिष्ठः प्राणश्च प्राण-पुत्रकः। अग्निराङ्गिरसश्चैव च्यवनस्त्रिसुवर्चकः ॥ १ ॥ अचरत् स तपस्तीव्रं पुत्रार्थं बहुवार्षिकम्। पुत्रं लभेयं धर्मिष्ठं यशसा ब्रह्मणा समम् ॥ २ ॥ महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ। जज्ञे तेजो महार्चिष्मान् पञ्चवर्णः प्रभावनः ॥ ३ ॥ समिद्धोऽग्निः शिरस्तस्य बाहू सूर्य्यनिभौ तथा। त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत ॥ ४ ॥ पञ्चवर्णः स तपसा कृतस्तैः पञ्चभिर्जनैः। पाञ्चजन्यः श्रुतो देवः पञ्चवंशकरस्तु सः ॥ ५ ॥ दशवर्षसहस्राणि तपस्तप्त्वा महातपाः। जनयत् पावकं घोरं पितॄणां स प्रजाः सृजन् ॥ ६ ॥ बृहद्रथन्तरं मूर्द्ध्नो वक्त्राद्वा तरसाहरौ। शिवं नाभ्यां बलादिन्द्रं वायुग्नी प्राणतोऽसृजत् ॥ ७ ॥ बाहुभ्यामनुदात्तौ च विश्वे भूतानि चैव ह। एतान् सृष्ट्वा ततः पञ्च पितॄणा-मसृजत् सुतान् ॥ ८ ॥ बृहद्रथस्य प्रणिधिः कश्यपस्य महत्तरः। भानुरङ्गिरसो धीरः पुत्रो वर्च्चस्यसौभरः ॥ ९ ॥ प्राणस्य चानुदात्तस्तु व्याख्याताः पञ्चविंशतिः। देवान् यज्ञमुषश्चान्यान् सृजत् पञ्चदशोत्तरान् ॥ १० ॥ सुभीममतिभीमञ्च भीमं भीमबलाबलम्। एतान् यज्ञमुषः पञ्च देवानां ह्यसृजत्तपः ॥ ११ ॥ सुमित्रं मित्र-वन्तञ्च मित्रज्ञं मित्रवर्द्धनम्। मित्रधर्माणमित्येतान् देवानभ्य-सृजत्तपः ॥ १२ ॥ सुरप्रवीरं वीरञ्च सुवेशं सुरवर्च्चसम्। सुराणा-मपि हन्तारं पञ्चैतानसृजत्तपः ॥ १३ ॥ त्रिविधं संस्थिता ह्येते पञ्च पञ्च पृथक् पृथक्। मुष्णन्त्यत्र स्थिता ह्येते स्वर्गतो यज्ञ-याजिनः ॥ १४ ॥ तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्धविः। स्पर्द्धया हव्यवाहानां निघ्नन्त्येते हरन्ति च ॥ १५ ॥ वहिर्वेद्यां तदा दानं कुशलैः संप्रवर्त्तितम्। तदेते नोपसर्पन्ति यत्र चाग्निः स्थितो भवेत् ॥ १६ ॥ चिताग्नेरुद्वहन्नाज्यं पक्षाभ्यां तत्र प्रव-र्त्तितम्। मन्त्रैः प्रशमिता ह्येते नेष्टं मुष्णन्ति यज्ञियम् ॥ १७ ॥

बृहदुक्थस्तपस्यैव पुत्रो भूमिमुपाश्रितः। अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरिज्यते ॥ १८ ॥ रथन्तरश्च तपसः पुत्रोऽग्निः परिपठ्यते। मित्रविन्दाय वै तस्मै हविरध्वर्य्यवो विदुः। मुमुदे परमप्रीतः सह पुत्रैर्महायशाः ॥ १९ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे
एकोनविंशत्यधिकद्विशततोऽध्यायः ॥ २१९ ॥

---

मार्कण्डेय उवाच। गुरुभिर्नियमैर्जातो भरतो नाम पावकः। अग्निः पुष्टिमतिर्नाम तुष्टः पुष्टिं प्रयच्छति ॥ १ ॥ भरत्येष प्रजाः सर्वास्ततो भरत उच्यते। अग्निर्यश्शिवो नाम शक्तिपूजापरश्च यः ॥ २ ॥ दुःखार्त्तानाञ्च सर्व्वेषां शिवकृत् सततं शिवः। तपसस्तु फलं दृष्ट्वा सम्प्रवृद्धं तपो महत् ॥ ३ ॥ उद्धर्त्तुकामो मतिमान् पुत्रो जज्ञे पुरन्दरः। ऊष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते ॥ ४ ॥ अग्निश्चापि मनुर्नाम प्राजापत्यमकारयत्। शम्भुमग्निमथ प्राहुर्ब्राह्मणाः वेदपारगाः ॥ ५ ॥ आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभम्। ऊर्ज्जस्करान् हव्यवाहान् सुवर्णसदृशप्रभान् ॥ ६ ॥ ततस्तपो ह्यजनयत् पञ्चयज्ञसुतानिह। प्रशान्तेऽग्निर्महाभागः परिश्रान्तो गवाम्पतिः ॥ ७ ॥ असुरान् जनयन् घोरान्मर्त्त्यांश्चैव पृथग्विधान्। तपसश्च मनुं पुत्रं भानुञ्चाप्यङ्गिराः सृजत् ॥ ८ ॥ बृहद्भानुन्तु तं प्राहुर्ब्राह्मणा वेदपारगाः। भानोर्भार्य्या सुप्रजा तु बृहद्भासा तु सूर्य्यजा ॥ ९ ॥ असृजेतान्तु षट् पुत्रान् शृणु तासां प्रजाविधिम्। दुर्बलानान्तु भूतानामसून् यः सम्प्रयच्छति ॥ १० ॥ तमग्निं बलदं प्राहुः प्रथमं भानुतः सुतम्। यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः ॥ ११ ॥ अग्निः स मन्युमान्नाम द्वितीयो भानुतः सुतः। दर्शे च पौर्णमासे च यस्येह हविरुच्यते ॥ १२ ॥

विष्णुर्नामेह योऽग्निस्तु धृतिमान् नाम सोऽङ्गिराः । इन्द्रेण
सहितं यस्य हविराग्रयणं स्मृतम् ॥ १३ ॥ अग्निराग्रयणो नाम
भानोरेवान्वयस्तु सः । चातुर्मास्येषु नित्यानां हविषां योनिरग्रहः
॥ १४ ॥ चतुर्भिः सहितः पुत्रैर्भानोरेवान्वयस्तु सः । निशा त्वजः-
नयत् कन्यामग्नीषोमावुभौ तथा ॥ १५ ॥ भानोरेवाभवद्भार्य्या
सुषुवे पञ्च पावकान् । पूज्यते हविषाग्रेण चातुर्मास्येषु पावकः
॥ १६ ॥ पर्ज्जन्यसहितः श्रीमानग्निर्वैश्वानरस्तु सः । अस्य लोकस्य
सर्व्वस्य यः प्रभुः परिपठ्यते ॥ १७ ॥ सोऽग्निर्विश्वपतिर्नाम द्वितीयो
वै मनोः सुतः । ततः स्विष्टं भवेदाज्यं स्विष्टकृत् परमस्तु सः
॥ १८ ॥ कन्या सा रोहिणी नाम हिरण्यकशिपोः सुता । कर्म्म-
णासौ बभौ भार्य्या स वह्निः स प्रजापतिः ॥ १९ ॥ प्राणानाश्रित्य
यो देहं प्रवर्त्तयति देहिनाम् । तस्य सन्निहितो नाम शब्दरूपस्य
साधनः ॥ २० ॥ शुक्लकृष्णगतिर्देवो यो बिभर्त्ति हुताशनम् ।
अकल्मषः कल्मषाणां कर्त्ता क्रोधाश्रितस्तु सः ॥ २१ ॥ कपिलं
परमर्षिञ्च यम्प्राहुर्यतयः सदा । अग्निः स कपिलो नाम साङ्ख्य-
योगप्रवर्त्तकः ॥ २२ ॥ अग्रं गच्छन्ति भूतानां येन भूतानि नित्यदा ।
कर्म्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते ॥ २३ ॥ इमानन्यान्
समसृजत् पावकान् प्रथितान् भुवि । अग्निहोत्रस्य दुष्टस्य प्राय-
श्चित्तार्थमुल्बणान् ॥ २४ ॥ संस्पृशेयुर्यदान्योन्यं कथञ्चिद्वायुनाग्नयः ।
इष्टिरष्टाकपालेन कार्य्या वै शुचयेऽग्नये ॥ २५ ॥ दक्षिणाग्निर्यदा
द्वाभ्यां संसृजेत तदा किल । इष्टिरष्टाकपालेन कार्य्या वै वीतये-
ऽग्नये ॥ २६ ॥ यद्यग्नयो हि स्पृश्येयुर्निवेशस्था दवाग्निना ।
इष्टिरष्टाकपालेन कार्य्या तु शुचयेऽग्नये ॥ २७ ॥ अग्निं रजस्वला
वै स्त्री संस्पृशेदग्निहोत्रिकम् । इष्टिरष्टाकपालेन कार्य्या दस्यु-
मतेऽग्नये ॥ २८ ॥ मृतः श्रूयेत यो जीवः परेयुः पशवो यदा ।
इष्टिरष्टाकपालेन कार्य्या सुरमतेऽग्नये ॥ २९ ॥ आर्त्तो न जुहुया-

हन्ति विरावं यस्तु ब्राह्मणः। इष्टिरष्टाकपालेन कार्य्या स्यादुत्तराग्नये ॥ ३० ॥ दर्शञ्च पौर्णमासञ्च यस्य तिष्ठेत् प्रतिष्ठितम्। इष्टिरष्टाकपालेन कार्य्या पथिकृतेऽग्नये ॥ ३१ ॥ सूतिकाग्निर्यदा चाग्निं संस्पृशेदग्निहोत्रिकम्। इष्टिरष्टाकपालेन कार्य्या चाग्निमतेऽग्नये ॥ ३२ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे विंशत्यधिकद्विशततोऽध्यायः ॥ २२० ॥

---

मार्कण्डेय उवाच। आपस्य दुहिता भार्य्या सहस्य परमा प्रिया। भूपतिर्भुवभर्त्ता च जनयत् पावकं परम् ॥ १ ॥ भूतानाञ्चापि सर्व्वेषां यं प्राहुः पावकं पतिम्। आत्मा भुवनभर्त्तेति सान्वयेषु द्विजातिषु ॥ २ ॥ महताञ्चैव भूतानां सर्व्वेषामिह यः पतिः। भगवान् स महातेजा नित्यं चरति पावकः ॥ ३ ॥ अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते। हुतं वहति यो हव्यमस्य लोकस्य पावकः ॥ ४ ॥ अपां गर्भो महाभागः सह पुत्रो महाद्भुतः। भूपतिर्भवभर्त्ता च महतः पतिरुच्यते ॥ ५ ॥ दहन्मृतानि भूतानि तस्याग्निर्भरतोऽभवत्। अग्निष्टोमे च नियतः क्रतुश्रेष्ठो भरस्य तु ॥ ६ ॥ स वह्निः प्रथमो नित्यं देवैरन्विष्यते प्रभुः। आयान्तं नियतं दृष्ट्वा प्रविवेशार्णवं भयात् ॥ ७ ॥ देवास्तत्राधिगच्छन्ति मार्गमाणा यथादिशम्। दृष्ट्वा त्वग्निरथर्व्वाणं ततो वचनमब्रवीत् ॥ ८ ॥ देवानां वह हव्यं त्वमहं वीर सुदुर्ब्बलः। अथ त्वं गच्छ मध्वक्षं प्रियमेतत् कुरुष्व मे ॥ ९ ॥ प्रेष्य चाग्निरथर्व्वाणमन्यं देशं ततोऽगमत्। मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत् ॥ १० ॥ भक्ष्या वै विविधैर्भावैर्भविष्यथ शरीरिणाम्। अथर्व्वाणं तथा चापि हव्यवाहोऽब्रवीदिदं ॥ ११ ॥ अनुनीयमानो हि भृशं देव-

वाक्यादिचेतनः । नैच्छद्वोढुं हविः सर्वं शरीरञ्चापि सोऽत्यजत् ॥ १२ ॥ स तच्छरीरं सन्त्यज्य प्रविवेश धरान्तदा । भूमिं स्पृष्टाऽसृजद्धातून् पृथक् पृथगतीव हि ॥ १३ ॥ पूयात् स गन्धं तेजश्च अस्थिभ्यो देवदारु च । श्लेष्मणः स्फाटिकं तस्य पित्तामारकतं तथा ॥ १४ ॥ यकृत् कृष्णायसं तस्य त्रिभिरेव प्रभुः प्रजाः । नखास्तस्याभ्रपटलं शिराजालानि विद्रुमम् ॥ १५ ॥ शरीराद्विविधाश्चान्ये धातवोऽस्याभवन्नृप । एवं त्यक्त्वा शरीरञ्च परमे तपसि स्थितः ॥ १६ ॥ भृग्वङ्गिरादिभिर्भूयस्तपसोत्थापितस्तदा । भृशं जज्वाल तेजस्वी तपसाप्यायितः शिखी ॥ १७ ॥ दृष्ट्वा ऋषिं भयाच्चापि प्रविवेश महार्णवम् । तस्मिन्नष्टे जगद्भितमथर्वाणमथाश्रितम् ॥ १८ ॥ अर्च्चयामासुरेवैनमथर्वाणं सुरादयः । अथर्वा त्वसृजल्लोकानात्मनालोक्य पावकम् ॥ १९ ॥ मिषतां सर्वभूतानामुन्ममाथ महार्णवम् । एवमग्निर्भगवता नष्टः पूर्वमथर्वणा ॥ २० ॥ आहूतः सर्वभूतानां हव्यं वहति सर्वदा । एवं त्वजनयद्धिष्ण्यान् वेदोक्तान् विविधान् बहून् ॥ २१ ॥ विचरन् विविधान् देशान् भ्रममाणस्तु तत्र वै । सिन्धुं नदं पञ्चनदं देविकाथ सरस्वती ॥ २२ ॥ गङ्गा च शतकुम्भा च शरयूर्गण्डसाह्वया । चर्मण्वती मही चैव मेध्या मेधातिथिस्तदा ॥ २३ ॥ ताम्रावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी । तमसा नर्म्मदा चैव नदी गोदावरी तथा ॥ २४ ॥ वेणोपवेणा भीमा च वड़वा चैव भारत । भारती सुप्रयोगा च कावेरी मुर्म्मुरा तथा ॥ २५ ॥ तुङ्गवेणा कृष्णवेणा कपिला शोण एव च । एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्त्तिताः ॥ २६ ॥ अद्भुतस्य ...या भार्य्या तस्य पुत्रो विभूरसिः । यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव तु ॥२७॥ अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसी प्रजाः । अत्रिः पुत्रान् स्रष्टुकामांस्तानेवात्मन्यधारयत् ॥ २८ ॥ तस्य तद्ब्रह्मणः काया-

विहरन्ति हुताशनाः । एवमेते महात्मनः कीर्त्तितास्तेऽग्नयो मया ॥ २९ ॥ अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः । अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्त्तितम् ॥ ३० ॥ तादृशं विद्धि सर्व्वेषामेको ह्येष हुताशन । एक एवैष भगवान् विज्ञेयः प्रथमोऽङ्गिरा ॥ ३१ ॥ बहुधा निःसृतः कायात् ज्योतिष्टोमक्रतुर्य्यथा । इत्येष वंशः सुमहानग्नीनां कीर्त्तितो मया । योऽर्च्चितो विविधैर्मन्त्रैर्हव्यं वहति देहिनाम् ॥ ३२ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे-
एकविंशत्यधिकद्विशततोऽध्यायः ॥ २२१ ॥

---

मार्कण्डेय उवाच । अग्नीनां विविधा वंशाः कीर्त्तितास्ते मयानघ । शृणु जन्म तु कौरव्य कार्त्तिकेयस्य धीमतः ॥ १ ॥ अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसः । जातं ब्रह्मर्षिभार्य्याभिर्ब्रह्मण्यं कीर्त्तिवर्द्धनम् ॥ २ ॥ देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परम् । तत्राजयन् सदा देवान् दानवा घोररूपिणः ॥ ३ ॥ बध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरन्दरः । स्वसैन्यनायकार्थाय चिन्तामाप भृशं तदा ॥ ४ ॥ देवसेनां दानवैर्हि भग्नां दृष्ट्वा महाबलः । पालयेद्वीर्य्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥ ५ ॥ स शैलं मानसं गत्वा ध्यायन्नर्थमिदं भृशम् । शुश्रावार्त्तस्वरं घोरमथ मुक्तं स्त्रिया तदा ॥ ६ ॥ अभिधावतु मां कश्चित् पुरुषस्त्रातु चैव ह । पतिञ्च मे प्रदिशतु स्वयं वा प[ति]रस्तु मे ॥ ७ ॥ पुरन्दरस्तु तामाह माभैर्नास्ति भयं तव । एवमुक्त्वा ततोऽपश्यत् केशिनं स्थितमग्रतः ॥ ८ ॥ किरीटिनं गदापाणिं धातुमन्तमिवाचलम् । हस्ते गृहीत्वा कन्यां तामथैनं वासवोऽब्रवीत् ॥ ९ ॥ अनार्य्यकर्म्मन् कस्मात्त्वमिमां

कन्यां जिहीर्षसि। वज्रिणं मां विजानीहि विरमास्याः प्रबाधनात् ॥ १० ॥

केश्युवाच। विसृजस्व त्वमेवैनां शक्रैषा प्रार्थिता मया। क्षमन्ते जीवतो गन्तुं स्वपुरं पाकशासन ॥ ११ ॥ एवमुक्त्वा गदां केशी चिक्षेपेन्द्रवधाय वै। तामापतन्तीं चिच्छेद मध्ये वज्रेण वासवः ॥ १२ ॥ अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत्। तदापतन्तं संप्रेक्ष्य शैलशृङ्गं शतक्रतुः ॥ १३ ॥ बिभेद राजन् वज्रेण भुवि तन्निपपात च। पतता तु तदा केशी तेन शृङ्गेण ताड़ितः ॥ १४ ॥ हित्वा कन्यां महाभागां प्राद्रवद्भृशपीड़ितः। अपयातेऽसुरे तस्मिंस्तां कन्यां वासवोऽब्रवीत्। कासि कस्यासि किञ्चेह कुरुषे त्वं शुभानने ॥ १५ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्णि स्कन्दोत्पत्तौ द्वाविंशत्यधिकद्विशततोऽध्यायः ॥ २२२ ॥

---

कन्योवाच। अहं प्रजापतेः कन्या देवसेनेति विश्रुता। भगिनी मे दैत्यसेना सा पूर्वं केशिना हृता ॥ १ ॥ सदैवावां भगिन्यौ तु सखीभिः सह मानसम्। आगच्छावेह रत्यर्थमनुज्ञाप्य प्रजापतिम् ॥ २ ॥ नित्यञ्चावां प्रार्थयते हर्त्तुं केशी महासुरः। इच्छत्येनं दैत्यसेना न चाहं पाकशासन ॥ ३ ॥ सा हृतानेन भगवन् मुक्ताहं त्वद्बलेन तु। त्वया देवेन्द्र निर्द्दिष्टं पतिमिच्छामि दुर्ज्जयम् ॥ ४ ॥

इन्द्र उवाच। मम मातृस्वसेया त्वं माता दाक्षायणी मम। आख्यातन्त्वहमिच्छामि स्वयमात्मबलं त्वया ॥ ५ ॥

कन्योवाच। अबलाहं महाबाहो पतिस्तु बलवान्मम। वरदानात् पितुर्भावी सुरासुरनमस्कृतः ॥ ६ ॥

इन्द्र उवाच । कीदृशन्तु बलं देवि पत्युस्तव भविष्यति । एत-
दिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते ॥ ७ ॥

कन्योवाच । देवदानवयक्षाणां किन्नरोरगरक्षसाम् । जेता
यो दुष्टदैत्यानां महावीर्य्यो महाबलः ॥ ८ ॥ यस्तु सर्व्वाणि भूतानि
त्वया सह विजेष्यति । स हि मे भविता भर्त्ता ब्रह्मण्यः कीर्त्ति-
वर्द्धनः ॥ ९ ॥

मार्कण्डेय उवाच । इन्द्रस्तस्या वचः श्रुत्वा दुःखितोऽचिन्त-
यद्भृशम् । अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते ॥ १० ॥
अथापश्यत् स उदये भास्करं भास्करद्युतिः । सोमञ्चैव महाभागं
विशमानं दिवाकरम् ॥ ११ ॥ अमावास्यां प्रवृत्तायां मुहूर्त्ते रौद्र
एव तु । देवासुरञ्च संग्रामं सोऽपश्यदुदये गिरौ ॥ १२ ॥ लोहि-
तैश्च घनैर्युक्तां पूर्व्वां सन्ध्यां शतक्रतुः । अपश्यल्लोहितोदञ्च भगवान्
वरुणालयम् ॥ १३ ॥ भृगुभिश्चाङ्गिरोभिश्च हुतं मन्त्रैः पृथग्विधैः ।
हव्यं गृहीत्वा वह्निञ्च प्रविशन्तं दिवाकरम् ॥ १४ ॥ पर्व्व चैव
चतुर्विंशं तदा सूर्य्यमुपस्थितम् । तथा धर्म्मगतं रौद्रं सोमं सूर्य्य-
गतञ्च तम् ॥ १५ ॥ समालोक्यैकतामेवं शशिनो भास्करस्य च ।
समवायन्तु तं रौद्रं दृष्ट्वा शक्रोऽन्वचिन्तयत् ॥ १६ ॥ सूर्य्याचन्द्र-
मसोर्घोरं दृश्यते परिवेशनम् । एतस्मिन्नेव रात्रान्ते महद्युद्धन्तु
शंसति ॥ १७ ॥ सरित्सिन्धुरपीयन्तु प्रत्यसृग्वाहिनी भृशम् ।
शृगाल्यग्निवक्त्रा तु प्रत्यादित्यं विराविणी ॥ १८ ॥ एष रौद्रश्च
सङ्घातो महान् युक्तश्च तेजसा । सोमस्य वह्निसूर्य्याभ्यामद्भुतोऽयं
समागमः ॥ १९ ॥ जनयेद्यं सुतं सोमः सोऽस्या देव्याः पति-
र्भवेत् । अग्निश्चैतैर्गुणैर्युक्तः सर्व्वैरग्निश्च देवता ॥ २० ॥ एष
चेज्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् । एवं सञ्चिन्त्य भगवान्
ब्रह्मलोकं तदा गतः ॥ २१ ॥ गृहीत्वा देवसेनान्तामवन्दत् स
पितामहम् । उवाच चास्या देव्यास्त्वं साधु शूरं पतिं दिश ॥२२ ॥

ब्रह्मोवाच। यथैव चिन्तितं कार्य्यं त्वया दानवसूदन। तथा स भविता गर्भो बलवानुरुविक्रमः ॥ २३ ॥ स भविष्यति सेनानी-स्त्वया सह शतक्रतो। अस्या देव्याः पतिश्चैव स भविष्यति वीर्य्य-वान् ॥ २४ ॥ एतच्छ्रुत्वा नमस्तस्मै कृत्वासौ सह कन्यया। तत्रा-भ्यगच्छद्देवेन्द्रो यत्र देवर्षयोऽभवन् ॥ २५ ॥ वशिष्ठप्रमुखा मुख्या विप्रेन्द्राः सुमहाबलाः। भागार्थं तपसो यातुं तेषां सोमन्तथा-ध्वरे ॥ २६ ॥ पिपासवो ययुर्देवाः शतक्रतुपरोगमाः। इष्टिं कृत्वा यथान्यायं सुसमिद्धे हुताशने ॥ २७ ॥ जुहुवुस्ते महात्मानो हव्यं सर्वदिवौकसाम्। समाहूतो हुतवहः सोऽद्भुतः सूर्य्यमण्डलात् ॥ २८ ॥ विनिःसृत्य ययौ वह्निर्वाग्यतो विधिवत् प्रभुः। आग-म्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतम् ॥ २९ ॥ स तत्र विविधं हव्यं प्रतिगृह्य हुताशनः। ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत् दिवौकसाम् ॥ ३० ॥ निष्क्रामंश्चाप्यपश्यत् स पत्नीस्तेषां महात्मनाम्। स्वेष्वा-सनेषूपविष्टाः स्वपन्तीश्च यथासुखम् ॥ ३१ ॥ रुक्मवेदिनिभा-स्तास्तु चन्द्रलेखा इवामलाः। हुताशनार्च्चिःप्रतिमाः सर्वास्तारा इवाद्भुताः ॥ ३२ ॥ स तत्र तेन मनसा बभूव क्षुभितेन्द्रियः। पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ ॥ ३३ ॥ भूयः स चिन्तयामास न न्याय्यं क्षुभितो ह्यहम्। साध्वीः पत्नीर्द्विजे-न्द्राणामकामाः कामयाम्यहम् ॥ ३४ ॥ नैताः शक्या मया द्रष्टुं स्प्रष्टुं वाप्यनिमित्ततः। गार्हपत्यं समाविश्य तस्मात् पश्याम्य-भीक्ष्णशः ॥ ३५ ॥

मार्कण्डेय उवाच। संस्पृशन्निव सर्वास्ताः शिखाभिः काञ्चन-प्रभाः। पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः ॥ ३६ ॥ निरुष्य तत्र सुचिरमेवं वह्निर्वशं गतः। मनस्तासु विनिःक्षिप्य कामयानो वराङ्गनाः ॥ ३७ ॥ कामसन्तप्तहृदयो देहत्यागविनिश्चितः। अलाभे ब्राह्मणस्त्रीणामग्निर्वनमुपागमत् ॥ ३८ ॥ स्वाहा तं दक्षदुहिता

प्रथमं कामयत्तदा । सा तस्य छिद्रमन्वैच्छच्चिरात् प्रभृति भाविनी ॥ ३९ ॥ अप्रमत्तस्य देवस्य न च पश्यत्यनिन्दिता । सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतम् ॥ ४० ॥ तत्त्वतः कामसन्तप्तं चिन्तयामास भाविनी । अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकम् ॥ ४१ ॥ कामयिष्यामि कामार्त्ता तासां रूपेण मोहितम् । एवं कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ॥ ४२ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोत्पत्तौ त्रयोविंशत्यधिकद्विशततोऽध्यायः ॥ २२३ ॥

---

मार्कण्डेय उवाच । शिवा भार्य्या त्वङ्गिरसः शीलरूपगुणान्विता । तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप ॥ १ ॥ जगाम पावकाभ्याशं तञ्चोवाच वराङ्गना । मामग्ने कामसन्तप्तां त्वं कामयितुमर्हसि ॥ २ ॥ करिष्यसि न चेदेवं मृतां मामुपधारय । अहमङ्गिरसो भार्य्या शिवानाम हुताशन । शिष्टाभिः प्रहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ॥ ३ ॥

अग्निरुवाच । कथं मां त्वं विजानीषे कामार्त्तमितराः कथम् । यास्त्वया कीर्त्तिताः सर्वाः सप्तर्षीणां प्रियाः स्त्रियः ॥ ४ ॥

शिवोवाच । अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव । त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषितास्मि तवान्तिकम् ॥ ५ ॥ मैथुनायेह संप्राप्ता कामं प्राप्तुं द्रुतञ्चर । यातयो मां प्रतीक्षन्ते गमिष्यामि हुताशन ॥ ६ ॥

मार्कण्डेय उवाच । ततोऽग्निरुपयेमे तां शिवां प्रीतां मुदायुतः । प्रीत्या देवी समायुक्ता शुक्रं जग्राह पाणिना ॥ ७ ॥ अचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने । ते ब्राह्मणीनामनृतं

दोषं वच्यन्ति पावके ॥ ८॥ तस्मादेतद्रच्चमाणा गरुडी सम्भवा-
म्यहम्। वनान्निर्गमनञ्चैव सुखं मम भविष्यति ॥ ९॥

मार्कण्डेय उवाच। सुपर्णी सा तदा भूत्वा निर्जगाम महा-
वनात्। अपश्यत् पर्वतं श्वेतं शरस्तम्बैः सुसंवृतम्। दृष्टिविषैः
सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः ॥ १०॥ रक्षोभिश्च पिशाचैश्च रौद्रै-
र्भूतगणैस्तथा। राक्षसीभिश्च सम्पूर्णमनेकैश्च मृगद्विजैः ॥ ११॥
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम्। प्राक्षिपत् काञ्चने कुण्डे
शुक्रं सा त्वरिता शुभा ॥ १२॥ सप्तानामपि सा देवी सप्तर्षीणां
महात्मनाम्। पत्नीसरूपतां कृत्वा कथयामास पावकम् ॥ १३॥
दिव्यं रूपमरुन्धत्याः कर्त्तुं न शकितं तया। तस्यास्तपःप्रभावेण
भर्त्तुः शुश्रूषणेन च ॥ १४॥ षट्कृत्वस्तत्तु निःक्षिप्तमग्नेरेतः कुरू-
त्तम। तस्मिन् कुण्डे प्रतिपदि कामिन्या स्वाहया तदा ॥ १५॥
तत्स्कन्नं तेजसा तत्र संवृतं जनयत् सुतम्। ऋषिभिः पूजितं
स्कन्नमनयत् स्कन्दतां ततः ॥ १६॥ षट्शिरा द्विगुणश्रोत्रो द्वाद-
शाक्षिभुजक्रमः। एकग्रीवैकजठरः कुमारः समपद्यत ॥ १७॥
द्वितीयायामभिव्यक्तस्तृतीयायां शिशुर्बभौ। अङ्गप्रत्यङ्गसम्भूतश्चतु-
र्थ्यमभवद्गुहः ॥ १८॥ लोहिताभ्रेण महता संवृतः सह-
विद्युता। लोहिताभ्रे सुमहति भाति सूर्य्य इवोदितः ॥ १९॥
गृहीतन्तु धनुस्तेन विपुलं लोमहर्षणम्। न्यस्तं यत्त्रिपुरघ्नेन
सुरारिविनिकृन्तनम् ॥ २०॥ तद्गृहीत्वा धनुःश्रेष्ठं ननाद बल-
वांस्तदा। सम्मोहयन्निवेमान् स त्रीन् लोकान् सचराचरान् ॥२१॥
तस्य तं निनदं श्रुत्वा महामेघौघनिस्वनम्। उत्पेततुर्महानागौ
चित्रश्चैरावतश्च ह ॥ २२॥ तावापतन्तौ सम्प्रेक्ष्य स बालोऽर्क-
समद्युतिः। द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिञ्चान्येन पाणिना
॥ २३॥ अपरेणाग्निदायादस्ताम्रचूड़ं भुजेन सः। महाकाय-
मुपश्लिष्टं कुक्कुटं बलिनाम्वरम् ॥२४॥ गृहीत्वा व्यनदद्भीमं चिक्रीड़

च महाभुजः । द्वाभ्यां भुजाभ्यां बलवान् गृहीत्वा शङ्खमुत्तमम् ॥ २५ ॥ प्राध्मापयत भूतानां त्रासनं बलिनामपि । द्वाभ्यां भुजाभ्यामाकाशं बहुशोऽभि जघान च ॥ २६ ॥ क्रीड़न् भाति महासेनस्त्रीन् लोकान् वदनैः पिबन् । पर्व्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा ॥ २७ ॥ स तस्य पर्व्वतस्याग्रे निषण्णोऽद्भुतविक्रमः । व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः ॥ २८ ॥ स पश्यन् विविधान् भावांश्चकार निनदं पुनः । तस्य तं निनदं श्रुत्वा न्यपतन् बहुधा जनाः ॥ २९ ॥ भीतास्चोद्विग्नमनसस्तमेव शरणं ययुः । ये तु तं संश्रिता देवं नानावर्णास्तदा जनाः ॥ ३० ॥ तानप्याहुः पारिषदान् ब्राह्मणान् सुमहाबलान् । स तूत्थाय महाबाहुरुपसान्त्व्य च तान् जनान् ॥ ३१ ॥ धनुर्विकृष्य व्यसृजद्बाणान् श्वेते महागिरौ । बिभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतम् ॥ ३२ ॥ तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्व्वतम् । स विशीर्णोऽपतच्छैलो भृशमार्त्तस्वरान् रुवन् ॥ ३३ ॥ तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं तदा । स तं नादं भृशार्त्तानां श्रुत्वापि बलिनाम्वरः ॥ ३४ ॥ न प्रव्यथदमेयात्मा शक्तिमुद्यम्य चानदत् । सा तदा विमला शक्तिः क्षिप्ता तेन महात्मना ॥ ३५ ॥ बिभेद शिखरं घोरं श्वेतस्य तरसा गिरेः । स तेनाभिहतो दीर्णो गिरिः श्वेतोऽचलैः सह ॥ ३६ ॥ उत्पपात महीं त्यक्त्वा भीतः स सुमहात्मनः । ततः प्रव्यथिता भूमिर्व्यशीर्य्यत समन्ततः ॥ ३७ ॥ आर्त्ता स्कन्दं समासाद्य पुनर्बलवती बभौ । पर्व्वताश्च नमस्कृत्य तमेव पृथिवीं गताः । अथैनमभजल्लोकः स्कन्दं शुक्लस्य पञ्चमीम् ॥ ३८ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोत्पत्तौ चतुर्विंशत्यधिकद्विशततोऽध्यायः ॥ २२४ ॥

---

मार्कण्डेय उवाच। तस्मिन् जाते महासत्त्वे महासेने महाबले। समुत्तस्थुर्महोत्पाता घोररूपाः पृथग्विधाः ॥ १ ॥ स्त्रीपुंसोर्विपरीतञ्च तथा द्वन्द्वानि यानि च। ग्रहा दीप्ता दिशं खञ्च रराम च मही भृशम् ॥ २ ॥ ऋषयश्च महाघोरान् दृष्ट्वोत्पातान् समन्ततः। अकुर्वन् शान्तिमुद्विग्ना लोकानां लोकभावनाः ॥ ३ ॥ निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः। तेऽब्रुवन्नेष नोऽनर्थं पावकेनाहितो महान् ॥ ४ ॥ सङ्गम्य षड्भिः पत्नीभिः सप्तर्षीणामिति स्म ह। अपरे गरुडीमाहुस्त्वयानर्थोऽयमाहृतः ॥ ५ ॥ यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती। न तु तत्स्वाहया कर्म कृतं जानाति वै जनः ॥ ६ ॥ सुपर्णी तु वचः श्रुत्वा ममायं तनयस्त्विति। उपगम्य शनैः स्कन्दमाहाहं जननी तव ॥ ७ ॥ अथ सप्तर्षयः श्रुत्वा जातं पुत्रं महौजसम्। तत्यजुः षट् तदा पत्नीर्विना देवीमरुन्धतीम् ॥ ८ ॥ षड्भिरेव तदा जातमाहुस्तद्वनवासिनः सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत ॥ ९ ॥ अहं जाने नैतदेवमिति राजन् पुनः पुनः। विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः ॥ १० ॥ पावकं कामसन्तप्तमदृष्टः पृष्ठतोऽन्वगात्। तत्तेन निखिलं सर्वमवबुद्धं यथातथम् ॥ ११ ॥ विश्वासेनस्य प्रथमं कुमारं शरणङ्गतः। स्तवं दिव्यं संप्रचक्रे महामित्रस्तु चापि सः ॥ १२ ॥ मङ्गलानि च सर्वाणि कौमाराणि त्रयोदश। जातकर्मादिकास्तस्य क्रियाश्चक्रे महामुनिः ॥ १३ ॥ षड्वक्त्रस्य तु माहात्म्यं कुक्कुटस्य तु साधनम्। शक्त्या देव्याः साधनञ्च तथा परिषदामपि ॥ १४ ॥ विश्वामित्रश्चकारैतत् कर्म लोकहिताय वै। तस्मादृषिकुमारस्य विश्वामित्रोऽभवत् प्रिया ॥ १५ ॥ अन्वजानाच्च स्वाहाया रूपान्यत्वं महामुनिः। अब्रवीच्च मुनीन् सर्वान्नापराध्यन्ति वै स्त्रियः। श्रुत्वा तु तत्त्वतस्तस्मात्ते पत्नीः सर्वयोऽत्यजन् ॥ १६ ॥

मार्कण्डेय उवाच। स्कन्दं श्रुत्वा तदा देवा वासवं सहिता ब्रुवन्। अविषह्यं बलं स्कन्दे जहि शक्राशु माचिरम्। यदि वा न निहंस्येनं देवेन्द्रोऽयं भविष्यति ॥ १७ ॥ त्रैलोक्यं सन्निगृह्यास्मांस्त्वाञ्च शक्र महाबलः। स तानुवाच व्यथितो बालोऽयं सुमहाबलः ॥ १८ ॥ स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत्। न बालमुत्सहे हन्तुमिति शक्रः प्रभाषते ॥ १९ ॥ तेऽब्रुवन्नास्ति ते वीर्य्यं यत एवं प्रभाषसे। सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः ॥ २० ॥ कामवीर्य्या घ्नन्तु चैनं तथेत्युक्त्वा च ता ययुः। तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः ॥ २१ ॥ अशक्योऽयं विचिन्त्यैवं तमेव शरणं ययुः। ऊचुश्चैनं त्वमस्माकं पुत्रो भव महाबल ॥ २२ ॥ अभिनन्दस्व नः सर्वाः प्रस्नुताः स्नेहविक्लवाः। तासां तद्वचनं श्रुत्वा पातुकामस्तनान् प्रभुः ॥ २३ ॥ ताः संपूज्य महासेनः कामांस्तासां प्रदाय सः। अपश्यदग्निमायान्तं पितरं बलिनं बली ॥ २४ ॥ स तु संपूजितस्तेन सह मातृगणेन च। परिवार्य्य महासेनं रक्षमाणः स्थितः शिवः ॥ २५ ॥ सर्वासां या तु मातृणां नारी क्रोधसमुद्भवा। धात्री सपुत्रवत् स्कन्दं शूलहस्ताभ्यरक्षत ॥ २६ ॥ लोहितस्योदधेः कन्या क्रूरा लोहितभोजना। परिष्वज्य महासेनं पुत्रवत्पर्य्यरक्षत ॥ २७ ॥ अग्निर्भूत्वा नैगमेयश्छागवक्त्रो बहुप्रजः। रमयामास शैलस्थं बालं क्रीड़नकैरिव ॥ २८ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि स्कन्दोत्पत्तौ
पञ्चविंशत्यधिकद्विशततोऽध्यायः ॥ २२५ ॥

---

मार्कण्डेय उवाच। ग्रहाः सोपग्रहाश्चैव ऋषयो मातर-
स्तथा। हुताशनमुखाश्चैव दृप्ताः पारिषदाङ्गणाः ॥ १ ॥ एते
चान्ये च बहवो घोरास्त्रिदिववासिनः। परिवार्य्य महासेनं स्थिता
मातृगणैः सह ॥ २ ॥ सन्दिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरे-
श्वरः। आरुह्यैरावतं स्कन्दं प्रययौ दैवतैः सह ॥ ३ ॥ आदाय
वज्रं बलवान् सर्व्वैर्द्देवगणैर्वृतः। विजिघांसुर्महासेनमिन्द्रस्तूर्ण-
तरं ययौ ॥ ४ ॥ उग्रं तच्च महानादं देवानीकं महाप्रभम्।
विचित्रध्वजसन्नाहं नानावाहनकार्म्मुकम् ॥ ५ ॥ प्रवराम्बरसंवीतं
श्रिया जुष्टमलङ्कृतम्। विजिघांसुं तमायान्तं कुमारः शक्रमन्व-
यात् ॥ ६ ॥ विनदन् पार्थ देवेशो द्रुतं याति महाबलः। संहर्ष-
यन् देवसेनां जिघांसुः पावकात्मजम् ॥ ७ ॥ संपूज्यमानस्त्रिदशै-
स्तथैव परमर्षिभिः। समीपमथ संप्राप्तः कार्त्तिकेयस्य वासवः
॥ ८ ॥ सिंहनादं ततश्चक्रे देवेशः सहितैः सुरैः। गुहोऽपि शब्दं
तं श्रुत्वा व्यनदत् सागरो यथा ॥ ९ ॥ तस्य शब्देन महता समु-
द्भूतोदधिप्रभम्। बभ्राम तत्र तत्रैव देवसैन्यमचेतनम् ॥ १० ॥
जिघांसूनुपसम्प्राप्तान् देवान् दृष्ट्वा स पावकिः। विससर्ज्ज मुखात्
क्रुद्धः प्रवृद्धाः पावकार्च्चिषः ॥ ११ ॥ अदहद्देवसैन्यानि वेपमानानि
भूतले। ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः ॥ १२ ॥ प्रच्युताः
सहसा भान्ति व्यस्तास्तारागणा इव। दह्यमानाः प्रपन्नास्ते
शरणं पावकात्मजम् ॥ १३ ॥ देवा वज्रधरं त्यक्त्वा ततः शान्ति-
मुपागताः। त्यक्तो देवैस्ततः स्कन्दे वज्रं शक्रो न्यपातयत् ॥ १४ ॥
तद्विसृष्टं जघानाशु पार्श्वं स्कन्दस्य दक्षिणम्। बिभेद च महा-
राज पार्श्वं यस्य महात्मनः ॥१५॥ वज्रप्रहारात् स्कन्दस्य सञ्जातः
पुरुषोऽपरः। युवा काञ्चनसन्नाहः शक्तिधृग्दिव्यकुण्डलः ॥१६॥
यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत्। सञ्जातमपरं दृष्ट्वा
कालानलसमद्युतिम् ॥ १७ ॥ भयादिन्द्रस्तु तं स्कन्दं प्राञ्जलिः

शरणं गतः । तस्याभयं ददौ स्कन्दः सहसैन्यस्य सत्तमः । ततः प्रहृष्टा स्त्रिदशा वादित्राण्यभ्यवादयन् ॥ १८ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दशक्रागमने षड्‌विंशत्याधिकद्विशततोऽध्यायः ॥ २२६ ॥

---

मार्कण्डेय उवाच । स्कन्दपारिषदान् घोरान् शृणुष्वाद्भुतदर्शनान् । वज्रप्रहारात् स्कन्दस्य जज्ञुस्तत्र कुमारकाः ॥ १ ॥ ये हरन्ति शिशून् जातान् गर्भस्थांश्चैव दारुणाः । वज्रप्रहारात् कन्याश्च जज्ञिरेऽस्य महाबलाः ॥ २ ॥ कुमारास्ते विशाखञ्च पितृत्वे समकल्पयन् । स भूत्वा भगवान् संख्ये रक्षंश्छागमुखस्तदा ॥ ३ ॥ वृतः कन्यागणैः सर्वैरात्मीयैः सह पुत्रकैः । मातॄणां प्रेक्षतीनाञ्च भद्रशाखश्च कौशलः ॥ ४ ॥ ततः कुमारं पितरं स्कन्दमाहुर्जना भुवि । रुद्रमग्निमुमां स्वाहां प्रदेशेषु महाबलम् ॥ ५ ॥ यजन्ति पुत्रकामाश्च पुत्रिणश्च सदा जनाः । एतास्त्वजनयत् कन्यास्तपोनाम हुताशनः । किं करोमीति ताः स्कन्दं संप्राप्ताः समभाषयन् ॥ ६ ॥

कुमार्य्य ऊचुः । भवेम सर्व्वलोकस्य मातरो वयमुत्तमाः । प्रसादात्तव पूज्याश्च प्रियमेतत् कुरुष्व नः । सोऽब्रवीद्बाढमित्येव भविष्यध्वं पृथग्विधाः ॥ ७ ॥ शिवाश्चैवाशिवाश्चैव पुनः पुनरुदारधीः । ततः सङ्कल्प्य पुत्रत्वे स्कन्दं मातृगणोऽगमत् ॥ ८ ॥ काकी च हलिमा चैव मालिनी वृंहिका तथा । आर्य्या पलाला वैमित्रा सप्तैताः शिशुमातरः ॥ ९ ॥ एतासां वीर्य्यसम्पन्नः शिशुर्नामातिदारुणः । स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयङ्करः ॥ १० ॥ एष वीराष्टकः प्रोक्तः स्कन्दमातृगणोद्भव । छागवक्त्रेण सहितो नवकः परिकीर्त्त्यते ॥ ११ ॥ षष्ठं छागमयं वक्त्रं स्कन्द-

स्यैवेति विद्धि तत् । षट्शिरोऽभ्यन्तरं राजन् नित्यं मातृगणार्चितम् ॥ १२ ॥ षष्ठान्तु प्रवरं तस्य शीर्षाणामिह शब्द्यते । शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह ॥ १३ ॥ इत्येतद्द्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् । तत्र युद्धं महाघोरं वृत्तं षष्ठ्यां जनाधिप ॥ १४ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि स्कन्दोपाख्याने सप्तविंशत्यधिकद्विशततोऽध्यायः ॥ २२७ ॥

---

मार्कण्डेय उवाच । उपविष्टन्तु तं स्कन्दं हिरण्यकवचस्रजम् । हिरण्यचूड़मुकुटं हिरण्याक्षं महाप्रभम् ॥ १ ॥ लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमम् । सर्वलक्षणसम्पन्नं त्रैलोक्यस्यापि सुप्रियम् ॥ २ ॥ ततस्तं वरदं शूरं युवानं मृष्टकुण्डलम् । अभजत् पद्मरूपा श्रीः स्वयमेव शरीरिणी ॥ ३ ॥ श्रिया जुष्टः पृथुयशाः सुकुमारवरस्तदा । निषण्णो दृश्यते भूतैः पौर्णमास्यां यथा शशी ॥ ४ ॥ अपूजयन्महात्मानो ब्राह्मणास्तं महाबलम् । इदमाहुस्तदा चैव स्कन्दं तत्र महर्षयः ॥ ५ ॥

ऋषय ऊचुः । हिरण्यगर्भ भद्रन्ते लोकानां शङ्करो भव । त्वया षड्रात्रजातेन सर्वलोका वशीकृताः ॥ ६ ॥ अभयञ्च पुनर्दत्तं त्वयैवैषां सुरोत्तम । तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयङ्करः ॥ ७ ॥

स्कन्द उवाच । किमिन्द्रः सर्वलोकानां करोतीह तपोधनाः । कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः ॥ ८ ॥

ऋषय ऊचुः । इन्द्रो ददाति भूतानां बलं तेजः प्रजाः सुखम् । तुष्टः प्रयच्छति तथा सर्वान् कामान् सुरेश्वरः ॥ ९ ॥ दुर्वृत्तानां संहरति वृत्तस्थानां प्रयच्छति । अनुशास्ति च भूतानि कार्य्येषु

बलसूदनः १० ॥ असूर्य्यं च भवेत् सूर्य्यस्तथाचन्द्रे च चन्द्रमाः। भवत्यग्निश्च वायुश्च पृथिव्यापश्च कारणैः ॥ ११ ॥ एतदिन्द्रेण कर्त्तव्यमिन्द्रे हि विपुलं बलम्। त्वञ्च वीर बलिश्रेष्ठस्तस्मादिन्द्रो भवस्व नः ॥ १२ ॥

शक्र उवाच। भवस्वेन्द्रो महाबाहो सर्व्वेषां नः सुखावहः। अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम ॥ १३ ॥

स्कन्द उवाच। शाधि त्वमेव त्रैलोक्यमव्यग्रो विजये रतः। अहन्ते किङ्करः शक्र न ममेन्द्रत्वमीप्सितम् ॥ १४ ॥

शक्र उवाच। बलं तवाद्भुतं वीर त्वं देवानामरीन् जहि। अवज्ञास्यन्ति मां लोका वीर्य्येण तव विस्मिताः ॥ १५ ॥ इन्द्रत्वे तु स्थितं वीर बलहीनं पराजितम्। आवयोश्च मिथो-भेदे प्रयतिष्यन्त्यतन्द्रिताः ॥ १६ ॥ भेदिते च त्वयि विभो लोको द्वैध-मुपैष्यति। द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा ॥ १७ ॥ विग्रहः संप्रवर्त्तेत भूतभेदान्महाबल। तत्र त्वं मां रणे तात यथा-श्रद्धं विजेष्यसि। तस्मादिन्द्रो भवानेव भविता मा विचारय ॥ १८ ॥

स्कन्द उवाच। त्वमेव राजा भद्रन्ते त्रैलोक्यस्य ममैव च। करोमि किञ्च ते शक्र शासनं तद्ब्रवीहि मे ॥ १९ ॥

इन्द्र उवाच। अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल। यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया ॥ २० ॥ यदि वा शासनं स्कन्द कर्त्तुमिच्छसि मे शृणु। अभिषिच्यस्व देवानां सेना-पत्ये महाबल ॥ २१ ॥

स्कन्द उवाच। दानवानां विनाशाय देवानामर्थसिद्धये। गोब्राह्मणहितार्थाय सैनापत्येऽभिषिञ्च माम् ॥ २२ ॥

मार्कण्डेय उवाच। सोऽभिषिक्तो मघवता सर्व्वैर्देवगणैः सह। अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः। तत्र तत् काञ्चनं छत्रं ध्रियमाणं व्यरोचत ॥ २३ ॥ यथैव सुसमिद्धस्य पावकस्यात्ममण्ड-

लम् । विश्वकर्म्मकृता चास्य दिव्या माला हिरण्मयी ॥ २४ ॥
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना । आसन्य मनुजव्याघ्र
सह देव्या परन्तप ॥ २५ ॥ अर्चयामास सुप्रीतो भगवान् गो-
वृषध्वजः । रुद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः ॥ २६ ॥
रुद्रेण शुक्रमुत्सृष्टं तच्छ्वेतः पर्वतोऽभवत् । पावकस्येन्द्रियं श्वेते
कृत्तिकाभिः कृतं नगे ॥ २७ ॥ पूज्यमानन्तु रुद्रेण दृष्ट्वा सर्वे
दिवौकसः । रुद्रसूनुं ततः प्राहुर्गुहं गुणवताम्वरम् ॥ २८ ॥
अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः । तत्र जातस्ततः
स्कन्दो रुद्रसूनुस्ततोऽभवत् ॥ २९ ॥ रुद्रस्य वह्नेः स्वाहायाः षण्णां
स्त्रीणाञ्च भारत । जातः स्कन्दः सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत्
॥ ३० ॥ अजरे वाससी रक्ते वसानः पावकात्मजः । भाति दीप्त-
वपुः श्रीमान् रक्ताभ्राभ्यामिवांशुमान् ॥ ३१ ॥ कुक्कुटश्चाग्निना
दत्तस्तस्य केतुरलङ्कृतः । रथे समुच्छ्रितो भाति कालाग्निरिव
लोहितः ॥ ३२ ॥ या चेष्टा सर्व्वभूतानां प्रभा शान्तिर्बलं तथा ।
अग्रतस्तस्य सा शक्तिर्देवानां जयवर्द्धिनी ॥ ३३ ॥ विवेश कवच-
ञ्चास्य शरीरे सहजन्तदा । युध्यमानस्य देवस्य प्रादुर्भवति तत्
सदा ॥ ३४ ॥ शक्तिर्धर्मो बलं तेजः कान्तत्वं सत्यमुन्नतिः । ब्रह्म-
ण्यत्वमसम्मोहो भक्तानां परिरक्षणम् ॥ ३५ ॥ निकृन्तनञ्च शत्रूणां
लोकानाञ्चाभिरक्षणम् । स्कन्देन सह जातानि सर्व्वाण्येव जना-
धिप ॥ ३६ ॥ एवं देवगणैः सर्व्वैः सोऽभिषिक्तः स्वलङ्कृतः । बभौ
प्रतीतः सुमनाः परिपूर्णेन्दुमण्डलः ॥ ३७ ॥ इष्टैः स्वाध्यायघोषैश्च
देवतूर्य्यरवैरपि । देवगन्धर्व्वगीतैश्च सर्व्वैरप्सरसाङ्गणैः ॥ ३८ ॥
एतैश्चान्यैश्च बहुभिस्तुष्टैर्हृष्टैः स्वलङ्कृतैः । सुसंवृतः पिशाचानां
गणैर्देवगणैस्तथा ॥ ३९ ॥ क्रीडन् भाति तदा देवैरभिषिक्तश्च
पावकिः । अभिषिक्तं महासेनमपश्यन्त दिवौकसः ॥ ४० ॥ विनि-
हत्य तमः सूर्य्यं यथेहाभ्युदितं तथा । अथैनमभ्ययुः सर्व्वा देव-

सेनाः सहस्रशः ॥ ४१ ॥ अस्माकं त्वं पतिरिति ब्रुवाणाः सर्व्वतो दिशः। ताः समासाद्य भगवान् सर्व्वभूतगणैर्व्वृतः ॥ ४२ ॥ अर्च्चि-तस्तु स्तुतश्चैव सान्त्वयामास ता अपि। शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा ॥ ४३ ॥ सस्मार तां देवसेनां या सा तेन विमो-चिता। अयं तस्या पतिर्नूनं विहितो ब्रह्मणा स्वयम् ॥ ४४ ॥ इति चिन्त्यानयामास देवसेनां स्वलङ्कृताम्। स्कन्दं प्रोवाच बल-भिदियं कन्या सुरोत्तम ॥ ४५ ॥ अजाते त्वयि निर्दिष्टा तव पत्नी स्वयम्भुवा। तस्मात्त्वमस्या विधिवत् पाणिं मन्त्रपुरस्कृतम् ॥ ४६ ॥ गृहाण दक्षिणं देव्याः पाणिना पद्मवर्च्चसा। एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि ॥ ४७ ॥ बृहस्पतिर्मन्त्रविद्धि जजाप च जुहाव च। एवं स्कन्दस्य महिषीं देवसेनां विदुर्ब्बुधाः ॥ ४८ ॥ षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमाशां सुखप्रदाम्। सिनीवालीं कुहूञ्चैव सद्वृत्तिमपराजिताम् ॥ ४९ ॥ यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया। तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी ॥ ५० ॥ श्रीजुष्टः पञ्चमीं स्कन्दस्तस्माच्छ्रीपञ्चमी स्मृता। षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात् षष्ठी महातिथिः ॥ ५१ ॥

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दो-पाख्याने अष्टाविंशत्यधिकद्विशततोऽध्यायः ॥ २२८ ॥

---

मार्कण्डेय उवाच। श्रिया जुष्टं महासेनं देवसेनापतिं कृतम्। सप्तर्षिपत्न्यः षड् देव्यस्तत्सकाशमथागमन् ॥ १ ॥ ऋषिभिः संपरित्यक्ता धर्म्मयुक्ता महाव्रताः। द्रुतमागम्य चोचुस्ता देव-सेनापतिं प्रभुम् ॥ २ ॥ वयं पुत्र परित्यक्ता भर्त्तृभिर्देवसम्मितैः। अकारणाद्रुषा तैस्तु पुण्यस्थानात् परिच्युताः ॥ ३ ॥ अस्माभिः

किल जातस्त्वमिति केनाप्युदाहृतम् । तत् सत्यमेतत् संश्रुत्य तस्मान्नस्त्रातुमर्हसि ॥ ४ ॥ अक्षयश्च भवेत् स्वर्गस्त्वत्प्रसादाद्धि नः प्रभो । त्वां पुत्रञ्चाप्यभीप्सामः कृत्वैतदनृणो भव ॥ ५ ॥

स्कन्द उवाच । मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिता । यद्वापीच्छत तत्सर्वं संभविष्यति वस्तथा ॥ ६ ॥

मार्कण्डेय उवाच । विवक्षन्तं ततः शक्रं किङ्कार्य्यमिति सोऽब्रवीत् । उक्तः स्कन्देन ब्रूहीति सोऽब्रवीद्वासवस्ततः ॥ ७ ॥ अभिजित् स्पर्द्धमाना तु रोहिण्याः कन्यसी स्वसा । इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनङ्गता ॥ ८ ॥ तत्र मूढोऽस्मि भद्रन्ते नक्षत्रं गगनाच्च्युतम् । कालन्त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ॥ ९ ॥ धनिष्ठादिस्तथाकालो ब्रह्मणा परिकल्पितः । रोहिणी ह्यभवत् पूर्वमेवं संख्या समाभवत् ॥ १० ॥ एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गता । नक्षत्रं सप्तशीर्षाभं भाति तद्वह्निदैवतम् ॥ ११ ॥ विनता चाब्रवीत् स्कन्दं मम त्वं पिण्डदः सुतः । इच्छामि नित्यमेवाहं त्वया पुत्र सहासितुम् ॥ १२ ॥

स्कन्द उवाच । एवमस्तु नमस्तेऽस्तु पुत्रस्नेहात् प्रशाधि माम् । स्नुषया पूज्यमाना वै देवि वत्स्यसि नित्यदा ॥ १३ ॥

मार्कण्डेय उवाच । अथ मातृगणः सर्वः स्कन्दं वचनमब्रवीत् । वयं सर्वस्य लोकस्य मातरः कविभिः स्तुताः । इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः १४ ॥

स्कन्द उवाच । मातरो हि भवत्यो मे भवतीनामहं सुतः । उच्यतां यन्मया कार्य्यं भवतीनामथेप्सितम् ॥ १५ ॥

मातर ऊचुः । यास्तु ता मातरः पूर्वं लोकस्यास्य प्रकल्पिताः । अस्माकन्तु भवेत् स्थानं तासाञ्चैव न तद्भवेत् ॥ १६ ॥ भवेम पूज्या लोकस्य न ताः पूज्याः सुरर्षभ । प्रजास्माकं हृतास्ताभिस्त्वत्कृते ताः प्रयच्छ नः ॥ १७ ॥

स्कन्द उवाच । दत्ताः प्रजा न ताः शक्या भवतीभिर्निषेवितुम् । अन्यां वः कां प्रयच्छामि प्रजां यां मनसेच्छथ ॥ १८ ॥

मातर ऊचुः । इच्छाम तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः । त्वया सह पृथग्भूता ये च तासामथेश्वराः ॥ १९ ॥

स्कन्द उवाच । प्रजा वो दद्मि कष्टन्तु भवतीभिरुदाहृतम् । परिरक्षत भद्रं वः प्रजाः साधु नमस्कृताः ॥ २० ॥

मातर ऊचुः । परिरक्षाम भद्रन्ते प्रजाः स्कन्द यथेच्छसि । त्वया नो रोचते स्कन्द सहवासश्चिरं प्रभो ॥ २१ ॥

स्कन्द उवाच । यावत् षोड़शवर्षाणि भवन्ति तरुणाः प्रजाः । प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः ॥ २२ ॥ अहञ्च वः प्रदास्यामि रौद्रमात्मानमव्ययम् । परमं तेन सहिताः सुखं वत्स्यथ पूजिताः ॥ २३ ॥

मार्कण्डेय उवाच । ततः शरीरात् स्कन्दस्य पुरुषः पावकप्रभः । भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाप्रभुः । अपतत् सहसा भूमौ विसंज्ञोऽथ क्षुधार्द्दितः ॥ २४ ॥ स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः । स्कन्दापस्मारमित्याहुर्ग्रहन्तं द्विजसत्तमाः ॥ २५ ॥ विनता तु महारौद्रा कथ्यते शकुनिग्रहः । पूतनां राक्षसीं प्राहुस्तं विद्यात् पूतनाग्रहम् ॥ २६ ॥ कष्टा दारुणरूपेण घोररूपा निशाचरी । पिशाची दारुणाकारा कथ्यते शीतपूतना ॥ २७ ॥ गर्भान् मानुषीणान्तु हरते घोरदर्शना । अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः ॥ २८ ॥ सोऽपि बालान् महाघोरो बाधते वै महाग्रहः । दैत्यनां या दितिर्माता तामाहुर्मुखमुण्डिकाम् ॥ २९ ॥ अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा । कुमाराश्च कुमार्य्यश्च ये प्रोक्ताः स्कन्दसम्भवा ॥ ३० ॥ तेऽपि गर्भभुजः सर्व्वे कौरव्य सुमहाग्रहाः । तासामेव तु पत्नीनां पतयस्ते प्रकीर्त्तिताः ॥ ३१ ॥ अज्ञायमाना गृह्णन्ति बालकान् रौद्रकर्म्मिणः ।

गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ॥ ३२ ॥ शकुनि-स्तामथारुह्य सह भुङ्क्ते शिशून् भुवि। सरमा नाम या माता शुनां देवी जनाधिप ॥ ३३ ॥ सापि गर्भान् समादत्ते मानुषीणां सदैव हि। पादपानाञ्च या माता करञ्जनिलया हि सा ॥ ३४ ॥ वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी। करञ्जे तां नमस्यन्ति तस्मात् पुत्रार्थिनो नराः ॥ ३५ ॥ इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः। द्विपञ्चरात्रं तिष्ठन्ति सततं सूतिकागृहे ॥ ३६ ॥ कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशत्यथ। भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ॥ ३७ ॥ गन्धर्वाणान्तु या माता सा गर्भं गृह्य गच्छति। ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ॥ ३८ ॥ या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा। उपनष्टं ततो गर्भं कथयन्ति मनीषिणः ॥ ३९ ॥ लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता। लोहितायनिरित्येवं कदम्बे सा हि पूज्यते ॥ ४० ॥ पुरुषेषु यथा रुद्रस्तथार्य्या प्रमदास्वपि। आर्य्या माता कुमारस्य पृथक्कामार्थमिज्यते ॥ ४१ ॥ एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः। यावत् षोड़शवर्षाणि शिशूनां त्वशिवास्तत ॥ ४२ ॥ ये च मातृगणाः प्रोक्ताः पुरुषा-श्चैव ये ग्रहाः। सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ॥४३॥ तेषां प्रशमनं कार्य्यं स्नानं धूपमथाञ्जनम्। बलिकर्म्मोपहारांश्च स्कन्दस्येज्या विशेषतः ॥ ४४ ॥ एवमभ्यर्च्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम्। आयुर्वीर्य्यञ्च राजेन्द्र सम्यक् पूजानमस्कृताः ॥ ४५ ॥ ऊर्द्ध्वन्तु षोड़शाद्वर्षाद्ये भवन्ति ग्रहा नृणाम्। तानहं संप्रव-क्ष्यामि नमस्कृत्य महेश्वरम् ॥ ४६ ॥ यः पश्यति नरो देवान् जाग्रद्वा शयितोऽपि वा। उन्मादयति स तु क्षिप्रं तन्तु देवग्रहं विदुः ॥ ४७ ॥ आसीनश्च शयानश्च यः पश्यति नरः पितॄन्। उन्मादयति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ॥ ४८ ॥ अवमन्यति

यः विद्वान् क्रुद्धश्चापि श्रपन्ति यम्। उन्मादयति स तु चिप्रं ज्ञेयः
विह्वग्रहस्तु सः ॥ ४९ ॥ उपाघ्राति च यो गन्धान् रसांश्चापि
पृथग्विधान्। उन्मादयति स तु चिप्रं स ज्ञेयो राचसग्रहः ॥ ५० ॥
गन्धर्व्वाश्चापि यं दिव्याः संविशन्ति नरं भुवि। उन्मादयति स तु
चिप्रं ग्रहो गान्धर्व्व एव सः ॥ ५१ ॥ अधिरोहन्ति यं नित्यं
पिशाचाः पुरुषं प्रति। उन्मादयति स तु चिप्रं ग्रहः पैशाच एव
सः ॥ ५२ ॥ आविशन्ति च यं यक्षाः पुरुषं कालपर्य्यये। उन्मा-
दयति स तु चिप्रं ज्ञेयो यक्षग्रहस्तु सः ॥ ५३ ॥ यस्य दोषैः
प्रकुपितं चित्तं मुह्यति देहिनः। उन्मादयति स तु चिप्रं साधनं
तस्य शास्त्रतः ॥ ५४ ॥ वैक्लव्याच्च भयाच्चैव घोराणाञ्चापि दर्श-
नात्। उन्मादयति स तु चिप्रं सान्त्वन्तस्य तु साधनम् ॥ ५५ ॥
कश्चित् क्रीड़ितुकामो वै भोक्तुकामस्तथापरः। अभिकामस्तथै-
वान्य इत्येष त्रिविधो ग्रहः ॥ ५६ ॥ यावत् सप्ततिवर्षाणि भव-
न्त्येते ग्रहा नृणाम्। अतः परं देहिनान्तु ग्रहतुल्यो भवेत् ज्वरः
॥ ५७ ॥ अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम्। आस्तिकं
श्रद्दधानञ्च वर्ज्जयन्ति सदा ग्रहाः ॥ ५८ ॥ इत्येष ते ग्रहोद्देशो
मानुषाणां प्रकीर्त्तितः। न स्पृशन्ति ग्रहा भक्तान् नरान् देवं
महेश्वरम् ॥ ५९ ॥

इति आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि मनुष्यग्रह-
कथने एकोनत्रिंशत्यधिकद्विशततोऽध्यायः ॥ २२९ ॥

---

मार्कण्डेय उवाच। यदा स्कन्देन मातॄणामेवमेतत् प्रियं
कृतम्। तथैनमब्रवीत् स्वाहा मम पुत्रस्त्वमौरसः ॥ १ ॥ इच्छा-
म्यहं त्वया दत्तां प्रीतिं परमदुर्लभाम्। तामब्रवीत्ततः स्कन्दः
प्रीतिमिच्छसि कीदृशीम् ॥ २ ॥

स्वाहोवाच। दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज।
बाल्यात् प्रभृति नित्यञ्च जातकामा हुताशने ॥ ३ ॥ न स मां
कामिनीं पुत्र सम्यग्जानाति पावकः। इच्छामि शाश्वतं वासं
वस्तुं पुत्र सहाग्निना ॥ ४ ॥

स्कन्द उवाच। हव्यं कव्यञ्च यत्किञ्चिद्द्विजानां मन्त्रसंस्कृतम्।
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्धृतम् ॥ ५ ॥ अद्य प्रभृति
दास्यन्ति सुवृत्ताः सत्पथे स्थिताः। एवमग्निस्त्वया सार्द्धं सदा
वत्स्यति शोभने ॥ ६ ॥

मार्कण्डेय उवाच। एवमुक्ता ततः स्वाहा तुष्टा स्कन्देन
पूजिता। पावकेन समायुक्ता भर्त्रा स्कन्दमपूजयत् ॥ ७ ॥ ततो
ब्रह्मा महासेनं प्रजापतिरथाब्रवीत्। अभिगच्छ महादेवं पितरं
त्रिपुरार्द्दनम् ॥ ८ ॥ रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया।
हितार्थं सर्वलोकानां जातस्त्वमपराजितः ॥ ९ ॥ उमायोन्याञ्च
रुद्रेण शुक्रं सिक्तं महात्मना। अस्मिन् गिरौ निपतितं मिञ्जिका-
मिञ्जिकं यतः ॥ १० ॥ सम्भूतं लोहितोदे तु शुक्रशेषमवापतत्।
सूर्य्यरश्मिषु चाप्यन्यदन्यच्चैवापतद्भुवि ॥ ११ ॥ आसक्तमन्य-
दृक्षेषु तदेवं पञ्चधापतत्। तत्र ते विविधाकारा गणा ज्ञेया
मनीषिभिः ॥ १२ ॥ तव पारिषदा घोरा य एते पिशिताशिनः।
एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम्। अपूजयदमेयात्मा
पितरं पितृवत्सलः ॥ १३ ॥

मार्कण्डेय उवाच। अर्कपुष्पैस्तु ते पञ्च गणाः पूज्या धना-
र्थिभिः। व्याधिप्रशमनार्थञ्च तेषां पूजां समाचरेत्। मिञ्जिका-
मिञ्जिकञ्चैव मिथुनं रुद्रसम्भवम् ॥ १४ ॥ नमस्कार्य्यं सदैवेह
बालानां हितमिच्छता। स्त्रियो मानुषमांसादा वृद्धिका नाम
नामतः ॥ १५ ॥ वृक्षेषु जातास्ता देव्यो नमस्कार्य्याः प्रजार्थिभिः।
एवमेते पिशाचानामसङ्ख्येया गणाः स्मृताः ॥ १६ ॥ घण्टायाः

श्वपताकायाः शृणु मे सम्भवं नृप। ऐरावतस्य घण्टे द्वे वैजयन्त्याविति श्रुते ॥ १७ ॥ गुहस्य ते स्वयं दत्ते शक्रेणानाय्य धीमता। एका तत्र विशाखस्य घण्टा स्कन्दस्य चापरा ॥ १८ ॥ पताका कार्त्तिकेयस्य विशाखस्य च लोहिता। यानि क्रीड़नकान्यस्य देवैर्दत्तानि वै तदा ॥ १९ ॥ तैरेव रमते देवो महासेनो महाबलः। स संवृतः पिशाचानां गणैर्देवगणैस्तथा ॥ २० ॥ शुशुभे काञ्चने शैले दीप्यमानः श्रिया वृतः। तेन वीरेण शुशुभे स शैलः शुभकाननः ॥ २१ ॥ आदित्येनेवांशुमता मन्दरश्चारुकन्दरः। सन्तानकवनैः फुल्लैः करवीरवनैरपि ॥ २२ ॥ पारिजातवनैश्चैव जवाशोकवनैस्तथा। कदम्बतरुषण्डैश्च दिव्यैर्मृगगणैरपि ॥ २३ ॥ दिव्यैः पक्षिगणैश्चैव शुशुभे श्वेतपर्वतः। तत्र देवगणाः सर्वे सर्वे देवर्षयस्तथा ॥ २४ ॥ मेघतूर्य्यरवाश्चैव क्षुब्धोदधिसमस्वनाः। तत्र दिव्याश्च गन्धर्वा नृत्यन्तेऽप्सरसस्तथा ॥ २५ ॥ हृष्टानां तत्र भूतानां श्रूयते निनदो महान्। एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम्। प्रहृष्टं प्रेक्षते स्कन्दं न च ग्लायति दर्शनात् ॥ २६ ॥

मार्कण्डेय उवाच। यदाभिषिक्तो भगवान् सैनापत्येन पावकिः। तदा संप्रस्थितः श्रीमान् हृष्टो भद्रवटं हरः। रथेनादित्यवर्णेन पार्व्वत्या सहितः प्रभुः ॥ २७ ॥ सहस्रं तस्य सिंहानां तस्मिन् युक्तं रथोत्तमे। उत्पपात दिवं शुभ्रं कालेनाभिप्रचोदितम् ॥ २८ ॥ ते पिबन्त इवाकाशं त्रासयन्तश्चराचरान्। सिंहा नभस्यगच्छन्त नदन्तश्चारुकेशराः ॥ २९ ॥ तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह। विद्युता सहितः सूर्य्यः सेन्द्रचापे घने यथा ॥ ३० ॥ अग्रतस्तस्य भगवान् धनेशो गुह्यकैः सह। आस्थाय रुचिरं याति पुष्पकं नरवाहनः ॥ ३१ ॥ ऐरावतं समास्थाय शक्रश्चापि सुरैः सह। पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम् ॥ ३२ ॥ जृम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलंकृतः। यात्यमोघो

महायक्षो दक्षिणं पक्षमास्थितः॥ ३३॥ तस्य दक्षिणतो देवा
वह्नवश्विवयोधिनः। गच्छन्ति वसुभिः सार्द्धं रुद्रैश्च सह सङ्गताः
॥ ३४॥ यमश्च मृत्युना सार्द्धं सर्वतः परिवारितः। घोरैर्व्याधि-
शतैर्याति घोररूपवपुस्तथा॥ ३५॥ यमस्य पृष्ठतश्चैव घोरस्त्रि-
शिखरः शितः। विजयो नाम रुद्रस्य याति शूलः स्वलङ्कृतः
॥ ३६॥ तमुग्रपाशो वरुणो भगवान् सलिलेश्वरः। परिवार्य्य
शनैर्याति यादोभिर्विविधैर्वृतः॥ ३७॥ पृष्ठतो विजयस्यापि याति
रुद्रस्य पट्टिशः। गदामुषलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः॥ ३८॥
पट्टिशन्त्वन्वगाद्राजन् छत्रं रौद्रं महाप्रभम्। कमण्डलुश्चाप्यनु तं
महर्षिगणसेवितः॥ ३९॥ तस्य दक्षिणतो भाति दण्डो गच्छन्
श्रिया वृतः। भृग्वङ्गिरोभिः सहितो दैवतैश्चानुपूजितः॥ ४०॥
एषान्तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः। याति संहर्षयन्
सर्वांस्तेजसा त्रिदिवौकसः॥ ४१॥ ऋषयश्चापि देवाश्च गन्धर्वा
भुजगास्तथा। नद्यो ह्रदा समुद्राश्च तथैवाप्सरसाङ्गणाः॥ ४२॥
नक्षत्राणि ग्रहाश्चैव देवानां शिशवश्च ये। स्त्रियश्च विविधाकारा
यान्ति रुद्रस्य पृष्ठतः॥ ४३॥ सृजन्त्यः पुष्पवर्षाणि चारुरूपा
वराङ्गनाः। पर्ज्जन्यश्चाप्यनुययौ नमस्कृत्य पिनाकिनम्॥ ४४॥
छत्रञ्च पाण्डुरं सोमस्तस्य मूर्द्धन्यधारयत्। चामरे चापि वायुश्च
गृहीत्वाग्निश्च विष्ठितौ॥ ४५॥ शक्रश्च पृष्ठतस्तस्य याति राजन्
श्रिया वृतः। सह राजर्षिभिः सर्वैः स्तुवानो वृषकेतनम्॥ ४५॥
गौरी विद्याथ गान्धारी केशिनी मित्रसाह्वया। सावित्र्या सह
सर्वास्ताः पार्व्वत्या यान्ति पृष्ठतः॥ ४७॥ तत्र विद्यागणाः सर्वे
ये केचित् कविभिः कृताः। तस्य कुर्व्वन्ति वचनं सेन्द्रा देवाश्चमू-
मुखे॥ ४८॥ गृहीत्वा तु पताकां वै यात्यग्रे राक्षसो ग्रहः।
व्यापृतस्तु श्मशाने यो नित्यं रुद्रस्य वै सखा॥ ४९॥ पिङ्गलो
नाम यक्षेन्द्रो लोकस्यानन्ददायकः। एभिश्च सहितो देवस्तत्र

याति यथासुखम् ॥ ५० ॥ अग्रतः पृष्ठतश्चैव न हि तस्य गति-
र्ध्रुवाः । रुद्रं सत्कर्म्मभिर्म्मर्त्याः पूजयन्तीह दैवतम् ॥ ५१ ॥ शिव-
मित्येव यं प्राहुरीशं रुद्रं पिनाकिनम् । भावैस्तु विविधाकारैः
पूजयन्ति महेश्वरम् ॥ ५२ ॥ देवसेनापतिस्त्वेवं देवसेनाभिरा-
वृतः । अनुगच्छति देवेशं ब्राह्मण्यः कृत्तिकासुतः ॥ ५३ ॥ अथा-
ब्रवीन्महासेनं महादेवो वृहद्वचः । सप्तमं मारुतस्कन्धं रक्ष
नित्यमतन्द्रितः ॥ ५४ ॥

स्कन्द उवाच । सप्तमं मारुतस्कन्दं पालयिष्यास्यहं प्रभो ।
यदन्यदपि मे कार्य्यं देव तद्वद मा चिरम् ॥ ५५ ॥

रुद्र उवाच । कार्य्येष्वहं त्वया पुत्र संद्रष्टव्यः सदैव हि ।
दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि ॥ ५६ ॥

मार्कण्डेय उवाच । इत्युक्त्वा विससर्ज्जैनं परिष्वज्य महेश्वरः ।
विसर्ज्जिते ततः स्कन्दे बभूवौत्पातिकं महत् ॥ ५७ ॥ सहसैव
महाराज देवान् सर्वान् प्रमोहयत् । जज्वाल खं सनक्षत्रं प्रमूढं
भुवनं भृशम् ॥ ५८ ॥ चचाल व्यनदच्चोर्वी तमोभूतं जगद्विभो ।
ततस्तद्दारुणं दृष्ट्वा क्षुभितः शङ्करस्तदा ॥ ५९ ॥ उमा चैव महा-
भागा देवाश्च समहर्षयः । ततस्तेषु प्रमूढेषु पर्वताम्बुदसन्निभम्
॥ ६० ॥ नानाप्रहरणं घोरमदृश्यत महद्बलम् । तद्वै घोरमसं-
ख्येयं गर्ज्जच्च विविधा गिरः ॥ ६१ ॥ अभ्यद्रवद्रणे देवान् भगव-
न्तञ्च शङ्करम् । तैर्विसृष्टान्यनीकेषु बाणजालान्यनेकशः ॥ ६२ ॥
पर्वताश्च शतघ्नश्च प्रासासिपरिघागदाः । निपतद्भिश्च तैर्घोरैर्द्देवा-
नीकं महायुधैः ॥ ६३ ॥ क्षणेन व्यद्रवत् सर्वं विमुखञ्चाप्यदृश्यत ।
निकृत्तयोधनागाश्वं कृत्तायुधमहारथम् ॥ ६४ ॥ दानवैरर्द्दितं
सैन्यं देवानां विमुखं बभौ । असुरैर्वध्यमानन्तत् पावकैरिव कान-
नम् ॥ ६५ ॥ अपतद्दग्धभूयिष्टं महाद्रुमवनं यथा । ते विभिन्न-
शिरोदेहाः प्राद्रवन्तो दिवौकसः ॥ ६६ ॥ न नाथमधिगच्छन्ति

बध्यमाना महारणे। अथ तद्द्रुतं सैन्यं दृष्ट्वा देवः पुरन्दरः ॥६७॥
आश्वासयन्नुवाचेदं बलभिद्दानवार्द्दितम्। भयं त्यजत भद्रं वः
शूराः शस्त्राणि गृह्णत ॥ ६८ ॥ कुरुध्वं विक्रमे बुद्धिं मा वः काचि-
द्व्यथा भवेत्। जयतैनान् सुदुर्वृत्तान् दानवान् घोरदर्शनान्
॥ ६९ ॥ अभिद्रवत भद्रं वो मया सह महासुरान्। शक्रस्य वचनं
श्रुत्वा समाश्वस्ता दिवौकसः ॥ ७० ॥ दानवान् प्रत्ययुध्यन्त शक्रं
कृत्वा व्यपाश्रयम्। ततस्ते त्रिदशाः सर्वे मरुतश्च महाबलाः ॥७१॥
प्रत्युद्ययुर्महाभागाः साध्याश्च वसुभिः सह। तैर्विसृष्टान्यनीकेषु
क्रुद्धैः शस्त्राणि संयुगे ॥ ७२ ॥ शराश्च दैत्यकायेषु पिवन्ति रुधिरं
बहु। तेषां देहं विनिर्भिद्य शरास्ते निशितास्तदा ॥ ७३ ॥
निष्पतन्तो ह्यदृश्यन्त नगेभ्य इव पन्नगाः। तानि दैत्यशरीराणि
निर्भिन्नानि स्म सायकैः ॥ ७४ ॥ अपतन् भूतले राजन् छिन्ना-
भ्राणीव सर्वशः। ततस्तद्दानवं सैन्यं सर्वैर्देवगणैर्युधि ॥ ७५ ॥
त्रासितं विविधैर्वाणैः कृतञ्चैव पराङ्मुखम्। अथोत्क्रुष्टं तदा
हृष्टैः सर्वैर्देवैरुदायुधैः॥ ७६ ॥ संहतानि च तूर्य्याणि प्रवाद्यन्त
ह्यनेकशः। एवमन्योऽन्यसंसक्तं युद्धमासीत् सुदारुणम् ॥ ७७ ॥
देवानां दानवानाञ्च मांसशोनितकर्द्दमम्। अनयोर्देवलोकस्य
सहसैवाभ्यदृश्यत ॥ ७८ ॥ तथाहि दानवा घोरा विनिघ्नन्ति
दिवौकसः। ततस्तूर्य्यप्रणादाश्च भेरीणाञ्च महास्वनाः ॥ ७९ ॥
बभूवुर्द्दानवेन्द्राणां सिंहनादाश्च दारुणाः। अथ दैत्यबलाद्घोरा-
न्निष्पपात महाबलः ॥ ८० ॥ दानवो महिषो नाम प्रगृह्य विपुलं
गिरिम्। ते तं घनैरिवादित्यं दृष्ट्वा संपरिवारितम् ॥ ८१ ॥
तमुद्यतगिरिं राजन् व्यद्रवन्त दिवौकसः। अथाभिद्रुत्य महिषो
देवांश्चिक्षेप तं गिरिम् ॥ ८२ ॥ पतता तेन गिरिणा देवसैन्यस्य
पार्थिव। भीमरूपेण निहतमयुतं प्रापतद्भुवि ॥ ८३ ॥ अथ तै-
र्दानवैः सार्द्धं महिषस्त्रासयन् सुरान्। अभ्यद्रवद्रणे तूर्णं सिंहः

क्षुद्रमृगानिव ॥ ८४ ॥ तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः । व्यद्रवन्त रणे भीता विकीर्णायुधकेतनाः ॥ ८५ ॥ ततः स महिषः क्रुद्धस्तूर्णं रुद्ररथं ययौ । अभिद्रुत्य च जग्राह रुद्रस्य रथकूवरम् ॥ ८६ ॥ यदा रुद्ररथं क्रुद्धो महिषः सहसा गतः । रेसतुरोदसी गाढं मुमुहुश्च महर्षयः ॥ ८७ ॥ ननदुश्च महाकाया दैत्या जलधरोपमाः । आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ॥ ८८ ॥ तथाभूते तु भगवानहनन्महिषं रणे । सस्मार च तदा स्कन्दं मृत्युन्तस्य दुरात्मनः ॥ ८९ ॥ महिषोऽपि रथं दृष्ट्वा रौद्रो रुद्रस्य चानदत् । देवान् सन्त्रासयंश्चापि दैत्यांश्चापि प्रहर्षयन् ॥ ९० ॥ ततस्तस्मिन् भये घोरे देवानां समुपस्थिते । आजगाम महासेनः क्रोधात् सूर्य्य इव ज्वलन् ॥ ९१ ॥ लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः । लोहितास्यो महाबाहुर्हिरण्यकवचः प्रभुः ॥ ९२ ॥ रथमादित्यसङ्काशमास्थितः कनकप्रभम् । तं दृष्ट्वा दैत्यसेना सा व्यद्रवत् सहसा रणे ॥ ९३ ॥ स चापि तां प्रज्वलितां महिषस्य विदारणीम् । मुमोच शक्तिं राजेन्द्र महासेनो महाबलः ॥ ९४ ॥ सा मुक्ताभ्यहरत्तस्य महिषस्य शिरो महत् । पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः ॥ ९५ ॥ पतता शिरसा तेन द्वारं षोड़शयोजनम् । पर्व्वताभेन पिहितं तदगम्यं ततोऽभवत् ॥ ९६ ॥ उत्तराः कुरवस्तेन गच्छन्त्यद्य यथासुखम् । क्षिप्ता क्षिप्ता तु सा शक्तिर्हत्वा शत्रून् सहस्रशः ॥ ९७ ॥ स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः । प्रायःशरैर्विनिहता महासेनेन धीमता ॥ ९८ ॥ शेषा दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः । स्कन्दपारिषदैर्हत्वा भक्षिताश्च सहस्रशः ॥ ९९ ॥ दानवान् भक्षयन्तस्ते प्रपिवन्तश्च शोणितम् । क्षणान्निर्दानवं सर्व्वमकार्षुर्भृशहर्षिताः ॥ १०० ॥ तमांसीव यथा सूर्य्यो वृक्षानग्निर्घनान् खगः । तथा स्कन्दोऽजयच्छत्रून् स्वेन वीर्य्येण कीर्त्तिमान् ॥ १०१ ॥ संपूज्यमानस्त्रिदशै-

रभिवाद्य महेश्वरम्। शुशुभे कृत्तिकापुत्रः प्रकीर्णांशुरिवांशुमान्
॥ १०२ ॥ नष्टमवुर्यदा स्कन्दः प्रयातस्तु महेश्वरम्। तदाब्रवी-
न्महासेनं परिष्वज्य पुरन्दरः ॥ १०३ ॥ ब्रह्मदत्तवरः स्कन्द त्वयायं
महिषो हतः। देवास्तृणसमा यस्य बभूवुर्जयताम्वर ॥ १०४ ॥
सोऽयं त्वया महाबाहो शमितो देवकण्टकः। शतं महिषतुल्यानां
दानवानां महारणे ॥ १०५ ॥ निहतं देवशत्रूणां यैर्वयं पूर्वं-
तापिताः। तावकैर्भक्षिताश्चान्ये दानवाः शतसंघशः ॥ १०६ ॥
अजेयस्त्वं रणेऽरीणामुमापतिरिव प्रभुः। एतत्ते प्रथमं देव
ख्यातं कर्म्म भविष्यति ॥ १०७ ॥ त्रिषु लोकेषु कीर्त्तिश्च तवाक्षय्या
भविष्यति। वशगाश्च भविष्यन्ति सुरास्तव महाभुज ॥ १०८ ॥
महासेनमेवमुक्त्वा विनिवृत्तः सदैवतैः। अनुज्ञातो भगवता त्र्यम्ब-
केण शचीपतिः ॥ १०९ ॥ गतो भद्रवटं रुद्रो निवृत्ताश्च दिवौ-
कसः। उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव ॥ ११० ॥
स हत्वा दानवगणान् पूज्यमानो महर्षिभिः। एकाह्नैवाजयत् सर्वं
त्रैलोक्यं वह्निनन्दनः ॥ १११ ॥ स्कन्दस्य य इदं विप्रः पठेज्जन्म
समाहितः। स पुष्टिमिह संप्राप्य स्कन्दसालोक्यतामियात् ॥ ११२॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि स्कन्दयुद्धे
त्रिंशदधिकद्विशततोऽध्यायः ॥ २३० ॥

---

युधिष्ठिर उवाच। भगवन् श्रोतुमिच्छामि नामान्यस्य महा-
त्मनः। त्रिषु लोकेषु यान्यस्य विख्यातानि द्विजोत्तम ॥ १ ॥
वैशम्पायन उवाच। इत्युक्तः पाण्डवेयेन महात्मा ऋषि-
सन्निधौ। उवाच भगवांस्तत्र मार्कण्डेयो महातपाः ॥ २ ॥
मार्कण्डेय उवाच। आग्नेयश्चैव स्कन्दश्च दीप्तकीर्त्तिरनामयः।
मयूरकेतुर्धर्मात्मा भूतेशो महिषार्द्दनः ॥ ३ ॥ कामजित् कामदः

क्रान्तः सत्यवाग्भुवनेश्वरः । शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः ॥ ४ ॥ अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा । दीप्तशक्ति प्रशान्तात्मा भद्रकृत् कूटमोहनः ॥ ५ ॥ षष्ठीप्रियश्च धर्म्मात्मा पवित्रो मातृवत्सलः । कन्याभर्त्ता विभक्तश्च स्वाहेयो रेवतीसुतः ॥ ६ ॥ प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः । सुव्रतो ललितश्चैव बालक्रीड़नकप्रियः ॥ ७ ॥ खचारी ब्रह्मचारी च शूरः शरवनोद्भवः । विश्वामित्रप्रियश्चैव देवसेनाप्रियस्तथा ॥ ८ ॥ वासुदेवप्रियश्चैव प्रियः प्रियकृदेव तु । नामान्येतानि दिव्यानि कार्त्तिकेयस्य यः पठेत् । स्वर्गं कीर्त्तिं धनञ्चैव स लभेन्नात्र संशयः ॥ ९॥

मार्कण्डेय उवाच । स्तोष्यामि देवैर्ऋषिभिश्च जुष्टं भक्त्या गुहं नामभिरप्रमेयम् । षड़ाननं शक्तिधरं सुवीरं निबोध चैतानि कुरुप्रवीर ॥ १० ॥ ब्रह्मण्यो वै ब्रह्मजो ब्रह्मविच्च ब्रह्मेशयो ब्रह्मवतां वरिष्ठः । ब्रह्मप्रियो ब्राह्मणसव्रती त्वं ब्रह्मज्ञो वै ब्राह्मणानाञ्च नेता ॥ ११ ॥ स्वाहा स्वधा त्वं परमं पवित्रं मन्त्रस्तुतस्त्वं प्रथितः षड़र्च्चिः । संवत्सरस्त्वं ऋतवश्च षड़् वै मासार्द्धमासायनं दिशश्च ॥ १२ ॥ त्वं पुष्कराक्षस्त्वरविन्दवक्त्रः सहस्रवक्त्रोऽसि सहस्रबाहुः । त्वं लोकपालः परमं हविश्च त्वं भावनः सर्वसुरासुराणाम् ॥ १३ ॥ त्वमेव सेनाधिपतिः प्रचण्डः प्रभुर्विभुश्चाप्यथ शत्रुजेता । सहस्रभूस्त्वं धरणी त्वमेव सहस्रतुष्टिश्च सहस्रभुक् च ॥ १४ ॥ सहस्रशीर्षस्त्वमनन्तरूपः सहस्रपात्त्वं गुहशक्तिधारी । गङ्गासुतस्त्वं स्वमतेन देव स्वाहामहीकृत्तिकानान्तथैव ॥ १५ ॥ त्वं क्रीड़से षण्मुख कुक्कुटेन यथेष्टनानाविधकामरूपी । दक्षोऽसि सोमो मरुतः सदैव धर्म्मोऽसि वायुरचलेन्द्र इन्द्रः ॥ १६ ॥ सनातनानामपि शाश्वतस्त्वं प्रभुः प्रभूणामपि चोग्रधन्वा । ऋतस्य कर्त्ता दितिजान्तकस्त्वं जेता रिपूणां प्रवरः सुराणाम् ॥ १७ ॥ सूक्ष्मं तपस्तत् परमं त्वमेव परावरज्ञोऽसि परावरस्त्वम् । धर्म्मस्य

कामस्य परस्य चैव त्वत्तेजसा कृत्स्नमिदं महात्मन् ॥ १८ ॥ व्याप्तं जगत् सर्वसुरप्रवीर भक्त्या मया संस्तुत लोकनाथ । नमोऽस्तु ते द्वादशनेत्रबाहो अतः परं वेद्मि गतिं न तेऽहम् ॥ १९ ॥ स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः । श्रावयेद्ब्राह्मणेभ्यो यः शृणुयाद्वा द्विजेरितम् ॥ २० ॥ धनमायुर्यशो दीप्तं पुत्रान् शत्रुजयन्तथा । स पुष्टितुष्टि संप्राप्य स्कन्दसालोक्यमाप्नुयात् ॥ २१ ॥

इति आरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि कार्त्तिकेयस्तवे एकत्रिंशदधिकद्विशततोऽध्यायः ॥ २३१ ॥
समाप्तञ्च मार्कण्डेयसमास्यापर्व ।

---

अथ द्रौपदीसत्यभामासंवादपर्व ॥

वैशम्पायन उवाच । उपासीनेषु विप्रेषु पाण्डवेषु महात्मसु । द्रौपदी सत्यभामा च विविशाते तदाश्रमम् ॥ १ ॥ जहास्यमाने सुप्रीते सुखं तत्र निषेदतुः । चिरस्य दृष्ट्वा राजेन्द्र तेऽन्योऽन्यस्य प्रियंवदे ॥ २ ॥ कथयामासतुश्चित्राः कथाः कुरुयदूत्थिताः । अथाब्रवीत् सत्यभामा कृष्णस्य महिषी प्रिया ॥ ३ ॥ सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा । केन द्रौपदि वृत्तेन पाण्डवानधितिष्ठसि ॥ ४ ॥ लोकपालोपमान् वीरान् यूनः परमसंहतान् । कथञ्च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे ॥ ५ ॥ तव वश्या हि सततं पाण्डवाः प्रियदर्शने । मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे ॥ ६ ॥ व्रतचर्य्या तपो वास्ति स्नानमन्त्रौषधानि वा । विद्यावीर्य्यं मूलवीर्य्यं जपहोमागदास्तथा ॥ ७ ॥ ममाद्याचक्ष्व पाञ्चालि यशस्यं भगदैवतम् । येन कृष्णो भवेन्नित्यं मम कृष्णे वशानुगः ॥ ८ ॥ एवमुक्त्वा सत्यभामा विरराम यशस्विनी । पतिव्रता महा-

मागा द्रौपदी प्रत्युवाच ताम् ॥ ९ ॥ असत्स्त्रीणां समाचारं सत्ये
मामनुपृच्छसि । असदाचरिते मार्गे कथं स्यादनुकीर्त्तनम् ॥ १० ॥
अनुप्रश्नः संशयो वा नैतत्त्वय्युपपद्यते । तथा ह्युपेता बुद्ध्या त्वं
कृष्णस्य महिषी प्रिया ॥ ११ ॥ यदैव भर्त्ता जानीयान्मन्त्रमूल-
परां स्त्रियम् । उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥ १२ ॥
उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम् । न जातु वशगो
भर्त्ता स्त्रियाः स्यान्मन्त्रकर्म्मणा ॥ १३ ॥ अमित्रप्रहितांश्चापि गदान्
परमदारुणान् । मूलप्रचारैर्हि विषं प्रयच्छन्ति जिघांसवः ॥ १४ ॥
जिह्वया यानि पुरुषस्त्वचा वाप्युपसेवते । तत्र चूर्णानि दत्तानि
हन्युः क्षिप्रमसंशयम् ॥ १५ ॥ जलोदरसमायुक्ताः श्वित्रिणः
पलितास्तथा । अपुमांसः कृताः स्त्रीभिर्जड़ान्धवधिरास्तथा ॥१६॥
पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत । न जातु विप्रियं भर्त्तुः
स्त्रिया कार्य्यं कथञ्चन ॥ १७ ॥ वर्त्ताम्यहन्तु यां वृत्तिं पाण्डवेषु
महात्मसु । तां सर्वां शृणु मे सत्यां सत्यभामे यशस्विनि ॥ १८ ॥
अहङ्कारं विहायाहं कामक्रोधौ च सर्वदा । सदारान् पाण्ड-
वान्नित्यं प्रयतोपचराम्यहम् ॥ १९ ॥ प्रणयं प्रतिसंहृत्य निधा-
यात्मानमात्मनि । शुश्रूषुर्निरभीमाना पतीनाञ्चित्तचारिणी ॥२०॥
दुर्व्याहृताच्छङ्कमाना दुःस्थिताद्दुरवेक्षितात् । दुरासिताद्दुर्व्र-
जितादिङ्गिताध्यासितादपि ॥ २१ ॥ सूर्य्यवैश्वानरसमान् सोम-
कल्पान्महारथान् । सेवे चक्षुर्हणः पार्थानुग्रवीर्य्यप्रतापिनः ॥२२॥
देवो मनुष्यो गन्धर्व्वो युवा चापि स्वलङ्कृतः । द्रव्यवानभिरूपो वा
न मेऽन्यः पुरुषो मतः ॥ २३ ॥ नाभुक्तवति नास्नाते नासंविष्टे च
भर्त्तरि । न संविशामि नाश्नामि सदा कर्म्मकरेष्वपि ॥ २४ ॥
क्षेत्राद्वनाद्वा ग्रामाद्वा भर्त्तारं गृहमागतम् । अभ्युत्थायाभिनन्दामि
आसनेनोदकेन च ॥ २५ ॥ प्रमृष्टभाण्डा मिष्टान्ना काले भोजन-
दायिनी । संयता गुप्तधान्या च सुसंमृष्टनिवेशना ॥ २६ ॥ अति-

दुष्कृतस्त्र्यापा दुःस्त्रियो नानुसेवती। अनुकूलवती नित्यं भवा-
म्यनलसा सदा ॥ २७ ॥ अनर्मं चापि हसितं द्वारि स्थानमभी-
क्ष्णशः। अवस्करे चिरं स्थानं निष्कुटेषु च वर्ज्जये ॥ २८ ॥ अति-
हासातिरोषौ च क्रोधस्थानञ्च वर्ज्जये। निरताहं सदा सत्ये
भर्त्तृणामुपसेवने ॥ २९ ॥ सर्वथा भर्त्तृरहितं न ममेष्टं कथञ्चन।
यदा प्रवसते भर्त्ता कुटुम्बार्थेन केनचित् ॥ ३० ॥ सुमनोवर्णका-
पेता भवामि व्रतचारिणी। यच्च भर्त्ता न पिबति यच्च भर्त्ता न
सेवते ॥ ३१ ॥ यच्च नाश्नाति मे भर्त्ता सर्वं तद्वर्ज्जयाम्यहम्।
यथोपदेशं नियता वर्त्तमाना वराङ्गने ॥ ३२ ॥ स्वलङ्कृता सुप्रयता
भर्त्तुः प्रियहिते रता। ये च धर्माः कुटुम्बेषु श्वश्र्वा मे कथिताः
पुरा ॥ ३३ ॥ भिक्षाबलिः श्राद्धमिति स्थालीपाकाश्च पर्वसु।
मान्यानां मानसत्कारा ये चान्ये विदिता मम ॥ ३४ ॥ तान्
सर्वाननुवर्त्तामि दिवारात्रमतन्द्रिता। विनयान्नियमांश्चैव सदा
सर्वात्मनाश्रिता ॥ ३५ ॥ मृदून् सतः सत्यशीलान् सत्यधर्मानु-
पालिनः। आशीविषानिव क्रुद्धान् पतीन् परिचराम्यहम् ॥ ३६ ॥
पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः। स देवः सा गति-
र्नान्या तस्य का विप्रियञ्चरेत् ॥ ३७ ॥ अहं पतीन्नातिशये
नात्यश्ने नातिभूषये। नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता
॥ ३८ ॥ अवधानेन सुभगे नित्योत्थिततयैव च। भर्त्तारो वशगा
मह्यं गुरुशुश्रूषयैव च ॥ ३९ ॥ नित्यमार्य्यामहं कुन्तीं वीरसूं
सत्यवादिनीम्। स्वयं परिचराम्येतां पानाच्छादनभोजनैः ॥ ४० ॥
नैतामतिशये जातु वस्त्रभूषणभोजनैः। नापि परिवदे चाहं
तां पृथां पृथिवीसमाम् ॥ ४१ ॥ अष्टावग्रे ब्राह्मणानां सहस्राणि
स्म नित्यदा। भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ४२ ॥
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः। त्रिंशद्दासीक एकैको
यान् बिभर्त्ति युधिष्ठिरः ॥ ४३ ॥ दशान्यानि सहस्राणि येषा-

मन्नं सुसंस्कृतम्। क्रियते रुक्मपात्रीभिर्यतीनामूर्द्ध्वरेतसाम् ॥ ४४ ॥ तान् सर्वानग्रहारेण ब्राह्मणान् वेदवादिनः। यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ॥ ४५ ॥ शतं दासीसहस्राणि कौन्तेयस्य महात्मनः। कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ॥४६॥ महार्हमाल्याभरणाः सुवर्णाश्चन्दनोचिताः। मणीन् हेम च बिभ्रत्यो नृत्यगीतविशारदाः ॥ ४७ ॥ तासां नाम च रूपञ्च भोजनाच्छादनानि च। सर्वासामेव वेदाहं कर्म्म चैव कृताकृतम् ॥ ४८ ॥ शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः। पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत ॥ ४९ ॥ शतमश्वसहस्राणि दश नागायुतानि च। युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः ॥ ५० ॥ एतदासीत्तदा राज्ञो यन्महीं पर्य्यपालयत्। येषां सङ्ख्यां विधिञ्चैव प्रदिशामि शृणोमि च ॥ ५१ ॥ अन्तःपुराणां सर्व्वेषां भृत्यानाञ्चैव सर्व्वशः। आगोपालाविपालेभ्यः सर्व्वं वेद कृताकृतम् ॥ ५२ ॥ सर्व्वं राज्ञः समुदयमायञ्च व्ययमेव च। एकाहं वेद्मि कल्याणि पाण्डवानां यशस्विनि ॥ ५३ ॥ मयि सर्व्वं समासज्य कुटुम्बं भरतर्षभाः। उपासनरताः सर्व्वे घटयन्ति वरानने ॥ ५४ ॥ तमहं भारमासक्तमनाधृष्यं दुरात्मभिः। सुखं सर्व्वं परित्यज्य रात्र्यहानि घटामि वै ॥ ५५ ॥ अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम्। एकाहं वेद्मि कोषं वै पतीनां धर्म्मचारिणाम् ॥ ५६ ॥ अनिशायां निशायाञ्च सहायाः क्षुत्पिपासयोः। आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे ॥ ५७ ॥ प्रथमं प्रतिबुध्यामि चरमं संविशामि च। नित्यकालमहं सत्ये एतत् संवदनं मम ॥ ५८ ॥ एतज्जानाम्यहं कर्त्तुं भर्त्तृसंवदनं महत्। असत्स्त्रीणां समाचारन्नाहं कुर्य्यां न कामये ॥ ५९ ॥

वैशम्पायन उवाच। तच्छ्रुत्वा धर्म्मसहितं व्याहृतं कृष्णया तदा। उवाच सत्या सत्कृत्य पाञ्चालीं धर्म्मचारिणीम् ॥ ६० ॥

अभिपन्नास्मि पाञ्चालि याज्ञसेनि क्षमस्व मे। कामकारः सखीनां हि सोपहासं प्रभाषितम् ॥ ६१ ॥

इति आरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि द्रौपदी-निजकार्य्यकथने द्वाविंशदधिकद्विशततोऽध्यायः ॥ २३२ ॥

---

द्रौपद्युवाच। इमन्तु ते मार्गमपेतमोहं वक्ष्यामि चित्तग्रहणाय भर्त्तुः। अस्मिन् यथावत् सखि वर्त्तमाना भर्त्तारमाच्छेत्स्यसि कामिनीभ्यः ॥ १ ॥ नैतादृशं दैवतमस्ति सत्ये सर्वेषु लोकेषु सदैवकेषु। यथा पतिस्तुष्यति सर्वकामा लभ्याः प्रसादात् कुपितश्च हन्यात् ॥ २ ॥ तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्युत्तमदर्शनानि। वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विपुला च कीर्त्तिः ॥ ३ ॥ सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि। सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्मणा च ॥ ४ ॥ तथाशनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्विविधैश्च गन्धैः। अस्याः प्रियोऽस्मीति यथा विदित्वा त्वामेव संश्लिष्यति तद्विधत्स्व ॥ ५ ॥ श्रुत्वा स्वरं द्वारगतस्य भर्त्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये। दृष्ट्वा प्रविष्टं त्वरितासनेन पाद्येन चैनं प्रतिपूजयस्व ॥ ६ ॥ सम्प्रेषितायामथ चैव दास्यामुत्थाय सर्वं स्वयमेव कार्य्यम्। जानातु कृष्णस्तव भावमेतं सर्वात्मना मां भजतीति सत्ये ॥ ७ ॥ त्वत्सन्निधौ यत्कथयेत् पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम्। काचित् सपत्नी तव वासुदेवं प्रत्यादिशेत्तेन भवेद्विरागः ॥ ८ ॥ प्रियांश्च रक्तांश्च हितांश्च भर्त्तुस्तान् भोजयेथा विविधैरुपायैः। द्वेष्यैरपक्षैरहितैश्च तस्य भिद्यस्व नित्यं कुहकोद्यतैश्च ॥ ९ ॥ मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनम्। प्रद्युम्नशाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदा-

वित् ॥ १० ॥ महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु। चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ ११ ॥ एतद्यशस्यं भगदैवतञ्च स्वर्ग्यं तथा शत्रुनिवर्हणञ्च। महार्हमाल्याभरणाङ्गरागा भर्त्तारमाराधय पुण्यगन्धा ॥ १२ ॥

इति आरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि द्रौपदीकर्त्तव्यकथने त्रयस्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३३ ॥

---

वैशम्पायन उवाच। मार्कण्डेयादिभिर्विप्रैः पाण्डवैश्च महात्मभिः कथाभिरनुकूलाभि सह स्थित्वा जनार्द्दनः ॥ १ ॥ ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः। आरुरुक्षूरथं सत्यामाह्वयामास केशवः ॥ २ ॥ सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजाम्। उवाच वचनं हृद्यं यथाभावं समाहितम् ॥ ३ ॥ कृष्णे माभूत् तवोत्कण्ठा मा व्यथा मा प्रजागरः। भर्त्तृभिर्देवसङ्काशैर्जितां प्राप्स्यसि मेदिनीम् ॥ ४ ॥ न ह्येवं शीलसम्पन्ना नैवं पूजितलक्षणाः। प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेक्षणे ॥ ५ ॥ अवश्यञ्च त्वया भूमिरियं निहतकण्टका। भर्त्तृभिः सह भोक्तव्या निर्द्वन्द्वेति श्रुतं मया ॥ ६ ॥ धार्त्तराष्ट्रवधं कृत्वा वैराणि प्रतियात्य च। युधिष्ठिरस्थां पृथिवीं द्रक्ष्यसे द्रुपदात्मजे ॥ ७ ॥ यास्ताः प्रव्रजमानां त्वां प्राहसन् दर्पमोहिताः। ताः क्षिप्रं पतसङ्कल्पाः द्रक्ष्यसि त्वं कुरुस्त्रियः ॥ ८ ॥ तव दुःखोपपन्नाया यैराचरितमप्रियम्। विद्धि संप्रस्थितान् सर्व्वांस्तान् कृष्णे यमसादनम् ॥ ९ ॥ पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथाविधः। श्रुतकर्म्मार्ज्जुनिश्चैव शतानीकश्च नाकुलिः ॥ १० ॥ सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः। सर्व्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव ॥ ११ ॥ अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम्। त्वमिवैषां सुभद्रा च प्रीत्या सर्व्वा-

त्मना स्थिता ॥ १२ ॥ प्रीयते तव निर्द्वन्द्वा तेभ्यश्च विगतज्वरा। दुःखिता तेन दुःखेन सुखेन सुखिता तथा ॥ १३ ॥ भजेत् सर्वात्मना चैव प्रद्युम्नजननी तथा। भानुप्रभृतिभिश्चैतान् विशिनष्टि च केशवः ॥ १४ ॥ भोजनाच्छादने चैषां नित्यं मे श्वशुरः स्थितः। रामप्रभृतयः सर्वे भजन्त्यन्धकवृष्णयः ॥ १५ ॥ तुल्यो हि प्रणयस्तेषां प्रद्युम्नस्य च भाविनि। एवमादि प्रियं सत्यं हृद्यमुक्त्वा मनोऽनुगम् ॥ १६ ॥ गमनाय मनश्चक्रे वासुदेवरथं प्रति। तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणम् ॥ १७ ॥ आरुरोह रथं शौरेः सत्यभामाथ भाविनी। स्मयित्वा तु यदुश्रेष्ठो द्रौपदीं परिसान्त्व्य च। उपावर्त्त्य ततः शीघ्रैर्हयैः प्रायात् पुरं स्वकम् ॥१८॥

इति आरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि सत्यभामाकृष्णागमने चतुस्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३४ ॥

समाप्तञ्च द्रौपदीसत्यभामासंवादपर्वं ॥

---

## अथ घोषयात्रापर्व ॥

जनमेजय उवाच। एवं वने वर्त्तमाना नराग्र्याः शीतोष्णवातातपकर्षिताङ्गाः। सरस्तदासाद्य वनञ्च पुण्यं ततः परं किमकुर्वन्त पार्थाः ॥ १ ॥

वैशम्पायन उवाच। सरस्तदासाद्य तु पाण्डुपुत्रा जनं समुत्सृज्य विधाय वेशम्। वनानि रम्याण्यथ पर्वतांश्च नदीप्रदेशांश्च तदा विचेरुः ॥ २ ॥ तथा वने तान् वसतः प्रवीरान् स्वाध्यायवन्तश्च तपोधनाश्च। अभ्याययुर्वेदविदः पुराणास्तान् पूजयामासुरथो नराग्र्याः ॥ ३ ॥ ततः कदाचित् कुशलः कथासु विप्रोऽभ्यगच्छद्भुवि कौरवेयान्। स तैः समेत्याथ यदृच्छयैव वैचित्रवीर्य्यं

नृपमभ्यगच्छत् ॥ ४ ॥ अथोपविष्टः प्रतिसत्कृतश्च वृद्धेन राज्ञा कुरुसत्तमेन । प्रचोदितः स कथयाम्बभूव धर्मानिलेन्द्रप्रभवान् यमौ च ॥ ५ ॥ कृच्छ्रांश्च वातातपकर्षिताङ्गान् दुःखस्य चोग्रस्य मुखे प्रपन्नान् । तांश्चाप्यनाथामिव वीरनाथां कृष्णां परिक्लेश-गुणेन युक्ताम् ॥ ६ ॥ ततः कथास्तस्य निशम्य राजा वैचित्रवीर्य्यः कृपयाभितप्तः । वने तथा पार्थिवपुत्रपौत्रान् श्रुत्वा तथा दुःख-नदीं प्रपन्नान् ॥ ७ ॥ प्रोवाच दैन्याभिहतान्तरात्मा निःश्वास-वातोपहतस्तदानीम् । वाचङ्कथञ्चित् स्थिरतामुपेत्य तत्सर्व्वमात्म-प्रभवं विचिन्त्य ॥ ८ ॥ कथन्नु सत्यः शुचिरार्य्यवृत्तो ज्येष्ठः सुतानां मम धर्म्मराजः । अजातशत्रुः पृथिवीतले स्म शेते पुरा राङ्कव-कूटशायी ॥ ९ ॥ प्रबोध्यते मागधसूतपूगैर्नित्यं स्तुवद्भिः स्वय-मिन्द्रकल्पः । पतत्रिसंघैः स जघन्यरात्रे प्रबोध्यते नूनमिडा-तलस्थः ॥ १० ॥ कथन्नु वातातपकर्षिताङ्गो वृकोदरः कोपपरि-प्लुताङ्गः । शेते पृथिव्यामतथोचिताङ्गः कृष्णासमक्षं वसुधातलस्थः ॥ ११ ॥ तथार्जुनः सुकुमारो मनस्वी वशे स्थितो धर्म्मसुतस्य राज्ञः । विदूयमानैरिव सर्व्वगात्रैर्ध्रुवं न शेते वसतीरमर्षात् ॥ १२ ॥ यमौ च कृष्णाञ्च युधिष्ठिरञ्च भीमञ्च दृष्ट्वा सुखविप्रयुक्तम् । विनि-श्वसन् सर्प इवोग्रतेजा ध्रुवं न शेते वसतीरमर्षात् ॥ १३ ॥ तथा यमौ चाप्यसुखौ सुखार्हौ समृद्धरूपावमरौ दिवीव । प्रजागरस्थौ ध्रुवमप्रशान्तौ धर्म्मेण सत्येन च वार्य्यमाणौ ॥ १४ ॥ समीरणे-नाथ समो बलेन समीरणस्यैव सुतो बलीयान् । स धर्म्मपाशेन सितोऽग्रजेन ध्रुवं विनिश्वस्य सहत्यमर्षम् ॥ १५ ॥ स चापि भूमौ परिवर्त्तमानो वधं सुतानां मम काङ्क्षमाणः । सत्येन धर्म्मेण च वार्य्यमाणः कालं प्रतीक्षत्यधिको रणेऽन्यैः ॥ १६ ॥ अजातशत्रौ तु जिते निकृत्या दुःशासनो यत् परुषाण्यवोचत् । तानि प्रवि-ष्टानि वृकोदराङ्गं दहन्ति कक्षाग्निरिवेन्धनानि ॥ १७ ॥ न पाप-

कन्धरास्यति धर्मपुत्रो धनञ्जयश्चाप्यनुवत्स्यते तम्। अरण्यवासेन विवर्द्धते तु भीमस्य कोपाग्निरिवानिलेन ॥ १८ ॥ स तेन कोपेन विदह्यमानः करं करेणाभिनिपीड्य वीरः। विनिश्वसत्युष्णमतीव घोरं दहन्निवेमान्मम पुत्रपौत्रान् ॥ १९ ॥ गाण्डीवधन्वा च वृकोदरश्च संरब्धिणावन्तककालकल्पौ। न शेषयेतां युधि शत्रुसेनां शरान् किरन्तावशनिप्रकाशान् ॥ २० ॥ दुर्य्योधनः शकुनिः सूतपुत्रो दुःशासनश्चापि सुमन्दचेताः। मधु प्रपश्यन्ति न तु प्रपातं यद्द्यूतमाश्रित्य हरन्ति राज्यम् ॥ २१ ॥ शुभाशुभं कर्म नरो हि कृत्वा प्रतीक्षते तस्य फलं स्म कर्त्ता। स तेन भुङ्क्तेऽवशः फलेन मोक्षः कथं स्यात् पुरुषस्य तस्मात्॥२२॥ क्षेत्रे सुकृष्टे क्षुपिते च वीजे देवे च वर्षत्यृतुकालयुक्तम्। न स्यात् फलं तस्य कुतः प्रसिद्धिरन्यत्र दैवादिति चिन्तयामि ॥ २३ ॥ कृतं मताक्षेण यथा न साधु साधुप्रवृत्तेन च पाण्डवेन। मया च दुष्पुत्रवशानुगेन यथा कुरूणामयमन्तकालः ॥ २४ ॥ ध्रुवं प्रवास्यत्यसमीरितोऽपि ध्रुवं प्रजास्यत्युत गर्भिणी या। ध्रुवं दिनादौ रजनीप्रणाशस्तथा क्षपादौ च दिनप्रणाशः ॥ २५ ॥ क्रिणीत कस्मादपरे च कुर्य्युर्वित्तं न दद्युः पुरुषाः कथञ्चित्। प्राप्यार्थकालञ्च भवेदनर्थः कथं नु तत् स्यादिति तत् कुतः स्यात् ॥ २६ ॥ कथन्नु भिद्येत न च स्रवेत नं च प्रसिच्येदिति रक्षितव्यम्। अरक्ष्यमाणं शतधा प्रकीर्य्येत् ध्रुवं न नाशोऽस्ति कृतस्य लोके ॥ २७ ॥ गतो ह्यरण्यादपि शक्रलोकं धनञ्जयः पश्यत वीर्य्यमस्य। अस्त्राणि दिव्यानि चतुर्विधानि ज्ञात्वा पुनर्लोकमिमं प्रपन्नः ॥ २८ ॥ स्वर्गं हि गत्वा सशरीर एव को मानुषः पुनरागन्तुमिच्छेत्। अन्यत्र कालोपहताननेकान् समीक्षमाणस्तु कुरून् मुमूर्षून् ॥ २९ ॥ धनुर्ग्राहश्चार्जुनः सव्यसाची धनुश्च तद्गाण्डिवं भीमवेगम्। अस्त्राणि दिव्यानि च तानि तस्य त्रयस्य तेजः प्रसहेत कोऽत्र ॥ ३० ॥

निशम्य तद्वचनं पार्थिवस्य दुर्य्योधनं रहिते सौबलोऽथ। प्रबो-
धयत् कर्णमुपेत्य सर्वं स चाप्यहृष्टोऽभवदल्पचेताः ॥ ३१ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि धृतराष्ट्रखेदवाक्ये
पञ्चविंशदधिकद्विशततोऽध्यायः ॥ २३५ ॥

---

वैशम्पायन उवाच। धृतराष्ट्रस्य तद्वाक्यं निशम्य शकुनिस्तदा।
दुर्य्योधनमिदं काले कर्णेन सहितोऽब्रवीत् ॥ १ ॥ प्रव्राज्य पाण्ड-
वान् वीरान् स्वेन वीर्य्येण भारत। भुङ्क्ष्वेमां पृथिवीमेको दिवि
शम्बरहा यथा ॥ २ ॥ प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्य-
वासिनः। कृताः करप्रदाः सर्वे राजानस्ते नराधिप ॥ ३ ॥ या
हि सा दीप्यमानेव पाण्डवानभजत् पुरा। साद्य लक्ष्मीस्त्वया
राजन्नवाप्ता भ्रातृभिः सह ॥ ४ ॥ इन्द्रप्रस्थगते यां तां दीप्य-
मानां युधिष्ठिरे। अपश्याम श्रियं राजन् दृश्यते सा तवाद्य वै
॥ ५ ॥ शत्रवस्तव राजेन्द्र न चिरं शोककर्षिताः। सा तु बुद्धि-
बलेनेयं राज्ञस्तस्माद्युधिष्ठिरात् ॥ ६ ॥ त्वया क्षिप्ता महाबाहो
दीप्यमानेव दृश्यते। तथैव तव राजेन्द्र राजानः परवीरहन् ॥ ७ ॥
शासनेऽधिष्ठिताः सर्वे किं कुर्म इतिवादिनः। तवेयं पृथिवी
राजन् निखिला सागराम्बरा ॥ ८ ॥ सपर्वतवना देवी सग्राम-
नगराकरा। नानावनोद्देशवती पर्वतैरुपशोभिता ॥ ९ ॥ वन्द्य-
मानो द्विजैराजन् पूज्यमानश्च राजभिः। पौरुषाद्दिवि देवेषु
भ्राजसे रश्मिमानिव ॥ १० ॥ रुद्रैरिव यमो राजा मरुद्भिरिव
वासवः। कुरुभिस्त्वं वृतो राजन् भासि नक्षत्रराडिव ॥ ११ ॥
यैः स्म ते नाद्रियेताज्ञा न च ते शासने स्थिताः। पश्यामस्तान्
श्रियाहीनान् पाण्डवान् वनवासिनः ॥ १२ ॥ श्रूयन्ते च महाराज
सरो द्वैतवनं प्रति। वसन्तः पाण्डवाः सार्द्धं ब्राह्मणैर्वनवासिभिः

॥ १३ ॥ स प्रयाहि महाराज श्रिया परमया युतः । तापयन् पाण्डुपुत्रांस्त्वं रश्मिमानिव तेजसा ॥ १४ ॥ स्थितो राज्ये च्युतान् राज्याच्छ्रिया हीनाञ्छ्रियावृतः । असमृद्धान् समृद्धार्थः पश्य पाण्डुसुतान्नृप ॥ १५ ॥ महाभिजनसम्पन्नं भद्रे महति संस्थितम् । पाण्डवास्त्वाभिवीक्षन्तु ययातिमिव नाहुषम् ॥ १६ ॥ यां श्रियं सुहृदश्चैव दुर्हृदश्च विशाम्पते । पश्यन्ति पुरुषे दीप्तां सा समर्था भवत्युत ॥ १७ ॥ समस्थो विषमस्थान् हि दुर्हृदो योऽभिवीक्षते । जगतीस्थानिवाद्रिस्थः किमतः परमं सुखम् ॥ १८ ॥ न पुत्रधनलाभेन न राज्येनापि विन्दति । प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात् ॥ १९ ॥ किन्तु तस्य सुखं न स्यादाश्रमे यो धनञ्जयम् । अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससम् ॥ २० ॥ सुवाससो हि ते भार्य्या वल्कलाजिनसंवृताम् । पश्यन्तु दुःखितां कृष्णां सा च निर्विद्यतां पुनः ॥ २१ ॥ विनिन्दतां तथात्मानं जीवितञ्च धनच्युतम् । न तथा हि सभामध्ये तस्या भवितुमर्हति । वैमनस्यं यथा दृष्ट्वा तव भार्य्याः स्वलङ्कृताः ॥ २२ ॥

वैशम्पायन उवाच । एवमुक्त्वा तु राजानं कर्णः शकुनिना सह । तूष्णीं बभूवतुरुभौ वाक्यान्ते जनमेजय ॥ २३ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि कर्णशकुनिवाक्ये षट्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३६ ॥

---

वैशम्पायन उवाच । कर्णस्य वचनं श्रुत्वा राजा दुर्य्योधनस्ततः । हृष्टो भूत्वा पुनर्दीन इदं वचनमब्रवीत् ॥ १ ॥ ब्रवीषि यदिदं कर्ण सर्वं मनसि मे स्थितम् । न त्वभ्यनुज्ञां लप्स्यामि गमने यत्र पाण्डवाः ॥ २ ॥ परिदेवति तान् वीरान् धृतराष्ट्रो

महीपतिः । मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान् ॥ ३ ॥ अथ वाप्यनुबुध्येत नृपोऽस्माकञ्चिकीर्षितम् । एवमप्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति ॥ ४ ॥ न हि द्वैतवने किञ्चिद्विद्यतेऽन्यत् प्रयोजनम् । उत्सादनमृते तेषां वनस्थानां महाद्युते ॥ ५ ॥ जानासि हि यथा चत्ता द्यूतकाल उपस्थिते । अब्रवीद्यच्च मां त्वाञ्च सौबलं वचनं तदा ॥ ६ ॥ तानि सर्वाणि वाक्यानि यच्चान्यत् परिदेवितम् । विचिन्त्य नाधिगच्छामि गमनायेतराय वा ॥ ७ ॥ ममापि हि महान् हर्षो यदहं भीमफाल्गुनौ । क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ॥ ८ ॥ न तथा ह्याप्नुयां प्रीतिमवाप्य वसुधामिमाम् । दृष्ट्वा यथा पाण्डुसुतान् वल्कलाजिनवाससः ॥ ९ ॥ किन्नु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम् । द्रौपदीं कर्ण पश्येयं काषायवसनां वने ॥ १० ॥ यदि मां धर्म्मराजश्च भीमसेनश्च पाण्डवः । युक्तं परमया लक्ष्म्या पश्येतां जीवितं भवेत् ॥ ११ ॥ उपायं न तु पश्यामि येन गच्छेम तद्वनम् । यथा चाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः ॥ १२ ॥ स सौबलेन सहितस्तथा दुःशासनेन च । उपायं पश्य निपुणं येन गच्छेम तद्वनम् ॥ १३ ॥ अहमप्यद्य निश्चित्य गमनायेतराय च । कल्यमेव गमिष्यामि समीपं पार्थिवस्य च ॥ १४ ॥ मयि तत्रोपविष्टे तु भीष्मे च कुरुसत्तमे । उपायो यो भवेद्दृष्टस्त्वं ब्रूयाः सहसौबलः ॥ १५ ॥ वचो भीष्मस्य राज्ञश्च निशम्य गमनं प्रति । व्यवसायं करिष्येऽहमनुनीय पितामहम् ॥ १६ ॥ तथेत्युक्त्वा तु ते सर्व्वे जग्मुरावसथान् प्रति । व्युषितायां रजन्यान्तु कर्णो राजानमभ्ययात् ॥ १७ ॥ ततो दुर्य्योधनं कर्णः प्रहसन्निदमब्रवीत् । उपायः परिदृष्टोऽयं तन्निबोध जनेश्वर ॥ १८ ॥ घोषा द्वैतवने सर्व्वे त्वत्प्रतीक्षा नराधिप । घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ १९ ॥ उचितं हि सदा गन्तुं घोषयात्रां विशाम्पते । एवञ्च त्वां पिता राजन् समनुज्ञातु-

मर्हति ॥ २० ॥ तथा कथयमानौ तौ घोषयात्राविनिश्चयम् ।
गान्धारराजः शकुनिः प्रत्युवाच हसन्निव ॥ २१ ॥ उपायोऽयं
मया दृष्टो गमनाय निरामयः । अनुज्ञास्यति नो राजा चोदयि-
ष्यति चाप्युत ॥ २२ ॥ घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ २३ ॥ ततः प्रहसिताः
सर्वे तेऽन्योन्यस्य तलान् ददुः । तदेव च विनिश्चित्य ददृशुः कुरु-
सत्तमम् ॥ २४ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि घोषयात्रामन्त्रणे
सप्तत्रिंशदधिकद्विशततोऽध्यायः ॥ २३७ ॥

---

वैशम्पायन उवाच । धृतराष्ट्रं ततः सर्वे ददृशुर्जनमेजय ।
पृष्ट्वा सुखमथो राज्ञः पृष्टा राज्ञा च भारत ॥ १ ॥ ततस्तैर्विहितः
पूर्वं समङ्गो नाम वल्लवः । समीपस्थास्तदा गावो धृतराष्ट्रे न्यवे-
दयत् ॥ २ ॥ अनन्तरञ्च राधेयः शकुनिश्च विशाम्पते । आहतुः
पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपम् ॥ ३ ॥ रमणीयेषु देशेषु घोषाः
संप्रति कौरव । स्मारणे समयः प्राप्तो वत्सनामपि चाङ्कनम् ॥ ४ ॥
मृगयाचोदिता राजन्नस्मिन् काले सुतस्य ते । दुर्योधनस्य गमनं
समनुज्ञातुमर्हसि ॥ ५ ॥

धृतराष्ट्र उवाच । मृगया शोभना तात गवां हि समवेक्षणम् ।
विश्रम्भस्तु न गन्तव्यो वल्लवानामिति स्मरे ॥ ६ ॥ ते तु तत्र नर-
व्याघ्राः समीप इति नः श्रुतम् । अतो नाभ्यनुजानामि गमनं तत्र
वः स्वयम् ॥ ७ ॥ छद्मना निर्जितास्ते तु कर्षिताश्च महावने ।
तपोनित्याश्च राधेय समर्थाश्च महारथाः ॥ ८ ॥ धर्मराजो न
संक्रुध्येद्भीमसेनस्त्वमर्षणः । यज्ञसेनस्य दुहिता तेज एव तु केव-
लम् ॥ ९ ॥ यूयञ्चाप्यपराध्येयुर्दर्पमोहसमन्विताः । ततो विनि-

दहेयुस्ते तपसा हि समन्विताः॥ १०॥ अथ वा सायुधा वीरा मन्युनाभिपरिप्लुताः। सहिता बद्धनिस्त्रिंशा दहेयुः शस्त्रतेजसा ॥ ११॥ अथ यूयं बहुत्वात्तानाक्षिपन्तः कथञ्चन। अनार्य्यं परमं तत् स्यादशक्यं तच्च वै मतम्॥ १२॥ उषितो हि महाबाहुरिन्द्रलोके धनञ्जयः। दिव्यान्यस्त्राण्यवाप्याथ ततः प्रत्यागतो वनम्॥ १३॥ अकृतास्त्रेण पृथिवी जिता बीभत्सुना पुरा। किं पुनः स कृतास्त्रोऽद्य न हन्याद्वो महारथः॥ १४॥ अथ वा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ। उद्विग्नवासो विश्रम्भाद्दुःखं तत्र भविष्यति॥ १५॥ अथवा सैनिकाः केचिदपकुर्य्युर्युधिष्ठिरम्। तदबुद्धिकृतं कर्म्म दोषमुत्पादयेच्च वः॥ १६॥ तस्माद्गच्छन्तु पुरुषाः स्मारणायाप्तकारिणः। स्वयं तत्र गमनं रोचये तव भारत॥ १७॥

शकुनिरुवाच। धर्मज्ञः पाण्डवो ज्येष्ठः प्रतिज्ञातञ्च संसदि। तेन द्वादश वर्षाणि वस्तव्यानीति भारत॥ १८॥ अनुवृत्ताश्च तत् सर्वे पाण्डवा धर्मचारिणः। युधिष्ठिरस्तु कौन्तेयो न नः कोपं करिष्यति॥ १९॥ मृगयाञ्चैव नो गन्तुमिच्छा संवर्त्तते भृशम्। स्मारणन्तु चिकीर्षामो न तु पाण्डवदर्शनम्॥ २०॥ न चानार्य्यसमाचारः कश्चित्तत्र भविष्यति। न च तत्र गमिष्यामो यत्र तेषां प्रतिश्रयः॥ २१॥

वैशम्पायन उवाच। एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः। दुर्य्योधनं सहामात्यमनुजज्ञे न कामतः॥ २२॥ अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा। निर्ययौ भरतश्रेष्ठो बलेन महता वृतः॥ २३॥ दुःशासनेन च तथा सौबलेन च धीमता। संवृतो भ्रातृभिश्चान्यैः स्त्रीभिश्चापि सहस्रशः॥ २४॥ तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः। पौराश्चानुययुः सर्वे सहदारा वनञ्च तत्॥ २५॥ अष्टौ रथसहस्राणि त्रीणि नागायुतानि च। पत्तयो

बहुसाहस्रा ह्याश्च नवतिः शताः ॥ २६ ॥ शकटापणवेशाश्च वणिजो वन्दिनस्तथा । नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः ॥ २७ ॥ ततः प्रयाणे नृपतेः सुमहानभवत् स्वनः । प्रावृषीव महावायोरुद्धतस्य विशाम्पते ॥ २८ ॥ गव्यूतिमात्रे न्यवसद्राजा दुर्य्योधनस्तदा । प्रयातो वाहनैः सर्वैस्ततो द्वैतवनं सरः ॥ २९ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि दुर्य्योधनद्वैतवन-
गमने अष्टत्रिंशदधिकद्विशततोऽध्यायः ॥ २३८ ॥

---

वैशम्पायन उवाच । अथ दुर्य्योधनो राजा तत्र तत्र वने वसन् । जगाम घोषानभितस्तत्र चक्रे निवेशनम् ॥ १ ॥ रमणीये समाज्ञाते सोदके समहीरुहे । देशे सर्वगुणोपेते चक्रुरावसथन्नराः ॥ २ ॥ तथैव तत्समीपस्थान् पृथगावसथान् बहून् । कर्णस्य शकुनेश्चैव भ्रातृणाञ्चैव सर्वशः ॥ ३ ॥ ददर्श स तदा गावः शतशोऽथ सहस्रशः । अङ्कैर्लक्षैश्च ताः सर्वाः लक्षयामास पार्थिवः ॥ ४ ॥ अङ्कयामास वत्सांश्च जज्ञे चोपसृतांस्त्वपि । बालवत्साश्च या गावः कालयामास ता अपि ॥ ५ ॥ अथ संस्मारणं कृत्वा लक्षयित्वा त्रिहायणान् । वृतो गोपालकैः प्रीतो व्यहरत् कुरुनन्दनः ॥ ६ ॥ स च पौरजनः सर्वः सैनिकाश्च सहस्रशः । यथोपजोषञ्चिक्रीडुर्वने तस्मिन् यथामराः ॥ ७ ॥ ततो गोपाः प्रगातारः कुशला नृत्यवादने । धार्त्तराष्ट्रमुपातिष्ठन् कन्याश्चैव स्वलङ्कृताः ॥ ८ ॥ स स्त्रीगणवृतो राजा प्रहृष्टः प्रददौ वसु । तेभ्यो यथार्हमन्नानि पानानि विविधानि च ॥ ९ ॥ ततस्ते सहिताः सर्वे तरक्षून् महिषान् मृगान् । गवयर्क्षवराहांश्च समन्तात् पर्य्यकालयन् ॥ १० ॥ स ताञ्छरैर्विनिर्भिद्य गजांश्च सुबहून् वने । रमणीयेषु देशेषु ग्राहयामास वै मृगान् ॥ ११ ॥ गोरसानुप-

युञ्जान उपभोगांश्च भारत। पश्यन् स रमणीयानि वनान्युप-
वनानि च ॥ १२ ॥ मत्तभ्रमरजुष्टानि वर्हिणाभिरुतानि च।
अगच्छदानुपूर्व्वेण पुण्यं द्वैतवनं सरः ॥ १३ ॥ मत्तभ्रमरसंजुष्टं
नीलकण्ठरवाकुलम्। सप्तच्छदसमाकीर्णं पुन्नागवकुलैर्युतम् ॥१४॥
ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत्। यदृच्छया च तत्रस्थो
धर्मपुत्रो युधिष्ठिरः ॥ १५ ॥ ईजे राजर्षियज्ञेन साद्यस्केन विशा-
म्पते। दिव्येन विधिना चैव वन्येन कुरुसत्तम ॥ १६ ॥ कृत्वा
निवेशमभितः सरसस्तस्य कौरव। द्रौपद्या सहितो धीमान् धर्म-
पत्न्या नराधिपः ॥ १७ ॥ ततो दुर्य्योधनः प्रेष्यानादिदेश सह-
स्रशः। आक्रीड़ावसथाः क्षिप्रं क्रियन्तामिति भारत ॥ १८ ॥
ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः। चिकीर्षन्तस्तदाक्रीड़ान्
जग्मुर्द्वैतवनं सरः ॥ १९ ॥ प्रविशन्तं वनं द्वारि गन्धर्व्वाः समवार-
यन्। सेनाग्रं धार्त्तराष्ट्रस्य प्राप्तं द्वैतवनं सरः ॥ २० ॥ तत्र
गन्धर्व्वराजो वै पूर्व्वमेव विशाम्पते। कुवेरभवनाद्राजन्नाजगाम
गणावृतः ॥ २१ ॥ गणैरप्सरसाञ्चैव त्रिदशानां तथात्मजैः।
विहारशीलः क्रीड़ार्थं तेन तत् संवृतं सरः ॥ २२ ॥ तेन तत्
संवृतं दृष्ट्वा ते राजपरिचारकाः। प्रतिजग्मु स्ततो राजन् यत्र
दुर्य्योधनो नृपः ॥ २३ ॥ स तु तेषां वचः श्रुत्वा सैनिकान् युद्ध-
दुर्म्मदान्। प्रेषयामास कौरव्य उत्सारयत तानिति ॥ २४ ॥ तस्य
तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः। गत्वा द्वैतवनं गत्वा गन्धर्व्वा-
निदमब्रुवन् ॥ २५ ॥ राजा दुर्य्योधनो नाम धृतराष्ट्रसुतो बली।
विजिहीर्षुरिहायाति तदर्थमुपसर्पत ॥ २६ ॥ एवमुक्तास्तु गन्धर्व्वाः
प्रहसन्तो विशाम्पते। प्रत्यब्रुवंस्तान् पुरुषानिदं हि परुषं वचः
॥ २७ ॥ न चेतयति वो राजा मन्दबुद्धिः सुयोधनः। योऽस्माना-
ज्ञापयत्येवं वैश्यानिव दिवौकसः ॥ २८ ॥ यूयं मुमूर्षवश्चापि मन्द-
प्रज्ञा न संशयः। ये तस्य वचनादेवमस्मान् ब्रूत विचेतसः ॥ २९ ॥

गच्छध्वं त्वरिताः सर्वे यत्र राजा स कौरवः। न चेदद्यैव गच्छध्वं धर्मराजनिवेशनम् ॥ ३० ॥ एवमुक्तास्तु गन्धर्वै राज्ञः सेनाग्रयायिनः। सम्प्राद्रवन् यतो राजा धृतराष्ट्रसुतोऽभवत् ॥ ३१ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि गन्धर्वदुर्योधनसेनासंवादे एकोनचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २३९ ॥

---

वैशम्पायन उवाच। ततस्ते सहिताः सर्वे दुर्योधनमुपागमन्। अब्रुवंश्च महाराज यदूचुः कौरवान् प्रति ॥ १ ॥ गन्धर्वैर्वारिते सैन्ये धार्त्तराष्ट्रः प्रतापवान्। अमर्षपूर्णः सैन्यानि प्रत्यभाषत भारत ॥ २ ॥ शास्तैनानधर्मज्ञान्मम विप्रियकारिणः। यदि प्रक्रीड़ते सर्वैर्देवैः सह शतक्रतुः ॥ ३ ॥ दुर्य्योधनवचः श्रुत्वा धार्त्तराष्ट्रा महाबलाः। सर्व एवाभिसन्नद्धा योधाश्चापि सहस्रशः ॥ ४ ॥ ततः प्रमथ्य सर्वांस्तांस्तद्वनं विविशुर्बलात्। सिंहनादेन महता पूरयन्तो दिशो दश ॥ ५ ॥ ततोऽपरैरवार्य्यन्त गन्धर्वैः कुरुसैनिकाः। ते वार्य्यमाणा गन्धर्वैः साम्नैव वसुधाधिप ॥ ६ ॥ताननादृत्य गन्धर्वांस्तद्वनं विविशुर्महत्। यदा वाचा न तिष्ठन्ति धार्त्तराष्ट्राः सराजकाः ॥ ७ ॥ ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन्। गन्धर्वराजस्तान् सर्वानब्रवीत् कौरवान् प्रति ॥ ८ ॥ अनार्य्यान् शासतेत्येतांश्चित्रसेनो ह्यमर्षणः। अनुज्ञाताश्च गन्धर्वाश्चित्रसेनेन भारत ॥ ९ ॥ प्रगृहीतायुधाः सर्वे धार्त्तराष्ट्रानभिद्रवन्। तान् दृष्ट्वापततः शीघ्रान् गन्धर्वानुद्यतायुधान् ॥ १० ॥ प्राद्रवंस्ते दिशः सर्वे धार्त्तराष्ट्रस्य पश्यतः। तान् दृष्ट्वा द्रवतः सर्वान् धार्त्तराष्ट्रान् पराङ्मुखान् ॥ ११ ॥ राधेयस्तु तदा वीरो नासीत्तत्र पराङ्मुखः। आपतन्तीन्तु संप्रेक्ष्य गन्धर्वाणां महाचमूम् ॥ १२ ॥ महता शरवर्षेण राधेयः प्रत्यवारयत्। क्षुरप्रैर्विशिखै-

अन्तर्वत्सरन्तस्तथायसैः ॥ १३ ॥ गन्धर्व्वाश्छतशोऽभिन्नलघुलाल
सूतनन्दनः । पातयन्नुत्तमाङ्गानि गन्धर्व्वाणां महारथः ॥ १४ ॥
क्षणेन व्यधमत् सर्व्वां चित्रसेनस्य वाहिनीम् । ते वध्यमाना गन्धर्व्वाः
सूतपुत्त्रेण धीमता ॥ १५ ॥ भूय एवाभ्यवर्त्तन्त शतशोऽथ सहस्रशः ।
गन्धर्व्वभूता पृथिवी क्षणेन समपद्यत ॥ १६ ॥ आपतद्भि-
र्म्महावेगैश्चित्रसेनस्य सैनिकैः । अथ दुर्य्योधनो राजा शकुनिश्चापि
सौबलः ॥ १७ ॥ दुःशासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः ।
व्यहनंस्तत्तदा सैन्यं रथैर्गरुड़निःस्वनैः ॥ १८ ॥ भूयश्च योधया-
मासुः कृत्वा कर्णमथाग्रतः । महता रथसंघेन हयवारेण चाच्युत
॥१९॥ वैकर्त्तनं परीप्सन्तो गन्धर्व्वान् समवारयन् । ततः सं-
न्यपतन् सर्व्वे गन्धर्व्वाः कौरवैः सह ॥ २० ॥ तदा सुतुमुलं युद्ध-
मभवल्लोमहर्षणम् । ततस्ते मृदवोऽभूवन् गन्धर्व्वाः शरपीड़िताः
॥ २१ ॥ उच्चुक्रुशुश्च कौरव्या गन्धर्व्वान् प्रेक्ष्य पीड़ितान् । गन्धर्व्वां-
स्त्रासितान् दृष्ट्वा चित्रसेनो ह्यमर्षणः ॥ २२ ॥ उत्पपातासनात्
क्रुद्धो वधे तेषां समाहितः । ततो मायास्त्रमास्थाय युयुधे चित्र-
मार्गवित् ॥ २३ ॥ तयामुह्यन्त कौरव्याश्चित्रसेनस्य मायया ।
एकैको हि तदा योधो धार्त्तराष्ट्रस्य भारत ॥ २४ ॥ पर्य्यवर्त्तत
गन्धर्व्वैर्दशभिर्दशभिः सह । ततः संपीड्यमानास्ते बलेन महता
तदा ॥ २५ ॥ प्राद्रवन्त रणे भीता येन राजन् जिजीषवः ।
भज्यमानेष्वनीकेषु धार्त्तराष्ट्रेषु सर्व्वशः ॥ २६ ॥ कर्णो वैकर्त्तनो
राजंस्तस्थौ गिरिरिवाचलः । दुर्य्योधनश्च कर्णश्च शकुनिश्चापि
सौबलः ॥ २७ ॥ गन्धर्व्वान् योधयामासुः समरे भृशविक्षताः ।
सर्व्वे एव तु गन्धर्व्वाः शतशोऽथ सहस्रशः ॥ २८ ॥ जिघांसमानाः
सहिताः कर्णमभ्यद्रवद्रणे । असिभिः पट्टिशैः शूलैर्गदाभिश्च महा-
बलः ॥ २९ ॥ सूतपुत्रं जिघांसन्तः समन्तात् पर्य्यवाकिरन् ।
अन्येऽस्य युगमच्छिन्दन् ध्वजमन्ये न्यपातयन् ॥ ३० ॥ ईषामन्ये

हयानन्ये सूतमन्ये न्यपातयन्। अन्ये छत्रं वरूथञ्च वन्धुरञ्च तथापरे ॥ ३१ ॥ गन्धर्वा बहुसाहस्राः खिलशो व्यधमन्रथम्। ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्मभृत्। विकर्णरथमास्थाय मोक्षायाश्वानचोदयत् ॥ ३२ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि कर्णरणभङ्गे चत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४० ॥

---

वैशम्पायन उवाच। गन्धर्वैस्तु महाराज भग्ने कर्णे महारथे। सम्प्राद्रवच्चमूः सर्वा धार्त्तराष्ट्रस्य पश्यतः ॥ १ ॥ तान् दृष्ट्वा द्रवतः सर्वान् धार्त्तराष्ट्रान् पराङ्मुखान्। दुर्य्योधनो महाराज नासीत्तत्र पराङ्मुखः ॥ २ ॥ तामापतन्तीं सम्प्रेक्ष्य गन्धर्वाणां महाचमूम्। महता शरवर्षेण सोऽभ्यवर्षदरिन्दमः ॥ ३ ॥ अचिन्त्य शरवर्षन्तु गन्धर्वास्तस्य तं रथम्। दुर्य्योधनं जिघांसन्तः समन्तात् पर्य्यवारयन् ॥ ४ ॥ युगमीषां वरूथञ्च तथैव ध्वजसारथी। अश्वांस्त्रिवेणुं तल्पञ्च तिलशो व्यधमच्छरैः ॥ ५ ॥ दुर्य्योधनं चित्रसेनो विरथं पतितं भुवि। अभिद्रुत्य महाबाहुर्जीवग्राहमथाग्रहीत् ॥६॥ तस्मिन् गृहीते राजेन्द्र स्थितं दुःशासनं रथे। पर्य्यगृह्णन्त गन्धर्वाः परिवार्य्य समन्ततः ॥ ७ ॥ विविंशतिं चित्रसेनावादायान्ये विदुद्रुवुः। विन्दानुविन्दावपरे राजदारांश्च सर्वशः ॥ ८॥ योधाश्च धार्त्तराष्ट्रस्य गन्धर्वैः समभिद्रुताः। पूर्व्वंप्रभग्नैः सहिताः पाण्डवानभ्ययुस्तदा ॥ ९ ॥ शकटापणवेशाश्च यानयुग्मञ्च सर्वशः। शरणं पाण्डवान् जग्मुर्ह्रियमाणे महीपतौ ॥ १० ॥

सैनिका ऊचुः। प्रियदर्शी महाबाहुर्धार्त्तराष्ट्रो महाबलः। गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ॥ ११ ॥ दुःशासनो दुर्विषहो दुर्मुखो दुर्ज्जयस्तथा। बद्धा ह्रियन्ते गन्धर्वैराजदाराश्च सर्वशः ॥१२॥

वैशम्पायन उवाच। इति दुर्य्योधनामात्याः क्रोशन्तो राजगृद्धिनः। आर्त्ता दीनास्ततः सर्व्वे युधिष्ठिरमुपागमन् ॥ १३ ॥ तांस्तथा व्यथितान् दीनान् भिक्षमाणान् युधिष्ठिरम्। वृद्धान्दुर्य्योधनामात्यान् भीमसेनोऽभ्यभाषत ॥ १४ ॥ महता हि प्रयत्नेन सन्नह्य गजवाजिभिः। अस्माभिर्यदनुष्ठेयं गन्धर्व्वैस्तदनुष्ठितम् ॥ १५ ॥ अन्यथा वर्त्तमानानामर्थो जातोऽयमन्यथा। दुर्मन्त्रितमिदं तावद्राज्ञो दुर्द्यूतदेविनः ॥ १६ ॥ द्वेष्टारमन्ये क्लीवस्य पातयन्तीति नः श्रुतम्। इदं कृतन्नः प्रत्यक्षं गन्धर्व्वैरतिमानुषम् ॥ १७ ॥ दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः। येनास्माकं हृतो भार आसीनानां सुखावहः ॥ १८ ॥ शीतवातातपसहांस्तपसा चैव कर्षितान्। समस्थो विषमस्थान् हि द्रष्टुमिच्छति दुर्मतिः ॥ १९ ॥ अधर्म्मचारिणस्तस्य कौरव्यस्य दुरात्मनः। ये शीलमनुवर्त्तन्ते ते पश्यन्ति पराभवम् ॥ २० ॥ अधर्म्मो हि कृतस्तेन येनैतदुपशिक्षितम्। अनृशंसास्तु कौन्तेयास्तत्प्रत्यक्षं ब्रवीमि वः ॥ २१ ॥ एवं ब्रुवाणं कौन्तेयं भीमसेनमपस्वरम्। न कालः परुषस्यायमिति राजाभ्यभाषत ॥ २२ ॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनादिहरणे एकचत्वारिंशदधिकद्विशतोऽध्यायः ॥ २४१ ॥

---

युधिष्ठिर उवाच। अस्मानभिगतांस्तात भयार्त्ताञ्छरणैषिणः। कौरवान् विषमप्राप्तान् कथं ब्रूयास्त्वमीदृशम् ॥ १ ॥ भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर। प्रसक्तानि च वैराणि कुलधर्म्मो न नश्यति ॥ २ ॥ यदा तु कश्चिज्ज्ञातीनां वाह्यः प्रार्थयते कुलम्। न मर्षयन्ति तत् सन्तो वाह्येनाभिप्रधर्षणम् ॥ ३ ॥ जानात्येष हि दुर्बुद्धिरस्मानिह चिरोषितान्। स एवं परिभूया-

मानकार्षीदिदमप्रियम् ॥ ४ ॥ दुर्य्योधनस्य ग्रहणात् गन्धर्वेण बलात् प्रभो। स्त्रीणां वाह्याभिमर्षाच्च हतं भवति नः कुलम् ॥५॥ शरणञ्च प्रपन्नानां त्राणार्थञ्च कुलस्य च। उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत माचिरम् ॥ ६ ॥ अर्जुनश्च यमौ चैव त्वञ्च वीरापराजितः। मोचयध्वं नरव्याघ्राः ह्रियमाणं सुयोधनम् ॥ ७ ॥ एते रथा नरव्याघ्राः सर्वशस्त्रसमन्विताः। धृतराष्ट्रस्य पुत्राणां विमलाः काञ्चनध्वजाः ॥ ८ ॥ सस्वनानधिरोहध्वं नित्यसज्जानिमान् रथान्। इन्द्रसेनादिभिः सूतैः कृतशस्त्रैरधिष्ठितान् ॥ ९ ॥ एतानास्थाय वै तात गन्धर्वान् योद्धुमाहवे। सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ॥ १० ॥ य एव कश्चिद्राजन्यः शरणार्थमिहागतम्। परं शक्त्याभिरक्षेत किं पुनस्त्वं वृकोदर ॥ ११ ॥ क इहान्यो भवेत्त्राणमभिधावेति चोदितः। प्राञ्जलिं शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवम् ॥ १२ ॥ वरदानञ्च राज्यञ्च पुत्रजन्म च पाण्डवाः। शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकञ्च तत्समम् ॥ १३ ॥ किञ्चाप्यधिकमेतस्माद्यदापन्नः सुयोधनः। त्वद्बाहुबलमाश्रित्य जीवितं परिमार्गते ॥ १४ ॥ स्वयमेव प्रधावेयं यदि न स्याद्वृकोदर। विततो मे क्रतुर्वीर न हि मेऽत्र विचारणा ॥ १५ ॥ साम्नैव तु यथा भीम मोचयेथाः सुयोधनम्। तथा सर्वैरुपायैस्त्वं यतेथाः कुरुनन्दनः ॥ १६ ॥ न साम्ना प्रतिपद्येत यदि गन्धर्वराडसौ। पराक्रमेण मृदुना मोचयेथाः सुयोधनम् ॥ १७ ॥ अथासौ मृदुयुद्धेन न मुञ्चेद्भीमकौरवान्। सर्वोपायैर्विमोच्यास्ते निगृह्य परिपन्थिनः ॥ १८ ॥ एतावद्धि मया शक्यं सन्देष्टुं वै वृकोदर। वैताने कर्मणि तते वर्त्तमाने च भारत ॥ १९ ॥

वैशम्पायन उवाच। अजातशत्रोर्वचनं तच्छ्रुत्वा तु धनञ्जयः। प्रतिजज्ञे गुरोर्वाक्यात् कौरवाणांविमोचणम् ॥ २० ॥

अर्जुन उवाच। यदि साम्ना न मोक्ष्यन्ति गन्धर्वा धृतराष्ट्र-

जान्। अद्य गन्धर्वराजस्य भूमिः पास्यति शोणितम् ॥ २१ ॥ अर्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः। कौरवाणां तदा राजन् पुनः प्रत्यागतं मनः ॥ २२ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि दुर्य्योधनमोचणानुज्ञायां द्विचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४२ ॥

---

वैशम्पायन उवाच। युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः। प्रहृष्टवदनाः सर्वे समुत्तस्थुर्नरर्षभाः ॥ १ ॥ अभेद्यानि ततः सर्वे समनह्यन्त भारत। जाम्बूनदविचित्राणि कवचानि महारथाः ॥ २ ॥ आयुधानि च दिव्यानि विविधानि समाददुः। ते दंशिता रथैः सर्वे ध्वजिनः सशरासनाः ॥ ३ ॥ पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इव पावकाः। तान्रथान् साधुसम्पन्नान् संयुक्तान् जवनैर्हयैः ॥ ४ ॥ आस्थाय रथशार्दूलाः शीघ्रमेव ययुस्ततः। ततः कौरवसैन्यानां प्रादुरासीन्महास्वनः ॥ ५ ॥ प्रयातान् सहितान् दृष्ट्वा पाण्डुपुत्रान्महारथान्। जितकाशिनश्च खचराश्त्वरिताश्च महारथाः ॥ ६ ॥ क्षणेनैव वने तस्मिन् समाजग्मुरभीतवत्। न्यवर्त्तन्त ततः सर्वे गन्धर्वा जितकाशिनः ॥ ७ ॥ दृष्ट्वा रथगतान् वीरान् पाण्डवांश्चतुरो रणे। तांस्तु विभ्राजितान् दृष्ट्वा लोकपालानिवोद्यतान् ॥ ८ ॥ व्यूढानीका व्यतिष्ठन्त गन्धमादनवासिनः। राज्ञस्तु वचनं श्रुत्वा धर्मपुत्रस्य धीमतः ॥ ९ ॥ क्रमेण मृदुना युद्धमुपक्रान्तञ्च भारत। न तु गन्धर्वराजस्य सैनिका मन्दचेतसः ॥ १० ॥ शक्यन्ते मृदुना श्रेयः प्रतिपादयितुं यदा। ततस्तान् युधि दुर्द्धर्षान् सव्यसाची परन्तपः ॥ ११ ॥ सान्त्वपूर्व्वमिदं वाक्यमुवाच खचरान्रणे। विसर्ज्जयत राजानं भ्रातरं मे सुयोधनम् ॥ १२ ॥ त एवमुक्ता गन्धर्वाः पाण्डवेन यशस्विना। उत्स्मयन्त-

स्तदा पार्थमिदं वचनमब्रुवन् ॥ १३ ॥ एकस्यैव वयं तात कुर्य्याम वचनं भुवि। यस्य शासनमाज्ञाय चरामो विगतज्वराः ॥ १४ ॥ तेनैकेन यथादिष्टं तथा वर्त्ताम भारत। न शास्ता विद्यतेऽस्माकमन्यस्तस्मात् सुरेश्वरात् ॥ १५ ॥ एवमुक्तः स गन्धर्वैः कुन्तीपुत्रो धनञ्जयः। गन्धर्वान् पुनरेवेदं वचनं प्रत्यभाषत ॥ १६ ॥ न तद्गन्धर्वराजस्य युक्तं कर्म जुगुप्सितम्। परदाराभिमर्षश्च मानुषैश्च समागमः ॥ १७ ॥ उत्सृजध्वं महावीर्य्या धृतराष्ट्रसुतानिमान्। दारांश्चैषां विमुञ्चध्वं धर्मराजस्य शासनात् ॥ १८ ॥ यदि साम्ना न मुञ्चध्वं गन्धर्वा धृतराष्ट्रजान्। मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् ॥ १९ ॥ एवमुक्त्वा ततः पार्थः सव्यसाची धनञ्जयः। ससर्ज्ज निशितान् वाणान् खचरान् खचरान् प्रति ॥२०॥ तथैव शरवर्षेण गन्धर्वास्ते बलोत्कटाः। पाण्डवानभ्यवर्त्तन्त पाण्डवाश्च दिवौकसः ॥ २१ ॥ ततः सुतुमुलं युद्धं गन्धर्वाणां तरस्विनाम् बभूव भीमवेगानां पाण्डवानाञ्च भारत ॥ २२ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि पाण्डवगन्धर्वयुद्धे त्रिचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४३ ॥

---

वैशम्पायन उवाच। ततो दिव्यास्त्रसम्पन्ना गन्धर्वा हेममालिनः। विसृजन्तः शरान् दीप्तान् समन्तात्पर्य्यवारयन् ॥ १ ॥ चत्वारः पाण्डवा वीरा गन्धर्वाश्च सहस्रशः। रणे संन्यपतन्राजंस्तदद्भुतमिवाभवत् ॥ २ ॥ यथा कर्णस्य च रथो धार्त्तराष्ट्रस्य चोभयोः। गन्धर्वैः शतशश्छिन्नौ तथा तेषां प्रचक्रिरे ॥ ३ ॥ तान् समापततो राजन् गन्धर्वाञ्छतशो रणे। प्रत्यगृह्णन्नरव्याघ्राः शरवर्षैरनेकशः ॥ ४ ॥ ते कीर्य्यमाणाः खगमाः शरवर्षैः समन्ततः। न शेकुः पाण्डुपुत्राणां समीपे परिवर्त्तितुम् ॥ ५ ॥ अति-

क्रुद्धानतिक्रुद्धो गन्धर्वानर्जुनस्तदा। लक्षयित्वाथ दिव्यानि महा-
स्त्राण्युपचक्रमे ॥ ५ ॥ सहस्राणां सहस्राणि प्राहिणोद्यमसाद-
नम्। आग्नेयेनार्जुनः सङ्ख्ये गन्धर्वाणां बलोत्कटः ॥ ६ ॥ तथा
भीमो महेष्वासः संयुगे बलिनाम्वरः। गन्धर्वान् शतशो राजन्
जघान निशितैः शरैः ॥ ७ ॥ माद्रीपुत्रावपि तथा युध्यमानौ
बलोत्कटौ। परिगृह्याग्रतो राजन् जघ्नतुः शतशः परान् ॥ ८ ॥
ते वध्यमाना गन्धर्वा दिव्यैरस्त्रैर्महारथैः। उत्पेतुः खमुपादाय
धृतराष्ट्रसुतांस्ततः ॥ ९ ॥ स तानुत्पतितान् दृष्ट्वा कुन्तीपुत्रो धन-
ञ्जयः। महता शरजालेन समन्तात् पर्य्यवारयत् ॥ १० ॥ ते
बद्धाः शरजालेन शकुन्ता इव पञ्जरे। ववर्षुरर्जुनं क्रोधाद्गदा-
शक्त्यृष्टिवृष्टिभिः ॥ ११ ॥ गदाशक्त्यृष्टिवृष्टीस्ता निहत्य परमास्त्र-
वित्। गात्राणि चाहनद्भल्लैर्गन्धर्वाणां धनञ्जयः ॥ १२ ॥ शिरोभिः
प्रपतद्भिश्च चरणैर्बाहुभिस्तथा। अश्मवृष्टिरिवाभाति परेषामभव-
द्भयम् ॥ १३ ॥ ते वध्यमाना गन्धर्वाः पाण्डवेन महात्मना।
भूमिष्ठमन्तरीक्षस्थाः शरवर्षैरवाकिरन् ॥ १४ ॥ तेषान्तु शर-
वर्षाणि सव्यसाची परन्तपः। अस्त्रैः संवार्य्य तेजस्वी गन्धर्वान्
प्रत्यविध्यत ॥ १५ ॥ स्थूणाकर्णेन्द्रजालञ्च सौरञ्चापि तथार्जुनः।
आग्नेयञ्चापि सौम्यञ्च ससर्ज्ज कुरुनन्दनः ॥ १६ ॥ ते दह्यमाना
गन्धर्वाः कुन्तीपुत्रस्य सायकैः। दैतेया इव शक्रेण विषादमगमन्
परम् ॥ १७ ॥ ऊर्द्ध्वमाक्रममाणाश्च शरजालेन वारिताः। विसर्प-
माणा भल्लैश्च वार्य्यन्ते सव्यसाचिना ॥ १८ ॥ गन्धर्वांस्त्रासितान्
दृष्ट्वा कुन्तीपुत्रेण भारत। चित्रसेनो गदां गृह्य सव्यसाचिनमाद्र-
वत् ॥ १९ ॥ तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे। गदां
सर्व्वायसीं पार्थः शरैश्चिच्छेद सप्तधा ॥ २० ॥ स गदां बहुधा
दृष्ट्वा कृत्तां बाणैस्तरस्विना। संवृत्य विद्ययात्मानं योधयामास
पाण्डवम् ॥ २१ ॥ अस्त्राणि तस्य दिव्यानि सम्प्रयुक्तानि सर्वशः।

दिव्यैरस्त्रैस्तदा वीरः पर्य्यवारयदर्जुनः ॥ २२ ॥ स वार्य्यमाण-स्तैरस्त्रैरर्जुनेन महात्मना। गन्धर्वराजो बलवान् माययान्तर्हित-स्तदा ॥ २३ ॥ अन्तर्हितन्तमालक्ष्य प्रहरन्तमथार्जुनः। ताड़यामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः ॥ २४ ॥ अन्तर्धानवधञ्चास्य चक्रे क्रुद्धोऽर्जुनस्तदा। शब्दवेधं समाश्रित्य बहुरूपो धनञ्जयः ॥ २५ ॥ स वध्यमानस्तैरस्त्रैरर्जुनेन महात्मना। ततोऽस्य दर्शयामास तदात्मानं प्रियः सखा ॥ २६ ॥ चित्रसेनस्तथोवाच सखायं युधि विद्धि माम्। चित्रसेनं समालक्ष्य सखायं युधि दुर्बलम् ॥ २७ ॥ संजहारास्त्रमथ तत् प्रहृष्टं पाण्डवर्षभः। दृष्ट्वा तु पाण्डवाः सर्वे संहृतास्त्रं धनञ्जयम् ॥ २८ ॥ संजह्रुः प्रद्रुतानश्वान् शरवेगान् धनूंषि च। चित्रसेनश्च भीमश्च सव्यसाची यमावपि। पृष्ट्वा कौशल्यमन्योऽन्यं रथेष्वेवावतस्थिरे ॥ २९ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि गन्धर्वपराभवे
चतुश्चत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४४ ॥

---

वैशम्पायन उवाच। ततोऽर्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत्। मध्ये गन्धर्वसैन्यानां महेष्वासो महाद्युतिः ॥ १ ॥ किन्ते व्यवसितं वीर कौरवाणां विनिग्रहे। किमर्थञ्च सदारोऽयं निगृहीतः सुयोधनः ॥ २ ॥

चित्रसेन उवाच। विदितोऽयमभिप्रायस्तत्रस्थेन दुरात्मनः। दुर्य्योधनस्य पापस्य कर्णस्य च धनञ्जय ॥ ३ ॥ वनस्थान् भवतो ज्ञात्वा क्लिश्यमानाननाथवत्। समस्थो विषमस्थांस्तान् द्रक्ष्यामीत्यनवस्थितान् ॥ ४ ॥ इमेऽवहसितुं प्राप्ता द्रौपदीञ्च यशस्विनीम्। ज्ञात्वा चिकीर्षितञ्चैषां मामुवाच सुरेश्वरः ॥ ५ ॥ गच्छ दुर्य्योधनं बद्ध्वा सहामात्यमिहानय। धनञ्जयश्च ते रक्ष्यः सह भ्रातृभि-

राघवे ॥ ६ ॥ स च प्रियसखा तुभ्यं शिष्यश्च तव पाण्डवः । वच-
नाद्देवराजस्य ततोऽस्मीहागतो द्रुतम् ॥ ७ ॥ अयं दुरात्मा बद्धश्च
गमिष्यामि सुरालयम् । नेष्याम्येनं दुरात्मानं पाकशासनशासनात् ॥८॥

अर्जुन उवाच । उत्सृज्यतां चित्रसेन भ्राताऽस्माकं सुयोधनः ।
धर्मराजस्य सन्देशान्मम चेदिच्छसि प्रियम् ॥ ९ ॥

चित्रसेन उवाच । पापोऽयं नित्यसन्तुष्टो न विमोक्षणमर्हति ।
प्रलब्धा धर्मराजस्य कृष्णायाश्च धनञ्जय ॥ १ ॥ नेदञ्चिकीर्षितं
तस्य कुन्तीपुत्रो युधिष्ठिरः । जानाति धर्मराजो हि श्रुत्वा कुरु
यथेच्छसि ॥ ११ ॥

वैशम्पायन उवाच । ते सर्व एव राजानमभिजग्मुर्युधिष्ठिरम् ।
अभिगम्य च तत्सर्वं शशंसुस्तस्य चेष्टितम् ॥ १२ ॥ अजातशत्रु-
स्तच्छ्रुत्वा गन्धर्वस्य वचस्तदा । मोचयामास तान् सर्वान् गन्ध-
वान् प्रशशंस च ॥ १३ ॥ दिष्ट्या भवद्भिर्बलिभिः शक्तैः सर्वैर्न
हिंसितः । दुर्वृत्तो धार्त्तराष्ट्रोऽयं सामात्यज्ञातिवान्धवः ॥ १४ ॥
उपकारो महांस्तात कृतोऽयं मम खेचरैः । कुलं न परिभूतं मे
मोक्षणोऽस्य दुरात्मनः ॥ १५ ॥ आज्ञापयध्वमिष्टानि प्रीयामो
दर्शनेन वः । प्राप्य सर्वानभिप्रायांस्ततो व्रजत मा चिरम् ॥ १६ ॥
अनुज्ञातास्तु गन्धर्वाः पाण्डुपुत्रेण धीमता । सहाप्सरोभिः सं-
हृष्टाश्चित्रसेनमुखा ययुः ॥ १७ ॥ देवराडपि गन्धर्वान्मृतांस्तान्
समजीवयत् । दिव्येनामृतवर्षेण ये हताः कौरवैर्युधि ॥ १८ ॥
ज्ञातींस्तानवमुच्याथ राजदारांश्च सर्वशः । कृत्वा च दुष्करं कर्म
प्रीतियुक्ताश्च पाण्डवाः ॥ १९ ॥ सस्त्रीकुमारैः कुरुभिः पूज्यमाना
महारथाः । वभ्राजिरे महात्मानः क्रतुमध्ये यथाग्नयः ॥ २० ॥
ततो दुर्य्योधनं मुक्तं भ्रातृभिः सहितं तदा । युधिष्ठिरस्तु प्रणया-
दिदं वचनमब्रवीत् ॥ २१ ॥ मास्म तात पुनः कार्षीरीदृशं साहसं
क्वचित् । न हि साहसकर्त्तारः सुखमेधन्ति भारत ॥ २२ ॥

स्वस्तिमान् सहितः सर्वैर्भ्रातृभिः कुरुनन्दन। गृहान् व्रज यथाकामं वैमनस्यञ्च मा कृथाः ॥२३॥

वैशम्पायन उवाच। पाण्डवेनाभ्यनुज्ञातो राजा दुर्य्योधनस्तदा। अभिवाद्य धर्म्मपुत्रं गतेन्द्रिय इवातुरः ॥ २४ ॥ विदीर्य्यमाणो व्रीड़ावान् जगाम नगरं प्रति। तस्मिन् गते कौरवेरी कुन्तीपुत्रो युधिष्ठिरः ॥ २५ ॥ भ्रातृभिः सहितो वीरः पूज्यमानो द्विजातिभिः। तपोधनैश्च तैः सर्व्वैर्वृतः शक्र इवामरैः। तथा द्वैतवने तस्मिन् विजहार मुदायुतः ॥ २६ ॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनमोक्षणे पञ्चचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४५ ॥

---

जनमेजय उवाच। शत्रुभिर्जितबद्धस्य पाण्डवैश्च महात्मभिः। मोक्षितस्य युधा पश्चान्मानिनः सुदुरात्मनः ॥ १ ॥ कत्थनस्यावलिप्तस्य गर्व्वितस्य च नित्यशः। सदा च पौरुषौदार्य्यैः पाण्डवानवमन्यतः ॥ २ ॥ दुर्य्योधनस्य पापस्य नित्याहङ्कारवादिनः। प्रवेशो हास्तिनपुरे दुष्करः प्रतिभाति मे ॥ ३ ॥ तस्य लज्जान्वितस्यैव शोकव्याकुलचेतसः। प्रवेशं विस्तरेण त्वं वैशम्पायन कीर्त्तय ॥ ४ ॥

वैशम्पायन उवाच। धर्म्मराजनिसृष्टस्तु धार्त्तराष्ट्रः सुयोधन। लज्जयाधोमुखः सीदन्नुपासर्पत् सुदुःखितः ॥ ५ ॥ स्वपुरं प्रययौ राजा चतुरङ्गबलानुगः। शोकोपहतया बुद्धा चिन्तयानः पराभवम् ॥ ६ ॥ विमुच्य पथि यानानि देशे सुयवसोदके। सन्निविष्टः शुभे रम्ये भूमिभागे यथेप्सितम् ॥ ७ ॥ हस्त्यश्वरथपादातं यथास्थानं न्यवेशयत्। अथोपविष्टं राजानं पर्य्यङ्के ज्वलनप्रभे ॥ ८ ॥ उपप्लुतं यथासोमं राहुणा रात्रिसंचये। उपागम्या-

ब्रवीत् कर्णो दुर्य्योधनमिदं तदा ॥ ६ ॥ दिष्ट्या जीवसि गान्धारे दिष्ट्या न सङ्गमः पुनः । दिष्ट्या त्वया जिताश्चैव गन्धर्व्वाः कामरूपिणः ॥ १० ॥ दिष्ट्या समग्रान् पश्यामि भ्रातृंस्ते कुरुनन्दन । विजीगीषून्रणे युक्तान् निर्जितारीन्महारथान् ॥ ११ ॥ अहं त्वभिद्रुतः सर्व्वैर्गन्धर्व्वैः पश्यतस्तव । नाशक्नुवं स्थापयितुं दीर्य्यमाणाञ्च वाहिनीम् ॥ १२ ॥ शरक्षताङ्गश्च भृशं व्यपयातोऽभिपीड़ितः । इदन्त्वत्यद्भुतं मन्ये यद्युष्मानिह भारत ॥ १३ ॥ अरिष्टानक्षतां श्चापि सदारवलवाहनान् । विमुक्तान् सम्प्रपश्यामि युद्धात्तस्मात् दुरासदात् ॥ १४॥ नैतस्य कर्त्ता लोकेऽस्मिन् पुमान् विद्यति भारत । यत्कृतन्ते महाराज सह भ्रातृभिराहवे ॥ १५ ॥

वैशम्पायन उवाच । एवमुक्तस्तु कर्णेन राजा दुर्य्योधनस्तदा । उवाच ाङ्गराजानं वाष्पगद्गदया गिरा ॥ १६ ॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदुर्य्योनसंवादे षट्चत्वरिंदधिकद्विशततोऽध्यायः ॥ २४६ ॥

---

दुर्य्योधन उवाच । अजानतस्ते राधेय नाभ्यसूयाम्यहं वचः । जानासि त्वं जिताञ्छत्रून् गन्धर्व्वांस्तेजसा मया ॥ १ ॥ आयोधितास्तु गन्धर्व्वाः सुचिरं सोदरैर्मम । मया सह महावाहो कृतस्तोभयतः क्षयः ॥ २ ॥ मायाधिकास्त्वयुध्यन्त यदा शूरा वियद्गताः । तदा नो न समं युद्धमभवत् खेचरैः सह ॥ ३ ॥ पराजयञ्च प्राप्ताः स्म रणे वन्धनमेव च । सभृत्यामात्यपुत्राश्च सदारबलवाहनाः ॥ ४ ॥ उच्चैराकाशमार्गेण ह्रियमाणाः सुदुःखिताः । अथ नः सैनिकाः केचिदमात्याश्च महारथाः ॥ ५ ॥ उपगम्याब्रुवन् दीनाः पाण्डवान् शरणप्रदान् । एष दुर्य्योधनो राजा धार्त्तराष्ट्रः सहानुजः ॥ ६ ॥ सामात्यदारो ह्रियते गन्धर्व्वैर्दिव-

माश्रितैः। तं मोचयत भद्रं वः सहदारं नराधिपम् ॥ ७॥
परामर्शो माभविष्यत् कुरुदारेषु सर्वशः। एवमुक्ते तु धर्मात्मा
ज्येष्ठः पाण्डुसुतस्तदा ॥ ८ ॥ प्रसाद्य पाण्डवान् सर्वानाज्ञापयत
मोक्षणे। अथागम्य तमुद्देशं पाण्डवाः पुरुषर्षभाः ॥ ९ ॥
सान्त्वपूर्वमयाचन्त शक्ताः सन्तो महारथाः। यदा चस्मान्-
मुमुचुर्गन्धर्वाः सान्त्विता अपि ॥ १० ॥ ततोऽर्जुनश्च भीमश्च यमजौ
च बलोत्कटौ। मुमुचुः शरवर्षाणि गन्धर्वान् प्रत्यनेकशः ॥ ११ ॥
अथ सर्वे रणं मुक्त्वा प्रयाताः खेचरा दिवम्। अस्मानेवाभिकर्षन्तो
दीनान्मुदितमानसाः ॥ १२ ॥ ततः समन्तात् पश्यामः शरजालेन
वेष्टितम्। अमानुषाणि चास्त्राणि प्रमुञ्चन्तं धनञ्जयम् ॥ १३ ॥
समावृता दिशो दृष्ट्वा पाण्डवेन शितैः शरैः। धनञ्जयसखात्मानं
दर्शयामास वै तदा ॥ १४ ॥ चित्रसेनः पाण्डवेन समाश्लिष्य पर-
स्परम्। कुशलं परिपप्रच्छ तैः पृष्टश्चाप्यनामयम् ॥ १५ ॥ ते
समेत्य तथान्योऽन्यं सन्नाहान् विप्रमुच्य च। एकीभूतास्ततो
वीरा गन्धर्वाः सह पाण्डवैः। अपूजयेतामन्योऽन्यं चित्रसेन-
धनञ्जयौ ॥ १६ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि कर्णदुर्य्योधसंवादे
सप्तचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४७ ॥

---

दुर्य्योधन उवाच। चित्रसेनं समागम्य प्रहसन्नर्जुनस्तदा।
इदं वचनमक्लीवमब्रवीत् परवीरहा ॥ १ ॥ भ्रातॄनर्हसि मे वीर
मोक्तुं गन्धर्वसत्तम। अनर्हाः धर्षणां क्लीबे जीवमानेषु पाण्डुषु ॥२॥
एवमुक्तास्तु गन्धर्वः पाण्डवेन महात्मना। उवाच यत् कर्ण वयं
मन्त्रयन्तो विनिर्गताः ॥ ३ ॥ द्रष्टारः स्म सुखाद्धीनान् सदारान्
पाण्डवानिति। तस्मिन्नुच्चार्य्यमाणे तु गन्धर्वेण वचस्तया ॥ ४ ॥

भूमेर्विवरमन्वैच्छं प्रवेष्टुं व्रीड़यान्वितः । युधिष्ठिरमथागम्य गन्धर्वाः सह पाण्डवैः ॥ ५ ॥ असद्‌मन्त्रितं तस्मै वदांश्चासान्नवेदयन् । स्त्रीसमक्षमहं दीनो बद्धः शत्रुवशङ्गतः ॥ ६ ॥ युधिष्ठिरस्योपहृतः किन्नु दुःखमतः परम् । ये मे निराकृता नित्यं रिपुर्येषामहं सदा ॥ ७ ॥ तैर्मोक्षितोऽहं दुर्बुद्धिर्दत्तं तैरेव जीवितम् । प्राप्तः स्यां यद्यहं वीर वधं तस्मिन्महारणे ॥ ८ ॥ श्रेयस्तद्भविता मह्यं नैवं भूतस्य जीवितम् । अभूद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात् ॥ ९ ॥ प्राप्ताश्च पुण्यलोकाः स्युर्महेन्द्रसदनेऽक्षयाः । यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः ॥ १० ॥ इह प्रायमुपासिष्ये यूयं व्रजत वेश्मान् । भ्रातरश्चैव मे सर्वे यान्त्वद्य स्वपुरं प्रति ॥ ११ ॥ कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये । दुःशासनं पुरस्कृत्य प्रयान्त्वद्य पुरं प्रति ॥ १२ ॥ न ह्यहं सम्प्रहास्यामि पुरं शत्रुनिराकृतः । शत्रुमानापहो भूत्वा सुहृदां मानकृत्तथा ॥ १३ ॥ स सुहृच्छोकदो जातः शत्रूणां हर्षवर्द्धनः । वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपम् ॥ १४ ॥ भीष्मद्रोणौ कृपद्रौणी विदुरः सञ्जयस्तथा । वाह्लिकः सोमदत्तिश्च ये चान्ये वृद्धसम्मताः ॥ १५ ॥ ब्राह्मणाः श्रेणिमुख्याश्च तथोदासीनवृत्तयः । किं मां वक्ष्यन्ति किञ्चापि प्रतिवक्ष्यामि तानहम् ॥ १६ ॥ रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि । आत्मदोषात् परिभ्रष्टः कथं वक्ष्यामि तानहम् ॥ १७ ॥ दुर्विनीताः श्रियं प्राप्य विद्यामैश्वर्य्यमेव च । तिष्ठन्ति न चिरं भद्रे यथाहं मदगर्वितः ॥ १८ ॥ अहो नाहमिदं कर्म्म कष्टं दुश्चरितं कृतम् । स्वयं दुर्बुद्धिना मोहाद्येन प्राप्तोऽस्मि संशयम् ॥ १९ ॥ तस्मात् प्रायमुपासिष्ये न हि शक्ष्यामि जीवितुम् । चेतयानो हि को जीवेत् कृच्छ्राच्छत्रुभिरुद्धृतः ॥ २० ॥ शत्रुभिश्चावहसितो मानी पौरुषवर्ज्जितः । पाण्डवैर्विक्रमाढ्यैश्च सावमानमवेक्षितः ॥ २१ ॥

वैशम्पायन उवाच। एवं चिन्तापरिगतो दुःशासनमथाब्रवीत्। दुःशासन निबोधेदं वचनं मम भारत ॥ २२ ॥ प्रतीच्छ त्वं मया दत्तमभिषेकं नृपो भव। प्रशाधि पृथिवीं स्फीतां कर्णसौबलपालिताम् ॥ २३ ॥ भ्रातॄन् पालय विस्रब्धं मरुतो वृत्रहा यथा। बान्धवाश्चोपजीवन्तु देवा इव शतक्रतुम् ॥ २४ ॥ ब्राह्मणेषु सदा वृत्तिं कुर्वीथाश्चाप्रमादतः। बन्धूनां सुहृदाञ्चैव भवेथास्त्वं गतिः सदा ॥ २५ ॥ ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणान् यथा। गुरवः पालनीयास्ते गच्छ पालय मेदिनीम् ॥ २६ ॥ नन्दयन् सुहृदः सर्वान् शात्रवांश्चावभर्त्सयन्। कण्ठे चैनं परिष्वज्य गम्यतामित्युवाच ह ॥ २७ ॥ तस्य तद्वचनं श्रुत्वा दीनो दुःशासनोऽब्रवीत्। अश्रुकण्ठः सुदुःखार्त्तः प्राञ्जलिः प्रणिपत्य च ॥ २८ ॥ सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः। प्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा ॥ २९ ॥ दुःखितः पादयोस्तस्य नेत्रजं जलमुत्सृजन्। उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति ॥ ३० ॥ विदीर्य्येत् सकला भूमिर्द्यौश्चापि शकलीभवेत्। रविरात्मप्रभां जह्यात् सोमः शीतांशुतां त्यजेत् ॥ ३१ ॥ वायुः शैघ्र्यमथो जह्याद्धिमवांश्च परिव्रजेत्। शुष्येत्तोयं समुद्रेषु वह्निरप्युष्णतां त्यजेत् ॥ ३२ ॥ न चाहं त्वदृते राजन् प्रशासेयं वसुन्धराम्। पुनः पुनः प्रसीदेति वाक्यञ्चेदमुवाच ह ॥ ३३ ॥ त्वमेव नः कुले राजा भविष्यसि शतं समाः। एवमुक्त्वा स राजानं सुस्वरं प्ररुरोद ह ॥ ३४ ॥ पादौ संस्पृश्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत। तथा तौ दुःखितौ दृष्ट्वा दुःशासनसुयोधनौ ॥ ३५ ॥ अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत। विषीदथ किं कौरव्यौ बालिश्यात् प्राकृताविव ॥ ३६ ॥ न शोकः शोचमानस्य विनिवर्त्तेत कर्हिचित्। यदा च शोचतः शोको व्यसनं नापकर्षति ॥ ३७ ॥ सामर्थ्यं किं ततः शोके शोचमानौ प्रपश्यथः। धृतिं गृह्णीतं मा शत्रून् शोचन्तौ

मन्दयिष्यथः ॥ ३८ ॥ कर्त्तव्यं हि कृतं राजन् पाण्डवैस्तव मोक्षणम् । नित्यमेव प्रियं कार्य्यं राज्ञो विषयवासिभिः ॥ ३९ ॥ पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः । नार्हस्येवङ्गते मन्युं कर्त्तुं प्राकृतवद्यथा ॥ ४० ॥ विषण्णास्तव सोदर्य्यास्त्वयि प्रायं समास्थिते । उत्तिष्ठ व्रज भद्रन्ते समाश्वासय सोदरान् ॥ ४१ ॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदुर्य्योधनसंवादे अष्टचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४८ ॥

---

कर्ण उवाच । राजन्नद्यावगच्छामि तवेह लघुसत्त्वताम् । किमत्र चित्रं यद्वीर मोचितः पाण्डवैररि ॥ १ ॥ सद्यो वशं समापन्नः शत्रूणां शत्रुकर्षण । सेनाजीवैश्च कौरव्य तथा विषयवासिभिः ॥ २ ॥ अज्ञातैर्यदि वा ज्ञातैः कर्त्तव्यं नृपतेः प्रियम् । प्रायःप्रधानाः पुरुषाः क्षोभयन्त्यरिवाहिनीम् ॥ ३ ॥ निगृह्यन्ते च युद्धेषु मोक्ष्यन्ते चैव सैनिकैः । सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः ॥ ४ ॥ तैः सङ्गम्य नृपार्थाय यतितव्यं यथातथम् । यद्येवं पाण्डवै राजन् भवद्विषयवासिभिः ॥ ५ ॥ यदृच्छया मोचितोऽसि तत्र का परिवेदना । न चैतत् साधु यद्राजन् पाण्डवास्त्वां नृपोत्तम ॥ ६ ॥ स्वसेनया सम्प्रयान्तं नानुयान्ति स्म पृष्ठतः । शूराश्च बलवन्तश्च संयुगेष्वपलायिनः ॥ ७ ॥ भवतस्ते सहाया वै प्रेष्यतां पूर्व्वमागताः । पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे ॥ ८ ॥ सत्त्वस्थान् पाण्डवान् पश्य न ते प्रायमुपाविशन् । उत्तिष्ठ राजन् भद्रन्ते न चिरं कर्त्तुमर्हसि ॥ ९ ॥ अवश्यमेव नृपते राज्ञो विषयवासिभिः । प्रियाण्याचरितव्यानि तत्र का परिदेवना ॥ १० ॥ मद्वाक्यमेतद्राजेन्द्र यद्येवं न करिष्यसि । स्थास्यामीह भवत्पादौ

शुश्रूषन्नरिसूदन ॥११॥ नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभ ।
प्रायोपविष्टस्तु नृप राज्ञां हास्यो भविष्यसि ॥ १२ ॥

वैशम्पायन उवाच । एवमुक्तस्तु कर्णेन राजा दुर्य्योधनस्तदा ।
नैवोत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ॥ १३ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि कर्णदुर्य्योधन-
संवादे एकोनपञ्चाशदधिकद्विशततोऽध्यायः ॥ २४९ ॥

---

वैशम्पायन उवाच । प्रायोपविष्टं राजानं दुर्य्योधनममर्षणम् ।
उवाच सान्त्वयन्राजञ्छकुनिः सौबलस्तदा ॥ १ ॥

शकुनिरुवाच । सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया ।
मया हृतां श्रियं स्फीतां तां मोहादपहाय किम् ॥ २ ॥ त्वम-
बुद्ध्या नृपते प्राणानुत्स्रष्टुमर्हसि । अथ वाप्यवगच्छामि न
वृद्धाः सेविताख्त्वया ॥ ३ ॥ यः समुत्पतितं हर्षं दैन्यं वा न निय-
च्छति । स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ॥ ४ ॥ अति-
भीरुमतिक्लीवं दीर्घसूत्रं प्रमादिनम् । व्यसनाद्विषयाक्रान्तं न
भजन्ति नृपं प्रजाः ॥ ५ ॥ तत्कृतस्य हि ते शोको विपरीते कथं
भवेत् । मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ॥ ६ ॥ यत्र
हर्षस्त्वया कार्य्यः सत्कर्त्तव्याश्च पाण्डवाः । तत्र शोचसि राजेन्द्र
विपरीतमिदं तव ॥ ७ ॥ प्रसीद मा त्यजात्मानं तुष्टश्च सुकृतं
स्मर । प्रयच्छ राज्यं पार्थानां यशो धर्म्ममवाप्नुहि ॥ ८ ॥ क्रिया-
मेतां समाज्ञाय कृतज्ञस्त्वं भविष्यसि । सौभ्रात्रं पाण्डवैः कृत्वा
समवस्थाप्य चैव तान् । पित्र्यं राज्यं प्रयच्छैषां ततः सुख-
मवाप्स्यसि ॥ ९ ॥

वैशम्पायन उवाच । शकुनेस्तु वचः श्रुत्वा दुःशासनमवेक्ष्य च ।
पादयोः पतितं वीरं विक्लवं भ्रातृसौहृदात् । बाहुभ्यां साधु-

जातास्थां दुःशासनमरिन्दनम् ॥ १० ॥ उत्थाप्य सम्परिष्वज्य प्रीत्याजिघ्रत मूर्द्धनि । कर्णसौबलयोश्चापि संश्रुत्य वचनान्यसौ ॥ ११ ॥ निर्व्वेदं परमं गत्वा राजा दुर्य्योधनस्तदा । व्रीड़याभिपरीतात्मा नैराश्यमगमत् परम् ॥ १२ ॥ तच्छ्रुत्वा सुहृदश्चैव समन्युरिदमब्रवीत् । न धर्म्मधनसौख्येन नैश्वर्य्येण न चाज्ञया ॥ १३ ॥ नैव भोगैश्च मे कार्य्यं मा विहन्यत गच्छत । निश्चितेयं मम मतिः स्थिता प्रायोपवेशने ॥ १४ ॥ गच्छध्वं नगरं सर्व्वे पूज्याश्च गुरवो मम । त एवमुक्ताः प्रत्यूचू राजानमरिमर्द्दनम् ॥ १५ ॥ या गतिस्तव राजेन्द्र साऽस्माकमपि भारत । कथं वा सम्प्रवेक्ष्यामस्त्वद्विहीनाः पुरं वयम् ॥ १६ ॥

वैशम्पायन उवाच । स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च । बहुप्रकारमप्युक्तो निश्चयान्न विचाल्यते ॥ १७ ॥ दर्भास्तरणमास्तीर्य्य निश्चयाद्धृतराष्ट्रजः । संस्पृश्यापः शुचिर्भूत्वा भूतले समुपस्थितः ॥ १८ ॥ कुशचीराम्बरधरः परं नियममास्थितः । वाग्यतो राजशार्दूलः स स्वर्गगतिकाम्यया ॥ १९ ॥ मनसोपचितिं कृत्वा निरस्य च बहिष्क्रियाः । अथ तं निश्चयं तस्य बुद्ध्वा दैतेयदानवाः ॥ २० ॥ पातालवासिनो रौद्राः पूर्व्वं देवैर्विनिर्ज्जिताः । ते स्वपक्षक्षयन्तन्तु ज्ञात्वा दुर्य्योधनस्य वै ॥ २१ ॥ आह्वानाय तदा चक्रुः कर्म्म वैतानसम्भवम् । बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः ॥ २२ ॥ अथर्ववेदप्रोक्तैश्च याश्चोपनिषदि क्रियाः । मन्त्रजप्यसमायुक्तास्तास्तदा संप्रवर्त्तयन् ॥ २३ ॥ जुह्वत्यग्नौ हविः क्षीरं मन्त्रवत् सुसमाहिताः । ब्राह्मणा वेदवेदाङ्गपारगाः सुदृढ़व्रताः ॥ २४ ॥ कर्म्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता । कृत्या समुत्थिता राजन् किङ्करोमीति चाब्रवीत् ॥ २५ ॥ आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना । प्रायोपविष्टं राजानं धार्त्तराष्ट्रमिहानय ॥ २६ ॥ तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ

तदा। निमेषादगमच्चापि यत्र राजा सुयोधनः॥ २७॥ समादाय च राजानं प्रविवेश रसातलम्। दानवानां मुहूर्त्ताच्च तमानीतं न्यवेदयत॥ २८॥ तमानीतं नृपं दृष्ट्वा रात्रौ सङ्गत्य दानवाः। प्रहृष्टमनसः सर्व्वे किञ्चिदुत्फुल्ललोचनाः। साभिमानमिदं वाक्यं दुर्य्योधनमथाब्रुवन्॥ २९॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनप्रायोपवेशे पञ्चाशदधिकद्विशतोऽध्यायः॥ २५०॥

---

दानवा ऊचुः। भो सुयोधन राजेन्द्र भरतानां कुलोद्वह। शूरैः परिवृतो नित्यं तथैव च महात्मभिः॥ १॥ अकार्षीः साहसमिदं कस्मात् प्रायोपवेशनम्। आत्मत्यागी ह्यधो याति वाच्यतां चायशस्करीम्॥ २॥ न हि कार्य्यविरुद्धेषु बह्वपापेषु कर्म्मसु। मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः॥ ३॥ नियच्छैतां मतिं राजन् धर्म्मार्थसुखनाशिनीम्। यशःप्रतापवीर्य्यघ्नीं शत्रूणां हर्षवर्द्धनीम्॥४॥ श्रूयतां हि प्रभो तत्त्वं दिव्यताञ्चात्मनो नृप। निर्म्माणञ्च शरीरस्य ततो धैर्य्यमवाप्नुहि॥ ५॥ पुरा त्वं तपसास्माभिर्लब्धो राजन्महेश्वरात्। पूर्व्वकायश्च सर्व्वस्ते निर्म्मितो वज्रसञ्चयः॥ ६॥ अस्त्रैरभेद्यः शस्त्रैश्चाप्यधः कायश्च तेऽनघ। कृतः पुष्पमयो देव्या रूपतः स्त्रीमनोहरः॥ ७॥ एवमीश्वरसंयुक्तस्तव देहो नृपोत्तम। देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः॥ ८॥ क्षत्रियाश्च महावीर्य्या भगदत्तपुरोगमाः। दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून्॥ ९॥ तदलन्ते विषादेन भयं तव न विद्यते। सहायार्थञ्च ते वीराः सम्भूता भुवि दानवाः॥ १०॥ भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः। यैराविष्टा घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः॥ ११॥ नैव पुत्रान्

च भ्रातॄन् पितॄन् च बान्धवान् । नैव शिष्यान् च ज्ञातीन् बालान् स्थविरान् च ॥ १२ ॥ युधि सम्प्रहरिष्यन्तो मोच्यन्ति कुरुसत्तम । निःस्नेहा दानवाविष्टाः समाक्रान्तेऽन्तरात्मनि ॥ १३ ॥ प्रहरिष्यन्ति विवशाः स्नेहमुत्सृज्य दूरतः । हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः ॥ १४ ॥ अविज्ञानविमूढ़ाश्च दैवाच्च विधिनिर्म्मितात् । व्याभाषमाणाश्चान्योऽन्यं न मे जीवन् विमोच्यसे ॥ १५ ॥ सर्व्वे शस्त्रास्त्रमोक्षेण पौरुषे समवस्थिताः । श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयम् ॥ १६ ॥ तेऽपि पञ्च महात्मानः प्रतियोत्स्यन्ति पाण्डवाः । वधञ्चैषां करिष्यन्ति दैवयुक्ता महाबलाः ॥ १७ ॥ दैत्यरक्षोगणाश्चैव सम्भूताः क्षत्रयोनिषु । योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव ॥ १८ ॥ गदाभिर्मुषलैः शूलैः शस्त्रैरुच्चावचैस्तथा । यच्च तेऽन्तर्गतं वीर भयमर्जुनसम्भवम् ॥ १९ ॥ तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै । हतस्य नरकस्यात्मा कर्णमूर्त्तिमुपाश्रितः ॥ २० ॥ तद्वैरं संस्मरन् वीर योत्स्यते केशवार्ज्जुनौ । स ते विक्रमशौण्डीरो रणे पार्थं विजेष्यति ॥ २१ ॥ कर्णः प्रहरतां श्रेष्ठः सर्व्वांश्चारीन्महारथः । ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः ॥ २२ ॥ कुण्डले कवचञ्चैव कर्णस्यापहरिष्यति । तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः ॥२३ नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति । प्रख्यातास्तेऽर्जुनं वीरं निहनिष्यति मा शुचः ॥ २४ ॥ असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप । मा विषादं गमस्तस्मान्नैतत्त्वय्युपपद्यते ॥ २५ ॥ विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव । गच्छ वीर न ते बुद्धिरन्या कार्य्या कथञ्चन । त्वमस्माकं गतिर्नित्यं देवतानाञ्च पाण्डवाः ॥ २६ ॥

वैशम्पायन उवाच । एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम् । समाश्वास्य च दुर्द्धर्षं पुत्रवद्दानवर्षभाः । स्थिरां कृत्वा

बुद्धिमस्य प्रियाख्युक्ता च भारत ॥ २७ ॥ गम्यतामित्यनुज्ञाय
जयमाप्नुहि चेत्यथ । तैर्विसृष्टं महाबाहुं कृत्या सैवानयत् पुनः
॥ २८ ॥ तमेव देशं यत्रासौ तदा प्रायमुपाविशत् । प्रतिनिक्षिप्य
तं वीरं कृत्या समभिपूज्य च ॥ २९ ॥ अनुज्ञाता च राज्ञा सा
तत्रैवान्तरधीयत । गतायामथ तस्यान्तु राजा दुर्य्योधनस्तदा
॥ ३० ॥ स्वप्नभूतमिदं सर्वमचिन्तयत भारत । विजेष्यामि रणे
पाण्डूनिति तस्याभवन्मतिः ॥ ३१ ॥ कर्णं संशप्तकांश्चैव पार्थस्या-
मित्रघातिनः । अमन्यत वधे युक्तान् समर्थांश्च सुयोधनः ॥ ३२ ॥
एवमाशा दृढ़ा तस्य धार्त्तराष्ट्रस्य दुर्मतेः । विनिर्ज्जये पाण्डवा-
नामभवद्भरतर्षभ ॥ ३३ ॥ कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्त-
रात्मना । अर्जुनस्य वधे क्रूरां करोति स्म तदा मतिम् ॥ ३४ ॥
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः । रजस्तमोभ्यामाक्रान्ताः
फाल्गुनस्य वधैषिणः ॥ ३५ ॥ भीष्मद्रोणकृपाद्याश्च दानवाक्रान्त-
चेतसः । न तथा पाण्डुपुत्राणां स्नेहवन्तो विशाम्पते ॥ ३६ ॥
न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः । दुर्य्योधनं निशान्ते च
कर्णो वैकर्त्तनोऽब्रवीत् ॥ ३७ ॥ स्मयन्निवाञ्जलिं कृत्वा पार्थिवं
हेतुमद्वचः । न मृतो जयते शत्रून् जीवन् भद्राणि पश्यति ॥३८॥
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः । न कालोऽद्य विषा-
दस्य भयस्य मरणस्य वा ॥ ३९ ॥ परिष्वज्याब्रवीच्चैनं भुजाभ्यां
स महाभुजम् । उत्तिष्ठ राजन् किं शेषे कस्माच्छोचसि शत्रुहन्
॥ ४० ॥ शत्रून् प्रताप्य वीर्य्येण स कथं मृत्युमिच्छसि । अथ वा
ते भयं जातं दृष्ट्वार्जुनपराक्रमम् ॥ ४१ ॥ सत्यन्ते प्रतिजानामि
वधिष्यामि रणेऽर्जुनम् । गते त्रयोदशे वर्षे सत्येनायुधमालभे ॥४२॥
आनयिष्याम्यहं पार्थान् वशं तव जनाधिप । एवमुक्तस्तु कर्णेन
दैत्यानां वचनात्तथा ॥ ४३ ॥ प्रणिपातेन चाप्येषामुदतिष्ठत्
सुयोधनः । दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ॥४४॥

ततो मनुजशार्दूलो योजयामास वाहिनीम् । रथनागाश्वकलिलां पदातिजनसङ्कुलाम् ॥ ४५ ॥ गङ्गौघप्रतिमा राजन् प्रयाता सा महाचमूः । श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डरैः ॥ ४६ ॥ रथैर्नागैः पदातैश्च शुशुभेऽतीव सङ्कुला । व्यपेताभ्रघने काले द्यौरिवाव्यक्तशारदी ॥ ४७ ॥ जयाशीर्भिर्द्विजेन्द्रैः स स्तूयमानोऽधिराजवत् । गृह्णन्नञ्जलिमालाश्च धार्त्तराष्ट्रो जनाधिपः ॥४८॥ सुयोधनो ययावग्रे श्रिया परमया ज्वलन् । कर्णेन सार्द्धं राजेन्द्र सौबलेन च देविना ॥ ४९ ॥ दुःशासनादयश्चास्य भ्रातरः सर्व्व एव ते । भूरिश्रवाः सोमदत्तो महाराजश्च वाह्लिकः ॥ ५० ॥ रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा । प्रयान्तं नृपसिंहन्तमनुजग्मुः कुरूद्वहाः । कालेनाल्पेन राजेन्द्र स्वपुरं विविशुस्तदा ॥५१॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनपुरप्रवेशे एकपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५१ ॥

---

जनमेजय उवाच । वसमानेषु पार्थेषु वने तस्मिन्महात्मसु । धार्त्तराष्ट्रा महेष्वासा किमकुर्व्वत सत्तमाः ॥ १ ॥ कर्णो वैकर्त्तनश्चैव शकुनिश्च महाबलः । भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि ॥ २ ॥

वैशम्पायन उवाच । एवं गतेषु पार्थेषु विसृष्टे च सुयोधने । आगते हास्तिनपुरं मोचिते पाण्डुनन्दनैः ॥ ३ ॥ भीष्मोऽब्रवीन्महाराज धार्त्तराष्ट्रमिदं वचः । उक्तं तात यथा पूर्व्वं गच्छतस्ते तपोवनम् ॥ ४ ॥ गमनं मे न रुचितं तव तत्र कृतञ्च ते । ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात् ॥ ५ ॥ मोचितश्चासि धर्म्मज्ञैः पाण्डवैर्न च लज्जसे । प्रत्यक्षं तव गान्धारे ससैन्यस्य विशाम्पते ॥ ६ ॥ सूतपुत्रोऽपयाद्भीतो गन्धर्व्वाणां तदा रणात् । क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ॥ ७ ॥ दृष्टस्ते विक्रमश्चैव पाण्डवानां

महात्मनाम्। कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मते॥ ८॥
न चापि पादभाक् कर्णः पाण्डवानां नृपोत्तम। धनुर्वेदे च शौर्य्ये
च धर्म्मे वा धर्म्मवत्सल॥ ९॥ तस्मादहं क्षमं मन्ये पाण्डवैस्तै-
र्महात्मभिः। सन्धिं सन्धिविदां श्रेष्ठ कुलस्यास्य विवृद्धये॥ १०॥
एवमुक्तस्तु भीष्मेण धार्त्तराष्ट्रो जनेश्वरः। प्रहस्य सहसा राजन्
विप्रतस्थे ससौबलः॥ ११॥ तन्तु प्रस्थितमाज्ञाय कर्णदुःशासना-
दयः। अनुजग्मुर्महेष्वासा धार्त्तराष्ट्रं महाबलम्॥ १२॥ तांस्तु
सम्प्रस्थितान् दृष्ट्वा भीष्मः कुरुपितामहः। लज्जया व्रीड़ितो
राजन् जगाम स्वं निवेशनम्॥ १३॥ गते भीष्मे महाराज धार्त्त-
राष्ट्रो जनेश्वरः। पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः॥१४॥
किमस्माकं भवेच्छ्रेयः किं कार्य्यमवशिष्यते। कथञ्च सुकृतं तत्
स्यान्मन्त्रयामोऽद्य यद्धितम्॥ १५॥

कर्ण उवाच। दुर्य्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव।
भीष्मोऽस्मान्निन्दति सदा पाण्डवांश्च प्रशंसति॥ १६॥ त्वद्द्वेषाच्च
महाबाहो ममापि द्वेष्टुमर्हति। विगर्हते च मां नित्यं त्वत्समीपे
नरेश्वर॥ १७॥ सोऽयं भीष्मवचस्तद्वै न मृष्यामीह भारत।
त्वत्समक्षं यदुक्तञ्च भीष्मेणामित्रकर्षण॥ १८॥ पाण्डवानां यशो
राजंस्तव निन्दाञ्च भारत। अनुजानीहि मां राजन् सभृत्यबल-
वाहनम्॥ १९॥ जेष्यामि पृथिवीं राजन् सशैलवनकाननाम्।
जिता च पाण्डवैर्भूमिश्चतुर्भिर्बलशालिभिः॥ २०॥ तामहन्ते
विजेष्यामि एक एव न संशयः। सम्पश्यतु सुदुर्बुद्धिर्भीष्मः कुरु-
कुलाधमः॥ २१॥ अनिन्द्यं निन्दते यो हि अप्रशंस्यं प्रशंसति।
स पश्यतु बलं मेऽद्य आत्मानन्तु विगर्हतु॥ २२॥ अनुजानीहि
मां राजन् ध्रुवो हि विजयस्तव। प्रतिजानामि ते सत्यं राज-
न्नायुधमालभे॥ २३॥ तच्छ्रुत्वा तु वचो राजन् कर्णस्य भरत-
र्षभ। प्रीत्या परमया युक्तः कर्णमाह नराधिपः॥ २४॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे त्वं महाबलः। हितेषु वर्त्तसे नित्यं सफलं जन्म चाद्य मे ॥ २५ ॥ यदा च मन्यसे वीर सर्व-शत्रुनिवर्हणम्। तदा निर्गच्छ भद्रन्ते ह्यनुशाधि च मामिति ॥ २६ ॥ एवमुक्तस्तदा कर्णो धार्त्तराष्ट्रेण धीमता। सर्वमाज्ञा-पयामास प्रायात्रिकमरिन्दम ॥ २७ ॥ निर्ययौ च महेष्वासो नक्षत्रे शुभदैवते। शुभे तिथौ मुहूर्त्ते च पूज्यमानो द्विजातिभिः ॥ २८ ॥ मङ्गलैश्च शुभैः स्नातो वाग्भिश्चापि प्रपूजितः। नादय-न्नथघोषेण त्रैलोक्यं सचराचरम् ॥ २९ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि कर्णदिग्विजये द्विपञ्चाशदधिकशतोऽध्यायः ॥ १५२ ॥

---

वैशम्पायन उवाच। ततः कर्णो महेष्वासो बलेन महता वृतः। द्रुपदस्य पुरं रम्यं रुरोध भरतर्षभ ॥ १ ॥ युद्धेन महता चैनं चक्रे वीरं वशानुगम्। सुवर्णं रजतञ्चापि रत्नानि विविधानि च ॥ २ ॥ करञ्च दापयामास द्रुपदं नृपसत्तम। तं विनिर्ज्जित्य राजेन्द्र राजानस्तस्य येऽनुगाः ॥ ३ ॥ तान् सर्वान् वशगांश्चक्रे करञ्चैनानदापयत्। अथोत्तरां दिशं गत्वा वशे चक्रे नराधिपान् ॥ ४ ॥ भगदत्तञ्च निर्ज्जित्य राधेयो गिरिमारुहत्। हिमवन्तं महाशैलं युध्यमानश्च शत्रुभिः ॥ ५ ॥ प्रययौ च दिशः सर्वान्नृप-तीन् वशमानयत्। स हैमवतिकान् जित्वा करं सर्वानदापयत् ॥ ६ ॥ अवतीर्य्य ततः शैलात् पूर्वां दिशमभिद्रुतः। अङ्गान् वङ्गान् कलिङ्गांश्च मण्डिकान् मिथिलानथ ॥ ७ ॥ मागधान् कर्क-खण्डांश्च निवेश्य विषयेत्मनः। आवशीरांश्च योध्यांश्च अहिच्छत्रञ्च योजयत् ॥ ८ ॥ पूर्वां दिशं विनिर्ज्जित्य वत्सभूमिं तथागमत्।

वत्सभूमिं विनिर्ज्जित्य केवलीं मृत्तिकावतीम् ॥ ९ ॥ मोहनं पत्तनञ्चैव त्रिपुरां कोशलां तथा । एतान् सर्वान् विनिर्ज्जित्य करमादाय सर्वशः ॥ १० ॥ दक्षिणां दिशमास्थाय कर्णो जित्वा महारथान् । रुक्मिणं दाक्षिणात्येषु योधयामास सूतजः ॥११॥ स युद्धत्तुमुलं कृत्वा रुक्मी प्रोवाच सूतजम् । प्रीतोऽस्मि तव राजेन्द्र विक्रमेण बलेन च ॥ १२ ॥ न ते विघ्नं करिष्यामि प्रतिज्ञां समपालयम् । प्रीत्या चाहं प्रयच्छामि हिरण्यं यावदिच्छसि ॥ १३ ॥ समेत्य रुक्मिणा कर्णः पाण्ड्यं शैलञ्च सोऽगमत् । स केरलं रणे चैव नीलञ्चापि महीपतिम् ॥ १४ ॥ वेणुदारिसुतञ्चैव ये चान्ये नृपसत्तमाः । दक्षिणस्यान्दिशि नृपान् करान् सर्वानदापयत् ॥ १५ ॥ शैशुपालं ततो गत्वा विजिग्ये सूतनन्दनः । पार्श्वस्थांश्चापि नृपतीन् वशे चक्रे महाबलः ॥ १६ ॥ आवन्त्यांश्च वशे कृत्वा साम्ना च भरतर्षभ । वृष्णिभिः सह सङ्गम्य पश्चिमामपि निर्ज्जयत् ॥ १७ ॥ वारुणीं दिशमागम्य यावनान् वर्वरांस्तथा । नृपान् पश्चिमभूमिस्थान् दापयामास वै करान् ॥ १८ ॥ विजित्य पृथिवीं सर्वां स पूर्वापरदक्षिणाम् । सम्लेच्छाटविकान् वीरः सपर्वतनिवासिनः ॥ १९ ॥ भद्रान् रोहितकांश्चैव आग्नेयान्मालवानपि । गणान् सर्वान् विनिर्ज्जित्य नीतिकृत प्रहसन्निव ॥ २० ॥ शशकान् यवनांश्चैव विजिग्ये सूतनन्दनः । नग्नजित्प्रमुखांश्चैव गणान् जित्वा महारथान् ॥ २१ ॥ एवं स पृथिवीं सर्वां वशे कृत्वा महारथः । विजित्य पुरुषव्याघ्रो नागसाह्वयमागमत् ॥ २२ ॥ तमागतं महेष्वासं धार्त्तराष्ट्रो जनाधिपः । प्रत्युद्गम्य महाराज सभ्रातृपितृबान्धवः ॥ २३ ॥ अर्च्चयामास विधिना कर्णमाहवशोभिनम् । आश्रावयच्च तत्कर्म प्रीयमाणो जनेश्वरः ॥ २४ ॥ यन्न भीष्मान्न च द्रोणान्न कृपान्न च वाह्लिकात् । प्राप्तवानस्मि भद्रन्ते त्वत्तः प्राप्तं मया हि तत् ॥ २५ ॥ वहुना तु किमुक्तेन शृणु

कर्ण वचो मम। अनाथोऽस्मि महाबाहो त्वया नाथेन सत्तम ॥२६॥ न हि ते पाण्डवाः सर्व्वे कलामर्हन्ति षोड़शीम्। अन्ये वा पुरुषव्याघ्र राजानोऽभ्युदितोदिताः ॥ २७ ॥ स भवान् धृतराष्ट्रं तं गान्धारीञ्च यशस्विनीम्। पश्य कर्ण महेष्वास अदितिं वज्रभृद्यथा ॥ २८ ॥ ततो हलहलाशब्दः प्रादुरासीद्विशाम्पते। हाहाकाराश्च बहवो नगरे नागसाह्वये ॥ २९ ॥ केचिदेनं प्रशंसन्ति निन्दन्ति स्म तथापरे। तूष्णीमासंस्तथा चान्ये नृपास्तत्र जनाधिप ॥ ३० ॥ एवं विजित्य राजेन्द्र कर्णः शस्त्रभृताम्वरः। सपर्व्वतवनाकाशां ससमुद्रां सनिष्कुटाम् ॥ ३१ ॥ देशैरुच्चावचैः पूर्णां पत्तनैर्नगरैरपि। द्वीपैश्चानूपसम्पूर्णैः पृथिवीं पृथिवीपते ॥ ३२ ॥ कालेन नातिदीर्घेण वशे कृत्वा तु पार्थिवान्। अक्षयं धनमादाय सूतजो नृपमभ्ययात् ॥ ३३ ॥ प्रविश्य च गृहे राजन्नभ्यन्तरमरिन्दम। गान्धारीसहितं वीरो धृतराष्ट्रं ददर्श सः ॥ ३४ ॥ पुत्रवच्च नरव्याघ्र पादौ जग्राह धर्म्मवित्। धृतराष्ट्रेण चाश्लिष्य प्रेम्णा चापि विसर्ज्जितः ॥ ३५ ॥ तदाप्रभृति राजा च शकुनिश्चापि सौवलः। जानते निर्ज्जितान् पार्थान् कर्णेन युधि भारत ॥ ३६ ॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदिग्विजये त्रिपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५३ ॥

---

वैशम्पायन उवाच। जित्वा तु पृथिवीं राजन् सूतपुत्रो जनाधिप। अब्रवीत् परवीरघ्नो दुर्य्योधनमिदं वचः ॥ १ ॥

कर्ण उवाच। दुर्य्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव। श्रुत्वा वाचं तथा सर्व्वं कर्त्तुमर्हस्यरिन्दम ॥ २ ॥ तवाद्य पृथिवी

वीर निःसपत्ना नृपोत्तम। तां पालय यथा शक्रो हतशत्रु-र्महामनाः ॥ ३ ॥

वैशम्पायन उवाच। एवमुक्तस्तु कर्णेन कर्णं राजाब्रवीत् पुनः। न किञ्चिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ ॥ ४ ॥ सहाय-श्चानुरक्तश्च मदर्थञ्च समुद्यतः। अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथम् ॥ ५ ॥ राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं महत्। मम स्पृहा समुत्पन्ना तां सम्पादय सूतज ॥ ६ ॥ एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत्। तवाद्य पृथिवीपाला वश्याः सर्वे नृपोत्तम ॥ ७ ॥ आहूयन्तां द्विजवराः सम्भारांश्च यथाविधि। सम्भ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च ॥ ८ ॥ ऋत्विजश्च समा-हूता यथोक्ता वेदपारगाः। क्रियां कुर्वन्तु ते राजन् यथाशास्त्र-मरिन्दम ॥ ९ ॥ बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः। प्रवर्त्ततां महायज्ञस्तवापि भरतर्षभ ॥ १० ॥ एवमुक्तस्तु कर्णेन धार्त्तराष्ट्रो-विशाम्पते। पुरोहितं समानाय्य वचनञ्चेदमब्रवीत् ॥ ११ ॥ राज-सूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम्। आहर त्वं मम कृते यथान्यायं यथाक्रमम ॥ १२ ॥ स एवमुक्तो नृपतिमुवाच द्विजसत्तमः। न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ॥ १३ ॥ आहर्त्तुं कौरवश्रेष्ठ कुले तव नृपोत्तमः। दीर्घायुर्जीवति च ते धृतराष्ट्रः पिता नृप ॥ १४ ॥ अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम। अस्ति त्वन्यमहत् सत्रं राजसूयसमं प्रभो ॥ १५ ॥ तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम। य इमे पृथिवीपालाः करदास्तव पार्थिव ॥ १६ ॥ ते करान् संप्रयच्छन्तु सुवर्णञ्च कृताकृतम्। तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम ॥ १७ ॥ यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत। तत्र यज्ञो नृपश्रेष्ठ प्रभूतान्नः सुसंस्कृतः ॥ १८ ॥ प्रव-र्त्ततां यथान्यायं सर्वतो ह्यनिवारितः। एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः ॥ १९ ॥ एतेन नेष्टवान् कश्चिद्दते विष्णुं पुरा-

तनम् । राजसूयं क्रतुश्रेष्ठं सर्व्वत्येष महाक्रतुः ॥ २० ॥ अस्माकं रोचते चैव श्रेयश्च तव भारत । निर्विघ्नश्च भवत्येष सफला स्यात् स्पृहा तव ॥ २१ ॥ एवमुक्तस्तु तैर्विप्रैर्धार्त्तराष्ट्रो महीपतिः । कर्णञ्च सौबलञ्चैव भ्रातृंश्चैवेदमब्रवीत् ॥ २२ ॥ रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः । रोचते यदि युष्माकं तस्मात् प्रब्रूत मा चिरम् ॥ २३ ॥ एवमुक्तास्तु ते सर्व्वे तथेत्यूचुर्नराधिपम् । सन्दिदेश ततो राजा व्यापारस्थान् यथाक्रमम् ॥ २४ ॥ हलस्य करणे चापि व्यादिष्टाः सर्व्वशिल्पिनः । यथोक्तञ्च नृपश्रेष्ठ कृतं सर्व्वं यथाक्रमम् ॥ २५ ॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनयज्ञारम्भे चतुःपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५४ ॥

---

वैशम्पायन उवाच । ततस्तु शिल्पिनः सर्व्वे अमात्यप्रवराश्च ये । विदुरश्च महाप्राज्ञो धार्त्तराष्ट्रे न्यवेदयत् ॥ १ ॥ सज्जं क्रतुवरं राजन् कालप्राप्तञ्च भारत । सौवर्णञ्च कृतं सर्व्वं लाङ्गलञ्च महाधनम् ॥ २ ॥ एतच्छ्रुत्वा नृपश्रेष्ठो धार्त्तराष्ट्रो विशाम्पते । आज्ञापयामास नृपः क्रतुराजप्रवर्त्तनम् ॥ ३ ॥ ततः प्रववृते यज्ञः प्रभूतान्नः सुसंस्कृतः । दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ॥ ४ ॥ प्रहृष्टो धृतराष्ट्रश्च विदुरश्च महायशाः । भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ॥ ५ ॥ निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् । पार्थिवानाञ्च राजेन्द्र ब्राह्मणानां तथैव च ॥ ६ ॥ ते प्रयाता यथोद्दिष्टा दूतास्त्वरितवाहनाः । तत्र कञ्चित् प्रयातन्तु दूतं दुःशासनोऽब्रवीत् ॥ ७ ॥ गच्छ द्वैतवनं शीघ्रं पाण्डवान् पापपूरुषान् । निमन्त्रय यथान्यायं विप्रांस्तस्मिन् वने तथा ॥ ८ ॥ स गत्वा पाण्डवान् सर्व्वानुवाचाभिप्रणम्य च ।

दुर्य्योधनो महाराज यजते नृपसत्तमः ॥९॥ स्ववीर्य्यार्ज्जितमर्थौघमवाप्य कुरुसत्तमः। तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ॥१०॥ अहन्तु प्रेषितो राजन् कौरवेण महात्मना। आमन्त्रयति वो राजा धार्त्तराष्ट्रो जनेश्वरः ॥ ११ ॥ मनोऽभिलषितं राज्ञस्तं क्रतुं द्रष्टुमर्हथ। ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम् ॥ १२ ॥ अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः। यजते क्रतुमुख्येन पूर्व्वेषां कीर्त्तिवर्द्धनः ॥ १३ ॥ वयमप्युपयास्यामो न त्विदानीं कथञ्चन। समयः प्रतिपाल्यो नो यावद्वर्षं त्रयोदशम् ॥१४॥ श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत्। तदा तु नृपतिर्गन्ता धर्मराजो युधिष्ठिरः ॥ १५ ॥ अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति। वर्षात्त्रयोदशादूर्द्ध्वं रणसत्रे नराधिपः ॥ १६ ॥ यदा क्रोधहविर्मोक्ता धार्त्तराष्ट्रेषु पाण्डवः। आगन्ताहं तदास्मीति वाच्यस्ते स सुयोधनः ॥ १७ ॥ शेषास्तु पाण्डवा राजन्नैवोचुः किञ्चिदप्रियम्। दूतश्चापि यथावृत्तं धार्त्तराष्ट्रे न्यवेदयत् ॥ १८ ॥ अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः। ब्राह्मणाश्च महाभागा धार्त्तराष्ट्रपुरं प्रति ॥ १९ ॥ ते त्वर्च्चिता यथाशास्त्रं यथाविधि यथाक्रमम्। मुदा परमया युक्ताः प्रीताश्चापि नरेश्वराः ॥ २० ॥ धृतराष्ट्रोऽपि राजेन्द्रः संवृतः सर्वकौरवैः। हर्षेण महता युक्तो विदुरं प्रत्यभाषत ॥ २१ ॥ यथा सुखी जनः सर्वः क्षत्तः स्यादन्नसंयुतः। तुष्येच्च यज्ञसदने तथा क्षिप्रं विधीयताम् ॥ २२ ॥ विदुरस्तु तदाज्ञाय सर्ववर्णानरिन्दम। यथा प्रमाणतो विद्वान् पूजयामास धर्मवित् ॥ २३ ॥ भक्ष्यपेयान्नपानेन माल्यैश्चापि सुगन्धिभिः। वासोभिर्विविधैश्चैव योजयामास हृष्टवत् ॥ २४ ॥ कृत्वा ह्यावसथान् वीरो यथाशास्त्रं यथाक्रमम्। सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ॥ २५ ॥ विसर्ज्जयामास नृपान् ब्राह्मणांश्च सहस्रशः। विसृज्य च नृपान् सर्वान्

भ्रातृभिः परिवारितः । विवेश हास्तिनपुरं सहितः कर्ण-
सौबलैः ॥ २६ ॥

इति आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनयज्ञसमाप्तौ
पञ्चपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५५ ॥

---

वैशम्पायन उवाच। प्रविशन्तं महाराज सूतास्तुष्टुवुरच्यु-
तम्। जनाश्चापि महेष्वासं तुष्टवूराजसत्तमम् ॥ १ ॥ लाजैः
श्चन्दनचूर्णैश्च विकीर्य्य च जनास्ततः। ऊचुर्दिष्ट्या नृपाविघ्नः समा-
प्तोऽयं क्रतुस्तव ॥ २ ॥ अपरे त्वब्रुवंस्तत्र वातिकास्तं महीपतिम्।
युधिष्ठिरस्य यज्ञेन न समो ह्येष ते क्रतुः ॥ ३ ॥ नैव तस्य क्रतो-
रेष कलामर्हति षोड़शीम्। एवं तत्राब्रुवन् केचिद्वातिकास्तं
जनेश्वरम् ॥ ४ ॥ सुहृदस्त्वब्रुवंस्तत्र अतिसर्व्वानयं क्रतुः। ययाति-
र्नहुषश्चापि मान्धाता भरतस्तथा ॥ ५ ॥ क्रतुमेनं समाहृत्य पूताः
सर्व्वे दिवं गताः। एता वाचः शुभाः शृण्वन् सुहृदां भरतर्षभ
॥ ६ ॥ प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः। अभिवाद्य ततः
पादौ मातापित्रोर्विशाम्पते ॥ ७ ॥ भीष्मद्रोणकृपादीनां विदुरस्य
च धीमतः। अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृनन्दनः ॥ ८ ॥
निषसादासने मुख्ये भ्रातृभिः परिवारितः। तमुत्थाय महाराज
सूतपुत्रोऽब्रवीद्वचः ॥ ९ ॥ दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महा-
क्रतुः। हतेषु युधि पार्थेषु राजसूये तथा त्वया ॥ १० ॥ आहृते-
ऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः। तमब्रवीन्महाराजो धार्त्त-
राष्ट्रो महायशाः ॥ ११ ॥ सत्यमेतत्त्वयोक्तं हि पाण्डवेषु दुरा-
त्मसु। निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ ॥ १२ ॥ राज-
सूये पुनर्वीर त्वमेवं वर्द्धयिष्यसि। एवमुक्त्वा महाराज कर्णमाश्लिष्य
भारतः ॥ १३ ॥ राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरव

सोऽब्रवीत् कौरवांश्चापि पार्श्वस्थान् नृपसत्तमः ॥ १४ ॥ कदा तु तं क्रतुवरं राजसूयं महाधनम्। निहत्य पाण्डवान् सर्वानाहरिष्यामि कौरवाः ॥ १५ ॥ तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर। पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ॥ १६ ॥ कीलालजं न खादेयं चरिष्ये चासुरव्रतम्। नास्तीति नैव वक्ष्यामि याचितो येन केनचित् ॥ १७ ॥ अथोत्क्रुष्टं महेष्वासैर्धार्त्तराष्ट्रैर्महारथैः। प्रतिज्ञाते फाल्गुनस्य वधे कर्णेन संयुगे ॥ १८ ॥ विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः। दुर्य्योधनोऽपि राजेन्द्रो विसृज्य नरपुङ्गवान् ॥ १९ ॥ प्रविवेश गृहं श्रीमान् यथा चैत्ररथं प्रभुः। तेऽपि सर्वे महेष्वासा जग्मुर्वेश्मानि भारत ॥ २० ॥ पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः। चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् ॥ २१ ॥ भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता। प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति ॥ २२ ॥ एतच्छ्रुत्वा धर्मसुतः समुद्विग्नो नराधिप। अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम् ॥ २३ ॥ अनुस्मरंश्च संक्लेशान्नशान्तिमुपयाति सः। तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ॥ २४ ॥ बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनम्। धार्त्तराष्ट्रोऽपि नृपतिः प्रशशास वसुन्धराम् ॥२५॥ भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा। सङ्गम्य सूतपुत्रेण कर्णेनाहवशोभिना ॥ २६ ॥ दुर्य्योधनः प्रिये नित्यं वर्त्तमानो महीभृताम्। पूजयामास विप्रेन्द्रान् क्रतुभिर्भूरिदक्षिणैः ॥ २७ ॥ भ्रातॄणाञ्च प्रियं राजन् स चकार परन्तपः। निश्चित्य मनसा वीरो दत्तभुक्तफलं धनम् ॥ २८ ॥

इति आरण्यपर्वणि घोषयात्रापर्वणि युधिष्ठिरचिन्तायां षट्पञ्चाशदधिकद्विशततोऽध्यायः। समाप्तञ्च घोषयात्रापर्व ॥ २५६ ॥

---

कर्म्माणि सैन्धव। यस्मात्तदजितं कृष्णं शङ्खचक्रगदाधरम् ॥७३॥
श्रीवत्सधारिणं देवं पीतकौशेयवाससम्। प्रधानं शस्त्रविदुषां
तेन कृष्णेन रक्ष्यते ॥ ७४ ॥ सहायः पुण्डरीकाक्षः श्रीमानतुल-
विक्रमः। समानस्यन्दने पार्थमास्थाय परवीरहा ॥ ७५ ॥ न
शक्यते तेन जेतुं त्रिदशैरपि दुःसहः। कः पुनर्मानुषो भावी
रणे पार्थं विजेष्यते ॥ ७६ ॥ तमेकं वर्ज्जयित्वा तु सर्वं यौधिष्ठिरं
बलम्। चतुरः पाण्डवान्राजन् दिनैकं जेष्यसे रिपून् ॥ ७७ ॥

वैशम्पायन उवाच। इत्येवमुक्त्वा नृपतिं सर्वपापहरो हरः।
उमापतिः पशुपतिर्यज्ञहा त्रिपुरार्द्दनः ॥ ७८ ॥ वामनैर्विकटैः
कुब्जैरुग्रश्रवणदर्शनैः। वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः॥७९॥
त्र्यम्बको राजशार्दूल भगनेत्रनिपातनः। उमासहायो भगवां-
स्तत्रैवान्तरधीयत ॥ ८० ॥ जयद्रथोऽपि मन्दात्मा स्वमेव भवनं
ययौ। पाण्डवाश्च वने तस्मिन्नवसन् काम्यके तथा ॥ ८१ ॥

इति आरण्यपर्व्वणि जयद्रथविमोक्षणपर्व्वणि जयद्रथ-
वरप्राप्तौ एकसप्तत्यधिकद्विशतोऽध्यायः ॥ २७१ ॥

समाप्तञ्च जयद्रथविमोक्षणपर्व्व।

---

अथ रामोपाख्यानपर्व्व।

जनमेजय उवाच। एवं हृतायां कृष्णायां प्राप्य क्लेशमनु-
त्तमम्। अत ऊर्द्ध्वं नरव्याघ्राः किमकुर्व्वत पाण्डवाः ॥ १ ॥

वैशम्पायन उवाच। एवं कृष्णां मोक्षयित्वा विनिर्ज्जित्य जय-
द्रथम्। आसाञ्चक्रे मुनिगणैर्धर्म्मराजो युधिष्ठिरः ॥ २ ॥ तेषां
मध्ये महर्षीणां शृण्वतामनुशोचताम्। मार्कण्डेयमिदं वाक्य-
मब्रवीत् पाण्डुनन्दन ॥ ३ ॥

युधिष्ठिर उवाच। भगवन् देवर्षीणां त्वं ख्यातो भूतभविष्य-

वित्। संशयं परिपृच्छामि छिन्धि मे हृदि संस्थितम् ॥ ४ ॥
द्रुपदस्य सुता ह्येषा वेदिमध्यात् समुत्थिता। अयोनिजा महा-
भागा स्नुषा पाण्डोर्महात्मनः ॥ ५ ॥ मन्ये कालश्च भगवान्
दैवञ्च विधिनिर्मितम्। भवितव्यञ्च भूतानां यस्य नास्ति व्यतिक्रमः
॥ ६ ॥ इमां हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम्। संस्पृ-
ष्टवान् ईदृशो भावः शुचिं स्तैन्यमिवानृतम् ॥ ७ ॥ न हि पापं कृतं किञ्चित्
कर्म वा निन्दितं क्वचित्। द्रौपद्या ब्राह्मणेष्वेव धर्मः सुचरितो
महान् ॥ ८ ॥ तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः। तस्याः
संहरणात् पापः शिरसः केशपातनम् ॥ ९ ॥ पराजयञ्च संग्रामे
ससहाय समाप्तवान्। प्रत्याहृता तथास्माभिर्हत्वा तत् सैन्धवं
बलम् ॥ १० ॥ तद्दारहरणं प्राप्तमस्माभिरवितर्कितम्। दुःखश्चायं
वने वासो मृगयायाञ्च जीविका ॥ ११ ॥ हिंसा च मृगजातीनां
वनौकोभिर्वनौकसाम्। ज्ञातिभिर्विप्रवासश्च मिथ्याव्यवसितैरियम्
॥ १२ ॥ अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः। भवता दृष्ट-
पूर्वो वा श्रुतपूर्वोऽपि वा भवेत् ॥ १३ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि युधिष्ठिरप्रश्ने
द्विसप्तत्यधिकद्विशततोऽध्यायः ॥ २७२ ॥

---

मार्कण्डेय उवाच। प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ।
रक्षसा जानकी तस्य हृता भार्या बलीयसा ॥ १ ॥ आश्रमा-
द्राक्षसेन्द्रेण रावणेन दुरात्मना। मायामास्थाय तरसा हत्वा
गृध्रं जटायुषम् ॥ २ ॥ प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः।
बद्धा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैः शरैः ॥ ३ ॥
युधिष्ठिर उवाच। कस्मिन्नामः कुले जातः किं वीर्यः किं
पराक्रमः। रावणः कस्य पुत्रो वा किं वैरं कस्य तेन ह ॥ ४ ॥

एतन्मे भगवन् सर्वं सम्यगाख्यातुमर्हसि । श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्म्मणः ॥ ५ ॥

मार्कण्डेय उवाच । शृणु राजन् यथावृत्तमितिहासं पुरातनम् । सभार्य्येण यथा प्राप्तं दुःखं रामेण भारत ॥ ६ ॥ अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः । तस्य पुत्रो दशरथः शश्वत् स्वाध्यायवान् शुचिः ॥ ७ ॥ अभवंस्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः । रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ॥ ८ ॥ रामस्य माता कौशल्या कैकेयी भरतस्य तु । सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परन्तपौ ॥ ९ ॥ विदेहराजो जनकः सीता तस्यात्मजा विभो । याञ्चकार स्वयं त्वष्टा रामस्य महिषीं प्रियाम् ॥ १० ॥ एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्त्तितम् । रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर ॥ ११ ॥ पितामहो रावणस्य साक्षाद्देवः प्रजापतिः । स्वयम्भुः सर्व्वलोकानां प्रभुः स्रष्टा महातपाः ॥ १२ ॥ पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः । तस्य वैश्रवणो नाम गवि पुत्रोऽभवत् प्रभुः ॥१३॥ पितरं स समुत्सृज्य पितामहमुपस्थितः । तस्य कोपात् पिता राजन् ससर्जात्मानमात्मना ॥१४॥ स यज्ञे विश्रवा नाम तस्यात्मार्द्धेन वै द्विजः । प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै ॥ १५ ॥ पितामहस्तु प्रीतात्मा ददौ वैश्रवणस्य ह । अमरत्वं धनेशत्वं लोकपालत्वमेव च ॥ १६ ॥ ईशानेन तथा सख्यं पुत्रञ्च नलकूवरम् । राजधानीनिवेशञ्च लङ्कां रक्षोगणान्विताम् ॥ १७ ॥ विमानं पुष्पकं नाम कामगञ्च ददौ प्रभुः । यक्षाणामाधिपत्यञ्च राजराजत्वमेव च ॥ १८ ॥

इति आरण्यपर्वणि रामोपाख्यानापर्वणि वैश्रवणोत्पत्तौ त्रिसप्तत्यधिकद्विशततोऽध्यायः ॥ २७३ ॥

---

मार्कण्डेय उवाच। पुलस्त्यस्य तु यः क्रोधादर्द्धदेहोऽभवन्मुनिः। विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत॥ १॥ बुबुधे तत्तु सक्रोधं पितरं राक्षसेश्वरः। कुवेरस्तत्प्रसादार्थं यतते स्म सदा नृप॥ २॥ स राजराजो लङ्कायां न्यवसन्नरवाहनः। राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः॥ ३॥ ताः सदा तं महात्मानं सन्तोषयितुमुद्यताः। ऋषिं भरतशार्दूल नृत्यगीतविशारदाः॥ ४॥ पुष्पोत्कटा च राका च मालिनी च विशाम्पते। अन्योऽन्यस्पर्द्धया राजन् श्रेयस्कामाः सुमध्यमाः॥ ५॥ स तासां भगवांस्तुष्टो महात्मा प्रददौ वरान्। लोकपालोपमान् पुत्रानेकैकस्या यथेप्सितान्॥ ६॥ पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ। कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि॥ ७॥ मालिनी जनयामास पुत्रमेकं विभीषणम्। राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा॥ ८॥ विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकोऽभवत्। स बभूव महाभागो धर्मगोप्ता क्रियारतिः॥ ९॥ दशग्रीवस्तु सर्वेषां श्रेष्ठो राक्षसपुङ्गवः। महोत्साहो महावीर्यो महासत्त्वपराक्रमः॥ १०॥ कुम्भकर्णो बलेनासीत् सर्वेभ्योऽभ्यधिको युधि। मायावी रणशौण्डश्च रौद्रश्च रजनीचरः॥ ११॥ खरो धनुषि विक्रान्तो ब्रह्मद्विट् पिशिताशनः। सिद्धविघ्नकरी चापि रौद्री शूर्पणखा तदा॥ १२॥ सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः। ऊषुः पित्रा सह रता गन्धमादनपर्वते॥ १३॥ ततो वैश्रवणं तत्र ददृशुर्नरवाहनम्। पित्रा सार्द्धं समासीनमृद्ध्या परमया युतम्॥ १४॥ जातामर्षास्ततस्ते तु तपसे धृतनिश्चयाः। ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा॥ १५॥ अतिष्ठदेकपादेन सहस्रं परिवत्सरान्। वायुभक्षो दशग्रीवः पञ्चाग्निः सुसमाहितः॥ १६॥ अधःशायी कुम्भकर्णो यताहारो यतव्रतः। विभीषणः शीर्णपर्णमेकमभ्यवहारयन्॥ १७॥ उपवासरति-

धर्म्मात्मा सदा जप्यपरायणः । तमेव कालमातिष्ठत्तीव्रं तप उदारधीः ॥ १८ ॥ खरः शूर्पणखा चैव तेषां वै तप्यतां तपः । परिचर्य्याञ्च रक्षाञ्च चक्रतुर्हृष्टमानसौ ॥ १९ ॥ पूर्णे वर्षसहस्रे तु शिरश्छित्त्वा दशाननः । जुहोत्यग्नौ दुराधर्षस्तेनातुष्यज्जगत्प्रभुः ॥ २० ॥ ततो ब्रह्मा स्वयं गत्वा तपसस्तान्न्यवारयत् । प्रलोभ्य वरदानेन सर्व्वानेव पृथक् पृथक् ॥ २१ ॥

श्रीब्रह्मोवाच । प्रीतोऽस्मि वो निवर्त्तध्वं वरान् वृणुत पुत्रकाः । यद्यदिष्टमृते त्वेकममरत्वं तथास्तु तत् ॥ २२ ॥ यद्यदग्नौ हुतं सर्व्वं शिरस्ते महदीप्सया । तथैव तानि ते देहे भविष्यन्ति यथेप्सया ॥ २३ ॥ वैरूप्यञ्च न ते देहे कामरूपधरस्तथा । भविष्यसि रणेऽरीणां विजेता न च संशयः ॥ २४ ॥

रावण उवाच । गन्धर्व्वदेवासुरतो यक्षराक्षसतस्तथा । सर्पकिन्नरभूतेभ्यो न मे भूयात् पराभवः ॥ २५ ॥

श्रीब्रह्मोवाच । य एते कीर्त्तिताः सर्व्वे न तेभ्योऽस्ति भयन्तव । ऋते मनुष्याद्भद्रन्ते तथा तद्विहितं मया ॥ २६ ॥

मार्कण्डेय उवाच । एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा । अवमेने हि दुर्व्वुद्धिर्मनुष्यान् पुरुषादकः ॥ २७ ॥ कुम्भकर्णमथोवाच तथैव प्रपितामहः । स वव्रे महतीं निद्रां तमसा ग्रस्तचेतनः ॥ २८ ॥ तथा भविष्यतीत्युक्त्वा विभीषणमुवाच ह । वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मीति पुनः पुनः ॥ २९ ॥

विभीषण उवाच । परमापद्गतस्यापि नाधर्म्मे मे मतिर्भवेत् । अशिक्षितञ्च भगवन् ब्रह्मास्त्रं प्रतिभातु मे ॥ ३० ॥

ब्रह्मोवाच । यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्षण । नाधर्म्मे धीयते बुद्धिरमरत्वं ददानि ते ॥ ३१ ॥

मार्कण्डेय उवाच । राक्षसस्तु वरं लब्ध्वा दशग्रीवो विशाम्पते । लङ्कायाश्च्यावयामास युधि जित्वा धनेश्वरम् ॥ ३२ ॥

हित्वा स भगवान् लङ्कामाविशद्गन्धमादनम्। गन्धर्वयक्षानुगतो रक्षःकिंपुरुषैः सह ॥ ३३ ॥ विमानं पुष्पकं तस्य जहाराक्रम्य रावणः। शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ॥ ३४ ॥ यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति। अवमन्य गुरुं माञ्च क्षिप्रं त्वं न भविष्यसि ॥ ३५ ॥ विभीषणस्तु धर्मात्मा सतां मार्गमनुस्मरन्। अन्वगच्छन्महाराज श्रिया परमया युतः ॥ ३६ ॥ तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः। सेनापत्यं ददौ धीमान् यक्षराक्षससैन्ययोः ॥ ३७ ॥ राक्षसा पुरुषादाश्च पिशाचाश्च महाबलाः। सर्वे समेत्य राजानमभ्यषिञ्चन्दशाननम् ॥ ३८ ॥ दशग्रीवश्च दैत्यानां देवानाञ्च बलोत्कटः। आक्रम्य रत्नान्यहरत् कामरूपी विहङ्गमः ॥ ३९ ॥ रावयामास लोकान् यत् तस्माद्रावण उच्यते। दशग्रीवः कामबलो देवानां भयमादधत् ॥ ४० ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि रावणादिवरप्राप्तौ चतुःसप्तत्यधिकद्विशततोऽध्यायः ॥ २७४ ॥

---

मार्कण्डेय उवाच। ततो ब्रह्मर्षयः सर्वे सिद्धा देवर्षयस्तथा। हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः ॥ १ ॥

अग्निरुवाच। योऽसौ विश्रवसः पुत्रो दशग्रीवो महाबलः। अवध्यो वरदानेन कृतो भगवता पुरा ॥ २ ॥ स बाधते प्रजाः सर्वा विप्रकारैर्महाबलः। ततो नस्त्रातु भगवान्नान्यस्त्राता हि विद्यते ॥ ३ ॥

ब्रह्मोवाच। न स देवासुरैः शक्यो युद्धे जेतुं विभावसो। विहितं तत्र यत् कार्य्यमभितस्तस्य निग्रहः ॥ ४ ॥ तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः। विष्णुः प्रहरतां श्रेष्ठः स तत् कर्म करिष्यति ॥ ५ ॥

मार्कण्डेय उवाच। पितामहस्ततस्तेषां सन्निधौ शक्रमब्रवीत्। सर्वैर्देवगणैः सार्द्धं सम्भव त्वं महीतले ॥ ६ ॥ विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः। जनयध्वं सुतान् वीरान् कामरूपबलान्वितान् ॥ ७ ॥ ततो भागानुभागेन देवगन्धर्वदानवाः। अवतर्त्तुं महीं सर्वे मन्त्रयामासुरञ्जसा ॥ ८ ॥ तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः। शशास वरदो देवो गच्छ कार्य्यार्थसिद्धये ॥ ९ ॥ पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः। मन्थरा मानुषे लोके कुब्जा समभवत्तदा ॥ १० ॥ शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः। वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान् ॥ ११ ॥ तेऽन्ववर्त्तन् पितॄन् सर्वे यशसा च बलेन च। भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः ॥ १२ ॥ वज्रसंहननाः सर्वे सर्वे चौघबलास्तथा। कामवीर्य्यबलाश्चैव सर्वे युद्धविशारदाः ॥ १३ ॥ नागायुतसमप्राणा वायुवेगसमा जवे। यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः ॥ १४ ॥ एवं विधाय तत् सर्वं भगवान् लोकभावनः। मन्थरां बोधयामास यद्यत् कार्य्यं यथा यथा ॥ १५ ॥ सा तद्वचः समाज्ञाय तथा चक्रे मनोजवा। इतश्चेतश्च गच्छन्ती वैरसन्धुक्षणे रता ॥ १६ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि वानराद्युत्पत्तौ पञ्चसप्तत्यधिकद्विशततोऽध्यायः ॥ २७५ ॥

---

युधिष्ठिर उवाच। उक्तं भगवता जन्म रामादीनां पृथक् पृथक्। प्रस्थानकारणं ब्रह्मन् श्रोतुमिच्छामि कथ्यताम् ॥ १ ॥ कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ। संप्रस्थितौ वने ब्रह्मन् मैथिली च यशस्विनी ॥ २ ॥

मार्कण्डेय उवाच। जातपुत्रो दशरथः प्रीतिमानभवन्नृप।

क्रियारतिर्धर्मरतः सततं वृद्धसेविता ॥ ३ ॥ क्रमेण चास्य ते पुत्रा व्यवर्द्धन्त महौजसः। वेदेषु सरहस्येषु धनुर्वेदेषु पारगाः ॥ ४ ॥ चरितब्रह्मचर्य्यास्ते कृतदाराश्च पार्थिव। यदा तदा दशरथः प्रीतिमानभवत् सुखी ॥ ५ ॥ ज्येष्ठो रामोऽभवत्तेषां रमयामास हि प्रजाः। मनोहरतया धीमान् पितुर्हृदयनन्दनः ॥ ६ ॥ ततः स राजा मतिमान् मत्वात्मानं वयोऽधिकम्। मन्त्रयामास सचिवैर्धर्मज्ञैश्च पुरोहितैः ॥ ७ ॥ अभिषेकाय रामस्य यौवराज्येन भारत। प्राप्तकालञ्च ते सर्वे मेनिरे मन्त्रिसत्तमाः ॥ ८ ॥ लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनम्। दीर्घबाहुं महोरस्कं नीलकुञ्चितमूर्द्धजम् ॥९॥ दीप्यमानं श्रिया वीरं शक्रादनवरं रणे। पारगं सर्वधर्माणां बृहस्पतिसमं मतौ ॥ १० ॥ सर्वानुरक्तप्रकृतिं सर्वविद्याविशारदम्। जितेन्द्रियममित्राणामपि दृष्टिमनोहरम् ॥ ११ ॥ नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम्। धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ १२ ॥ पुत्रं राजा दशरथः कौशल्यानन्दवर्द्धनम्। सन्दृश्य परमां प्रीतिमगच्छत् कुरुनन्दन ॥ १३ ॥ चिन्तयंश्च महातेजा गुणान् रामस्य वीर्य्यवान्। अभ्यभाषत भद्रन्ते प्रीयमाणः पुरोहितम् ॥१४॥ अद्य पुष्यो निशि ब्रह्मन् पुण्यं योगमुपैष्यति। सम्भाराः संभ्रियन्तां वै रामश्चोपनिमन्त्र्यताम् ॥ १५ ॥ श्व एष पुष्यो भविता यत्र रामः सुतो मया। यौवराज्येऽभिषेक्तव्यः पौरैषु सहमन्त्रिभिः ॥ १६ ॥ इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा। कैकेयीमभिगम्येदं काले वचनमब्रवीत् ॥ १७ ॥ अद्य कैकेयि दौर्भाग्यं राज्ञा ते ख्यापितं महत्। आशीविषस्त्वां संक्रुद्धश्चण्डो दशतु दुर्भगे ॥१८॥ सुभगा खलु कौशल्या यस्याः पुत्रोऽभिषिच्यते। कुतो हि तव सौभाग्यं यस्याः पुत्रो न राज्यभाक् ॥ १९॥ सा तद्वचनमाज्ञाय सर्वाभरणभूषिता। वेदिविलग्नमध्येव बिभ्रती रूपमुत्तमम् ॥ २० ॥

विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता । प्रणयं व्यञ्जयन्तीव
मधुरं वाक्यमब्रवीत् ॥ २१ ॥ सत्यप्रतिज्ञ यन्मे त्वं काममेकं निसृष्ट-
वान् । उपाकुरुष्व तद्राजंस्तस्मान्मुच्यस्व सङ्कटात् ॥ २२ ॥
राजोवाच । वरं ददामि ते हन्त तद्‌गृहाण यदिच्छसि ।
अवध्यो वध्यतां कोऽद्य वध्यः कोऽद्य विमुच्यताम् ॥ २३ ॥ धनं
ददानि कस्याद्य ह्रियतां कस्य वा पुनः । ब्राह्मणस्वादिहान्यत्र
यत् किञ्चिद्वित्तमस्ति मे ॥ २४ ॥ पृथिव्यां राजराजोऽस्मि चातु-
र्वर्ण्यस्य रक्षिता । यस्तेऽभिलषितः कामो ब्रूहि कल्याणि मा
चिरम् ॥ २५ ॥ सा तद्वचनमाज्ञाय परिगृह्य नराधिपम् । आत्मनो
बलमाज्ञाय तत एनमुवाच ह ॥ २६ ॥ आभिषेचनिकं यत्ते
रामार्थमुपकल्पितम् । भरतस्तदवाप्नोतु वनं गच्छतु राघवः
॥ २७ ॥ नवपञ्च च वर्षाणि दण्डकारण्यमाश्रितः । जटा-
चीराजिनधरो रामो वसतु तापसः ॥ २८ ॥ स तद्राजा वचः
श्रुत्वा विप्रियं दारुणोदयम् । दुःखार्त्तो भरतश्रेष्ठ न किञ्चि-
द्व्याजहार ह ॥ २९ ॥ ततस्तथोक्तं पितरं रामो विज्ञाय
वीर्य्यवान् । वनं प्रतस्थे धर्मात्मा राजा सत्योभवत्विति ॥ ३० ॥
तमन्वगच्छल्लक्ष्मीवान् धनुष्माल्लक्ष्मणस्तदा । सीता च भार्य्या
भद्रन्ते वैदेही जनकात्मजा ॥ ३१ ॥ ततो वनगते रामे राजा
दशरथस्तदा । समयुज्यत देहस्य कालपर्य्यायधर्मणा ॥ ३२ ॥
रामन्तु गतमाज्ञाय राजानन्तु तथागतम् । आनाय्य भरतं देवी
कैकेयी वाक्यमब्रवीत् ॥ ३३ ॥ गतो दशरथः स्वर्गं वनस्थौ राम-
लक्ष्मणौ । गृहाण राज्यं विपुलं क्षेमं निहतकण्टकम् ॥ ३४ ॥
तामुवाच स धर्मात्मा नृशंसं वत ते कृतम् । पतिं हत्वा कुलञ्चेद-
मुत्साद्य धनलुब्धया ॥ ३५ ॥ अयशः पातयित्वा मे मूर्द्ध्नि त्वं
कुलपांसने । सकामा भव मे मातरित्युक्त्वा प्ररुरोद ह ॥ ३६ ॥
स चारित्रं विशोध्याथ सर्वप्रकृतिसन्निधौ । अन्वयाद्भ्रातरं रामं

विनिवर्त्तनलालसः ॥ ३७ ॥ कौशल्याञ्च सुमित्राञ्च कैकेयीञ्च सुदुःखितः । अग्रे प्रस्थाप्य यानैः स शत्रुघ्नसहितो ययौ ॥ ३८ ॥ वशिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः । पौरजानपदैः सार्द्धं रामानयनकाङ्क्षया ॥ ३९ ॥ ददर्श चित्रकूटस्थं स रामं सहलक्ष्मणम् । तापसानामलङ्कारं धारयन्तं धनुर्द्धरम् ॥ ४० ॥ विसर्ज्जितः स रामेण पितुर्वचनकारिणा । नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके ॥ ४१ ॥ रामस्तु पुनराशङ्क्य पौरजानपदागमम् । प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति ॥ ४२ ॥ सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः । नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा ॥ ४३ ॥ वसतस्तस्य रामस्य ततः शूर्पणखाकृतम् । खरेणासीन्महद्वैरं जनस्थाननिवासिना ॥ ४४ ॥ रक्षार्थं तापसानान्तु राघवो धर्मवत्सलः । चतुर्दश सहस्राणि जघान भुवि राक्षसान् ॥ ४५ ॥ दूषणञ्च खरञ्चैव निहत्य सुमहाबलौ । चक्रे क्षेमं पुनर्धीमान् धर्मारण्यं स राघवः ॥ ४६ ॥ हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः । ययौ निकृत्तनासौष्ठी लङ्कां भ्रातुर्निवेशनम् ॥ ४७ ॥ ततो रावणमभ्येत्य राक्षसी दुःखमूर्च्छिता । पपात पादयोर्भ्रातुः संशुष्करुधिरानना ॥ ४८ ॥ तान्तथा विकृतां दृष्ट्वा रावणः क्रोधमूर्च्छितः । उत्पपातासनात् क्रुद्धो दन्तैर्दन्तानुपस्पृशन् ॥ ४९ ॥ स्वानमात्यान् विसृज्याथ विविक्ते तामुवाच सः । केनास्येवं कृता भद्रे मामचिन्त्यावमन्य च ॥ ५० ॥ कः शूलं तीक्ष्णमासाद्य सर्वगात्रैर्निषेवते । कः शिरस्यग्निमाधाय विश्वस्तः स्वपते सुखम् ॥ ५१ ॥ आशीविषं घोरतरं पादेन स्पृशतीह कः । सिंहं केशरिणं कश्च दंष्ट्रायां स्पृश्य तिष्ठति ॥ ५२ ॥ इत्येवं ब्रुवतस्तस्य स्रोतोभ्यस्तेजसोऽर्चिषः । निश्चेरुर्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ॥ ५३ ॥ तस्य तत्सर्वमाचख्यौ भगिनी रामविक्रमम् । खरदूषणसंयुक्तं राक्षसानां पराभवम् ॥ ५४ ॥ ततो ज्ञातिवधं

ष्कालो रावणः कालचोदितः। रामस्य वधमाकाङ्क्षन् मारीचं मनसागमत् ॥ ५५ ॥ स निश्चित्य ततः कृत्यं स्वसारमुपशान्त्वय च। जर्द्धमाचक्रमे राजा विधाय नगरे विधिम् ॥ ५६ ॥ त्रिकूटं समतिक्रम्य कालपर्व्वतमेव च। ददर्श मकरावासं गम्भीरोदं महोदधिम् ॥ ५७ ॥ तमतीत्याथ गोकर्णमभ्यगच्छद्दशाननः। दयितं स्थानमव्यग्रं शूलपाणेर्महात्मनः ॥ ५८ ॥ तत्राभ्यगच्छन्मारीचं पूर्व्वामात्यं दशाननः। पुरा रामभयादेव तापस्यं समुपाश्रितम् ॥ ५९ ॥

इति आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि रावणगमने षट्सप्तत्यधिकद्विशतोऽध्यायः ॥ २७६ ॥

---

मार्कण्डेय उवाच। मारीचस्त्वथ सम्भ्रान्तो दृष्ट्वा रावणमागतम्। पूजयामास सत्कारैः फलमूलादिभिस्ततः ॥ १ ॥ विश्रान्तञ्चैनमासीनं मत्रासीनः स राक्षसः। उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ २ ॥ न ते प्रकृतिमान् वर्णः कच्चित् क्षेमं पुरे तव। कच्चित् प्रकृतयः सर्व्वा भजन्ते त्वां यथा पुरा ॥३॥ किमिहागमने चापि कार्य्यन्ते राक्षसेश्वर। कृतमित्येव तद्विद्धि यद्यपि स्यात् सुदुष्करम् ॥ ४ ॥ शशंस रावणस्तस्मै तत् सर्व्वं रामचेष्टितम्। समासेनैव कार्य्याणि क्रोधामर्षसमन्वितः ॥ ५ ॥ मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणम्। अलन्ते राममासाद्य वीर्य्यज्ञो ह्यस्मि तस्य वै ॥ ६ ॥ वाणवेगं हि कस्तस्य शक्तः सोढुं महात्मनः। प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभ ॥ ७ ॥ विनाशमुखमेतत्ते केनाख्यातं दुरात्मना। तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन् ॥ ८ ॥ अकुर्व्वतोऽस्मद्वचनं स्यान्मृत्युरपि ते

ध्रुवम्। मारीचश्चिन्तयामास विशिष्टान्मरणं वरम् ॥ ९ ॥ अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतम् ततस्तं प्रत्युवाचाथ मारीचो राक्षसेश्वरम् ॥ १० ॥ किन्ते साह्यं मया कार्य्यं करिष्याम्यवशोऽपि तत्। तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय ॥ ११ ॥ रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः। ध्रुवं सीता समालक्ष्य त्वां रामं चोदयिष्यति ॥ १२ ॥ अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति। तामादायापनेष्यामि ततः स न भविष्यति ॥ १३ ॥ भार्य्यावियोगाद्दुर्बुद्धिरेतत् साह्यं कुरुष्व मे। इत्येवमुक्तो मारीचः कृत्वोदकमथात्मनः ॥ १४ ॥ रावणं पुरतो यान्तमन्वगच्छत् सुदुःखितः। ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्म्मणः ॥ १५ ॥ चक्रतुस्तत्तथा सर्व्वमुभौ यत् पूर्व्वमन्त्रितम्। रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक् ॥ १६ ॥ मृगश्च भूत्वा मारीचस्तं देशमुपजग्मतुः। दर्शयामास मारीचो वैदेहीं मृगरूपधृक् ॥ १७ ॥ चोदयामास तस्यार्थे सा रामं विधिचोदिता। रामस्तस्याः प्रियं कुर्व्वन् धनुरादाय सत्वरः ॥ १८ ॥ रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया। स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ॥ १९ ॥ अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा। सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसो व्रजन् ॥ २० ॥ चकर्ष महदध्वानं रामस्तं बुबुधे ततः। निशाचरं विदित्वा तं राघवः प्रतिभानवान् ॥ २१ ॥ अमोघं शरमादाय जघान मृगरूपिणम्। स रामवाणाभिहतः कृत्वा रामस्वरं तदा ॥ २२ ॥ हा सीते लक्ष्मणेत्येवं चुक्रोशार्त्तस्वरेण ह। शुश्राव तस्य वैदेही ततस्तां करुणाङ्गिरम् ॥ २३ ॥ सा प्राद्रवद्यतः शब्दस्तामुवाचाथ लक्ष्मणः। अलन्ते शङ्कया भीरु को रामं प्रहरिष्यति ॥ २४ ॥ मुहूर्त्ताद्द्रक्ष्यसे रामं भर्त्तारं त्वं शुचिस्मिते। इत्युक्ता सा प्ररुदती पर्य्यशङ्कत लक्ष्मणम् ॥ २५ ॥ हता वै स्त्रीस्वभावेन शुक्लचारित्रभूषणा। सा तं परुषमारब्धा

वक्तां साध्वी पतिव्रता ॥ २६ ॥ नैष कामो भवेन्मूढ़ यं त्वं प्रार्थयसे ह्रदा अप्यहं शस्त्रमादाय हन्यामात्मानमात्मना ॥ २७ ॥ पतेयं गिरिश्रृङ्गाद्वा विशेयं वा हुताशनम्। रामं भर्त्तारमुत्सृज्य न त्वहं त्वां कथञ्चन ॥ २८ ॥ निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा। एतादृशं वचः श्रुत्वा लक्ष्मणः प्रियराघवः ॥ २९ ॥ पिधाय कर्णौ सद्वृत्तः प्रस्थितो येन राघवः। स रामस्य पदं गृह्य प्रससार धनुर्धरः ॥ ३० ॥ अवीक्षमाणो बिम्बोष्ठीं प्रययौ लक्ष्मणस्तदा। एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ॥ ३१ ॥ अभव्यो भव्यरूपेण भस्मच्छन्न इवानलः। यतिवेशप्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् ॥ ३२ ॥ सा तमालक्ष्य संप्राप्तं धर्मज्ञा जनकात्मजा। निमन्त्रयामास तदा फलमूलाशनादिभिः ॥ ३३ ॥ अवमन्य ततः सर्वं स्वरूपं प्रतिपद्य च। सान्त्वयामास वैदेहीमिति राक्षसपुङ्गवः ॥ ३४ ॥ सीते राक्षसराजोऽहं रावणो नाम विश्रुतः। मम लङ्का पुरी नाम्ना रम्या पारे महोदधेः ॥ ३५ ॥ तत्र त्वं वरनारीषु शोभिष्यसि मया सह। भार्य्या मे भव सुश्रोणि तापसं त्यज राघवम् ॥ ३६ ॥ एवमादीनि वाक्यानि श्रुत्वा तस्याथ जानकी। पिधाय कर्णौ सुश्रोणी नैवमित्यब्रवीद्वचः ॥ ३७ ॥ प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकली भवेत्। शैत्यमग्निरियान्नाहं त्यजेयं रघुनन्दनम् ॥ ३८ ॥ कथं हि भिन्नकरटं हस्तिनं वनगोचरम्। उपस्थाय महाभागं करेणुः शूकरं स्पृशेत् ॥ ३९ ॥ कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीम्। लोभं सौवीरके कुर्य्यान्नारी काचिदिति स्मरे ॥ ४० ॥ इति सा तं समाभाष्य प्रविवेशाश्रमं ततः। क्रोधात् प्रस्फुरमाणोष्ठी विधुन्वाना करौ मुहुः ॥ ४१ ॥ तामभिद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत्। भर्त्सयित्वा तु रूक्षेण स्वरेण गतचेतनाम् ॥ ४२ ॥ मूर्द्धजेषु निजग्राह ऊर्द्ध्वमाचक्रमे ततः।

तां ददर्श ततो गृध्रो जटायुर्गिरिगोचरः । रुदतीं रामरामेति ह्रियमाणां तपस्विनीम् ॥ ४३ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि सीताहरणे सप्तसप्तत्यधिकद्विशततोऽध्यायः ॥ २७७ ॥

---

मार्कण्डेय उवाच । सखा दशरथस्यासीज्जटायुररुणात्मजः । गृध्रराजो महावीरः सम्पातिर्यस्य सोदरः ॥ १ ॥ स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम् । सक्रोधोऽभ्यद्रवत् पक्षी रावणं राक्षसेश्वरम् ॥ २ ॥ अथैनमब्रवीद्गृध्रो मुञ्च मुञ्चस्व मैथिलीम् । ध्रियमाणे मयि कथं हरिष्यसि निशाचर ॥ ३ ॥ न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे वधूम् । उक्त्वैवं राक्षसेन्द्रं तं चकर्त्त नखरैर्भृशम् ॥ ४ ॥ पक्षतुण्डप्रहारैश्च शतशो जर्ज्जरीकृतम् । चक्षार रुधिरं भूरि गिरिप्रस्रवणैरिव ॥ ५ ॥ स वध्यमानो गृध्रेण रामप्रियहितैषिणा । खड्गमादाय चिच्छेद भुजौ तस्य पतत्त्रिणः ॥ ६ ॥ निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमम् । जर्द्धमाचक्रमे सीतां गृहीत्वाङ्केन राक्षसः ॥ ७ ॥ यत्र यत्र तु वैदेही पश्यत्याश्रममण्डलम् । सरो वा सरितो वापि तत्र मुञ्चति भूषणम् ॥ ८ ॥ सा ददर्श गिरिप्रस्थे पञ्च वानरपुङ्गवान् । तत्र वासो महद्दिव्यमुत्ससर्ज्ज मनस्विनी ॥ ९ ॥ तत्तेषां वानरेन्द्राणां पपात पवनोद्धतम् । मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा ॥ १० ॥ अचिरेणातिचक्राम खेचरः खे चरन्निव । ददर्शाथ पुरीं रम्यां बहुद्वारां मनोरमाम् ॥ ११ ॥ प्राकारवप्रसम्बाधां निर्मितां विश्वकर्मणा । प्रविवेश पुरीं लङ्कां ससीतो राक्षसेश्वरः ॥ १२ ॥ एवं हृतायां वैदेह्यां रामो हत्वा महामृगम् । निवृत्तो ददृशे धीमान्

भ्रातरं लक्ष्मणन्तथा ॥ १३ ॥ कथमुत्सृज्य वैदेहीं वने राक्षस-
सेविते । इति तं भ्रातरं दृष्ट्वा प्राप्तोऽसीति व्यगर्हयत् ॥ १४ ॥
मृगरूपधरेणाथ रक्षसा सोपकर्षणम् । भ्रातुरागमनञ्चैव चिन्त-
यन् पर्य्यतप्यत ॥ १५ ॥ गर्हयन्नेव रामस्तु त्वरितस्तं समासदत् ।
अपि जीवति वैदेही नेति पश्यामि लक्ष्मण ॥ १६ ॥ तस्य तत्
सर्वमाचख्यौ सीताया लक्ष्मणो वचः । यदुक्तवत्यसदृशं वैदेही
पश्चिमं वचः ॥ १७ ॥ दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमम् ।
स ददर्श तदा गृध्रं निहतं पर्वतोपमम् ॥ १८ ॥ राक्षसं शङ्क-
मानस्तं विकृष्य बलवद्धनुः । अभ्यधावत काकुत्स्थस्ततस्तं सह-
लक्ष्मणः ॥ १९ ॥ स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ ।
गृध्रराजोऽस्मि भद्रं वो सखा दशरथस्य वै ॥ २० ॥ तस्य तद्वचनं
श्रुत्वा संगृह्य धनुषी शुभे । कोऽयं पितरमस्माकं नाम्नाहेत्यूचतुश्च
तौ ॥ २१ ॥ ततो ददृशतुस्तौ तं छिन्नपक्षद्वयं खगम् । तयोः
शशंस गृध्रस्तु सीतार्थे रावणाद्वधम् ॥ २२ ॥ अपृच्छद्राघवो गृध्रं
रावणं कान्दिशं गतः । तस्य गृध्रः शिरःकम्पैराचचक्षे ममार च
॥ २३ ॥ दक्षिणामिति काकुत्स्थो विदित्वास्य तदिङ्गितम् । सत्-
कारं लम्भयामास सखायं पूजयन् पितुः ॥ २४ ॥ ततो दृष्ट्वा-
श्रमपदं व्यपविद्धवृषीमठम् । विध्वस्तकलशं शून्यं गोमायुशत-
सङ्कुलम् ॥ २५ ॥ दुःखशोकसमाविष्टौ वैदेहीहरणार्द्दितौ ।
जग्मतुर्द्दण्डकारण्यं दक्षिणेन परन्तपौ ॥ २६ ॥ वने महति
तस्मिंस्तु रामः सौमित्रिणा सह । ददर्श मृगयूथानि द्रवमाणानि
सर्वशः ॥ २७ ॥ शब्दञ्च घोरं सत्त्वानां दावाग्नेरिव वर्द्धतः ।
अपश्यतां मुहूर्त्ताच्च कबन्धं घोरदर्शनम् ॥ २८ ॥ मेघपर्वतसङ्काशं
शालस्कन्धं महाभुजम् । उरोगतविशालाक्षं महोदरमहामुखम्
॥ २९ ॥ यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् । विषाद-
मगमत् सद्यः सौमित्रिरथ भारत ॥ ३० ॥ स राममभिसंप्रेक्ष्य

कृष्यते येन तन्मुखम्। विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम ॥ ३१ ॥ हरणञ्चैव वैदेह्या मम चायमुपप्लवः। राज्यभ्रंशश्च भवतस्तातस्य मरणन्तथा ॥ ३२ ॥ नाहं त्वां सह वैदेह्या समेतं कोशलागतम्। द्रक्ष्यामि पृथिवीराज्ये पितृपैतामहे स्थितम् ॥ ३३ ॥ द्रक्ष्यन्त्यार्य्यस्य धन्या ये कुशलाजशमीजलैः। अभिषिक्तस्य वदनं सोमं शान्तघनं यथा ॥ ३४ ॥ एवं बहुविधं धीमान् विललाप स लक्ष्मणः। तमुवाचाथ काकुत्स्थः सम्भ्रमेष्वप्यसंभ्रमः ॥ ३५ ॥ मा विषीद नरव्याघ्र नैष कश्चिन्मयि स्थिते। छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः ॥ ३६ ॥ इत्येवं वदता तस्य भुजो रामेण पातितः। खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् ॥ ३७ ॥ ततोऽस्य दक्षिणं बाहुं खड्गेनाजघ्निवान् बली। सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम ॥ ३८ ॥ पुनर्जघान पार्श्वे वै तद्रक्षो लक्ष्मणो भृशम्। गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः ॥ ३९ ॥ तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः। ददृशे दिवमास्थाय दिवि सूर्य्य इव ज्वलन् ॥ ४० ॥ पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः। कामया किमिदञ्चित्रमाश्चर्य्यं प्रतिभाति मे ॥ ४१ ॥ तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप। प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम् ॥ ४२ ॥ रावणेन हृता सीता राज्ञा लङ्काधिवासिना। सुग्रीवमभिगच्छस्व स ते सख्यं करिष्यति ॥ ४३ ॥ एषा पम्पा शिवजला हंसकारण्डवायुता। ऋष्यमूकस्य शैलस्य सन्निकर्षे तडागिनी ॥ ४४ ॥ वसते तत्र सुग्रीवश्चतुर्भिः सचिवैः सह। भ्राता वानरराजस्य वालिनो हेममालिनः ॥ ४५ ॥ तेन त्वं सह सङ्गम्य दुःखमूलं निवेदय। समानशीलो भवतः साहाय्यं स करिष्यति ॥ ४६ ॥ एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम्। ध्रुवं वानरराजस्य विदिता रावणादयः ॥ ४७ ॥ इत्युक्त्वान्तर्हितो

दिव्यः पुरुषः स महाप्रभः। विस्मयं जग्मतुश्चोभौ प्रवीरौ राम-लक्ष्मणौ ॥ ४८ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि विश्वावसुमोचणे
अष्टसप्तत्यधिकद्विशततोऽध्यायः ॥ २७८ ॥

---

मार्कण्डेय उवाच। ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलाम्। सीताहरणदुःखार्त्तः पम्पां रामः समासदत् ॥ १ ॥ मारुतेन सुशीतेन सुखिनामृतगन्धिना। सेव्यमानो वने तस्मिन् जगाम मनसा प्रियाम् ॥ २ ॥ विललाप स राजेन्द्रस्तत्र कान्तामनुस्मरन्। कामवाणाभिसन्तप्तं सौमित्रिस्तमथाब्रवीत् ॥ ३ ॥ न त्वामेवंविधो भावः स्प्रष्टुमर्हति मानद। आत्मवन्तमिव व्याधिः पुरुषं वृद्ध-शीलिनम् ॥ ४ ॥ प्रवृत्तिरुपलब्धा ते वैदेह्या रावणस्य च। तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय ॥ ५ ॥ अभिगच्छाव सुग्रीवं शैलस्थं हरिपुङ्गवम्। मयि शिष्ये च भृत्ये च सहाये च समा-श्वस ॥ ६ ॥ एवं बहुविधैर्वाक्यैर्लक्ष्मणेन स राघवः। उक्तः प्रकृतिमापेदे कार्य्ये चानन्तरोऽभवत् ॥ ७ ॥ निषेव्य वारि पम्पा-यास्तर्पयित्वा पितॄनपि। प्रतस्थतुरुभौ वीरौ भ्रातरौ राम-लक्ष्मणौ ॥ ८ ॥ तावृष्यमूकमभ्येत्य बहुमूलफलद्रुमम्। गिर्य्यग्रे वानरान् पञ्च वीरौ ददृशतुस्तदा ॥ ९ ॥ सुग्रीवः प्रेषयामास सचिवं वानरं तयोः। बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितम् ॥ १० ॥ तेन सम्भाष्य पूर्व्वन्तौ सुग्रीवमभिजग्मतुः। सख्यं वानर-राजेन चक्रे रामस्तदा नृप ॥ ११ ॥ तद्वासो दर्शयामासुस्तस्य कार्य्ये निवेदिते। वानराणान्तु यत् सीता ह्रियमाणा व्यपा-सृजत् ॥ १२ ॥ तत् प्रत्ययकरं लब्ध्वा सुग्रीवं प्लवगाधिपम्। पृथिव्यां वानरैश्वर्य्ये स्वयं रामोऽभ्यषेचयत् ॥ १३ ॥ प्रतिजज्ञे च

काकुत्स्थः समरे वालिनो वधम् । सुग्रीवस्यापि वैदेह्याः पुनरा-
नयनं नृप ॥ १४ ॥ इत्युक्त्वा समयं कृत्वा विश्वास्य च परस्परम् ।
अभ्येत्य सर्वे किष्किन्ध्यां तस्थुर्युद्धाभिकाङ्क्षिणः ॥ १५ ॥ सुग्रीवः
प्राप्य किष्किन्ध्यां ननादौघनिभस्वनः । नास्य तं ममृषे वाली
तारा तं प्रत्यषेधयत् ॥ १६ ॥ यथा नदति सुग्रीवो वलवानेष
वानरः । मन्ये चाश्रयवान् प्राप्तो न त्वं निष्क्रान्तुमर्हसि ॥ १७ ॥
हेममाली ततो वाली तारां ताराधिपाननाम् । प्रोवाच वचनं
वाग्मी तां वानरपतिः पतिः ॥ १८ ॥ एवंभूतरुतज्ञा त्वं पश्य बुद्ध्या
समन्विता । केनापाश्रयवान् प्राप्तो ममैष भ्रातृगन्धिकः ॥ १९ ॥
चिन्तयित्वा मुहूर्त्तन्तु तारा ताराधिपप्रभा । पतिमित्यब्रवीत्
प्राज्ञा शृणु सर्वकपीश्वर ॥ २० ॥ हृतदारो महासत्त्वो रामो
दशरथात्मजः । तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्द्धरः ॥ २१ ॥
भ्राता चास्य महाबाहुः सौमित्रिरपराजितः । लक्ष्मणो नाम
मेधावी स्थितः कार्य्यार्थसिद्धये ॥ २२ ॥ मैन्दश्च द्विविदश्चापि हनू-
मांश्चानिलात्मजः । जाम्ववानृक्षराजश्च सुग्रीवसचिवाः स्थिताः
॥ २३ ॥ सर्वे एते महात्मानो बुद्धिमन्तो महाबलाः । अलन्तव
विनाशाय रामवीर्य्यबलाश्रयात् ॥ २४ ॥ तस्यास्तदाक्षिप्य वचो
हितमुक्तं कपीश्वरः । पर्य्यशङ्कत तामीर्षुः सुग्रीवगतमानसाम्
॥ २५ ॥ तारां परुषमुक्त्वा तु निर्ज्जगाम गुहामुखात् । स्थितं
माल्यवतोऽभ्यासे सुग्रीवं सोऽभ्यभाषत ॥ २६ ॥ असकृत्त्वं मया
पूर्वं निर्ज्जितो जीवितप्रियः । मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा
मरणे पुनः ॥ २७ ॥ इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः ।
प्राप्तकालममित्रघ्नो रामं सम्बोधयन्निव ॥ २८ ॥ हृतदारस्य मे
राजन् हृतराज्यस्य च त्वया । किं मे जीवितसामर्थ्यमिति विद्धि
समागतम् ॥ २९ ॥ एवमुक्त्वा बहुविधं ततस्तौ सन्निपेततुः ।
समरे वालिसुग्रीवौ शालतालशिलायुधौ ॥ ३० ॥ उभौ जघ्नतु-

रन्योन्यमुभौ भूमौ निपेततुः। उभौ ववल्गतुश्चित्रं मुष्टिभिश्च निजघ्नतुः ॥ ३१ ॥ उभौ रुधिरसंसिक्तौ नखदन्तपरिक्षतौ। शुशुभाते तदा वीरौ पुष्पिताविव किंशुकौ ॥ ३२ ॥ न विशेषस्तयोर्युद्धे यदा कश्चन दृश्यते। सुग्रीवस्य तदा मालां हनूमान् कण्ठ आसजत् ॥ ३३ ॥ स मालया तदा वीरः शुशुभे कण्ठसक्तया। श्रीमानिव महाशैलो मलयो मेघमालया ॥ ३४ ॥ कृतचिह्नन्तु सुग्रीवं रामो दृष्ट्वा महाधनुः। विचकर्ष धनुःश्रेष्ठं बालिमुद्दिश्य लक्ष्यवत् ॥ ३५ ॥ विस्फारस्तस्य धनुषो यन्त्रस्येव तदा बभौ। वितत्रास तदा वाली शरेणाभिहतो हृदि ॥ ३६ ॥ स भिन्नहृदयो बाली वक्त्राच्छोणितमुद्वहन्। ददर्शावस्थितं रामं ततः सौमित्रिणा सह ॥ ३७ ॥ गर्हयित्वा स काकुत्स्थं पपात भुवि मूर्च्छितः। तारा ददर्श तं भूमौ तारापतिसमौजसम् ॥ ३८ ॥ हते बालिनि सुग्रीवः किष्किन्ध्यां प्रत्यपद्यत। ताञ्च तारापतिमुखीं तारां निपतितेश्वराम् ॥ ३९ ॥ रामस्तु चतुरो मासान् पृष्ठे माल्यवतः शुभे। निवासमकरोद्धीमान् सुग्रीवेणाभ्युपस्थितः ॥ ४० ॥ रावणोऽपि पुरीं गत्वा लङ्कां कामबलात् कृतः। सीतां निवेशयामास भवने नन्दनोपमे ॥ ४१ ॥ अशोकवनिकाभ्यासे तापसाश्रमसन्निभे। भर्त्तृस्मरणतन्वङ्गी तापसीवेशधारिणी ॥ ४२ ॥ उपवासतपःशीला तत्र सा पृथुलेक्षणा। उवास दुःखवसतिं फलमूलकृताशना ॥ ४३ ॥ दिदेश राक्षसींस्तत्र रक्षणे राक्षसाधिपः प्रासासिशूलपरशुमुद्गरालातधारिणीः ॥ ४४ ॥ द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्वकाम्। त्रिस्तनीमेकपादाञ्च त्रिजटामेकलोचनाम् ॥ ४५ ॥ एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्द्धजाः। परिवार्य्यासते सीतां दिवारात्रमतन्द्रिताः ॥ ४६ ॥ तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वराः। तर्ज्जयन्ति सदा रौद्राः परुषव्यञ्जनस्वराः ॥ ४७ ॥ खादाम पाटयामैनां तिलशः

प्रविभज्यताम् । येयं भर्त्तारमस्माकमवमन्येह जीवति ॥ ४८ ॥
इत्येवं परिभर्त्संन्तीस्त्रास्यमाना पुनः पुनः । भर्त्तृशोकसमाविष्टा
निःश्वस्येदमुवाच ताः ॥ ४९ ॥ आर्य्याः खादत मां शीघ्रं न मे
लोभोऽस्ति जीविते । विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्द्धजम्
॥ ५० ॥ अप्येवाहं निराहारा जीवितप्रियवर्ज्जिता । शोषयि-
ष्यामि गात्राणि व्याली तालगता यथा ॥ ५१ ॥ न त्वन्यमभि-
गच्छेयं पुमांसं राघवादृते । इति जानीत सत्यं मे क्रियतां यद-
नन्तरम् ॥ ५२ ॥ तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः ।
आख्यातुं राक्षसेन्द्राय जग्मुस्तत् सर्वमादितः ॥ ५३ ॥ गतासु
तासु सर्वासु त्रिजटा नाम राक्षसी । सान्त्वयामास वैदेहीं धर्मज्ञा
प्रियवादिनी ॥ ५४ ॥ सीते वक्ष्यामि ते किञ्चिद्विश्वासं कुरु मे
सखि । भयं त्वं त्यज वामोरु शृणु चेदं वचो मम ॥ ५५ ॥
अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः । स रामस्य हिता-
न्वेषी त्वदर्थे हि समावदत् ॥ ५६ ॥ सीता मद्वचनाद्वाच्या समा-
श्वास्य प्रसाद्य च । भर्त्ता ते कुशली रामो लक्ष्मणानुगतो बली
॥ ५७ ॥ सख्यं वानरराजेन शक्रप्रतिमतेजसा । कृतवान्राघवः
श्रीमान् त्वदर्थे च समुद्यतः ॥ ५८ ॥ मा च तेऽस्तु भयं भीरु
रावणाल्लोकगर्हितात् । नलकूवरशापेन रक्षिता ह्यसि नन्दिनि
॥ ५९ ॥ शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशन् । न शक्तो
त्ववशां नारीमुपैतुमजितेन्द्रियः ॥ ६० ॥ क्षिप्रमेष्यति ते भर्त्ता
सुग्रीवेणाभिरक्षितः । सौमित्रिसहितो धीमांस्त्वाञ्चेतो मोक्षयि-
ष्यति ॥ ६१ ॥ स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः ।
विनाशायास्य दुर्बुद्धेः पौलस्त्यकुलघातिनः ॥ ६२ ॥ दारुणो ह्येष
दुष्टात्मा क्षुद्रकर्मा निशाचरः । स्वभावात् शीलदोषेण सर्वेषां
भयवर्द्धनः ॥ ६३ ॥ स्पर्द्धते सर्वदेवैर्यः कालोपहतचेतनः । मया
विनाशलिङ्गानि स्वप्ने दृष्टानि तस्य वै ॥ ६४ ॥ तैलाभिषिक्तो

विकचो मज्जन् पङ्के दग्धाननः। असकृत् खरयुक्ते तु रथे नृत्यन्निव स्थितः ॥ ६५ ॥ कुम्भकर्णादयश्चेमे नग्नाः पतित-मूर्द्धजाः। गच्छन्ति दक्षिणामाशां रक्तमाल्यानुलेपना ॥ ६६ ॥ श्वेतातपत्रः सोष्णीषः शुक्लमाल्यानुलेपनः। श्वेतपर्वतमारूढ़ एक एव विभीषणः ॥ ६७ ॥ सचिवास्तस्य चत्वारः शुक्लमाल्यानु-लेपनाः। श्वेतपर्वतमारूढ़ा मोक्ष्यन्तेऽस्मान्महाभयात् ॥ ६८ ॥ रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा। यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः ॥ ६९ ॥ अस्थिसञ्चयमारूढ़ो भुञ्जानो मधुपायसम्। लक्ष्मणश्च मया दृष्टो दिधक्षुः सर्वतो दिशम् ॥ ७० ॥ रुदती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता। असकृत् त्वं मया दृष्टा गच्छन्ती दिशमुत्तमम् ॥ ७१ ॥ हर्षमेष्यसि वैदेहि क्षिप्रं भर्त्रा समन्विता। राघवेण सह भ्रात्रा सीते त्वमचिरादिव ॥ ७२ ॥ इत्येतन्मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः। बभूवाशावती बाला पुनर्भर्तृ समागमे ॥ ७३ ॥ यावदभ्यागता रौद्राः पिशाच्यस्ताः सुदारुणाः। ददृशुस्तां त्रिजटया सहासीनां यथा पुरा ॥ ७४ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि सीतासान्त्वने
एकोनाशीत्यधिकद्विशतोऽध्यायः ॥ २७९ ॥

---

मार्कण्डेय उवाच। ततस्तां भर्तृशोकार्त्तां दीनां मलिन-वाससम्। मणिशेषाभ्यलङ्कारां रुदतीञ्च पतिव्रताम् ॥ १ ॥ राक्षसीभिरुपास्यन्तीं समासीनां शिलातले। रावणः काम-वाणार्त्तो ददर्शोपससर्प च ॥ २ ॥ देवदानवगन्धर्व्वयक्षकिम्पुरुषै-र्युधि। अजितोऽशोकवनिकां ययौ कन्दर्पपीड़ितः ॥ ३ ॥ दिव्या-म्बरधरः श्रीमान् सुमृष्टमणिकुण्डलः। विचित्रमाल्यमुकुटो वसन्त इव मूर्त्तिमान् ॥ ४ ॥ स कल्पवृक्षसदृशो यत्नादपि विभूषितः।

श्मशानचैत्यद्रुमवद्भूषितोऽपि भयङ्करः ॥५॥ स तस्यास्तनुमध्याया: समीपे रजनीचरः। ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः॥६॥ स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः। इदमित्यब्रवीद्बालां वस्तां रौद्रीमिवावलाम् ॥ ७ ॥ सीते पर्य्याप्तमेतावत् कृतो भर्त्तुरनुग्रहः। प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म ते ॥ ८॥ भजस्व मां वरारोहे महार्हाभरणाम्बरा। भव मे सर्वनारीणामुत्तमा वरवर्णिनी ॥ ९ ॥ सन्ति मे देवकन्याश्च गन्धर्वाणाञ्च योषितः। सन्ति दानवकन्याश्च दैत्यानाञ्चापि योषितः॥ १० ॥ चतुर्दश पिशाचानां कोट्यो मे वचने स्थिताः। द्विस्तावत् पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ११ ॥ ततो मे त्रिगुणा यक्षा ये मदनचारिणः। केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः॥१२॥ गन्धर्वाप्सरसो भद्रे मामापानगतं सदा। उपातिष्ठन्ति वामोरु यथैव भ्रातरं मम ॥ १३ ॥ पुत्रोऽहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः। पञ्चमो लोकपालानामिति मे प्रथितं यशः ॥१४॥ दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च। यथैव त्रिदशेशस्य तथैव मम भाविनि ॥ १५॥ क्षीयतां दुष्कृतं कर्म वनवासकृतं तव। भार्य्या मे भव सुश्रोणि यथा मन्दोदरी तथा ॥ १६ ॥ इत्युक्ता तेन वैदेही परिवृत्य शुभाननम्। तृणमन्तरितं कृत्वा तमुवाच निशाचरम् ॥ १७ ॥ अशिवेनाति वामोरूरजस्रं नेत्रवारिणा। स्तनावपतितौ बाला संहतावभिवर्षति ॥ १८॥ उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता। असकृद्वदतो वाक्यमीदृशं राक्षसेश्वर ॥ १९ ॥ विषादयुक्तमेतत्ते मया श्रुतमभाग्यया। तद्भद्रमुख भद्रन्ते मानसं विनिवर्त्त्यताम् ॥ २० ॥ परदारास्म्यलभ्या च सततञ्च पतिव्रता। न चैवोपयिकी भार्य्या मानुषी कृपणा तव ॥ २१ ॥ विवशां धर्षयित्वा च कां त्वं प्रीतिमवाप्स्यसि। प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव ॥ २२ ॥ न च पालयसे

धर्मं लोकपालसमः कथम्। भ्रातरं राजराजानं महेश्वरसखं प्रभुम्॥ २३॥ धनेश्वरं व्यपदिशन् कथन्त्विह न लज्जसे। इत्युक्त्वा प्रारुदत् सीता कम्पयन्ती पयोधरौ॥ २४॥ शिरोधराञ्च तन्वङ्गी मुखं प्रच्छाद्य वाससा। तस्या रुदत्या भामिन्या दीर्घवेणी सुसंयता॥ २५॥ ददृशे स्वसिता स्निग्धा काली व्यालीव मूर्द्धनि। श्रुत्वा तद्रावणो वाक्यं सीतयोक्तं सुनिष्ठुरम्॥ २६॥ प्रत्याख्यातोऽपि दुर्मेधाः पुनरेवाब्रवीद्वचः। काममङ्गानि मे सीते दुनोतु मकरध्वजः॥ २७॥ न त्वामकामां सुश्रोणि समेष्ये चारुहासिनीम्। किन्तु शक्यं मया कर्त्तुं यत्त्वमद्यापि मानुषम्॥ २८॥ आहारभूतमस्माकं राममेवानुरुध्यसे। इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसमहेश्वरः॥ २९॥ तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशम्। राक्षसीभिः परिवृता वैदेही शोककर्षिता। सेव्यमाना त्रिजटया तत्रैव न्यवसत्तदा॥ ३०॥

इति आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि सीतारावणसंवादे अशीत्यधिकद्विशततोऽध्यायः॥ २८०॥

---

मार्कण्डेय उवाच। राघवः सहसौमित्रिः सुग्रीवेणाभिपालितः। वसन् माल्यवतः पृष्ठे ददर्श विमलं नभः॥ १॥ स दृष्ट्वा विमले व्योम्नि निर्मलं शशलक्षणम्। ग्रहनक्षत्रताराभिरनुयातममित्रहा॥ २॥ कुमुदोत्पलपद्मानां गन्धमादाय वायुना। महीधरस्थः शीतेन सहसा प्रतिबोधितः॥ ३॥ प्रभाते लक्ष्मणं वीरमभ्यभाषत दुर्मनाः। सीतां संस्मृत्य धर्मात्मा रुद्धां राक्षसवेश्मनि॥ ४॥ गच्छ लक्ष्मण जानीहि किष्किन्धायां कपीश्वरम्। प्रमत्तं ग्राम्यधर्मेषु कृतघ्नं स्वार्थपण्डितम्॥ ५॥ योऽसौ कुलाधमो मूढो

मया राज्येऽभिषेचितः । सर्ववानरगोपुच्छा यमृक्षाश्च भजन्ति वै
॥ ६ ॥ यदर्थं निहतो वाली मया रघुकुलोद्वह । त्वया सह
महाबाहो किष्किन्धोपवने तदा ॥ ७ ॥ कृतघ्नं तमहं मन्ये वान-
रापसदं भुवि । यो मामेवं गतं मूढो न जानीतेऽद्य लक्ष्मण ॥ ८ ॥
असौ मन्ये न जानीते समयप्रतिपालनम् । कृतोपकारं मां नून-
मवमन्याल्पया धिया ॥ ९ ॥ यदि तावदनुद्युक्तः शेते कामसुखा-
त्मकः । नेतव्यो वालिमार्गेण सर्वभूतगतिं त्वया ॥ १० ॥ अथापि
घटतेऽस्माकमर्थे वानरपुङ्गवः । तमादायैव काकुत्स्थ त्वरावान्
भव मा चिरम् ॥ ११ ॥ इत्युक्तो लक्ष्मणो भ्रात्रा गुरुवाक्यहिते
रतः । प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः ॥ १२ ॥ किष्किन्धा-
द्वारमासाद्य प्रविवेशानिवारितः । सक्रोध इति तं मत्वा राजा
प्रत्युद्ययौ हरिः ॥ १३ ॥ तं सदारो विनीतात्मा सुग्रीवः प्लवगा-
धिपः । पूजया प्रतिजग्राह प्रीयमाणस्तदर्हया ॥ १४ ॥ तमब्र-
वीद्रामवचः सौमित्रिरकुतोभयः । स तत् सर्वमशेषेण श्रुत्वा प्रह्वः
कृताञ्जलिः ॥ १५ ॥ सभृत्यदारो राजेन्द्रः सुग्रीवो वानराधिपः ।
इदमाह वचः प्रीतो लक्ष्मणं नरकुञ्जरम् ॥ १६ ॥ नास्मि लक्ष्मण
दुर्मेधा नाकृतज्ञो न निर्घृणः । श्रूयतां यः प्रयत्नो मे सीतापर्य्य-
षणे कृतः ॥ १७ ॥ दिशः प्रस्थापिताः सर्वे विनीता हरयो मया ।
सर्वेषाञ्च कृतः कालो मासेनागमनं पुनः ॥ १८ ॥ यैरियं सवना
साद्रिः सपुरा सागराम्बरा । विचेतव्या मही वीर सग्रामनगरा-
करा ॥ १९ ॥ स मासः पञ्चरात्रेण पूर्णो भवितुमर्हति । ततः
श्रोष्यसि रामेण सहितः सुमहत् प्रियम् ॥ २० ॥ इत्युक्तो लक्ष्मण-
स्तेन वानरेन्द्रेण धीमता । त्यक्त्वा रोषमदीनात्मा सुग्रीवं प्रत्य-
पूजयत् ॥ २१ ॥ स रामं सहसुग्रीवो माल्यवत्पृष्ठमास्थितम् ।
अभिगम्योदयं तस्य कार्य्यस्य प्रत्यवेदयत् ॥ २२ ॥ इत्येवं वानरे-
न्द्रास्ते समाजग्मुः सहस्रशः । दिशस्तिस्रो विचित्याथ न तु ये

दक्षिणाङ्गताः ॥ २३ ॥ आचख्युस्तत्र रामाय मह्यां सागरमेखलाम् । विचितां न तु वैदेह्या दर्शनं रावणस्य वै ॥ २४ ॥ गतास्तु दक्षिणामाशां ये वै वानरपुङ्गवाः । आशावांस्तेषु काकुत्स्थः प्राणानार्त्तोऽभ्यधारयत् ॥ २५ ॥ द्विमासोपरमे काले व्यतीते प्लवगास्ततः । सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन् ॥ २६ ॥ रक्षितं वालिना यत्तु स्फीतं मधुवनं महत् । त्वया च प्लवगश्रेष्ठ-स्तद्भुङ्क्ते पवनात्मजः ॥ २७ ॥ वालिपुत्त्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः । विचेतुं दक्षिणामाशां राजन् प्रस्थापितास्त्वया ॥ २८ ॥ तेषां तत् प्रणयं श्रुत्वा मेने स कृतकृत्यताम् । कृतार्थानां हि भृत्यानामेतद्भवति चेष्टितम् ॥ २९ ॥ स तद्रामाय मेधावी शशंस प्लवगर्षभः । रामश्चाप्यनुमानेन मेने दृष्टान्तु मैथिलीम् ॥ ३० ॥ हनूमत्प्रमुखाश्चापि विश्रान्तास्ते प्लवङ्गमाः । अभिजग्मुर्हरीन्द्रं तं रामलक्ष्मणसन्निधौ ॥ ३१ ॥ गतिञ्च मुखवर्णञ्च दृष्ट्वा रामो हनूमतः । अगमत् प्रत्ययं भूयो दृष्टा सीतेति भारत ॥ ३२ ॥ हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः । प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणन्तथा ॥ ३३ ॥ तानुवाचागतान्रामः प्रगृह्य सशरं धनुः । अपि मां जीवयिष्यध्वमपि वः कृतकृत्यता ॥ ३४ ॥ अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः । निहत्य समरे शत्रूनाहृत्य जनकात्मजाम् ॥ ३५ ॥ अमोक्षयित्वा वैदेहीमहत्वा च रणे रिपून् । हृतदारोऽवधूतश्च नाहं जीवितुमुत्सहे ॥ ३६ ॥ इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः । प्रियमाख्यामि ते राम दृष्टा सा जानकी मया ॥ ३७ ॥ विचित्य दक्षिणामाशां सपर्वतवनाकराम् । श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहाम् ॥ ३८ ॥ प्रविशामो वयं तान्तु बहुयोजनमायताम् । अन्धकारां सुविपिनां गहनां कीटसेविताम् ॥ ३९ ॥ गत्वा सुमहदध्वानमादित्यस्य प्रभान्ततः । दृष्टवन्तः स्म तत्रैव भवनं दिव्यमन्तरा ॥ ४० ॥ मयस्य किल दैत्यस्य

तदासीद्दिवस राघव । तत्र प्रभावती नाम तपोऽतप्यत तापसी ॥४१
तया दत्तानि भोज्यानि पानानि विविधानि च । भुक्त्वा लब्धबलाः सन्तस्तयोक्तेन पथा ततः ॥ ४२ ॥ निर्याय तस्मादुद्देशात् पश्यामो लवणाम्भसः । समीपे सह्यमलयौ दर्दुरञ्च महागिरिम् ॥ ४३ ॥ ततो मलयमारुह्य पश्यन्तो वरुणालयम् । विषण्णा व्यथिताः खिन्ना निराशा जीविते भृशम् ॥ ४४ ॥ अनेकशतविस्तीर्णं योजनानां महोदधिम् । तिमिनक्रझषावासं चिन्तयन्तः सुदुःखिताः ॥ ४५ ॥ तत्रानशनसङ्कल्पं कृत्वासीना वयं तदा । ततः कथान्ते गृध्रस्य जटायोरभवत् कथा ॥ ४६ ॥ ततः पर्वतशृङ्गाभं घोररूपं भयावहम् । पक्षिणं दृष्टवन्तः स्म वैनतेयमिवापरम् ॥ ४७ ॥ सोऽस्मानतर्कयत् भोक्तुमथाभ्येत्य वचोऽब्रवीत् । भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम् ॥ ४८ ॥ सम्पातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः । अन्योऽन्यस्पर्द्धयारूढावावामादित्यसंसदम् ॥४९ ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः । तदा मे चिरदृष्टः स भ्राता गृध्रपतिः प्रियः ॥ ५० ॥ निर्दग्धपक्षः पतितो ह्यहमस्मिन् महागिरौ । तस्यैवं वदतोऽस्माभिर्हतो भ्राता निवेदितः ॥ ५१ ॥ व्यसनं भवतश्चेदं संक्षेपाद्वै निवेदितम् । स सम्पातिस्तदा राजन् श्रुत्वा सुमहदप्रियम् ॥ ५२ ॥ विषण्णचेताः पप्रच्छ पुनरस्मानरिन्दम । कः स रामः कथं सीता जटायुश्च कथं हतः ॥५३॥ इच्छामि सर्वमेवैतत् श्रोतुं प्लवगसत्तमाः । तस्याहं सर्वमेवैतद्भवतो व्यसनागमम् ॥ ५४ ॥ प्रायोपवेशने चैव हेतुं विस्तरशोऽब्रुवम् । सोऽस्मानुत्थापयामास वाक्येनानेन पक्षिराट् ॥ ५५ ॥ रावणो विदितो मह्यं लङ्का चास्य महापुरी । दृष्टा पारे समुद्रस्य त्रिकूटगिरिकन्दरे ॥ ५६ ॥ भवित्री तत्र वैदेही न मेऽस्त्यत्र विचारणा । इति तस्य वचः श्रुत्वा वयमुत्थाय सत्वराः ॥ ५७ ॥ सागरक्रमणे मन्त्रं मन्त्रयामः परन्तप । नाध्यवास्यद्यदा कश्चित्

सागरस्य विलङ्घनम् ॥ ५८ ॥ ततः पितरमाविश्य पुप्लुवेऽहं महार्णवम् । शतयोजनविस्तीर्णं निहत्य जलराक्षसीम् ॥ ५९ ॥ तत्र सीता मया दृष्टा रावणान्तःपुरे सती । उपवासतपःशीला भर्त्तृदर्शनलालसा ॥ ६० ॥ जटिला मलदिग्धाङ्गी कृशा दीना तपस्विनी । निमित्तैस्तामहं सीतामुपलभ्य पृथग्विधैः ॥ ६१ ॥ उपसृत्याब्रुवञ्चार्य्यामभिगम्य रहोगताम् । सीते रामस्य दूतोऽहं वानरो मारुतात्मजः ॥ ६२ ॥ त्वद्दर्शनमभिप्रेप्सुरिह प्राप्तो विहायसा । राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ ॥ ६३ ॥ सर्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ । कुशलं त्वाब्रवीद्रामः सीते सौमित्रिणा सह ॥ ६४ ॥ सखिभावाच्च सुग्रीवः कुशलं त्वानुपृच्छति । क्षिप्रमेष्यति ते भर्त्ता सर्वशाखामृगैः सह ॥ ६५ ॥ प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः । मुहूर्त्तमिव च ध्यात्वा सीता मां प्रत्युवाच ह ॥ ६६ ॥ अवैमि त्वां हनूमन्तमविन्ध्यवचनादहम् । अविन्ध्यो हि महाबाहो राक्षसो वृद्धसम्मतः ॥ ६७ ॥ कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः । गम्यतामिति चोक्त्वा मां सीता प्रादादिदं मणिम् ॥ ६८ ॥ धारिता येन वैदेही कालमेतमनिन्दिता । प्रत्ययार्थं कथाञ्चे मां कथयामास जानकी ॥६९॥ क्षिप्तामिषीकां काकाय चित्रकूटे महागिरौ । भवता पुरुषव्याघ्र प्रत्यभिज्ञानकारणात् ॥ ७० ॥ ग्राहयित्वाहमात्मानं ततो दग्ध्वा च तां पुरीम् । सम्प्राप्त इति तं रामः प्रियवादिनमार्चयत् ॥७१॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि हनूमत्प्रत्यागमने एकाशीत्यधिकद्विशततोऽध्यायः ॥ २८१ ॥

---

मार्कण्डेय उवाच। ततस्तत्रैव रामस्य समासीनस्य तैः सह।
समाजग्मुः कपिश्रेष्ठाः सुग्रीववचनात्तदा ॥ १ ॥ ततः कोटिसह।
स्रेण वानराणां तरस्विनाम्। श्वशुरो वालिनः श्रीमान् सुषेणो
राममभ्ययात् ॥ २ ॥ कोटीशतवृतो वापि गयो गवय एव च।
वानरेन्द्रौ महावीर्य्यौ पृथक् पृथगदृश्यताम् ॥ ३ ॥ षष्टिकोटि-
सहस्राणि प्रकर्षन् प्रत्यदृश्यत। गोलाङ्गुलो महाराजा गवाक्षो
भीमदर्शनः ॥ ४ ॥ गन्धमादनवासी तु प्रथितो गन्धमादनः।
कोटीशतसहस्राणि हरीणां समकर्षत ॥ ५ ॥ पनसो नाम मेधावी
वानरः सुमहाबलः। कोटीर्दश द्वादश च त्रिंशतञ्च प्रकर्षति ॥६॥
श्रीमान् दधिमुखो नाम हरिवृद्धोऽतिवीर्य्यवान्। प्रचकर्ष महा-
सैन्यं हरीणां भीमतेजसाम् ॥ ७ ॥ कृष्णानां मुखपाण्डूनामृक्षाणां
भीमकर्मणाम्। कोटीशतसहस्रेण जाम्बवान् प्रत्यदृश्यत ॥ ८ ॥
एते चान्ये च बहवो हरियूथपयूथपाः। असंख्येया महाराज
समीयूरामकारणात् ॥ ९ ॥ गिरिकूटनिभाङ्गानां सिंहानामिव
गर्ज्जताम्। श्रूयते तुमुलः शब्दस्तत्र तत्र प्रधावताम् ॥ १० ॥
गिरिकूटनिभाः केचित् केचिन्महिषसन्निभाः। शरदभ्रप्रतीकाशाः
केचिद्धिङ्गुलकाननाः ॥ ११ ॥ उत्पतन्तः पतन्तश्च प्लवमानाश्च
वानराः। उद्धुन्वन्तोऽपरे रेणून् समाजग्मुः समन्ततः ॥ १२ ॥
स वानरमहासैन्यः पूर्णसागरसन्निभः। निवेशमकरोत्तत्र सुग्री-
वानुमते तदा ॥ १३ ॥ ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्वशः।
तिथौ प्रशस्ते नक्षत्रे मुहूर्त्ते चाभिपूजिते ॥ १४ ॥ तेन व्यूढ़ेन
सैन्येन लोकानुद्वर्त्तयन्निव। प्रययौ राघवः श्रीमान् सुग्रीवसहित-
स्तदा ॥ १५ ॥ मुखमासीत्तु सैन्यस्य हनूमान्मारुतात्मजः। जघनं
पालयामास सौमित्रिरकुतोभयः ॥ १६ ॥ बद्धगोधाङ्गुलित्राणौ
राघवौ तत्र जग्मतुः। वृतौ हरिमहामात्यैश्चन्द्रसूर्य्यौ ग्रहैरिव
॥१७॥ प्रबभौ हरिसैन्यन्तत् शालतालशिलायुधम्। सुमह

क्षालिभवनं यथासूर्य्योदयं प्रति ॥ १८ ॥ नलनीलाङ्गदक्राथ-मैन्दद्विविदपालिता । ययौ सुमहती सेना राघवस्यार्थसिद्धये ॥ १९ ॥ विविधेषु वनेष्वेव बहुमूलफलेषु च । प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च ॥ २० ॥ निवसन्ती निराबाधा तथैव गिरि-सानुषु । उपायाद्धरिसेना सा क्षीरोदमथ सागरम् ॥ २१ ॥ द्वितीयसागरनिभं तद्बलं बहुलध्वजम् । वेलावनं समासाद्य निवास-मकरोत्तदा ॥ २२ ॥ ततो दाशरथिः श्रीमान् सुग्रीवं प्रत्यभाषत । मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ॥ २३ ॥ उपायः कोनु भवतां मतः सागरलङ्घने । इयं हि महती सेना सागरश्चाति-दुस्तरः ॥ २४ ॥ तत्रान्ये व्याहरन्ति स्म वानरा बहुमानिनः । समर्था लङ्घने सिन्धोर्न तु तत्कृत्स्नकारकम् ॥ २५ ॥ केचिन्नौभि र्व्यवस्यन्ति केचिच्च विविधैः प्लवैः । नेति रामस्तु तान् सर्वान् सान्त्वयन् प्रत्यभाषत ॥ २६ ॥ शतयोजनविस्तारं न शक्ताः सर्वे वानराः । क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः ॥२७॥ नावो न सन्ति सेनाया बह्वीस्तारयितुं तथा । वणिजामुपघातञ्च कथमस्मद्विधश्चरेत् ॥ २८ ॥ विस्तीर्णञ्चैव नः सैन्यं हन्याच्छिद्रे षु वै परः प्लवोडुपप्रतारश्च नैवात्र मम रोचते ॥ २९ ॥ अहं त्विमं जलनिधिं समारप्स्याम्युपायतः । प्रतिशेष्याम्युपवसन् दर्शयि-ष्यति मान्ततः ॥ ३० ॥ न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः । महास्त्रैरप्रतिहतैरत्यग्निज्वलनोज्ज्वलैः ॥ ३१ ॥ इत्युक्त्वा सहसौ-मित्रिरुपस्पृश्याथ राघवः । प्रतिशिश्ये जलनिधिं विधिवत् कुश-संस्तरे ॥ ३२ ॥ सागरस्तु ततः स्वप्ने दर्शयामास राघवम् । देवो नदनदीभर्त्ता श्रीमान् यादोगणैर्वृतः ॥ ३३ ॥ कौशल्या-मातरित्येवमाभाष्य मधुरं वचः । इदमित्याह रत्नानामाकरैः शतशोवृतः ॥ ३४ ॥ ब्रूहि किन्ते करोम्यत्र साहाय्यं पुरुषर्षभ । ऐक्ष्वाकुर्श्चास्मि ते ज्ञातिरिति रामस्तमब्रवीत् ॥ ३५ ॥ मार्ग-

मिच्छामि सैन्यस्य दत्तं नदनदीपते। येन गत्वा दशग्रीवं हन्यां
पौलस्त्यपांसनम् ॥ ३६ ॥ यद्येवं याचतो मार्गं न प्रदास्यति मे
भवान्। शरैस्त्वां शोषयिष्यामि दिव्यास्त्रप्रतिमन्त्रितैः ॥ ३७ ॥
इत्येवं ब्रुवतः श्रुत्वा रामस्य वरुणालयः। उवाच व्यथितो वाक्य-
मिति बद्धाञ्जलिः स्थितः ॥ ३८ ॥ नेच्छामि प्रतिघातन्ते नास्मि
विघ्नकरस्तव। शृणु चेदं वचो राम श्रुत्वा कर्त्तव्यमाचर ॥ ३९ ॥
यदि दास्यामि ते मार्गं सैन्यस्य व्रजतो त्वया। अन्येऽप्याज्ञापयि-
ष्यन्ति मामेवं धनुषो बलात् ॥ ४० ॥ अस्ति तत्र नलो नाम
वानरः शिल्पिसम्मतः। त्वष्टुर्देवस्य तनयो बलवान् विश्वकर्मणः
॥ ४१ ॥ स यत् काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि।
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति ॥ ४२ ॥ इत्युक्त्वान्तर्हिते
तस्मिन् रामो नलमुवाच ह। कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि
मतो मम ॥ ४३ ॥ तेनोपायेन काकुत्स्थः सेतुबन्धमकारयत्।
दशयोजनविस्तारमायतं शतयोजनम् ॥ ४४ ॥ नलसेतुरिति
ख्यातो योऽद्यापि प्रथितो भुवि। रामस्याज्ञां पुरस्कृत्य निर्यातो
गिरिसन्निभः ॥ ४५ ॥ तत्रस्थं स तु धर्मात्मा समागच्छद्विभीषणः।
भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह ॥ ४६ ॥ प्रतिजग्राह
रामस्तं स्वागतेन महामनाः। सुग्रीवस्य तु शङ्काभूत् प्रणिधिः
स्यादिति स्म ह ॥ ४७ ॥ राघवः सत्यचेष्टाभिः सम्यक् सुचरिते-
ङ्गितैः। यदा तत्त्वेन तुष्टोऽभूत् तत एनमपूजयत् ॥ ४८ ॥ सर्व-
राक्षसराज्ये चाप्यभ्यषिञ्चद्विभीषणम्। चक्रे च मन्त्रावरजं सहृदं
लक्ष्मणस्य च ॥ ४९ ॥ विभीषणमते चैव सोऽत्यक्रामन्महार्णवम्।
ससैन्यः सेतुना तेन मासेनैव नराधिप ॥ ५० ॥ ततो गत्वा समा-
साद्य लङ्कोद्यानान्यनेकशः। भेदयामास कपिभिर्महान्ति च
बहूनि च ॥ ५१ ॥ तत्रास्तां रावणामात्यौ मन्त्रिणौ शुकसारणौ।
चरौ वानररूपेण तौ जग्राह विभीषणः ॥ ५२ ॥ प्रतिपन्नौ

यद्दा रूपं राक्षसं तौ निशाचरौ । दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ॥ ५३ ॥ निविश्योपवने सैन्यं ततपुरः प्राज्ञ-वानरम् । प्रेषयामास दौत्येन रावणस्य ततोऽङ्गदम् ॥ ५४ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्व्वणि सेतुवन्धने
द्व्यशीत्यधिकद्विशततोऽध्यायः ॥ २८२ ॥

---

मार्कण्डेय उवाच । प्रभूतान्नोदके तस्मिन् बहुमूलफले वने । सेनां निवेश्य काकुत्स्थो विधिवत् पर्य्यरक्षत ॥ १ ॥ रावणः संविधिञ्चक्रे लङ्कायां शास्त्रनिर्म्मितम । प्रकृत्यैव दुराधर्षा दृढ़-प्राकारतोरणा ॥ २ ॥ अगाधतोयाः परिखा मीननक्रसमाकुलाः । बभूवुः सप्तदुर्द्धर्षाः खादिरैः शङ्कुभिश्चिताः ॥ ३ ॥ कपाठयन्त्र-दुर्द्धर्षाः बभूवुः सहुडोपलाः । साशीविषघटा योधाः ससर्ज्जरस-पांशवः ॥ ४ ॥ मुषलालातनाराचतोमरासिपरश्वधैः । अन्विताश्च शतघ्नीभिः समधूच्छिष्टमुद्गराः ॥ ५ ॥ पुरद्वारेषु सर्व्वेषु गुल्माः स्थावरजङ्गमाः । बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः ॥ ६ ॥ अङ्गदस्त्वथ लङ्काया द्वारदेशमुपागतः । विदितो राक्षसेन्द्रस्य प्रविवेश गतव्यथः ॥ ७ ॥ मध्ये राक्षसकोटीनां बह्वीनां सुमहा-बलः । शुशुभे मेघमालाभिरादित्य इव संवृतः ॥ ८ ॥ स समा-साद्य पौलस्त्यममात्यैरभिसम्वृतम् । रामसन्देशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे ॥ ९ ॥ आह त्वां राघवो राजन् कोशलेन्द्रो महा-यशाः । प्राप्तकालमिदं वाक्यं तदादत्स्व कुरुष्व च ॥ १० ॥ अकृतात्मानमासाद्य राजानमनये रतम् । विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च ॥ ११ ॥ त्वयैकेनापराद्धं मे सीतामाहरता बलात् । वधायानपराद्धानामन्येषां तद्भविष्यति ॥ १२ ॥ ये त्वया बलदर्पाभ्यामाविष्टेन वनेचराः । ऋषयो हिंसिताः पूर्व्वं देवाश्चा-

प्यवमानिताः ॥ १३ ॥ राजर्षयश्च निहताः रुदत्यश्च हृताः स्त्रियः । तदिदं समनुप्राप्तं फलं तस्यानयस्य ते ॥ १४ ॥ हन्तास्मि त्वां सहामात्यं युध्यस्व पुरुषो भव । पश्य मे धनुषो वीर्य्यं मानुषस्य निशाचर ॥ १५ ॥ मुच्यतां जानकी सीता न मे मोक्ष्यसि कर्हिचित् । अराक्षसमिमं लोकं कर्त्तास्मि निशितैः शरैः ॥ १६ ॥ इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः । श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्च्छितः ॥ १७ ॥ इङ्गितज्ञास्ततो भर्त्तुश्चत्वारो रजनीचराः । चतुर्ष्वङ्गेषु जगृहुः शार्दूलमिव पक्षिणः ॥ १८ ॥ तांस्तथाङ्गेषु संसक्तानङ्गदो रजनीचरान् । आदायैव खमुत्पत्य प्रासादतलमाविशत् ॥ १९ ॥ वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः । भुवि सम्भिन्नहृदया प्रहारवरपीड़िताः ॥ २० ॥ संसक्तो हर्म्यशिखरात्तस्मात् पुनरवापतत् । लङ्घयित्वा पुरीं लङ्कां स्वबलस्य समीपतः ॥ २१ ॥ कौशलेन्द्रमथागम्य सर्वमावेद्य वानरः । विशश्राम स तेजस्वी राघवेणाभिनन्दितः ॥ २२ ॥ ततः सर्वाभिसारेण हरीणां वातरंहसाम् । भेदयामास लङ्कायाः प्राकारं रघुनन्दनः ॥२३॥ विभीषणर्क्षाधिपती पुरस्कृत्याथ लक्ष्मणः । दक्षिणं नगरद्वारमवामृद्नाद्दुरासदम् ॥ २४ ॥ करभारुणगात्राणां हरीणां युद्धशालिनाम् । कोटीशतसहस्रेण लङ्कामभ्यपतत्तदा ॥२५॥ प्रलम्बबाहूरुकरजङ्घान्तरविलम्बिनाम् । ऋक्षाणां धूम्रवर्णानां तिस्रः कोट्योव्यवस्थिताः ॥ २६ ॥ उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः । नादृश्यत तदा सूर्य्यो रजसा नाशितप्रभः ॥ २७ ॥ शालिप्रसूनसदृशैः शिरीषकुसुमप्रभैः । तरुणादित्यसदृशैः शणगौरैश्च वानरैः ॥ २८ ॥ प्राकारं ददृशुस्ते तु समन्तात् कपिलीकृतम् । राक्षसा विस्मिता राजन् सस्त्रीवृद्धाः समन्ततः ॥ २९ ॥ विभिदुस्ते मणिस्तम्भान् कर्णाटशिखराणि च । भग्नोन्मथितशृङ्गाणि यन्त्राणि च विचिक्षिपुः ॥ ३० ॥ परिगृह्य शतघ्नीश्च

श्वचक्राः सगुड़ोपलाः । चिक्षिपुर्भुजवेगेन लङ्कामध्ये महास्वनाः ॥ ३१ ॥ प्राकारस्थाश्च ये केचिन्निशाचरगणास्तथा । प्रदुद्रुवुस्ते शतशः कपिभिः समभिद्रुताः ॥ ३२ ॥ ततस्तु राजवचनाद्राक्षसाः कामरूपिणः । निर्ययुर्विकृताकाराः सहस्रशतसङ्घशः ॥ ३३ ॥ शस्त्रवर्षाणि वर्षन्तो द्रावयित्वा वनौकसः । प्राकारं शोभयन्तस्ते परं विक्रममास्थिताः ॥ ३४ ॥ स माषराशिसदृशैर्बभूव क्षणदाचरैः । कृतो निर्वानरो भूयः प्राकारो भीमदर्शनैः ॥ ३५ ॥ पेतुः शूलविभिन्नाङ्गा बहवो वानरर्षभाः । स्तम्भतोरणभग्नाश्च पेतुस्तत्र निशाचराः ॥ ३६ ॥ केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह । नखैर्दन्तैश्च वीराणां खादतां वै परस्परम् ॥ ३७ ॥ निष्टनन्तो ह्युभयतस्तत्र वानरराक्षसाः । हता निपतिता भूमौ न मुञ्चन्ति परस्परम् ॥ ३८ ॥ रामस्तु शरजालानि ववर्ष जलदो यथा । तानि लङ्कां समासाद्य जघ्नुस्तान् रजनीचरान् ॥ ३९ ॥ सौमित्रिरपि नाराचैर्दृढधन्वा जितक्लमः । आदिश्यादिश्य दुर्गस्थान् पातयामास राक्षसान् ॥ ४० ॥ ततः प्रत्यवहारोऽभूत् सैन्यानां राघवाज्ञया । कृते विमर्द्दे लङ्कायां लब्धलक्ष्यो जयोत्तरः ॥ ४१ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि लङ्काप्रवेशे त्र्यशीत्यधिकद्विशततोऽध्यायः ॥ २८३ ॥

---

मार्कण्डेय उवाच । ततो निविशमानांस्तान् सैनिकान्रावणानुगाः । अभिजग्मुर्गणानेके पिशाचक्षुद्ररक्षसाम् ॥ १ ॥ पर्वणः पतनो जम्भः खरः क्रोधवशो हरिः । प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः ॥ २ ॥ ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् । अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ॥ ३ ॥ ते दृश्यमाना हरिभिर्बलिभिर्दूरपातिभिः । निहताः सर्वशो राजन् महीं जग्मुर्गता-

सवः ॥ ४ ॥ अमध्यमाणः सबलो रावणो निर्ययावथ। राक्षसानां बलैर्घोरैः पिशाचानाञ्च संवृतः ॥ ५ ॥ युद्धशास्त्रविधानज्ञ उशना इव चापरः। व्यूह्य चौशनसं व्यूहं हरीनभ्यवहारयत् ॥ ६ ॥ राघवस्तु विनिर्यान्तं व्यूढानीकं दशाननम्। बार्हस्पत्यं विधिं कृत्वा प्रत्यव्यूहन्निशाचरम् ॥ ७ ॥ समेत्य युयुधे तत्र ततो रामेण रावणः। युयुधे लक्ष्मणश्चापि तथैवेन्द्रजिता सह ॥ ८ ॥ विरूपाक्षेण सुग्रीवस्तारेण च निखर्वटः। तुण्डेन च नलस्तत्र पटुशः पनसेन च ॥ ९ ॥ विषह्यं यं हि यो मेने सह तेन समेयिवान्। युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ॥ १० ॥ स संप्रहारो ववृधे भीरूणां भयवर्द्धनः। लोमसंहर्षणो घोरः पुरा देवासुरे यथा ॥ ११ ॥ रावणो राममानर्च्छच्छक्तिशूलासिवृष्टिभिः। निशितैरायसैस्तीक्ष्णैरावणञ्चापि राघवः ॥ १२ ॥ तथैवेन्द्रजितं यत्तं लक्ष्मणो मर्मभेदिभिः। इन्द्रजिच्चापि सौमित्रिं बिभेद बहुभिः शरैः ॥ १३ ॥ विभीषणः प्रहस्तञ्च प्रहस्तश्च विभीषणम्। खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षद्गतव्यथः ॥ १४ ॥ तेषां बलवतामासीन्महास्त्राणां समागमः। विव्यथुः सकला येन त्रयो लोकाश्चराचराः ॥ १५ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि रामरावणयुद्धे चतुरशीत्यधिकद्विशततोऽध्यायः ॥ २८४ ॥

---

मार्कण्डेय उवाच। ततः प्रहस्तः सहसा समभ्येत्य विभीषणम्। गदया ताडयामास विनद्य रणकर्कशः ॥ १ ॥ स तयाभिहतो धीमान् गदया भीमवेगया। नाकम्पत महाबाहुर्हिमवानिव सुस्थिरः ॥ २ ॥ ततः प्रगृह्य विपुलां शतघण्टां विभीषणः। अनुमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ॥ ३ ॥

पतन्त्या स तया वेगाद्राक्षसोऽशनिवेगया। हतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः ॥ ४ ॥ तं दृष्ट्वा निहतं संख्ये प्रहस्तं क्षणदाचरम्। अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ॥ ५ ॥ तस्य मेघोपमं सैन्यमापतद्भीमदर्शनम्। दृष्ट्वैव सहसा दीर्णा रणे वानरपुङ्गवाः ॥६॥ ततस्तान् सहसा दीर्णान् दृष्ट्वा वानरपुङ्गवान्। निर्ययौ कपिशार्दूलो हनूमान्मारुतात्मजः ॥ ७ ॥ तं दृष्ट्वावस्थितं संख्ये हरयः पवनात्मजम्। महत्या त्वरया राजन् संन्यवर्त्तन्त सर्व्वशः ॥ ८ ॥ ततः शब्दो महानासीत्तुमुलो लोमहर्षणः। रामरावणसैन्यानामन्योऽन्यमभिधावताम् ॥ ९ ॥ तस्मिन् प्रवृत्ते संग्रामे घोरे रुधिरकर्द्दमे। धूम्राक्षः कपिसैन्यन्तत् द्रावयामास पत्रिभिः ॥ १० ॥ तं राक्षसमहामात्रमापतन्तं सपत्नजित्। प्रतिजग्राह हनुमांस्तरसा पवनात्मजः ॥ ११ ॥ तयोर्युद्धमभूद्घोरं हरिराक्षसवीरयोः। जिगीषतोर्युधान्योन्यमिन्द्रप्रह्लादयोरिव ॥ १२ ॥ गदाभिः परिघैश्चैव राक्षसो जघ्निवान् कपिम्। कपिश्च जघ्निवान् रक्षः सस्कन्धविटपैर्द्रुमैः ॥ १३ ॥ ततस्तमतिकोपेन साश्वं स रथसारथिम्। धूम्राक्षमवधीत् क्रुद्धो हनूमान् मारुतात्मजः ॥१४॥ ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसोत्तमम्। हरयो जातविस्रम्भा जघ्नुरभ्येत्य सैनिकान् ॥ १५ ॥ ते बध्यमाना हरिभिर्बलिभिर्जितकाशिभिः। राक्षसा भग्नसङ्कल्पा लङ्कामभ्यपतन् भयात् ॥ १६ ॥ तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः। सर्व्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् ॥ १७ ॥ श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि। धूम्राक्षञ्च महेष्वासं ससैन्यं वानरर्षभैः ॥ १८ ॥ सुदीर्घमिव निश्वस्य समुत्पत्य वरासनात्। उवाच कुम्भकर्णस्य कर्म्मकालोऽयमागतः ॥ १९ ॥ इत्येवमुक्त्वा विविधैर्वादित्रैः सुमहास्वनैः। शयानमतिनिद्रालुं कुम्भकर्णमबोधयत् ॥ २० ॥ प्रबोध्य महता चैनं यत्नेनागतसाध्वसः। स्वस्थमासीनमव्यग्रं विनिद्रं

राक्षसाधिपः ॥ २१ ॥ ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम् । धन्योऽसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी ॥ २२ ॥ य इदं दारुणाकारं न जानीषे महाभयम् । एष तीर्त्वार्णवं रामः सेतुना हरिभिः सह ॥ २३ ॥ अवमन्येह नः सर्वान् करोति कदनं महत् । मया ह्यपहृता भार्य्या सीता नामास्य जानकी ॥ २४ ॥ तां नेतुं स इहायातो बद्धा सेतुं महार्णवे । तेन चैव प्रहस्तादिर्महान्नः स्वजनो हतः ॥ २५ ॥ तस्य नान्यो निहन्तास्ति त्वामृते शत्रुकर्षण । संदंशितो विनिर्याय बलेन बलिनाम्वर ॥ २६ ॥ रामादीन् समरे सर्वान् जहि शत्रूनरिन्दम । दूषणावरजौ चैव वज्रवेगप्रमाथिनौ ॥ २७ ॥ तौ त्वां बलेन महता सहितावनुयास्यतः । इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनम् ॥ २८ ॥ सन्दिदेशेतिकर्त्तव्यं वज्रवेगप्रमाथिनौ । तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ । कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात् ॥ २९ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि कुम्भकर्णरणगमने पञ्चाशीत्यधिकद्विशततोऽध्यायः ॥ २८५ ॥

---

मार्कण्डेय उवाच । ततो निर्य्याय स्वपुरात् कुम्भकर्णः सहानुगः । अपश्यत् कपिसैन्यन्तत् जितकाश्यग्रतः स्थितम् ॥ १ ॥ स वीक्षमाणस्तत् सैन्यं रामदर्शनकाङ्क्षया । अपश्यच्चापि सौमित्रिं धनुष्पाणिं व्यवस्थितम् ॥ २ ॥ तमभ्येत्याशु हरयः परिवव्रुः समन्ततः । अभ्यघ्नंश्च महाकायैर्बहुभिर्जगतीरुहैः ॥ ३ ॥ करजैश्चतुरंश्चान्ये विहाय भयमुत्तमम् । बहुधा युध्यमानास्ते युद्धमार्गैः प्लवङ्गमाः ॥ ४ ॥ नानाप्रहरणैर्भीमै राक्षसेन्द्रमताड़यन् । स ताड्यमानः प्रहसन् भक्षयामास वानरान् ॥ ५ ॥ बलं चण्डबलाख्यञ्च वज्रवाहुञ्च वानरम् । तद्दृष्ट्वा व्यथनं कर्म कुम्भकर्णस्य

रक्षसः ॥ ६ ॥ उदक्रोशन् परित्रस्तास्तारप्रभृतयस्तदा । तानुच्चैः क्रोशतः सैन्यान् श्रुत्वा स हरियूथपान् ॥ ७ ॥ अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः । ततो निपत्य वेगेन कुम्भकर्णं महामनाः ॥८॥ शालेनाजघ्निवान् मूर्द्धि बलेन कपिकुञ्जरः । स महात्मा महावेगः कुम्भकर्णस्य मूर्द्धनि ॥ ९ ॥ बिभेद शालं सुग्रीवो न चैवाव्यथयत् कपिः । ततो विनद्य सहसा शालस्पर्शविबोधितः ॥१०॥ दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात् । ह्रियमाणन्तु सुग्रीवं कुम्भकर्णेन रक्षसा ॥ ११ ॥ अवेक्ष्याभ्यद्रवद्वीरः सौमित्रिर्मित्रनन्दनः । सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरम् ॥ १२ ॥ प्राहिणोत् कुम्भकर्णाय लक्ष्मणः परवीरहा । स तस्य देहावरणं भित्त्वा देहञ्च सायकः ॥ १३ ॥ जगाम दारयन् भूमिं रुधिरेण समुक्षितः । तथा स भिन्नहृदयः समुत्सृज्य कपीश्वरम् ॥ १४ ॥ कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः । अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम् ॥ १५ ॥ तस्याभिपततस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ । चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ॥१६॥ तानप्यस्य भुजान् सर्वान् प्रगृहीतशिलायुधान् । क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् ॥ १७ ॥ स बभूवातिकायश्च बहुपादशिरोभुजः । तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिचयोपमम् ॥१८॥ स पपात महावीर्य्यो दिव्यास्त्राभिहतो रणे । महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव ॥ १९ ॥ तं दृष्ट्वा वृत्रसङ्काशं कुम्भकर्णं तरस्विनम् । गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयात् ॥२०॥ तथा तान् द्रवतो योधान् दृष्ट्वा तौ दूषणानुजौ । अवस्थाप्याथ सौमित्रिं संक्रुद्धावभ्यधावताम् ॥ २१ ॥ तावाद्रवन्तौ संक्रुद्धौ वज्रवेगप्रमाथिनौ । अभिजग्राह सौमित्रिर्विनद्योभौ पतत्रिभिः ॥ २२ ॥ ततः सुतुमुलं युद्धमभवल्लोमहर्षणम् । दूषणानुजयोः पार्थ लक्ष्मणस्य च धीमतः ॥ २३ ॥ महता शरवर्षेण राक्षसौ

सोऽभ्यवर्षत। तौ चापि वीरौ संक्रुद्धावुभौ तं समवर्षताम् ॥२४॥ मुहूर्त्तमेवमभवत् वज्रवेगप्रमाथिनोः। सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः॥ २५॥ अथाद्रिशृङ्गमादाय हनूमान्मारुतात्मजः। अभिद्रुत्याददे प्राणान् वज्रवेगस्य रक्षसः॥ २६॥ नीलश्च महता ग्राव्णा दूषणावरजं हरिः। प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः॥ २७॥ ततः प्रावर्त्तत पुनः संग्रामकटुकोदयः। रामरावणसैन्यानामन्योन्यमभिधावताम्॥ २८॥ शतशो नैर्ऋतान् वन्या जघ्नुर्वन्यांश्च नैर्ऋताः। नैर्ऋतास्तत्र बध्यन्ते प्रायेण न तु वानराः॥ २९॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि कुम्भकर्णादिवध षडशीत्यधिकद्विशततोऽध्यायः॥ २८६॥

---

मार्कण्डेय उवाच। ततः श्रुत्वा हतं संख्ये कुम्भकर्णं सहानुगम्। प्रहस्तञ्च महेष्वासं धूम्राक्षञ्चातितेजसम्॥ १॥ पुत्रमिन्द्रजितं वीरं रावणः प्रत्यभाषत। जहि राजममित्रघ्न सुग्रीवञ्च सलक्ष्मणम्॥ २॥ त्वया हि मम सत्पुत्र यशोदीप्तमुपार्जितम्। जित्वा वज्रधरं संख्ये सहस्राक्षं शचीपतिम्॥ ३॥ अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः। जहि शत्रूनमित्रघ्न मम शस्त्रभृताम्वर॥४॥ रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ। समर्थाः प्रतिसोढुञ्च कुतस्तदनुयायिनः॥ ५॥ न गता या प्रहस्तेन कुम्भकर्णेन चानघ। वैरस्यापचितिः संख्ये तां गच्छ त्वं महाभुज॥ ६॥ त्वमद्य निशितैर्वाणैर्हत्वा शत्रून् ससैनिकान्। प्रतिनन्दय मां पुत्र पुराजित्वेव वासवम्॥ ७॥ इत्युक्तः स तथेत्युक्त्वा रथमास्थाय दंशितः। प्रययाविन्द्रजिद्राजंस्तूर्णमायोधनं

प्रति ॥ ८ ॥ ततो विश्राव्य विप्रष्टं नाम राक्षसपुङ्गवः । आह्वया-
मास समरे लक्ष्मणं शुभलक्षणम् ॥ ९ ॥ तं लक्ष्मणोऽभ्यधावच्च
प्रगृह्य सशरं धनुः । त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगान् यथा
॥ १० ॥ तयोः समभवद्युद्धं सुमहज्जयगृद्धिनोः । दिव्यास्त्र-
विदुषोस्तीव्रमन्योन्यस्पर्द्धिनोस्तदा ॥ ११ ॥ रावणिस्तु यदा नैनं
विशेषयति सायकैः । ततो गुरुतरं यत्नमातिष्ठद्बलिनाम्वरः ॥१२॥
तत एनं महावेगैरर्द्दयामास तोमरैः । तानागतान् स चिच्छेद
सौमित्रिर्निशितैः शरैः ॥ १३ ॥ ते निकृत्ताः शरैस्तीक्ष्णैर्न्यपतन्
धरणीतले । तमङ्गदो बालिसुतः श्रीमानुद्यम्य पादपम् ॥ १४ ॥
अभिद्रुत्य महावेगस्ताड़यामास मूर्द्धनि । तस्येन्द्रजिदसंभ्रान्तः
प्रासेनोरसि वीर्य्यवान् ॥ १५ ॥ प्रहर्त्तुमैच्छत्तञ्चास्य प्रासं चिच्छेद
लक्ष्मणः । तमभ्यासगतं वीरमङ्गदं रावणात्मजः ॥ १६ ॥ गदया-
ताड़यत् सव्ये पार्श्वे वानरपुङ्गवम् । तमचिन्त्यप्रहारं स बल-
वान् वालिनः सुतः ॥ १७ ॥ ससर्ज्जेन्द्रजितः क्रोधात शालस्कन्धं
तथाङ्गदः । सोऽङ्गदेन रुषोत्सृष्टो वधायेन्द्रजितस्तरुः ॥ १८ ॥
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिम् । ततो हताश्वात्
प्रस्कन्द्य रथात् स हतसारथिः ॥ १९ ॥ तत्रैवान्तर्दधे राजन्
मायया रावणात्मजः । अन्तर्हितं विदित्वा तं बहुमायञ्च राक्ष-
सम् ॥ २० ॥ रामस्तं देशमागम्य तत् सैन्यं पर्य्यरक्षत । स
राममुद्दिश्य शरैस्ततो दत्तवरैस्तदा ॥ २१ ॥ विव्याध सर्व्वगात्रेषु
लक्ष्मणञ्च महाबलम् । तमदृश्यं शरैः शूरौ माययान्तर्हितं तदा
॥ २२ ॥ योधयामासतुरुभौ रावणिं रामलक्ष्मणौ । स रुषा
सर्व्वगात्रेषु तयोः पुरुषसिंहयोः ॥ २३ ॥ असृजत् सायकान् भूयः
शतशोऽथ सहस्रशः । तमदृश्यं विचिन्वन्तः सृजन्तमनिशं शरान्
॥ २४ ॥ हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः । तांश्च तौ
चाप्यदृश्यः स शरैर्विव्याध राक्षसः ॥ २५ ॥ स भृशं ताड़यन्

वीरौ रावणिर्मायया हतः । तौ शरैराहतौ वीरौ भ्रातरौ रामलक्ष्मणौ । पेततुर्गगनाद्भूमिं सूर्य्याचन्द्रमसाविव ॥ २६ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि इन्द्रजिद्युद्धे सप्ताशीत्यधिकद्विशततोऽध्यायः ॥ २८७ ॥

---

मार्कण्डेय उवाच । तावुभौ पतितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । ववन्ध रावणिर्भूयः शरैर्दत्तवरैस्तदा ॥ १ ॥ तौ वीरौ शरबन्धेन वद्धाविन्द्रजिता रणे । रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे ॥ २ ॥ तौ दृष्ट्वा पतितौ भूमौ शतशः सायकैश्चितौ । सुग्रीवः कपिभिः सार्द्धं परिवार्य्य ततः स्थितः ॥ ३ ॥ सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च । हनुमन्नीलतारैश्च नलेन च कपीश्वरः ॥ ४ ॥ ततस्तं देशमागम्य कृतकर्मा विभीषणः । वोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रवोधितौ ॥ ५ ॥ विशल्यौ चापि सुग्रीवः क्षणेनैतौ चकार ह । विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ॥ ६ ॥ तौ लब्धसंज्ञौ नृवरौ विशल्यावुदतिष्ठताम् । गततन्द्रीक्लमौ चापि क्षणेनैतौ महारथौ ॥ ७ ॥ ततो विभीषणः पार्थ रामभिक्ष्वाकुनन्दनम् । उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः ॥८॥ इदमम्भो गृहीत्वा तु राजराजस्य शासनात् । गुह्यकोऽभ्यागतः श्वेतात्त्वत्सकाशमरिन्दम ॥ ९ ॥ इदमम्भः कुवेरस्ते महाराजः प्रयच्छति । अन्तर्हितानां भूतानां दर्शनार्थं परन्तप ॥ १० ॥ अनेन मृष्टनयनो भूतान्यन्तर्हितान्युत । भवान् द्रक्ष्यति यस्मै च प्रदास्यति नरः स तु ॥ ११ ॥ तथेति रामस्तद्वारि प्रतिगृह्याभिसंस्कृतम् । चकार नेत्रयोः शौचं लक्ष्मणश्च महामनाः ॥ १२ ॥ सुग्रीवजाम्ववन्तौ च हनूमानङ्गदस्तथा । मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः ॥ १३ ॥ तथा समभवच्चापि यदुवाच विभीषणः ।

वर्णेनातीन्द्रियाख्येषां चक्षुःष्यासन् युधिष्ठिर ॥ १४ ॥ इन्द्रजित् कृतकर्मा च पित्रे कर्म तदात्मनः। निवेद्य पुनरागच्छत् त्वरयाजिशिरः प्रति ॥ १५ ॥ तमापतन्तं संक्रुद्धं पुनरेव युयुत्सया। अभिदुद्राव सौमित्रिर्विभीषणमते स्थितः ॥ १६ ॥ अकृताह्निकमेवैनं जिघांसुर्जितकाशिनम्। शरैर्जघान संक्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः ॥१७॥ तयोः समभवद्युद्धं अन्योन्यं विजिगीषतोः। अतीव चित्रमाश्चर्य्यं शक्रप्रह्लादयोरिव ॥ १८ ॥ अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्म्मभेदिभिः। सौमित्रिश्चानलस्पर्शैरविध्यद्रावणिं शरैः ॥ १९ ॥ सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्च्छितः। असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् ॥ २० ॥ तस्यासून् पावकस्पर्शैः सौमित्रिः पत्रिभिस्त्रिभिः। यथानिरहरद्वीरस्तथेनिगदतः शृणु ॥ २१ ॥ एकेनास्य धनुष्मन्तं बाहुं देहादपातयत्। द्वितीयेन सनाराचं भुजं भूमौ न्यपातयत् ॥ २२ ॥ तृतीयेन तु बाणेन पृथुधारेण भास्वता। जहार सुनसञ्चापि शिरो भ्राजिष्णुकुण्डलम् ॥ १३ ॥ विनिकृत्तभुजस्कन्धं कवन्धं भीमदर्शनम्। तं हत्वा सूतमप्यस्त्रैर्जघान बलिनाम्वरः ॥ २४ ॥ लङ्कां प्रवेशयामासुस्तं रथं वाजिनस्तदा। ददर्श रावणस्तञ्च रथं पुत्रविनाकृतम् ॥२५॥ स पुत्रं निहतं दृष्ट्वा त्रासात् संभ्रान्तमानसः। रावणः शोकमोहार्त्तो वैदेहीं हन्तुमुद्यतः ॥ २६ ॥ अशोकवनिकास्थां तां रामदर्शनलालसाम्। खड्गमादाय दुष्टात्मा जवेनाभिपपात ह ॥ २७ ॥ तं दृष्ट्वा तस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम्। शमयामास संक्रुद्धं श्रूयतां येन हेतुना ॥२८॥ महाराज्ये स्थितो दीप्ते न स्त्रियं हन्तुमर्हसि। हतैवैषा यदा स्त्री च बन्धनस्था च ते वशे ॥२९॥ न चैषा देहभेदेन हतास्यादिति मे मतिः। जहि भर्त्तारमेवास्या हते तस्मिन् हता भवेत् ॥ ३० ॥ न हि ते विक्रमे तुल्यः साक्षादपि शतक्रतुः। असकृद्धि त्वया सेन्द्रास्त्रासिता त्रिदशा युधि ॥३१॥ एवं

बहुविधैर्वाक्यैरविन्ध्यो रावणं तदा। क्रुद्धं स शमयामास जगृहे स च तद्वचः ॥३२॥ निर्य्याणे स मतिं कृत्वा निधायासिं क्षपाचरः। आज्ञापयामास तदा रथो वै कल्प्यतामिति ॥ ३३ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि इन्द्रजिद्वधे अष्टाशीत्यधिकद्विशततोऽध्यायः ॥ २८८ ॥

---

मार्कण्डेय उवाच। ततः क्रुद्धो दशग्रीवः प्रिये पुत्रे निपातिते। निर्य्ययौ रथमास्थाय हेमरत्नविभूषितम् ॥ १ ॥ संवृतो राक्षसैर्घोरैर्विविधायुधपाणिभिः। अभिदुद्राव रामं स योधयन् हरियूथपान् ॥ २ ॥ तमाद्रवन्तं संक्रुद्धं मैन्दनीलनलाङ्गदाः। हनूमान् जाम्बवांश्चैव ससैन्याः पर्य्यवारयन् ॥ ३ ॥ ते दशग्रीवसैन्यं तदृक्षवानरपुङ्गवाः। द्रुमैर्विध्वंसयाञ्चक्रुर्दशग्रीवस्य पश्यतः ॥ ४ ॥ ततः स सैन्यमालोक्य वध्यमानमरातिभिः। मायावी चासृजन्मायां रावणो राक्षसाधिपः ॥ ५ ॥ तस्य देहाद्विनिष्क्रान्ताः शतशोऽथ सहस्रशः। राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ॥ ६ ॥ तान् रामो जघ्निवान् सर्वान् दिव्येनास्त्रेण राक्षसान्। अथ भूयोऽपि मायां स व्यदधाद्राक्षसाधिपः ॥ ७ ॥ कृत्वा रामस्य रूपाणि लक्ष्मणस्य च भारत। अभिदुद्राव रामञ्च लक्ष्मणञ्च दशाननः ॥ ८ ॥ ततस्ते राममर्च्छन्तो लक्ष्मणञ्च क्षपाचराः। अभिपेतुस्तदा रामं प्रगृहीतशरासनाः ॥ ९ ॥ तां दृष्ट्वा राक्षसेन्द्रस्य मायामिक्ष्वाकुनन्दनः। उवाच रामं सौमित्रिरसंभ्रान्तो बृहद्वचः ॥ १० ॥ जहीमान् राक्षसान् पापानात्मनः प्रतिरूपकान्। जघान रामस्तांश्चान्यानात्मनः प्रतिरूपकान् ॥ ११ ॥ ततो हर्य्यश्वयुक्तेन रथेनादित्यवर्च्चसा। उपतस्थे रणे रामं मातलिः शक्रसारथिः ॥ १२ ॥

मातलिरुवाच । अयं हर्य्यश्वयुग्जैत्रो मघोनः स्यन्दनोत्तमः ।
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान् ॥ १३ ॥ शतशः पुरुष-
व्याघ्र रथोदारेण जघ्निवान् । तदनेन नरव्याघ्र मया यत्तेन
संयुगे ॥ १४ ॥ स्यन्दनेन जहि क्षिप्रं रावणं मा चिरं कृथाः ।
इत्युक्तो राघवस्तथ्यं वचोऽशङ्कत मातलेः ॥ १५ ॥ मायैषा राक्षस-
स्येति तमुवाच विभीषणः । नेयं माया नरव्याघ्र रावणस्य दुरा-
त्मनः ॥ १६ ॥ तदातिष्ठ रथं शीघ्रमिममैन्द्रं महाद्युते । ततः
प्रहृष्टः काकुत्स्थस्तथेत्युक्त्वा विभीषणम् ॥ १७ ॥ रथेनाभिपपा-
ताथ दशग्रीवं रुषान्वितः । हाहा कृतानि भूतानि रावणे सम-
भिद्रुते ॥ १८ ॥ सिंहनादाः सपटहा दिवि दिव्यास्तथानदन् ।
दशकन्धरराजसून्वोस्तथा युद्धमभून्महत् ॥ १९ ॥ अलब्धोपम-
मन्यत्र तयोरेव तथाभवत् । स रामाय महाघोरं विससर्ज्ज निशा-
चरः ॥ २० ॥ शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतम् । तच्छूलं
सत्वरं रामश्चिच्छेद निशितैः शरैः ॥ २१ ॥ तद्दृष्ट्वा दुष्करं कर्म
रावणं भयमाविशत् । ततः क्रुद्धः ससर्ज्जाशु दशग्रीवः शिता-
ञ्छरान् ॥ २२ ॥ सहस्रायुतशो रामे शस्त्राणि विविधानि च ।
ततो भुशुण्डीः शूलानि मुषलानि परश्वधान् ॥ २३ ॥ शक्तीश्च
विविधाकाराः शतघ्नीश्च शिताञ्छरान् । तां मायां विकृतां दृष्ट्वा
दशग्रीवस्य रक्षसः ॥ २४ ॥ भयात् प्रदुद्रुवुः सर्व्वे वानराः सर्व्वतो
दिशम् । ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम् ॥ २५ ॥ तूणा-
दादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह । तं वाणवर्य्यं रामेण
ब्रह्मास्त्रेणानुमन्त्रितम् ॥ २६ ॥ जहृषुर्द्देवगन्धर्व्वा दृष्ट्वा शक्रपुरो-
गमाः । अल्पावशेषमायुश्च ततोऽमन्यन्त रक्षसः ॥ २७ ॥ ब्रह्मा-
स्त्रोदीरणाच्चेलुर्द्देवदानवकिन्नराः । ततः ससर्ज्ज तं रामः शर-
मप्रतिमौजसम् ॥ २८ ॥ रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतम् ।
मुक्तमात्रेण रामेण दूराकृष्टेन भारत ॥ २९ ॥ स तेन राक्षस-

श्रेष्ठः सरथः साश्वसारथिः। प्रजज्वाल महाज्वालेनास्त्रेणाभि-
परिप्लुतः ॥ ३० ॥ ततः प्रहृष्टास्त्रिदशाः सहगन्धर्वचारणाः।
निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ३१ ॥ तत्यजुस्तं महा-
भागं पञ्चभूतानि रावणम्। भ्रंशितः सर्वलोकेषु स हि ब्रह्मास्त्र-
तेजसा ॥ ३२ ॥ शरीरधातवो ह्यस्य मांसं रुधिरमेव च। नेशु-
र्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यत ॥ ३३ ॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि रावणवधे
एकोननवत्यधिकद्विशततोऽध्यायः ॥ २८९ ॥

---

मार्कण्डेय उवाच। स हत्वा रावणं क्षुद्रं राक्षसेन्द्रं सुर-
द्विषम्। बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह ॥ १ ॥ ततो
हते दशग्रीवे देवाः सर्षिपुरोगमाः। आशीर्भिर्जययुक्ताभिरानर्चुस्तं
महाभुजम् ॥ २ ॥ रामं कमलपत्राक्षं तुष्टुवुः सर्वदेवताः। गन्धर्वाः
पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ॥ ३ ॥ पूजयित्वा तथा रामं
प्रतिजग्मुर्यथागतम्। तन्महोत्सवसङ्काशमासीदाकाशमच्युत ॥४॥
ततो हत्वा दशग्रीवं लङ्कां रामो महायशाः। विभीषणाय प्रददौ
प्रभुः परपुरञ्जयः ॥ ५ ॥ ततः सीतां पुरस्कृत्य विभीषणपुर-
स्कृताम्। अविन्ध्यो नाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ॥ ६ ॥
उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितः। प्रतीच्छ देवीं
सद्वृत्तां महात्मन् जानकीमिति ॥ ७ ॥ एतच्छ्रुत्वा वचस्तस्मादव-
तीर्य्य रथोत्तमात्। वाष्पेणापिहितां सीतां ददर्शेक्ष्वाकुनन्दनः
॥ ८ ॥ तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्षिताम्। मलोप-
चितसर्वाङ्गीं जटिलां कृष्णवाससम् ॥ ९ ॥ उवाच रामो वैदेहीं
परामर्शविशङ्कितः। गच्छ वैदेहि मुक्ता त्वं यत्कार्य्यं तन्मया
कृतम् ॥ १० ॥ मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि। जरां

अजेथा इति मे निहतोऽसौ निशाचरः ॥ ११ ॥ कथं ह्यस्मद्विधो जातु जानन् धर्मविनिश्चयम् । परहस्तगतां नारीं मुहूर्त्तमपि धारयेत् ॥ १२ ॥ सुवृत्तामसुवृत्तां वाप्यहं त्वामद्य मैथिलि । नोत्सहे परिभोगाय श्वावलीढ़ं हविर्य्यथा ॥ १३ ॥ ततः सा सहसा बाला तच्छ्रुत्वा दारुणं वचः । पपात देवी व्यथिता निकृत्ता कदली यथा ॥ १४ ॥ योऽप्यस्या हर्षसम्भूतो मुखरागस्तदाभवत् । क्षणेन स पुनर्नष्टो निश्वास इव दर्पणे ॥ १५ ॥ ततस्ते हरयः सर्वे तच्छ्रुत्वा रामभाषितम् । गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः ॥ १६ ॥ ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः । पद्मयोनिर्जगत्स्रष्टा दर्शयामास राघवम् ॥ १७ ॥ शक्रश्चाग्निश्च वायुश्च यमो वरुण एव च । यक्षाधिपश्च भगवांस्तथा सप्तर्षयोऽमलाः ॥ १८ ॥ राजा दशरथश्चैव दिव्यभास्वरमूर्त्तिमान् । विमानेन महार्हेण हंसयुक्तेन भास्वता ॥ १९ ॥ ततोऽन्तरीक्षं तत्सर्वं देवगन्धर्वसङ्कुलम् । शुशुभे तारकाचित्रं शरदीव नभस्तलम् ॥ २० ॥ तत उत्थाय वैदेही तेषां मध्ये यशस्विनी । उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् ॥ २१ ॥ राजपुत्र न ते दोषं करोमि विदिता हि ते । गतिः स्त्रीणां नराणाञ्च शृणु चेदं वचो मम ॥२२॥ अन्तश्चरति भूतानां मातरिश्वा सदागतिः । स मे विमुञ्चतु प्राणान् यदि पापं चराम्यहम् ॥ २३ ॥ अग्निरापस्तथाकाशं पृथिवी वायुरेव च । विमुञ्चन्तु मम प्राणान् यदि पापं चराम्यहम् ॥ २४ ॥ यथाहं त्वदृते वीर नान्यं स्वप्नेऽप्यचिन्तयम् । तथा मे देवनिर्दिष्टस्त्वमेव हि पतिर्भव ॥ २५ ॥ ततोऽन्तरीक्षे वागासीत् सर्वा विश्रावयन् दिशः । पुण्या संहर्षणी तेषां वानराणां महात्मनाम् ॥ २६ ॥

वायुरुवाच । भो भो राघव सत्यं वै वायुरस्मि सदागतिः । अपापा मैथिली राजन् सङ्गच्छ सह भार्य्यया ॥ २७ ॥

अग्निरुवाच। अहमन्तः शरीरस्थो भूतानां रघुनन्दन। तेसूक्ष्ममपि काकुत्स्थ मैथिली नापराध्यति ॥ २८ ॥

वरुण उवाच। रसा वै मत्प्रसूताहि भूतदेहेषु राघव। अहं वै त्वां प्रब्रवीमि मैथिली प्रतिगृह्यताम् ॥ २९ ॥

ब्रह्मोवाच। पुत्र नैतदिहाश्चर्य्यं त्वयि राजर्षिधर्म्मिणि। साधो सद्वृत्त काकुत्स्थ शृणु चेदं वचो मम ॥ ३० ॥ शत्रुरेष त्वया वीर देवगन्धर्वभोगिनाम्। यक्षाणां दानवानाञ्च महर्षीणाञ्च पातितः ॥ ३१ ॥ अवध्यः सर्वभूतानां मत्प्रसादात् पुराभवत्। कस्माच्चित् कारणात् पापः कञ्चित् कालमुपेक्षितः ॥३२॥ वधार्थमात्मनस्तेन हृता सीता दुरात्मना। नलकूवरशापेन रक्षा चास्याः कृता मया ॥ ३३ ॥ यदि ह्यकामामासेवेत् स्त्रियमन्यामपि ध्रुवम्। शतधास्य फलेन्मूर्द्धा इत्युक्तः सोऽभवत् पुरा ॥३४॥ नात्र शङ्का त्वया कार्य्या प्रतीच्छेमां महाद्युते। कृतं त्वया महत् कार्य्यं देवानाममरप्रभ ॥ ३५ ॥

दशरथ उवाच। प्रीतोऽस्मि वत्स भद्रन्ते पिता दशरथोऽस्मि ते। अनुजानामि राज्यञ्च प्रशाधि पुरुषोत्तम ॥ ३६ ॥

राम उवाच। अभिवादये त्वां राजेन्द्र यदि त्वं जनको मम। गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव ॥ ३७ ॥

मार्कण्डेय उवाच। तमुवाच पिता भूयः प्रहृष्टो भरतर्षभ। गच्छायोध्यां प्रशाधीति रामं रक्तान्तलोचनम् ॥ ३८ ॥ सम्पूर्णानीह वर्षाणि चतुर्द्दश महाद्युते। ततो देवान्नमस्कृत्य सुहृद्भिरभिनन्दितः ॥ ३९ ॥ महेन्द्र इव पौलोम्या भार्य्यया स समेयिवान्। ततो वरं ददौ तस्मै ह्यविन्ध्याय परन्तप ॥ ४० ॥ त्रिजटाञ्चार्थमानाभ्यां योजयामास राक्षसीम्। तमुवाच ततो ब्रह्मा देवैः शक्रपुरोगमैः ॥ ४१ ॥ कौशल्यामातरिष्टांस्ते वरानद्य ददानि कान्। वव्रे रामः स्थितिं धर्म्मे शत्रुभिश्चापराजयम् ॥४२॥

राक्षसैर्निहतानाञ्च वानराणां समुद्भवम् । ततस्ते ब्रह्मणा प्रोक्ते तथेतिवचने तदा ॥ ४३ ॥ समुत्तस्थुर्महाराज वानरा लब्धचेतसः । सीता चापि महाभागा वरं हनुमते ददौ ॥ ४४ ॥ रामकीर्त्त्या समं पुत्र जीवितं ते भविष्यति । दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृताः सदा ॥ ४५ ॥ उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन । ततस्ते प्रेक्षमाणानां तेषामक्लिष्टकर्म्मणाम् ॥ ४६ ॥ अन्तर्द्धानं ययुर्देवाः सर्व्वे शक्रपुरोगमाः । दृष्ट्वा रामन्तु जानक्या सङ्गतं शक्रसारथिः ॥ ४७ ॥ उवाच परमप्रीतः सुहृन्मध्य इदं वचः । देवगन्धर्व्वयक्षाणां मानुषासुरभोगिनाम् ॥४८॥ अपनीतं त्वया दुःखमिदं सत्यपराक्रम । सदेवासुरगन्धर्व्वा यक्षराक्षसपन्नगाः ॥४९॥ कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति । इत्येवमुक्त्वानुज्ञाप्य रामं शस्त्रभृताम्वरम् ॥ ५० ॥ सम्पूज्यापाक्रमत्तेन रथेनादित्यवर्च्चसा । ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह ॥ ५१ ॥ सुग्रीवप्रमुखैश्चैव सहितः सर्व्ववानरैः । विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः ॥ ५२ ॥ सन्ततार पुनस्तेन सेतुना मकरालयम् । पुष्पकेण विमानेन खेचरेण विराजता ॥ ५३ ॥ कामगेन यथामुख्यैरमात्यैः संवृतो वशी । ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः ॥ ५४ ॥ तत्रैवोवास धर्म्मात्मा सहितः सर्व्ववानरैः । अथैनान् राघवः काले समानीयाभिपूज्य च ॥ ५५ ॥ विसर्ज्जयामास तदा रत्नैः सन्तोष्य सर्व्वशः । गतेषु तेषु सर्व्वेषु गोपुच्छर्क्षेषु तेषु च ॥ ५६ ॥ सुग्रीवसहितो रामः किष्किन्धां पुनराविशत् । विभीषणेनानुगतः सुग्रीवसहितस्तदा ॥ ५७ ॥ पुष्पकेण विमानेन वैदेह्या दर्शयन् वनम् । किष्किन्धान्तु समासाद्य रामः प्रहरताम्वरः ॥ ५८ ॥ अङ्गदं कृतवर्म्माणं यौवराज्येऽभ्यषेचयत् । ततस्तैरेव सहितो रामः सौमित्रिणा सह ॥ ५९ ॥ यथागतेन मार्गेण प्रययौ स्वपुरं प्रति । अयोध्यां स समासाद्य

पुरीं राष्ट्रपतिस्ततः ॥ ६० ॥ भरताय हनूमन्तं दूतं प्रास्थापय-
त्तदा । लक्षयित्वेङ्गितं सर्वं प्रियं तस्मै निवेद्य वै ॥ ६१ ॥ वायु-
पुत्रे पुनः प्राप्ते नन्दिग्राममुपागमत् । स तत्र मलदिग्धाङ्गं भरतं
चीरवाससम् ॥ ६२ ॥ अग्रतः पादुके कृत्वा ददर्शासीनमासने ।
सङ्गतो भरतेनाथ शत्रुघ्नेन च वीर्य्यवान् ॥ ६३ ॥ राघवः सह
सौमित्रिर्मुमुदे भरतर्षभ । ततो भरतशत्रुघ्नौ समेतौ गुरुणा
तदा ॥ ६४ ॥ वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः । तस्मै
तद्भरतो राज्यमागतायातिसत्कृतम् ॥ ५६ ॥ न्यासं निर्यातया-
मास युक्तः परमया मुदा । ततस्तं वैष्णवे शूरं नक्षत्रेऽभिमते-
ऽहनि ॥ ६६ ॥ वशिष्ठो वामदेवश्च सहितावभ्यषिञ्चताम् । सो-
ऽभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम् ॥ ६७ ॥ विभीषणञ्च
पौलस्त्यमन्वजानाद्गृहान् प्रति । अभ्यर्च्य विविधैर्भोगैः प्रीति-
युक्तौ मुदा युतौ ॥ ६८ ॥ समाधायेतिकर्त्तव्यं दुःखेन विससर्ज्ज
ह । पुष्पकञ्च विमानं तत् पूजयित्वा स राघवः ॥ ६९ ॥ प्रादा-
द्वैश्रवणायैव प्रीत्या स रघुनन्दनः । ततो देवर्षिसहितः सरितं
गोमतीमनु । दशाश्वमेधानाजह्रे जारूथ्यान् स निरर्गलान् ॥७०॥

इति आरण्यपर्वणि रामोपाख्यानपर्वणि रामराज्याभिषेके
नवत्यधिकद्विशततोऽध्यायः ॥ २९० ॥

---

मार्कण्डेय उवाच । एवमेतन्महाबाहो रामेणामिततेजसा ।
प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा ॥ १ ॥ मा शुचः पुरुषव्याघ्र
क्षत्रियोऽसि परन्तप । बाहुवीर्य्याश्रिते मार्गे वर्त्तसे दीप्तनिर्णये
॥ २ ॥ न हि ते वृजिनं किञ्चिद्दृश्यते परमण्वपि । अस्मिन्मार्गे
निषीदेयुः सेन्द्रा अपि सुरासुराः ॥ ३ ॥ संहत्य निहतो वृत्रो
मरुद्भिर्वज्रपाणिना । नमुचिश्चैव दुर्द्धर्षो दीर्घजिह्वा च राक्षसी ॥४

सहायवति सर्व्वार्थाः सन्तिष्ठन्तीह सर्व्वशः । किन्नु तस्याजितं संख्ये
यस्य भ्राता धनञ्जयः ॥ ५ ॥ अयञ्च बलिनां श्रेष्ठो भीमो भीम-
पराक्रमः । युवानौ च महेष्वासौ वीरौ माद्रवतीसुतौ ॥ ६ ॥
एभिः सहायैः कस्मात्त्वं विषीदसि परन्तप । य इमे वज्रिणः
सेनां जयेयुः समरुद्गणाम् ॥ ७ ॥ त्वमप्येभिर्महेष्वासैः सहायैर्देव-
रूपिभिः । विजेष्यसि रणे सर्व्वानमित्रान् भरतर्षभः ॥ ८ ॥ इतश्च
त्वमिमां पश्य सैन्धवेन दुरात्मना । बलिना वीर्य्यमत्तेन हृतामेभि-
र्महात्मभिः ॥ ९ ॥ आनीतां द्रौपदीं कृष्णां कृत्वा कर्म्म सुदुष्करम् ।
जयद्रथञ्च राजानं विजितं वशमागतम् ॥ १० ॥ असहायेन
रामेण वैदेही पुनराहृता । हत्वा संख्ये दशग्रीवं राक्षसं भीम-
विक्रमम् ॥११॥ यस्य शाखामृगा मित्रा ऋक्षाः कालमुखास्तथा ।
जात्यन्तरगता राजन्नेतत् बुद्ध्यानुचिन्तय ॥ १२ ॥ तस्मात् सर्व्वं
कुरुश्रेष्ठ मा शुचो भरतर्षभ । त्वद्विधा हि महात्मानो न शोचन्ति
परन्तप ॥ १३ ॥

वैशम्पायन उवाच । एवमाश्वासितो राजा मार्कण्डेयेन
धीमता । त्यक्त्वा दुःखमदीनात्मा पुनरप्येनमब्रवीत् ॥ १४ ॥

इति आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि युधिष्ठिराश्वासे
एकनवत्यधिकद्विशततोऽध्यायः ॥ २९१ ॥
समाप्तञ्च रामोपाख्यानपर्व्व ।

---

अथ पतिव्रतामाहात्म्यपर्व्व ।

युधिष्ठिर उवाच । नात्मानमनुशोचामि नेमान् भ्रातॄन् महा-
मुने । हरणञ्चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १ ॥ द्यूते
दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् । जयद्रथेन च पुन-

र्वनाच्चापि ह्वता वलात् ॥ २ ॥ अस्ति सीमन्तिनी काचिद्दृष्टपूर्वापि वा श्रुता । पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ३ ॥

मार्कण्डेय उवाच । शृणु राजन् कुलस्त्रीणां महाभाग्यं युधिष्ठिर । सर्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया ॥ ४ ॥ आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः । ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः ॥ ५ ॥ यज्वा दानपतिर्दक्षः पौरजानपदप्रियः । पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ६ ॥ क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः । अतिक्रान्तेन वयसा सन्तापमुपजग्मिवान् ॥ ७ ॥ अपत्योत्पादनार्थञ्च तीव्रं नियममास्थितः । काले नियमिताहारो ब्रह्मचारी जितेन्द्रियः ॥ ८ ॥ हुत्वा शतसहस्रं स सावित्र्या राजसत्तम । षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ९ ॥ एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु । पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ १० ॥ रूपिणी तु तदा राजन् दर्शयामास तं नृपम् । अग्निहोत्रात् समुत्थाय हर्षेण महतान्विता । उवाच चैनं वरदा वचनं पार्थिवं तदा ॥ ११ ॥

सावित्र्युवाच । ब्रह्मचर्य्येण शुद्धेन दमेन नियमेन च । सर्वात्मना च भक्त्या च तुष्टास्मि तव पार्थिव ॥ १२ ॥ वरं वृणीष्वाश्वपते मद्रराज यदीप्सितम् । न प्रमादश्च धर्मेषु कर्त्तव्यस्ते कथञ्चन ॥ १३ ॥

अश्वपतिरुवाच । अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया । पुत्रा मे बहवो देवि भवेयुः कुलभाजनाः ॥ १४ ॥ तुष्टासि यदि मे देवि वरमेतं वृणोम्यहम् । सन्तानं परमो धर्म इत्याहुर्मां द्विजायतः ॥ १५ ॥

सावित्र्युवाच । पूर्वमेव मया राजन्नभिप्रायमिमं तव । ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः ॥ १६ ॥ प्रसादाच्चैव तस्मात्ते स्वयम्भुविहिताद्भुवि । कन्या तेजस्विनी सौम्य क्षिप्रमेव भवि-

ष्यति ॥ १७ ॥ उत्तरञ्च न ते किञ्चिद्व्याहर्त्तव्यं कथञ्चन । पिता-महनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते ॥ १८ ॥

मार्कण्डेय उवाच । स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः । प्रसादयामास पुनः क्षिप्रमेतद्भविष्यति । अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ॥ १९ ॥ स्वराज्ये चावसद्वीरः प्रजा धर्म्मेण पालयन् । कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ॥२०॥ ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे । राजपुत्त्र्यास्तु गर्भः स मालव्या भरतर्षभ ॥ २१ ॥ व्यवर्द्धत तदा शुक्ले तारा-पतिरिवाम्बरे । प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ॥ २२ ॥ क्रियाश्च तस्या मुदितश्चक्रे स नृपसत्तमः । सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ॥ २३ ॥ सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता । सा विग्रहवतीव श्रीर्व्यवर्द्धत नृपात्मजा ॥ २४ ॥ कालेन चापि सा कन्या यौवनस्था बभूव ह । तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ॥ २५ ॥ प्राप्तेयं देव-कन्येति दृष्ट्वा संमेनिरे जनाः । तान्तु पद्मपलाशाक्षीं ज्वलन्ती-मिव तेजसा ॥ २६ ॥ न कश्चिद्वरयामास तेजसा प्रतिवारितः । अथोपोष्य शिरःस्नाता देवतामभिगम्य सा ॥ २७ ॥ हुत्वाग्निं विधिवद्विप्रान् वाचयामास पर्व्वणि । ततः सुमनसः शेषाः प्रति-गृह्य महात्मनः ॥ २८ ॥ पितुः समीपमगमद्देवी श्रीरिव रूपिणी । साभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ॥ २९ ॥ कृताञ्जलि-र्वरारोहा नृपतेः पार्श्वमास्थिता । यौवनस्थान्तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् । अयाच्यमानाञ्च वरैर्नृपतिर्दुःखितोऽभ-वत् ॥ ३० ॥

राजोवाच । पुत्त्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् । स्वयमन्विच्छ भर्त्तारं गुणैः सदृशमात्मनः ॥ ३१ ॥ प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम । विमृश्याहं प्रदास्यामि वरय त्वं यथेप्-

सिनम् ॥ ३२ ॥ श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः। तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥ ३३ ॥ अप्रदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः। मृते भर्त्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३४ ॥ इदं मे वचनं श्रुत्वा भर्त्तुरन्वेषणे त्वर। देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३५ ॥

मार्कण्डेय उवाच। एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः। व्यादिदेशानुयात्रञ्च गम्यतामित्यचोदयत् ॥ ३६ ॥ साभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी। पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३७ ॥ सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता। तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ३८ ॥ मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम्। वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ३९ ॥ एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा। कुर्वती द्विजमुख्यानान्तं तं देशं जगाम ह ॥ ४० ॥

इति आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सावित्रीस्वयम्वरे द्विनवत्यधिकद्विशततोऽध्यायः ॥ २९२ ॥

---

मार्कण्डेय उवाच। अथ मद्राधिपो राजा नारदेन समागतः। उपविष्टः सभामध्ये कथायोगेन भारत ॥ १ ॥ ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा। आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २ ॥ नारदेन सहासीनं सा दृष्ट्वा पितरं तदा। उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३ ॥

नारद उवाच। क्व गताभूत् सुतेयन्ते कुतश्चैवागता नृप। किमर्थं युवतीं भर्त्त्रे न चैनां संप्रयच्छसि ॥ ४ ॥

अश्वपतिरुवाच। कार्य्येण खल्वनेनैव प्रेषिताद्यैव चागता। एतस्याः शृणु देवर्षे भर्त्तारं योऽनया वृतः ॥ ५ ॥

मार्कण्डेय उवाच। सा ब्रूहि विस्तरेणेति पित्रा सञ्चोदिता शुभा। दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ॥ ६ ॥

सावित्र्युवाच। आसीच्छाल्वेषु धर्म्मात्मा क्षत्रियः पृथिवीपतिः। द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह ॥ ७ ॥ विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः। सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्व्ववैरिणा ॥ ८ ॥ स बालवत्सया सार्द्धं भार्य्यया प्रस्थितो वनम्। महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ९ ॥ तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने। सत्यवाननुरूपो मे भर्त्तेति मनसा वृतः ॥ १० ॥

नारद उवाच। अहो बत महत्पापं सावित्र्या नृपते कृतम्। अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥ ११ ॥ सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते। तथास्य ब्राह्मणाश्चक्रुर्नामैतत् सत्यवानिति ॥ १२ ॥ बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृण्मयान्। चित्रेऽपि विलिखत्यश्वांश्चित्राश्व इति चोच्यते ॥ १३ ॥

राजोवाच। अपीदानीं स तेजस्वी बुद्धिमान् वा नृपात्मजः। क्षमावानपि वा शूरः सत्यवान् पितृवत्सलः ॥ १४ ॥

नारद उवाच। विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ। महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः ॥ १५ ॥

अश्वपतिरुवाच। अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान्। रूपवानप्युदारो वाप्यथवा प्रियदर्शनः ॥ १६ ॥

नारद उवाच। सांकृते रन्तिदेवस्य स शक्त्या दानतः समः। ब्रह्मण्यः सत्यवादी च शिविरौशीनरो यथा ॥ १७ ॥ ययातिरिव चोदारः सोमवत् प्रियदर्शनः। रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ १८ ॥ स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः। स मैत्रः सोऽनसूयश्च स ह्रीमान् धृतिमांश्च सः ॥ १९ ॥

नित्यशश्चार्जवं तस्मिन् स्थितिस्तस्यैव च ध्रुवा। सङ्क्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ २० ॥

अश्वपतिरुवाच। गुणैरुपेतं सर्वैस्तं भगवन् प्रब्रवीषि मे। दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ २१ ॥

नारद उवाच। एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति। स च दोषः प्रयत्नेन न शक्यश्चातिवर्त्तितुम् ॥२२॥ एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान्। सम्वत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ २३ ॥

राजोवाच। एहि सावित्रि गच्छस्व अन्यं वरय शोभने। तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ २४ ॥ यथा मे भगवानाह नारदो देवसत्कृतः। सम्वत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ २५ ॥

सावित्र्युवाच। सकृदंशो निपतति सकृत् कन्या प्रदीयते। सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥ २६ ॥ दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा। सकृद्वृतो मया भर्त्ता न द्वितीयं वृणोम्यहम् ॥ २७ ॥ मनसा निश्चयं कृत्वा ततो वाचाभिधीयते। क्रियते कर्मणा पश्चात् प्रमाणं मे मनस्ततः ॥ २८ ॥

नारद उवाच। स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव। नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥ २९ ॥ नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः। प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ३० ॥

राजोवाच। अविचाल्यमेतदुक्तं तथ्यञ्च भवता वचः। करिष्याम्येतदेवञ्च गुरुर्हि भगवान्मम ॥ ३१ ॥

नारद उवाच। अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव। साधयिष्याम्यहं तावत् सर्वेषां भद्रमस्तु वः ॥ ३२ ॥

मार्कण्डेय उवाच । एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ।
राजापि दुहितुः सर्व्वं वैवाहिकमकारयत् ॥ ३३ ॥

इति आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि सावित्र्युपाख्याने
नारदानुमतौ त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

---

मार्कण्डेय उवाच । अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् । समानिन्ये च तत्सर्व्वं भाण्डं वैवाहिकं नृपः ॥ १ ॥ ततो वृद्धान् द्विजान् सर्व्वानृत्विजः सपुरोहितान् । समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ २ ॥ मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः । पद्भ्यामेव द्विजैः सार्द्धं राजर्षिन्तमुपागमत् ॥ ३ ॥ तत्रापश्यन्महाभागं शालवृक्षमुपाश्रितम् । कौश्यां वृष्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ४ ॥ स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः । वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ५ ॥ तस्यार्घ्यमासनञ्चैव गाञ्चावेद्य स धर्म्मवित् । किमागमनमित्येवं राजा राजानमब्रवीत् ॥ ६ ॥ तस्य सर्व्वमभिप्रायमितिकर्त्तव्यताञ्च ताम् । सत्यवन्तं समुद्दिश्य सर्व्वमेव न्यवेदयत् ॥ ७ ॥

अश्वपतिरुवाच । सावित्री नाम राजर्षे कन्येयं मम शोभना । तां स्वधर्म्मेण धर्म्मज्ञ स्नुषार्थे त्वं गृहाण मे ॥ ८ ॥

द्युमत्सेन उवाच । च्युताः स्म राज्याद्वनवासमाश्रितास्चराम धर्म्मं नियतास्तपस्विनः । कथं त्वनर्हा वनवासमाश्रमे निवत्स्यते क्लेशमिमं सुता तव ॥ ९ ॥

अश्वपतिरुवाच । सुखञ्च दुःखञ्च भवाभवात्मकं यदा विजानाति सुताहमेव च । न मद्विधे युज्यति वाक्यमीदृशं विनिश्चयेनाभिगतोऽस्मि ते नृप ॥ १० ॥ आशां नार्हसि मे हन्तुं सौहृदात् प्रणतस्य च । अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न मार्हसि ॥ ११ ॥

अनुरूपो हि युक्तश्च त्वं ममाहं तवापि च । स्नुषां प्रतीच्छ मे कन्यां भार्य्यां सत्यवतः सुतः ॥ १२ ॥

द्युमत्सेन उवाच । पूर्वमेवाभिलषितः सम्बन्धो मे त्वया सह । भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥ १३ ॥ अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः । स निर्वर्त्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः ॥ १४ ॥ ततः सर्वान् समानाय्य द्विजानाश्रमवासिनः । यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १५ ॥ दत्त्वा चाश्वपति कन्यां यथार्हं च परिच्छदम् । ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १६ ॥ सत्यवानपि तां भार्य्यां लब्ध्वा सर्वगुणान्विताम् । मुमुदे सा च तं लब्ध्वा भर्त्तारं मनसेप्सितम् ॥ १७ ॥ गते पितरि सर्वाणि सन्न्यस्याभरणानि सा । जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥१८॥ परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च । सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥१९॥ श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः । श्वशुरं देवसत्कारैर्वाचः संयमनेन च ॥ २० ॥ तथैव प्रियवादेन नैपुण्येन शमेन च । रहश्चैवोपचारेण भर्त्तारं पर्य्यतोषयत् ॥२१॥ एवं तत्राश्रमे तेषां तदा निवसतां सताम् । कालस्तपस्यतां कश्चिदपाक्रामत भारत ॥२२॥ सावित्र्या ग्लायमानायास्तिष्ठन्त्यास्तु दिवानिशम् । नारदेन यदुक्तं तद्वाक्यं मनसि वर्त्तते ॥२३॥

इति आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सावित्र्युपाख्याने चतुर्नवत्यधिकद्विशततोऽध्यायः ॥ २९४ ॥

---

मार्कण्डेय उवाच । ततः काले बहुतिथे व्यतिक्रान्ते कदाचन । प्राप्तः स कालो मर्त्तव्यं यत्र सत्यवता नृप ॥ १ ॥ गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते । यद्वाक्यं नारदेनोक्तं वर्त्तते हृदि नित्यशः ॥ २ ॥ चतुर्थेऽहनि मर्त्तव्यमिति सञ्चिन्त्य भाविनी ।

व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताभवत् ॥ ३ ॥ तं श्रुत्वा नियमं तस्या भृशं दुःखान्वितो नृपः । उत्थाय वाक्यं सावित्रीमब्रवीत् परिसान्त्वयन् ॥ ४ ॥

द्युमत्सेन उवाच । अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे । तिसृणां वसतीनां हि स्थानं परमदुष्करम् ॥ ५ ॥

सावित्र्युवाच । न कार्य्यस्तात सन्तापः पारयिष्याम्यहं व्रतम् । व्यवसायकृतं हीदं व्यवसायश्च कारणम् ॥ ६ ॥

द्युमत्सेन उवाच । व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथञ्चन । पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ७ ॥

मार्कण्डेय उवाच । एवमुक्त्वा द्युमत्सेनो विरराम महामनाः । तिष्ठन्ती चैव सावित्री काष्ठभूतेव लक्ष्यते ॥ ८ ॥ श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ । दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्त्तत ॥ ९ ॥ अद्य तद्दिवसञ्चेति हुत्वा दीप्तं हुताशनम् । युगमात्रोदिते सूर्य्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ १० ॥ ततः सर्वान् द्विजान् वृद्धान् श्वश्रूं श्वशुरमेव च । अभिवाद्यानुपूर्व्वेण प्राञ्जलिर्नियता स्थिता ॥ ११ ॥ अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः । ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १२ ॥ एवमस्त्विति सावित्री ध्यानयोगपरायणा । मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनाम् ॥ १३ ॥ तं कालं तं मुहूर्त्तञ्च प्रतीक्षन्ती नृपात्मजा । यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता ॥ १४ ॥ ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् । एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम ॥ १५ ॥

श्वशुरावूचतुः । व्रतं यथोपदिष्टं तत्तथा तत् पारितं त्वया । आहारकाल संप्राप्तः क्रियतां यदनन्तरम् ॥ १६ ॥

सावित्र्युवाच । अस्तं गते मयादित्ये भोक्तव्यं कृतकामया । एष मे हृदि सङ्कल्पः समयश्च कृतो मया ॥ १७ ॥

मार्कण्डेय उवाच। एवं सम्भाषमाणायाः सावित्र्या भोजनं प्रति। स्कन्धे परशुमादाय सत्यवान् प्रस्थितो वनम् ॥ १८॥ सावित्री त्वाह भर्त्तारं नैकस्त्वं गन्तुमर्हसि। सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ॥ १९ ॥

सत्यवानुवाच। वनं न गतपूर्वं ते दुःखं पन्थाश्च भाविनि। व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ २० ॥

सावित्र्युवाच। उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः। गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि ॥ २१ ॥

सत्यवानुवाच। यदि ते गमनोत्साहः करिष्यामि तव प्रियम्। मम त्वामन्त्रय गुरून न मां दोषः स्पृशेदयम् ॥ २२ ॥

मार्कण्डेय उवाच। साभिवाद्याब्रवीच्छ्वश्रूं श्वशुरञ्च महाव्रता। अयं गच्छति मे भर्त्ता फलाहारो महावनम् ॥२३॥ इच्छेयमभ्यनुज्ञाता आर्य्यया श्वशुरेण ह। अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः ॥ २४ ॥ गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव। न निवार्य्यो निवार्य्यः स्यादन्यथा प्रस्थितो वनम् ॥ २५ ॥ युवाभ्यां न निवार्य्याहं सह यास्यामहं वनम्। संवत्सरः किञ्चिदूनो न निष्क्रान्ताहमाश्रमात्। वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ २६ ॥

द्युमत्सेन उवाच। यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम। नानयाभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ २७ ॥ तदेषा लभतां कामं यथाभिलषितं वधूः। अप्रमादश्च कर्त्तव्यः पुत्रि सत्यवतः पथि ॥ २८ ॥

मार्कण्डेय उवाच। उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी। सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥ २९ ॥ सा वनानि विचित्राणि रमणीयानि सर्वशः। मयूरगणजुष्टानि ददर्श विपुलेक्षणा ॥ ३० ॥ नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान्। सत्यवानाह पश्येति सावित्रीं मधुरं वचः ॥ ३१ ॥ निरीक्षमाणा

भर्त्तारं सर्वावस्थमनिन्दिता। मृतमेव हि भर्त्तारं काले मुनिवचः स्मरन् ॥ ३२ ॥ अनुव्रजन्ती भर्त्तारं जगाम मृदुगामिनी। द्विधेव हृदयं कृत्वा तञ्च कालमवेक्षती ॥ ३३ ॥

इति आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि सावित्र्या वनगमने पञ्चनवत्यधिकद्विशततोऽध्यायः ॥ २९५ ॥

---

मार्कण्डेय उवाच। अथ भार्य्यासहायः स फलान्यादाय वीर्य्यवान्। कठिनं पूरयामास ततः काष्ठान्यपातयत् ॥ १ ॥ तस्य पातयतः काष्ठं स्वेदो वै समजायत। व्यायामेन च तेनास्य जज्ञे शिरसि वेदना। सोऽभिगम्य प्रियां भार्य्यामुवाच श्रमपीड़ितः ॥२॥

सत्यवानुवाच। व्यायामेन ममानेन जाता शिरसि वेदना। अङ्गानि चैव सावित्रि हृदयं दूयतीव च। अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ॥ ३ ॥ शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम्। तत् स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥४॥ सा समासाद्य सावित्री भर्त्तारमुपगम्य च। उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ॥ ५ ॥ ततः सा नारदवचो विमृशन्ती तपस्विनी। तं मुहूर्त्तं क्षणं वेलां दिवसञ्च युयोज ह ॥ ६ ॥ मुहूर्त्तादेव चापश्यत् पुरुषं रक्तवाससम्। बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ॥ ७ ॥ श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम्। स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ॥ ८ ॥ तं दृष्ट्वा सहसोत्थाय भर्त्तुर्न्यस्य शनैः शिरः। कृताञ्जलिरुवाचार्त्ता हृदयेन प्रवेपती ॥ ९ ॥

सावित्र्युवाच। दैवतं त्वाभिजानामि वपुरेतद्ध्यमानुषम्। कामया ब्रूहि देवेश कस्त्वं किञ्च चिकीर्षसि ॥ १० ॥

यम उवाच। पतिव्रतासि सावित्रि तथैव च तपोऽन्विता।

अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् ॥ ११ ॥ अयं ते सत्यवान् भर्त्ता क्षीणायुः पार्थिवात्मजः । नेष्यामि तमहं बद्धा विद्ध्येतन्मे चिकीर्षितम् ॥ १२ ॥

सावित्र्युवाच । श्रूयते भगवन् दूतास्तवागच्छन्ति मानवान् । नेतुं किल भवान् कस्मादिहागतोऽसि स्वयं प्रभो ॥ १३ ॥

मार्कण्डेय उवाच । इत्युक्तः पितृराजस्तां भगवान् स्वचिकीर्षितम् । यथावत् सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ॥ १४ ॥ अयञ्च धर्मसंयुक्तो रूपवान् गुणसागरः । नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः ॥ १५ ॥ ततः सत्यवतः कायात् पाशबद्धं वशङ्गतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ १६ ॥ ततः समुद्धृतप्राणं गतश्वासं हतप्रभम् । निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ॥ १७ ॥ यमस्तु तं ततो बद्धा प्रयातो दक्षिणामुखः । सावित्री चैव दुःखार्त्ता यममेवान्वगच्छत । नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ १८ ॥

यम उवाच । निवर्त्त गच्छ सावित्रि कुरुष्वास्यौर्द्ध्वदैहिकम् । कृतं भर्त्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वया ॥ १९ ॥

सावित्र्युवाच । यत्र मे नियतं भर्त्ता स्वयं वा यत्र गच्छति । मया च तत्र गन्तव्यमेष धर्मः सनातनः ॥ २० ॥ तपसा गुरुभक्त्या च भर्त्तुः स्नेहाद्व्रतेन च । तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ २१ ॥ प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः । मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥ २२ ॥ नानात्मवन्तस्तु वने चरन्ति धर्मञ्च वासञ्च परिश्रमञ्च । विज्ञानतो धर्ममुदाहरन्ति तस्मात् सन्तो धर्ममाहुः प्रधानम् ॥ २३ ॥ एकस्य धर्मेण सतां मतेन सर्वे स्म तं मार्गमनुप्रपन्नाः । मा वै द्वितीयं मा तृतीयञ्च वाञ्छे तस्मात् सन्तो धर्ममाहुः प्रधानम् ॥ २४ ॥

यम उवाच । निवर्त्त तुष्टोऽस्मि तवानया गिरा स्वराक्षर-

श्लक्ष्णहेतुयुक्तया। वरं वृणीष्वेह विनास्य जीवितं ददानि ते सर्वमनिन्दिते वरम् ॥ २५ ॥

सावित्र्युवाच। च्युतः स राज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे। स लब्धचक्षुर्बलवान् भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसन्निभः ॥ २६ ॥

यम उवाच। ददानि तेऽहं तमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा। तवाध्वना ग्लानिमिवोपलक्षये निवर्त्त गच्छस्व न ते श्रमो भवेत् ॥ २७ ॥

सावित्र्युवाच। श्रमः कुतो भर्त्तृसमीपतो हि मे यतो हि भर्त्ता मम सा गतिर्ध्रुवा। यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे ॥ २८ ॥ सतां सकृत् सङ्गतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते। न चाफलं सत्पुरुषेण सङ्गतं ततः सतां सन्निवसेत् समागमे ॥ २९ ॥

यम उवाच। मनोऽनुकूलं बुधबुद्धिवर्द्धनं त्वया यदुक्तं वचनं हिताश्रयम्। विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भाविनि ॥ ३० ॥

सावित्र्युवाच। हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः। जह्यात् स्वधर्मान्न च मे गुरुर्यथा द्वितीयमेतद्वरयामि ते वरम् ॥ ३१ ॥

यम उवाच। स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात् परिहास्यते नृपः। कृतेन कामेन मया नृपात्मजे निवर्त्त गच्छस्व न ते श्रमो भवेत् ॥ ३२ ॥

सावित्र्युवाच। प्रजास्त्वयैता नियमेन संयता नियम्य चैता नयसे निकामया। ततो यमत्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया ॥ ३३ ॥ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च दानञ्च सतां धर्मः सनातनः ॥ ३४ ॥ एव-

न्यायस्व लोकोऽयं मनुष्या भक्तिपेशलाः । सन्तस्ते चाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ३५ ॥

यम उवाच । पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् । विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि ॥ ३६ ॥

सावित्र्युवाच । ममानपत्यः पृथिवीपतिः पिता भवेत् पितुः पुत्रशतं तथौरसम् । कुलस्य सन्तानकरञ्च यद्भवेत्तृतीयमेतद्वरयामि ते वरम् ॥ ३७ ॥

यम उवाच । कुलस्य सन्तानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे । कृतेन कामेन नराधिपात्मजे निवर्त्त दूरं हि पथस्त्वमागता ॥ ३८ ॥

सावित्र्युवाच । न दूरमेतन्मम भर्त्तृसन्निधौ मनो हि मे दूरतरं प्रधावति । अथ व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एव च ॥ ३९ ॥ विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः । समेन धर्म्मेण चरन्ति ताः प्रजास्ततस्तवेहेश्वर धर्म्मराजता ॥ ४० ॥ आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः । तस्मात् सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ ४१ ॥ सौहृदात् सर्वभूतानां विश्वासो नाम जायते । तस्मात् सत्सु विशेषेण विश्वासं कुरुते जनः ॥ ४२ ॥

यम उवाच । उदाहृतं ते वचनं यदङ्गने शुभे न तादृक् त्वदृते श्रुतं मया । अनेन तुष्टोऽस्मि विनास्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ॥ ४३ ॥

सावित्र्युवाच । ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत् कुलोद्वहम् । शतं सुतानां बलवीर्य्यशालिनामिदं चतुर्थं वरयामि ते वरम् ॥ ४४ ॥

यम उवाच । शतं सुतानां बलवीर्य्यशालिनां भविष्यति प्रीति-

करं तवाबले । परिश्रमस्ते न भवेन्नृपात्मजे निवर्त्त दूरं हि पथ-स्त्वमागता ॥ ४५ ॥

सावित्र्युवाच । सतां सदा शाश्वतधर्म्मवृत्तिः सन्तो न सीदन्ति न च व्यथन्ति । सतां सद्भिर्नाफलः सङ्गमोऽस्ति सद्भ्यो भयं नानुवर्त्तन्ति सन्तः ॥ ४६ ॥ सन्तो हि सत्येन नयन्ति सूर्य्यं सन्तो भूमिं तपसा धारयन्ति । सन्तो गतिर्भूतभव्यस्य राजन् सतां मध्ये नावसीदन्ति सन्तः ॥ ४७ ॥ आर्य्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् । सन्तः परार्थं कुर्व्वाणा नावेक्षन्ति परस्परम् ॥ ४८ ॥ न च प्रसादः सत्पुरुषेषु मोघो न चाप्यर्थो नश्यति नापि मानः । यस्मादेतन्नियतं सत्सु नित्यं तस्मात् सन्तो रक्षितारो भवन्ति ॥४९

यम उवाच । यथा यथा भाषसि धर्म्मसंहितं मनोऽनुकूलं सुपदं महार्थवत् । तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते ॥ ५० ॥

सावित्र्युवाच । न तेऽपवर्गः सुकृताद्विनाकृतस्तथा यथान्येषु वरेषु मानद । वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना ॥ ५१ ॥ न कामये भर्त्तृविनाकृता सुखं न कामये भर्त्तृविनाकृता दिवम् । न कामये भर्त्तृविनाकृता श्रियं न भर्त्तृहीना व्यवसामि जीवितुम् ॥ ५२ ॥ वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः । वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ॥ ५३ ॥

मार्कण्डेय उवाच । तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः । धर्म्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ ५४ ॥ एष भद्रे मया मुक्तो भर्त्ता ते कुलनन्दिनि । अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति ॥ ५५ ॥ चतुर्वर्षशतायुश्च त्वया सार्द्धमवाप्स्यति । इष्ट्वा यज्ञैश्च धर्म्मेण ख्यातिं लोके गमिष्यति ॥ ५६ ॥ त्वयि पुत्रशतञ्चैव सत्यवान् जनयिष्यति । ते चापि सर्व्वे राजानः क्षत्रियाः

पुत्रपौत्रिणः ॥५७॥ ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः। पितुश्च ते पुत्रशतं भविता तव मातरि ॥ ५८ ॥ मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः। भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ॥ ५९ ॥ एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान्। निवर्त्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ ६० ॥ सावित्र्यपि यमे याते भर्त्तारं प्रतिलभ्य च। जगाम तत्र यत्रास्य भर्त्तुः श्यावं कलेवरम् ॥ ६१ ॥ सा भूमौ प्रेक्ष्य भर्त्तारमुपसृत्योपगृह्य च। उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ ६२ ॥ संज्ञाञ्च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत। प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै ॥६३॥

सत्यवानुवाच। सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः। क्व चासौ पुरुषः श्यामो योऽसौ मां सञ्चकर्ष ह ॥ ६४ ॥

सावित्र्युवाच। सुचिरं त्वं प्रसुप्तोऽसि ममाङ्के पुरुषर्षभ। गतः स भगवान् देवः प्रजासंयमनो यमः ॥ ६५ ॥ विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज। यदि शक्यं समुत्तिष्ठ विगाढ़ां पश्य शर्वरीम् ॥ ६६ ॥

मार्कण्डेय उवाच। उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः। दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान् ॥ ६७ ॥ फलाहारोऽस्मि निष्क्रान्तस्त्वया सह सुमध्यमे। ततः पाटयतः काष्ठं शिरसो मे रुजाभवत् ॥ ६८ ॥ शिरोभितापसन्तप्तः स्थातुं चिरमशक्नुवन्। ततोत्सङ्गे प्रसुप्तोऽस्मि इति सर्वं स्मरे शुभे ॥ ६९ ॥ त्वयोपगूढ़स्य च मे निद्रयोपहृतं मनः। ततोऽपश्यन्तमो घोरं पुरुषञ्च महौजसम् ॥ ७० ॥ तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे। स्वप्नो यदि वा दृष्टो यदि वा सत्यमेव तत् ॥ ७१ ॥ तमुवाचाथ सावित्री रजनी व्यवगाहते। श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ ७२ ॥ उत्तिष्ठोत्तिष्ठ भद्रन्ते पितरौ पश्य सुव्रत। विगाढ़ा रजनी चेयं निवृत्तश्च दिवाकरः ॥ ७३ ॥

नक्तञ्चराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः। श्रूयन्ते पर्णशब्दाश्च मृगाणाञ्चरतां वने ॥ ७४ ॥ एतान् घोराञ्छिवानादान् दिशं दक्षिणपश्चिमाम्। आस्थाय विरुवन्त्युग्राः कम्पयन्तो मनो मम ॥७५

सत्यवानुवाच। वनं प्रतिभयाकारं घनेन तमसा वृतम्। न विज्ञास्यसि पन्थानं गन्तुञ्चैव न शक्ष्यसि ॥ ७६ ॥

सावित्र्युवाच। अस्मिन्नद्य वने दग्धे शुष्कवृक्षः स्थितो ज्वलन्। वायुना धम्यमानोऽत्र दृश्यतेऽग्निः क्वचित् क्वचित् ॥ ७७ ॥ ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वतः। काष्ठानीमानि सन्तीह जहि सन्तापमात्मनः ॥ ७८ ॥ यदि नोत्सहसे गन्तुं सरुजं त्वां हि लक्षये। न च ज्ञास्यसि पन्थानं तमसा संवृते वने ॥ ७९ ॥ श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव। वसावेह क्षपामेकां रुचितं यदि तेऽनघ ॥ ८० ॥

सत्यवानुवाच। शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये। मातापितृभ्यामिच्छामि सङ्गमं त्वत्प्रसादजम् ॥ ८१ ॥ न कदाचिद्विकाले हि गतपूर्व्वो मयाश्रमः। अनागतायां सन्ध्यायां माता मे प्ररुणद्धि माम् ॥ ८२ ॥ दिवापि मयि निष्क्रान्ते सन्तप्येते गुरू मम। विचिनोति हि मां तातः सहैवाश्रमवासिभिः ॥ ८३ ॥ मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा। उपालब्धश्च बहुशश्चिरेणागच्छसीति हि ॥ ८४ ॥ का त्ववस्था तयोरद्य मदर्थमिति चिन्तये। तयोरदृश्ये मयि च महद्दुःखं भविष्यति ॥ ८५ ॥ पुरा मामूचतुश्चैव रात्रावस्रायमाणकौ। भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ ॥ ८६ ॥ त्वया हीनौ न जीवाव मुहूर्त्तमपि पुत्रक। यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम् ॥ ८७ ॥ वृद्धयोरन्धयोर्यष्टिस्त्वयि वंशः प्रतिष्ठितः। त्वयि पिण्डश्च कीर्त्तिश्च सन्तानश्चावयोरिति ॥ ८८ ॥ माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी। अहञ्च संशयं प्राप्तः कृच्छ्रमापदमास्थितः ॥८९॥

मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे । व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम ॥ ९० ॥ एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनाम् । नात्मानमनुशोचामि यथाहं पितरं शुभे ॥९१॥ भर्त्तारञ्चाप्यनुगतां मातरं परिदुर्बलाम् । मत्कृतेन हि तावद्य सन्तापं परमेष्यतः ॥ ९२ ॥ जीवन्तावनुजीवामि भर्त्तव्यौ तौ मयेति च । तयोः प्रियं मे कर्त्तव्यमिति जानामि चाप्यहम् ॥९३॥

मार्कण्डेय उवाच । एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरुप्रियः । उच्छ्रित्य बाहू दुःखार्त्तः सस्वरं प्ररुरोद ह ॥ ९४ ॥ ततोऽब्रवीत्तथा दृष्ट्वा भर्त्तारं शोककर्षितम् । प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्मचारिणी ॥ ९५ ॥ यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि । श्वश्रूश्वशुरभर्तॄणां मम पुण्यास्तु शर्वरी ॥ ९६ ॥ न स्मराम्युक्तपूर्वां वै स्वैरेष्वप्यनृतां गिरम् । तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम ॥ ९७ ॥

सत्यवानुवाच । कामये दर्शनं पित्रोर्याहि सावित्रि मा चिरम् । पुरा मातुः पितुर्वापि यदि पश्यामि विप्रियम् ॥९८॥ न जीविष्ये वरारोहे सत्येनात्मानमालभे । यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि । मम प्रियं वा कर्त्तव्यं गच्छावाश्रममन्तिकात् ॥ ९९ ॥

मार्कण्डेय उवाच । सावित्री तत उत्थाय केशान् संयम्य भाविनी । पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ १०० ॥ उत्थाय सत्यवांश्चापि विमृज्याङ्गानि पाणिना । सर्वा दिशः समालोक्य कठिने दृष्टिमादधे ॥ १०१ ॥ तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि । योगक्षेमार्थमेतन्ते नेष्यामि परशुन्त्वहम् ॥ १०२ ॥ कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् । गृहीत्वा परशुं भर्त्तुः सकाशे पुनरागमत् ॥ १०३ ॥ वामे स्कन्धे तु वामोरुर्भर्त्तुर्बाहुं निवेश्य च । दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥ १०४ ॥

सत्यवानुवाच । अभ्यासगमनाद्भीरु पन्थानो विदिता मम ।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ॥ १०५ ॥ आगतौ
स्वः पथा येन फलान्यवचितानि च । यथागतं शुभे गच्छ पन्थानं
मा विचारय ॥ १०६ ॥ पलाशखण्डे चैतस्मिन् पन्था व्यावर्त्तते
द्विधा । तस्योत्तरेण यः पन्थास्तेन गच्छ तरस्व च ॥ १०७ ॥
स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ । ब्रुवन्नेव त्वरायुक्तः
संप्राद्रायाश्रमं प्रति ॥ १०८ ॥

इति आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सत्यवदाश्रमगमने
षण्णवत्यधिकद्विशततोऽध्यायः ॥ २९६ ॥

---

मार्कण्डेय उवाच । एतस्मिन्नेव काले तु द्युमत्सेनो महा-
बलः । लब्धचक्षुः प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥ १ ॥ स सर्वा-
नाश्रमान् गत्वा शैव्यया सह भार्य्यया । पुत्रहेतोः परामार्त्तिं
जगाम भरतर्षभ ॥ २ ॥ तावाश्रमान्नदीश्चैव वनानि च सरांसि
च । तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः ॥ ३ ॥ श्रुत्वा
शब्दन्तु यं कञ्चिदुन्मुखौ सुतशङ्कया । सावित्र्या सहितोऽभ्येति
सत्यवानित्यभाषताम् ॥ ४ ॥ भिन्नैश्च परुषैः पादैः सव्रणैः शोणि-
तोक्षितैः । कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः ॥ ५ ॥ ततो-
ऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः । परिवार्य्य समाश्वास्य
तावानीतौ स्वमाश्रमम् ॥ ६ ॥ तत्र भार्य्यासहायः स वृतो वृद्धै-
स्तपोधनैः । आश्वासितो विचित्रार्थैः पूर्व्वराज्ञां कथाश्रयैः ॥ ७ ॥
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया । बाल्ये वृत्तानि पुत्रस्य
स्मरन्तौ भृशदुःखितौ ॥ ८ ॥ पुनरुक्त्वा च करुणां वाचं तौ शोक-
कर्षितौ । हा पुत्र हा साध्वि वधु क्वासि क्वासीत्यरोदताम् ।
ब्राह्मणः सत्यवाक् तेषामुवाचेदं तयोर्वचः ॥ ९ ॥

सुवर्चा उवाच । यथास्य भार्य्या सावित्री तपसा च दमेन च । आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १० ॥

गौतम उवाच । वेदाः साङ्गा मयाधीतास्तपो मे सञ्चितं महत् । कौमारं ब्रह्मचर्य्यञ्च गुरवोऽग्निश्च तोषिताः ॥ ११ ॥ समाहितेन चीर्ण्णानि सर्व्वाण्येव व्रतानि मे । वायुभक्षोपवासश्च कृतो मे विधिवत् सदा ॥ १२ ॥ अनेन तपसा वेद्मि सर्व्वं परचिकीर्षितम् । सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति ॥ १३ ॥

शिष्य उवाच । उपाध्यायस्य मे वक्त्रात् यथा वाक्यं विनिःसृतम् । नैव जातु भवेन्मिथ्या तथा जीवति सत्यवान् ॥ १४ ॥

ऋषय ऊचुः । यथास्य भार्य्या सावित्री सर्व्वैरेव सुलक्षणैः । अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ १५ ॥

भरद्वाज उवाच । यथास्य भार्य्या सावित्री तपसा च दमेन च । आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १६ ॥

दाल्भ्य उवाच । यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् । गताहारमकृत्वा च तथा जीवति सत्यवान् ॥ १७ ॥

आपस्तम्ब उवाच । यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः । पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान् ॥ १८ ॥

धौम्य उवाच । सर्व्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः । दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् ॥ १९ ॥

मार्कण्डेय उवाच । एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः । तांस्तान् निगणयन् सर्व्वांस्ततः स्थिर इवाभवत् ॥ २० ॥ ततो मुहूर्त्तात् सावित्री भर्त्रा सत्यवता सह । आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ २१ ॥

ब्राह्मणा ऊचुः । पुत्रेण सङ्गतं त्वान्तु चक्षुष्मन्तं निरीक्ष्य च । सर्व्वे वयं वै पृच्छामो वृद्धिं वै पृथिवीपते ॥ २२ ॥ समागमेन पुत्रस्य सावित्र्या दर्शनेन च । चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या

विवर्द्धसे ॥ २३ ॥ सुवर्च्चसामिदुक्तं यत् तथा तन्नात्र संशयः । भूयो भूयः समृद्धिस्ते क्षिप्रमेव भविष्यति ॥ २४ ॥ ततोऽग्निं तत्र संज्वाल्य द्विजास्ते सर्व्व एव हि । उपासाञ्चक्रिरे पार्थं द्युमत्सेनं महीपतिम् ॥ २५ ॥ शैव्या च सत्यवांश्चैव सावित्री चैकतः स्थिता । सर्व्वैस्तैरभ्यनुज्ञाता विशोकाः समुपाविशन् ॥ २६ ॥ ततो राज्ञा सहासीनाः सर्व्वे ते वनवासिनः । जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम् ॥ २७ ॥

ऋषय ऊचुः । प्रागेव नागतं कस्मात् सभार्य्येण त्वया विभो । विरात्रे चागतं कस्मात् कोऽनुबन्धस्तवाभवत् ॥ २८ ॥ सन्तापितः पिता माता वयञ्चैव नृपात्मज । कस्मादिति न जानीमस्तत् सर्व्वं वक्तुमर्हसि ॥ २९ ॥

सत्यवानुवाच । पित्राहमभ्यनुज्ञातः सावित्रीसहितो गतः । अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः ॥ ३० ॥ सुप्तश्चाहं वेदनया चिरमित्युपलक्षये । तावत्कालं न च मया सुप्तपूर्व्वं कदाचन ॥ ३१ ॥ सर्व्वेषामेव भवतां सन्तापो मा भवेदिति । अतो विरात्रागमनं नान्यदस्तीह कारणम् ॥ ३२ ॥

गौतम उवाच । अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः । नास्य त्वं कारणं वेत्सि सावित्री वक्तुमर्हति ॥ ३३ ॥ श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरम् । त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा ॥ ३४ ॥ त्वमत्र हेतुं जानीषे तस्मात् सत्यं निरुच्यताम् । रहस्यं यदि ते नास्ति किञ्चिदत्र वदस्व नः ॥ ३५ ॥

सावित्र्युवाच । एवमेतद्यथा वेत्थ सङ्कल्पो नान्यथा हि वः । न हि किञ्चिद्रहस्यं मे श्रूयतां तथ्यमेव तत् ॥ ३६ ॥ मृत्युमेप्रत्युराख्यातो नारदेन महात्मना । स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥३७॥ सुप्तञ्चैनं यमः साक्षादुपागच्छत्सकिङ्करः ।

स एनमनयद्दृष्ट्वा दिश्यं पितृनिषेविताम् ॥ ३८ ॥ अस्तौषं तमहं देवं सत्येन वचसा विभुम्। पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ३९ ॥ चक्षुषी च स्वराज्यञ्च द्वौ वरौ श्वशुरस्य मे। लब्धं पितुः पुत्रशतं पुत्राणाञ्चात्मनः शतम् ॥ ४० ॥ चतुर्वर्षशतायुर्मे भर्त्ता लब्धश्च सत्यवान्। भर्त्तुर्हि जीवितार्थन्तु मया चीर्णन्त्विदं व्रतम् ॥ ४१ ॥ एतत् सर्वं मयाख्यातं कारणं विस्तरेण वः। यथावृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ४२ ॥

ऋषय ऊचुः। निमज्जमानं व्यसनैरभिद्रुतं कुलं नरेन्द्रस्य तमोमये ह्रदे। त्वया सुशीलव्रतपुण्यया कुलं समुद्धृतं साध्वि पुनः कुलीनया ॥ ४३ ॥

मार्कण्डेय उवाच। तथा प्रशस्य ह्यभिपूज्य चैव वरस्त्रियं तामृषयः समागताः। नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा शिवेन जग्मुर्मुदिताः स्वमालयम् ॥ ४४ ॥

इति आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सावित्रीकथायां सप्तनवत्यधिकद्विशतोऽध्यायः ॥ २९७ ॥

---

मार्कण्डेय उवाच। तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले। कृतपूर्वाह्निकाः सर्वे समयुस्ते तपोधना ॥ १ ॥ तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः। द्युमत्सेनाय नातृप्यन् कथयन्तः पुनः पुनः ॥ २ ॥ ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप। आचख्युर्निहतञ्चैव स्वेनामात्येन तं द्विषम् ॥ ३ ॥ तं मन्त्रिणा हतं श्रुत्वा ससहायं सबान्धवम्। न्यवेदयन् तथावृत्तं विद्रुतञ्च द्विषद्बलम् ॥ ४ ॥ ऐकमत्यञ्च सर्वस्य जनस्याथ नृपं प्रति। सचक्षुर्वाप्यचक्षुर्वा स नो राजा भवत्विति ॥ ५ ॥ अनेन निश्चयेनेह वयं प्रस्थापिता नृप। प्राप्तानीमानि यानानि चतुरङ्गञ्च

ते बलम् ॥ ६ ॥ प्रयाहि राजन् भद्रन्ते घुष्टस्ते नगरे जयः । अध्यास्व चिररात्राय पितृपैतामहं पदम् ॥ ७ ॥ चक्षुष्मन्तञ्च तं दृष्ट्वा राजानं वपुषान्वितम् । मूर्द्ध्ना निपातिताः सर्व्वे विस्मयोत्फुल्ललोचनाः ॥ ८ ॥ ततोऽभिवाद्य तान् वृद्धान् द्विजानाश्रमवासिनः । तैश्चाभिपूजितः सर्व्वैः प्रययौ नगरं प्रति ॥ ९ ॥ शैव्या च सह सावित्र्या स्वास्तीर्णेन सुवर्च्चसा । नरयुक्तेन यानेन प्रययौ सेनया वृता ॥ १० ॥ ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः । पुत्त्रञ्चास्य महात्मानं यौवराज्येऽभ्यषिञ्चयन् ॥ ११ ॥ ततः कालेन महता सावित्र्याः कीर्त्तिवर्द्धनम् । तद्वै पुत्त्रशतं जज्ञे शूराणामनिवर्त्तिनाम् ॥ १२ ॥ भ्रातॄणां सोदराणाञ्च तथैवास्याभवत् शतम् । मद्राधिपस्याश्वपतेर्मालव्यां सुमहद्बलम् ॥ १३ ॥ एवमात्मा पिता माता श्वश्रूः श्वशुर एव च । भर्त्तुः कुलञ्च सावित्र्या सर्व्वं कृच्छ्रात् समुद्धृतम् ॥ १४ ॥ तथैवैषापि कल्याणी द्रौपदी शीलसम्मता । तारयिष्यति वः सर्व्वान् सावित्रीव कुलाङ्गना ॥ १५ ॥

वैशम्पायन उवाच । एवं स पाण्डवस्तेन अनुनीतो महात्मना । विशोको विज्वरो राजन् काम्यके न्यवसत्तदा ॥ १६ ॥ यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् । स सुखी सर्व्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ॥ १७ ॥

इति आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि द्युमत्सेनराज्यलाभे अष्टनवत्यधिकद्विशततोऽध्यायः ॥ २९८ ॥

समाप्तञ्च पतिव्रतामाहात्म्यपर्व्व ।

---

## अथ कुण्डलाहरणपर्व।

जनमेजय उवाच। यत्तत्तदा महत् ब्रह्मन् लोमशो वाक्य-
मब्रवीत्। इन्द्रस्य वचनादेव पाण्डुपुत्रं युधिष्ठिरम् ॥ १ ॥
यच्चापि ते भयं तीव्रं न च कीर्त्तयसे क्वचित्। तच्चाप्यहं हरिष्यामि
धनञ्जय इतो गते ॥ २ ॥ किन्तु तज्जपतां श्रेष्ठ कर्णं प्रति महद्-
भयम्। आसीन्न च स धर्मात्मा कथयामास कस्यचित् ॥ ३ ॥
वैशम्पायन उवाच। अथ ते राजशार्दूल कथयामि कथा-
मिमाम्। पृच्छतो भरतश्रेष्ठ शुश्रूषस्व गिरं मम ॥ ४ ॥ द्वादशे
समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे। पाण्डूनां हितकृच्छक्रः कर्णं
भिक्षितुमुद्यतः ॥ ५ ॥ अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः।
कुण्डलार्थे महाराज सूर्य्यः कर्णमुपागतः ॥ ६ ॥ महार्हे शयने
वीरं स्पर्द्ध्यास्तरणसंवृते। शयानमतिविश्वस्तं ब्रह्मण्यं सत्य-
वादिनम् ॥ ७ ॥ स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान्।
कृपया परयाविष्टः पुत्रस्नेहाच्च भारत ॥ ८ ॥ ब्राह्मणो वेद-
विद्भूत्वा सूर्य्यो योगार्द्धिरूपवान्। हितार्थमब्रवीत् कर्णं सान्त्व-
पूर्व्वमिदं वचः ॥ ९ ॥ कर्ण मद्वचनं तात शृणु सत्यभृताम्वर।
ब्रुवतोऽद्य महाबाहो सौहृदात् परमं हितम् ॥ १० ॥ उपाया-
स्यति शक्रस्त्वां पाण्डवानां हितेप्सया। ब्राह्मणच्छद्मना कर्णं
कुण्डलोपजिहीर्षया ॥ ११ ॥ विदितं तेन शीलन्ते सर्वस्य जगत-
स्तथा। यथा त्वं भिक्षितः सद्भिर्ददास्येव न याचसे ॥ १२ ॥ त्वं
हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितम्। वित्तं यच्चान्यदप्याहु-
र्न प्रत्याख्यासि कस्यचित् ॥ १३ ॥ त्वान्तु चैवंविधं ज्ञात्वा स्वयं वै
पाकशासनः। आगन्ता कुण्डलार्थाय कवचञ्चैव भिक्षितुम् ॥ १४ ॥
तस्मै प्रयाचमानाय न देये कुण्डले त्वया। अनुनेयः परं शक्त्या
श्रेय एतद्धि ते परम् ॥ १५ ॥ कुण्डलार्थे ब्रुवंस्तात कारणै-
र्बहुभिस्त्वया। अन्यैर्बहुविधैर्वित्तैः स निवार्य्यः पुनः पुनः ॥ १६ ॥

रत्नैः स्त्रीभिस्तथा गोभिर्धनैर्बहुविधैरपि । निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरन्दरः ॥ १७ ॥ यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे । आयुषः प्रचयं गत्वा मृत्योर्वशमुपैष्यसि ॥ १८ ॥ कवचेन समायुक्तः कुण्डलाभ्याञ्च मानद । अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ॥ १९ ॥ अमृतादुत्थितं ह्येतदुभयं रत्नसम्भवम् । तस्माद्रक्ष्यं त्वया कर्ण जीवितञ्चेत् प्रियं तव ॥ २० ॥

कर्ण उवाच । को मामेवं भवान् प्राह दर्शयन् सौहृदं परम् । कामया भगवन् ब्रूहि को भवान् द्विजवेशधृक् ॥ २१ ॥

ब्राह्मण उवाच । अहं तात सहस्रांशुः सौहृदात्त्वां निदर्शये । कुरुष्वैतद्वचो मे त्वमेतच्छ्रेयः परं हि ते ॥ २२ ॥

कर्ण उवाच । श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः । प्रवक्ताद्य हितान्वेषी शृणु चेदं वचो मम ॥ २३ ॥ प्रसादये त्वां वरद प्रणयाच्च ब्रवीम्यहम् । न निवार्य्यो व्रतादस्मादहं यद्यस्मि ते प्रियः ॥ २४ ॥ व्रतं वै मम लोकोऽयं वेत्ति कृत्स्नं विभावसो । यथाहं द्विजमुख्येभ्यो दद्यां प्राणानपि ध्रुवम् ॥ २५ ॥ यद्यागच्छति मां शक्रो ब्राह्मणच्छद्मनावृतः । हितार्थं पाण्डुपुत्राणां खेचरोत्तम भिक्षितुम् ॥ २६ ॥ दास्यामि विबुधश्रेष्ठ कुण्डले वर्म चोत्तमम् । न मे कीर्त्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता ॥ २७ ॥ मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणम् । युक्तं हि यशसा युक्तं मरणं लोकसम्मतम् ॥२८॥ सोऽहमिन्द्राय दास्यामि कुण्डले सह वर्म्मणा । यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति ॥ २९ ॥ हितार्थं पाण्डुपुत्राणां कुण्डले मे प्रयाचितुम् । तन्मे कीर्त्तिकरं लोके तस्याकीर्त्तिर्भविष्यति ॥ ३० ॥ वृणोमि कीर्त्तिं लोके हि जीवितेनापि भानुमन् । कीर्त्तिमानश्नुते स्वर्गं हीनकीर्त्तिस्तु नश्यति ॥ ३१ ॥ कीर्त्तिर्हि पुरुषं लोके सञ्जीवयति मातृवत् । अकीर्त्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः ॥३२॥ अयं पुराणः

श्लोको हि स्वयं गीतो विभावसो । धात्रा लोकेश्वर यथा कीर्त्ति-रायुर्नरस्य ह ॥ ३३ ॥ पुरुषस्य परे लोके कीर्त्तिरेव परायणम् । इह लोके विशुद्धा च कीर्त्तिरायुर्विवर्द्धिनी ॥ ३४ ॥ सोऽहं शरीरजे दत्त्वा कीर्त्तिं प्राप्स्यामि शाश्वतीम् । दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ॥ ३५ ॥ हुत्वा शरीरं संग्रामे कृत्वा कर्म सुदुष्करम् । विजित्य च परानाजौ यशः प्राप्स्यामि केवलम् ॥३६ भीतानामभयं दत्त्वा संग्रामे जीवितार्थिनाम् । वृद्धान् बालान् द्विजातींश्च मोचयित्वा महाभयात् ॥ ३७ ॥ प्राप्स्यामि परमं लोके यशः स्वर्गमनुत्तमम् । जीवितेनापि मे रक्ष्या कीर्त्तिस्तद्विद्धि मे व्रतम् ॥ ३८ ॥ सोऽहं दत्त्वा मघवते भिक्षामेतामनुत्तमाम् । ब्राह्मणच्छद्मिने देव लोके गन्ता परां गतिम् ॥ ३९ ॥

इति श्रारण्यपर्वणि कुण्डलाहरणपर्वणि सूर्य्यकर्णसंवादे
एकोनशताधिकद्विशततमोऽध्यायः ॥ २९९ ॥

---

सूर्य्य उवाच । माहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा । पुत्राणामथ भार्य्याणामथो मातुरथो पितुः ॥ १ ॥ शरीरस्याविरोधेन प्राणिभिः प्राणभृद्वर । इष्यते यशसः प्राप्तिः कीर्त्तिश्च त्रिदिवे स्थिरा ॥ २ ॥ यस्त्वं प्राणविरोधेन कीर्त्तिमिच्छसि शाश्वतीम् । सा ते प्राणान् समादाय गमिष्यति न संशयः ॥ ३ ॥ जीवतां कुरुते कार्य्यं पिता माता सुतस्तथा । ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन् पुरुषर्षभ ॥ ४ ॥ राजानश्च नरव्याघ्र पौरुषेण निबोध तत् । कीर्त्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते ॥ ५ ॥ मृतस्य कीर्त्त्या किं कार्य्यं भस्मीभूतस्य देहिनः । मृतः कीर्त्तिं न जानीते जीवन् कीर्त्तिं समश्नुते ॥ ६ ॥ मृतस्य कीर्त्तिर्मर्त्यस्य यथा माला गतायुषः । अहन्तु त्वां ब्रवीम्येतद्भक्तोऽसीति हितेप्-

यथा ॥ ७ ॥ भक्तिमन्तो हि मे रच्या इत्येतेनापि हेतुना । भक्तोऽयं परया भक्त्या मामित्येव महाभुज ॥ ८ ॥ ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम । अस्ति चात्र परं किञ्चिदध्यात्मं दैवनिर्मितम् ॥ ९ ॥ अतश्च त्वां ब्रवीम्येतत् क्रियतामविशङ्कया । देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ ॥ १० ॥ तस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान् । पुनरुक्तञ्च वक्ष्यामि त्वं राधेय निबोध तत् ॥ ११ ॥ मास्मै ते कुण्डलेऽदास्त्वं भिक्षिते वज्रपाणिना । शोभसे कुण्डलाभ्याञ्च रुचिराभ्यां महाद्युते ॥ १२ ॥ विशाखयोर्मध्यगतः शशीव विमले दिवि । कीर्त्तिश्च जीवतः साध्वी पुरुषस्येति विद्धि तत् ॥ १३ ॥ प्रत्याख्येयस्त्वया तात कुण्डलार्थी सुरेश्वरः । शक्या बहुविधैर्वाक्यैः कुण्डलेप्सा त्वयानघ ॥ १४ ॥ विहन्तुं देवराजस्य हेतुयुक्तैः पुनः पुनः । हेतुमदुपपन्नार्थैर्माधुर्य्यकृतभूषणैः ॥ १५ ॥ पुरन्दरस्य कर्ण त्वं बुद्धिमेतामपानुद । त्वं हि नित्यं नरव्याघ्र स्पर्द्धसे सव्यसाचिना ॥ १६ ॥ सव्यसाची त्वया चेह युधि शूरः समेष्यति । न तु त्वामर्ज्जुनः शक्तः कुण्डलाभ्यां समन्वितम् ॥ १७ ॥ विजेतुं युधि यद्यस्य स्वयमिन्द्रः सखा भवेत् । तस्मान्न देये शक्राय त्वयैते कुण्डले शुभे । संग्रामे यदि निर्ज्जेतुं कर्ण कामयसेऽर्ज्जुनम् ॥ १८ ॥

इति आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि सूर्य्यकर्णसंवादे त्रिशतोऽध्यायः ॥ ३०० ॥

---

कर्ण उवाच । भगवन्तमहं भक्तो यथा मां वेत्थ गोपते । तथा परमतिग्मांशो नान्यदेवं कथञ्चन ॥ १ ॥ न मे दारा न मे पुत्रा न चात्मा सुहृदो न च । तथेष्टा वै सदा भक्त्या यथा त्वं गोपते मम ॥ २ ॥ इष्टानाञ्च महात्मानो भक्तानाञ्च न संशयः ।

कुर्वन्ति भक्तिमिष्टाञ्च जानीषे त्वञ्च भास्कर ॥ ३ ॥ इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि । जानीत इति वै कृत्वा भगवानाह मद्धितम् ॥ ४ ॥ भूयश्च शिरसा याचे प्रसाद्य च पुनः पुनः । इति ब्रवीमि तिग्मांशो त्वन्तु मे क्षन्तुमर्हसि ॥ ५ ॥ बिभेमि न तथा मृत्योर्यथा बिभ्येऽनृतादहम् । विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम् ॥ ६ ॥ प्रदाने जीवितस्यापि न मेऽत्रास्ति विचारणा । यच्च मामात्थ देव त्वं पाण्डवं फाल्गुनं प्रति ॥ ७ ॥ व्येतु सन्तापजं दुःखं तव भास्कर मानसम् । अर्जुनं प्रति माञ्चैव विजेष्यामि रणेऽर्जुनम् ॥ ८ ॥ तवापि विदितं देव ममाप्यस्त्रबलं महत् । जामदग्न्यादुपात्तं यत् तथा द्रोणान्महात्मनः ॥ ९ ॥ इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम । भिक्षते वज्रिणे दद्यामपि जीवितमात्मनः ॥ १० ॥

सूर्य्य उवाच । यदि तात ददास्येते वज्रिणे कुण्डले शुभे । त्वमप्येनमथो ब्रूया विजयार्थं महाबल ॥ ११ ॥ नियमेन प्रदद्यास्त्वं कुण्डले वै शतक्रतौ । अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः ॥ १२ ॥ अर्जुनेन विनाशं हि तव दानवसूदनः । प्रार्थयानो रणे वत्स कुण्डले ते जिहीर्षति ॥ १३ ॥ स त्वमप्येनमाराध्य सूनृताभिः पुनः पुनः । अभ्यर्थयेथा देवेशममोघार्थं पुरन्दरम् ॥ १४ ॥ अमोघां देहि मे शक्तिममित्रविनिबर्हिणीम् । दास्यामि ते सहस्राक्ष कुण्डले वर्म्म चोत्तमम् ॥ १५ ॥ इत्येव नियमेन त्वं दद्याः शक्राय कुण्डले । तया त्वं कर्ण संग्रामे हनिष्यसि रणे रिपून् ॥ १६ ॥ नाहत्वा हि महाबाहो शत्रूनेति करं पुनः । सा शक्तिर्देवराजस्य शतशोऽथ सहस्रशः ॥ १७ ॥

वैशम्पायन उवाच । एवमुक्त्वा सहस्रांशुः सहसान्तरधीयत । ततः सूर्य्याय जप्यान्ते कर्णः स्वप्नं न्यवेदयत् ॥ १८ ॥ यथादृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि । तत्सर्व्वमानुपूर्व्व्येण शशंसास्मै वृष-

स्तदा ॥ १९ ॥ तच्छ्रुत्वा भगवान् देवो भानुः स्वर्भानुसूदनः । उवाच तं तथेत्येव कर्णं सूर्य्यः स्मयन्निव ॥ २० ॥ ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा । शक्तिमेवाभिकाङ्क्षन् वै वासवं प्रत्यपालयन् ॥ २१ ॥

इति आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि सूर्य्यकर्णसंवादे एकाधिकत्रिशतोऽध्यायः ॥ ३०१ ॥

---

जनमेजय उवाच । किन्तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना । कीदृशे कुण्डले ते च कवचञ्चैव कीदृशम् ॥ १ ॥ कुतश्च कवचन्तस्य कुण्डले चैव सत्तम । एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ २ ॥

वैशम्पायन उवाच । अथ राजन् ब्रवीम्येतत्तस्य गुह्यं विभावसोः । यादृशे कुण्डले ते च कवचञ्चैव यादृशम् ॥ ३ ॥ कुन्तिभोजं पुरा राजन् ब्राह्मणः पर्य्युपस्थितः । तिग्मतेजा महाप्रांशुः श्मश्रुदण्डजटाधरः ॥ ४ ॥ दर्शनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव । मधुपिङ्गो मधरवाक् तपःस्वाध्यायभूषणः ॥ ५ ॥ स राजानं कुन्तिभोजमब्रवीत् सुमहातपाः । भिक्षामिच्छामि वै भोक्तुं तव गेहे विमत्सर ॥ ६ ॥ न मे व्यलीकं कर्त्तव्यं त्वया वा तव चानुगैः । एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ॥ ७ ॥ यथाकामञ्च गच्छेयमागच्छेयं तथैव च । शय्यासने च मे राजन्नापराध्येत कश्चन ॥ ८ ॥ तमब्रवीत् कुन्तिभोजः प्रीतियुक्तमिदं वचः । एवमस्तु परञ्चेति पुनश्चैनमथाब्रवीत् ॥ ९ ॥ मम कन्या महाप्राज्ञ पृथा नाम यशस्विनी । शीलवृत्तान्विता साध्वी नियता चैव भाविनी ॥ १० ॥ उपस्थास्यति सा त्वां वै पूजयानवमन्य च । तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ॥ ११ ॥ एवमुक्त्वा तु तं

विप्रमभिपूज्य यथाविधि। उवाच कन्यामभ्येत्य पृथां पृथुल-
लोचनाम् ॥ १२ ॥ अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति।
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम् ॥ १३ ॥ त्वयि वत्से
पराध्यस्य ब्राह्मणस्याभिराधनम्। तन्मे वाक्यमिथ्या त्वं कर्त्तु-
मर्हसि कर्हिचित् ॥ १४ ॥ अयं तपस्वी भगवान् स्वाध्यायनियतो
द्विजः। यद्यद्ब्रूयान्महातेजास्तत्तद्देयममत्सरात् ॥ १५ ॥ ब्राह्मणो
हि परं तेजो ब्राह्मणो हि परन्तपः। ब्राह्मणानां नमस्कारैः
सूर्य्यो दिवि विराजते ॥ १६ ॥ अमानयन् हि मानार्हान् वाता-
पिश्च महासुरः। निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च ॥१७॥
सोऽयं वत्से महाभाग आहितस्त्वयि साम्प्रतम्। त्वं सदा नियता
कुर्य्या ब्राह्मणस्याभिराधनम् ॥ १८ ॥ जानामि प्रणिधानन्ते
बाल्यात् प्रभृति नन्दिनि। ब्राह्मणेष्विह सर्वेषु गुरुबन्धुषु चैव ह
॥ १९ ॥ तथा प्रेष्येषु सर्वेषु मित्रसम्बन्धिमातृषु। मयि चैव
यथातत्त्वं सर्वमावृत्य वर्त्तसे ॥ २० ॥ न ह्यतुष्टो जनोऽस्तीह पुरे
चान्तःपुरे च ते। सम्यग्वृत्त्यानवद्याङ्गि तव भृत्यजनेष्वपि ॥२१॥
सन्देष्टव्यान्तु मन्ये त्वां द्विजातिं कोपनं प्रति। पृथे बालेति कृत्वा
वै सुता चासि ममेति च ॥ २२ ॥ वृष्णीनाञ्च कुले जाता शूरस्य
दयिता सुता। दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयम्
॥ २३ ॥ वसुदेवस्य भगिनी सुतानां प्रवरा मम। अग्र्यमग्रे
प्रतिज्ञाय तेनासि दुहिता मम ॥ २४ ॥ तादृशे हि कुले जाता
कुले चैव विवर्द्धिता। सुखात् सुखमनुप्राप्ता ह्रदात् ह्रदमिवा-
गता ॥ २५ ॥ दौष्कुलेया विशेषेण कथञ्चित् प्रग्रहं गताः।
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाः शुभे ॥ २६ ॥ पृथे राजकुले
जन्म रूपञ्चापि तवाद्भुतम्। तेन तेनासि सम्पन्ना समुपेता च
भाविनी ॥ २७ ॥ सा त्वं दर्पं परित्यज्य दम्भं मानञ्च भाविनि।
आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे ॥ २८ ॥ एवं प्राप्स्यसि

कल्याणि कल्याणमनघे ध्रुवम् । कोपिते च द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलम् ॥ २९ ॥

इति आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथोपदेशे द्व्यधिकत्रिशततोऽध्यायः ॥ ३०२ ॥

---

कुन्त्युवाच । ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया । यथाप्रतिज्ञं राजेन्द्र न च मिथ्या ब्रवीम्यहम् ॥ १ ॥ एष चैव स्वभावो मे पूजयेयं द्विजानिति । तव चैव प्रियं कार्य्यं श्रेयश्च परमं मम ॥ २ ॥ यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि । यद्यर्द्ध-रात्रे भगवान्न मे कोपं करिष्यति ॥ ३ ॥ लाभो ममैष राजेन्द्र यद्वै पूजयती द्विजान् । आदेशे तव तिष्ठन्ती हितं कुर्य्यान्नरोत्तम ॥ ४ ॥ विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः । वसन् प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ॥ ५ ॥ यत् प्रियञ्च द्विज-स्यास्य हितञ्चैव तवानघ । यतिष्यामि तथा राजन् व्येतु ते मानसो ज्वरः ॥ ६ ॥ ब्राह्मणा हि महाभागाः पूजिताः पृथिवी-पते । तारणाय समर्थाः स्युर्विपरीते बधाय च ॥ ७ ॥ साहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम् । न मत्कृते व्यथां राजन् प्राप्स्यसि द्विजसत्तमात् ॥ ८ ॥ अपराधेऽपि राजेन्द्र राज्ञामश्रे-यसे द्विजाः । भवन्ति च्यवनो यद्वत् सुकन्यायाः कृते पुरा ॥ ९ ॥ नियमेन परेणाहमुपस्थास्ये द्विजोत्तमम् । यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति ॥ १० ॥ एवं ब्रुवन्तीं बहुशः परिष्वज्य समर्थ्य च । इति चेति च कर्त्तव्यं राजा सर्व्वमथादिशत् ॥ ११ ॥

राजोवाच । एवमेतत्त्वया भद्रे कर्त्तव्यमविशङ्कया । मद्धितार्थं तथात्मार्थं कुलार्थञ्चाप्यनिन्दिते ॥ १२ ॥ एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः । पृथां परिददौ तस्मै द्विजाय द्विजवत्सलः ॥ १३ ॥ इयं ब्रह्मन् मम सुता बाला सुखविवर्ज्जिता ।

अपराध्येत यत् किञ्चिन्न कार्य्यं हृदि तत्त्वया ॥ १४ ॥ द्विजातयो महाभागा वृद्धबालतपस्विषु। भवन्त्यक्रोधनाः प्रायो ह्यपराधेषु नित्यदा ॥ १५ ॥ सुमहत्यपराधेऽपि क्षान्तिः कार्य्या द्विजातिभिः। यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम ॥ १६ ॥ तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः। हंसचन्द्रांशुसङ्काशं गृहमस्मै न्यवेदयत् ॥ १७ ॥ तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत्। आहारादि च सर्वं तत् तथैव प्रत्यवेदयत् ॥ १८ ॥ निक्षिप्य राजपुत्री तु तन्द्रीं मानं तथैव च। आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने ॥ १९ ॥ तत्र सा ब्राह्मणं गत्वा पृथा शौचपरा सती। विधिवत् परिचारार्हं देववत् पर्य्यतोषयत् ॥ २० ॥

इति आरण्यपर्वणि कुण्डलाहरणपर्वणि पृथाद्विजपरिचर्य्यायां त्र्यधिकत्रिशततोऽध्यायः ॥ ३०३ ॥

---

वैशम्पायन उवाच। सा तु कन्या महाराज ब्राह्मणं संशितव्रतम्। तोषयामास शुद्धेन मनसा संशितव्रता ॥ १ ॥ प्रातरेष्याम्यथेत्युक्त्वा कदाचिद्द्विजसत्तमः। तत आयाति राजेन्द्र सायं रात्रावथो पुनः ॥ २ ॥ तञ्च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः। पूजयामास सा कन्या वर्द्धमानैस्तु सर्वदा ॥ ३ ॥ अन्नादिसमुदाचारः शय्यासनकृतस्तथा। दिवसे दिवसे तस्य वर्द्धते न तु हीयते ॥ ४ ॥ निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा। ब्राह्मणस्य पृथा राजन्न चकाराप्रियन्तदा ॥ ५ ॥ व्यस्ते काले पुनश्चैति न चैति बहुशो द्विजः। सुदुर्लभमपि ह्यन्नं दीयतामिति सोऽब्रवीत् ॥ ६ ॥ कृतमेव च तत्सर्वं पृथा तस्मै न्यवेदयत्। शिष्यवत् पुत्रवच्चैव स्वसृवच्च सुसंयता ॥ ७ ॥ यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा। प्रीतिमुत्पादयामास कन्या रत्नमनिन्दिता ॥ ८ ॥ तस्यास्तु

शीलवृत्तेन तुतोष द्विजसत्तमः। अवधाने च भूयोऽस्याः परं यत्न-
मथाकरोत् ॥ ९ ॥ तां प्रभाते च सायञ्च पिता पप्रच्छ भारत।
अपि तुष्यति ते पुत्रि ब्राह्मणः परिचर्य्यया ॥ १० ॥ तं सा परम-
मित्येव प्रत्युवाच यशस्विनी। ततः प्रीतिमवापाग्र्यां कुन्तिभोजो
महामनाः ॥ ११ ॥ ततः संवत्सरे पूर्णे यदासौ जपतांवरः।
नापश्यद्दुष्कृतं किञ्चित् पृथायाः सौहृदे रतः ॥ १२ ॥ ततः प्रीत-
मना भूत्वा स एनां ब्राह्मणोऽब्रवीत्। प्रीतोऽस्मि परमं भद्रे
परिचारेण ते शुभे ॥ १३ ॥ वरान् वृणीष्व कल्याणि दुरापां
मानुषैरिह। यैस्त्वं सीमन्तिनीः सर्वा यशसाभिभविष्यसि ॥ १४ ॥

कुन्त्युवाच। कृतानि मम सर्वाणि यस्या मे वेदवित्तम। त्वं
प्रसन्नः पिता चैव कृतं विप्र वरैर्मम ॥ १५ ॥

ब्राह्मण उवाच। यदि नेच्छसि मत्तस्त्वं वरं भद्रे शुचि-
स्मिते। इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसाम् ॥ १६ ॥ यं
यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। तेन तेन वशे भद्रे स्थात-
व्यन्ते भविष्यति ॥ १७ ॥ अकामो वा सकामो वा स समेष्यति ते
वशम्। विबुधो मन्त्रसंशान्तो भवेद्भृत्य इवानतः ॥ ॥ १८ ॥

वैशम्पायन उवाच। न शशाक द्वितीयं सा प्रत्याख्यातुमनि-
न्दिता। तं वै द्विजातिप्रवरं तदा शापभयान्नृप ॥ १९ ॥ तत-
स्तामनवद्याङ्गीं ग्राहयामास स द्विजः। मन्त्रग्रामं तदा राज-
न्नथर्वशिरसि श्रुतम् ॥ २० ॥ तं प्रदाय तु राजेन्द्र कुन्तिभोज-
मुवाच ह। उषितोऽस्मि सुखं राजन् कन्यया परितोषितः ॥ २१ ॥
तव गेहेषु विहितं सदा सुप्रतिपूजितः। साधयिष्यामहे ताव-
दित्युक्त्वान्तरधीयत ॥ २२ ॥ स तु राजा द्विजं दृष्ट्वा तत्रैवान्त-
र्हितं तदा। बभूव विस्मयाविष्टः पृथाञ्च समपूजयत् ॥ २३ ॥

इति आरण्यपर्वणि कुण्डलाहरणपर्वणि पृथामन्त्रप्राप्तौ
चतुरधिकत्रिशततोऽध्यायः ॥ ३०४ ॥

वैशम्पायन उवाच । गते तस्मिन् द्विजश्रेष्ठे कस्मिंश्चित्कारणान्तरे । चिन्तयामास सा कन्या मन्त्रग्रामबलावलम् ॥ १ ॥ अयं वै कीदृशस्तेन मम दत्तो महात्मना । मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिति ॥ २ ॥ एवं सञ्चिन्तयन्ती सा ददर्शर्त्तुं यदृच्छया । व्रीड़िता साभवद्बाला कन्याभावे रजस्वला ॥ ३ ॥ ततो हर्म्यतलस्था सा महार्हशयनोचिता । प्राच्यां दिशि समुद्यन्तं ददर्शादित्यमण्डलम् ॥ ४ ॥ तत्र बद्धमनोदृष्टिरभवत् सा सुमध्यमा । न चातप्यत रूपेण भानोः सन्ध्यागतस्य सा ॥ ५ ॥ तस्या दृष्टिरभूद्दिव्या सापश्यद्दिव्यदर्शनम् । आमुक्तकवचं देवं कुण्डलाभ्यां विभूषितम् ॥ ६ ॥ तस्याः कौतूहलं त्वासीन्मन्त्रं प्रति नराधिप । आह्वानमकरोत् साथ तस्य देवस्य भाविनी ॥ ७ ॥ प्राणानुपस्पृश्य तदा ह्याजुहाव दिवाकरम् । आजगाम ततो राजंस्त्वरमाणो दिवाकरः ॥ ८ ॥ मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव । अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ॥ ९ ॥ योगात् कृत्वा द्विधात्मानमाजगाम तताप च । आबभाषे ततः कुन्तीं साम्ना परमवल्गुना ॥ १० ॥ आगतोऽस्मि वशं भद्रे तव मन्त्रबलात्कृतः । किङ्करोम्यवशो राज्ञि ब्रूहि कर्त्ता तदस्मि ते ॥११॥

कुन्त्युवाच । गम्यतां भगवंस्तत्र यत एवागतो ह्यसि । कौतूहलात् समाहूतः प्रसीद भगवन्निति ॥ १२ ॥

सूर्य्य उवाच । गमिष्येऽहं यथा मां त्वं ब्रवीषि तनुमध्यमे । न तु देवं समाहूय न्याय्यं प्रेषयितुं वृथा ॥ १३ ॥ तवाभिसन्धिः सुभगे सूर्य्यात् पुत्रो भवेदिति । वीर्य्येणाप्रतिमो लोके कवची कुण्डलीति च ॥ १४ ॥ सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि । उत्पत्स्यति हि पुत्रस्ते यथासङ्कल्पमङ्गने ॥ १५ ॥ अथ गच्छाम्यहं भद्रे त्वया सङ्गम्य सुस्मिते । यदि त्वं वचनं नाद्य करिष्यसि मम प्रियम् ॥ १६ ॥ शपिष्ये त्वामहं क्रुद्धो ब्राह्मणं पितरञ्च ते ।

त्वत्कृते तान् प्रधच्यामि सर्वानपि न संशयः ॥ १७ ॥ पितरश्चैव ते मूढ़ं यो न वेत्ति तवानयम् । तस्य च ब्राह्मणस्याद्य योऽसौ मन्त्रमदात्तव ॥१८॥ शीलवृत्तमविज्ञाय धास्यामि विनयं परम् । एते हि विबुधाः सर्वे पुरन्दरमुखा दिवि ॥ १९ ॥ त्वया प्रलब्धं पश्यन्ति स्मयन्त इव भाविनि । पश्य चैनान् सुरगणान् दिव्यञ्चक्षुरिदं हि ते । पूर्वमेव मया दत्तं दृष्टवत्यसि येन माम् ॥ २० ॥

वैशम्पायन उवाच । ततोऽपश्यत्त्रिदशान् राजपुत्री सर्वानेव स्वेषु धिष्णेषु खस्थान् । प्रभासन्तं भानुमन्तं महान्तं यथादित्यं रोचमानांस्तथैव ॥ २१ ॥ सा तान् दृष्ट्वा व्रीड़मानेव बाला सूर्य्यं देवी वचनं प्राह भीता । गच्छ त्वं वै गोपते स्वं विमानं कन्याभावाद्दुःखं एषोऽपचारः ॥ २२ ॥ पिता माता गुरवश्चैव येऽन्ये देहस्यास्य प्रभवन्ति प्रदाने । नाहं धर्मं लोपयिष्यामि लोके स्त्रीणां वृत्तं पूज्यते देहरचा ॥ २३ ॥ मया मन्त्रबलं ज्ञातुमाह्वतस्त्वं विभावसो । बाल्याद्बालेति तत् कृत्वा चन्तुमर्हसि मे विभो ॥२४

सूर्य्य उवाच । बालेति कृत्वानुनयं तवाहं ददानि नान्यानुनयं लभेत । आत्मप्रदानं कुरु कुन्ति कन्ये शान्तिस्तवैव हि भवेच्च भीरु ॥ २५ ॥ न चापि गन्तुं युक्तं हि मया मिथ्याकृतेन वै । असमेत्य त्वया भीरु मन्त्राहूतेन भाविनि ॥ २६ ॥ गमिष्याम्यनवद्याङ्गि लोके समवहास्यताम् । सर्वेषां विबुधानाञ्च वक्तव्यः स्यां तथा शुभे ॥ २७ ॥ सा त्वं मया समागच्छ पुत्रं लप्स्यसि मादृशम् । विशिष्टा सर्वलोकेषु भविष्यसि न संशयः ॥ २८ ॥

इति आरण्यपर्वणि कुण्डलाहरणपर्वणि पृथासूर्य्याह्वाने पञ्चाधिकत्रिशतोऽध्यायः ॥ ३०५ ॥

---

वैशम्पायन उवाच। सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः। अनुनेतुं सहस्रांशुं न शशाक मनस्विनी ॥ १ ॥ न शशाक यदा बाला प्रत्याख्यातुं तमोनुदम्। भीता शापात्ततो राजन् दध्यौ दीर्घमथान्तरम् ॥ २ ॥ अनागसः पितुः शापो ब्राह्मणस्य तथैव च। मन्निमित्तः कथं न स्यात् क्रुद्धादस्माद्विभावसोः ॥ ३ ॥ बालेनापि सता मोहाद्भृशं पापकृतान्यपि। नाभ्यासादयितव्यानि तेजांसि च तपांसि च ॥ ४ ॥ साहमद्य भृशं भीता गृहीता च करे भृशम्। कथन्त्वकार्य्यं कुर्य्यां वै प्रदानं ह्यात्मनः स्वयम् ॥ ५ ॥

वैशम्पायन उवाच। सा वै शापपरित्रस्ता बहु चिन्तयती हृदा। मोहेनापि परीताङ्गी स्मयमाना पुनः पुनः ॥ ६ ॥ तं देवमब्रवीद्भीता बन्धूनां राजसत्तम। व्रीडाविह्वलया वाचा शापत्रस्ता विशाम्पते ॥ ७ ॥

कुन्त्युवाच। पिता मे ध्रियते देव माता चान्ये च बान्धवाः। न तेषु ध्रियमाणेषु विधिलोपो भवेदयम् ॥ ८ ॥ त्वया तु सङ्गमो देव यदि स्याद्विधिवर्जितः। मन्निमित्तं कुलस्यास्य लोके कीर्त्तिर्नशेत्ततः ॥९॥ अथवा धर्ममेतं त्वं मन्यसे तपताम्वर। ऋते प्रदानाद्बन्धुभ्यस्तव कामं करोम्यहम् ॥१०॥ आत्मप्रदानं दुर्द्धर्ष तव कृत्वा सती ह्यहम्। त्वयि धर्मो यशश्चैव कीर्त्तिरायुश्च देहिनाम् ॥११॥

सूर्य्य उवाच। न ते पिता न ते माता गुरवो वा शुचिस्मिते। प्रभवन्ति वरारोहे भद्रन्ते शृणु मे वचः ॥ १२ ॥ सर्वान् कामयते यस्मात् कमेर्धातोश्च भाविनि। तस्मात् कन्येह सुश्रोणि स्वतन्त्रा वरवर्णिनि ॥ १३ ॥ नाधर्मश्चरितः कश्चित्त्वया भवति भाविनि। अधर्मं कुत एवाहं चरेयं लोककाम्यया ॥१४॥ अनावृताः स्त्रियः सर्वा नराश्च वरवर्णिनि। स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः ॥ १५ ॥ सा मया सह सङ्गम्य पुनः कन्या भविष्यसि। पुत्रश्च ते महाबाहुर्भविष्यति महायशाः ॥ १६ ॥

कुन्त्युवाच। यदि पुत्रो मम भवेत्त्वत्तः सर्वतमोनुद। कुण्डली कवची शूरो महाबाहुर्महाबलः ॥ १७ ॥

सूर्य्य उवाच। भविष्यति महाबाहुः कुण्डली दिव्यवर्म्मभृत्। अभेद्यञ्चामृतमयं तस्य भद्रे भविष्यति ॥ १८॥

कुन्त्युवाच। यद्येतदमृतादस्ति कुण्डले वर्म्म चोत्तमम्। मम पुत्रस्य यं वै त्वं मत्त उत्पादयिष्यसि ॥ १९ ॥ अस्तु मे सङ्गमो देव यथोक्तं भगवंस्त्वया। तद्वीर्य्यरूपसत्त्वौजा धर्म्मयुक्तो भवेत् स च ॥ २० ॥

सूर्य्य उवाच। अदित्या कुण्डले राज्ञि दत्ते मे मत्तकाशिनि। तेऽस्य दास्यामि वै भीरु वर्म्म चैवेदमुत्तमम् ॥ २१ ॥

कुन्त्युवाच। परमं भगवन्नेवं सङ्गमिष्ये त्वया सह। यदि पुत्रो भवेदेवं यथा वदसि गोपते ॥ २२ ॥

वैशम्पायन उवाच। तथेत्युक्त्वा तु तां कुन्तीमाविवेश विहङ्गमः। स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव ताम् ॥ २३ ॥ ततः सा विह्वलेवासीत् कन्या सूर्य्यस्य तेजसा। पपात चाथ सा देवी शयने मूढ़चेतना ॥ २४ ॥

सूर्य्य उवाच। साधयिष्यामि सुश्रोणि पुत्रं वै जनयिष्यसि। सर्व्वशस्त्रभृतां श्रेष्ठं कन्या चैव भविष्यसि ॥ २५ ॥

वैशम्पायन उवाच। ततः सा व्रीड़िता बाला तदा सूर्य्यमथाब्रवीत्। एवमस्त्विति राजेन्द्र प्रस्थितं भूरिवर्च्चसम् ॥ २६ ॥ इति स्मोक्ता कुन्तिराजात्मजा सा विवस्वन्तं याचमाना सलज्जा। तस्मिन् पुण्ये शयनीये पपात मोहाविष्टा भज्यमाना लतेव ॥२७॥ तिग्मांशुस्तां तेजसा मोहयित्वा योगेनाविश्यात्मसंस्थाञ्चकार। न चैवैनां दूषयामास भानुः संज्ञां लेभे भूय एवाथ बाला ॥ २८ ॥

इति आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथासूर्य्यसङ्गमे
षड़धिकत्रिशततोऽध्यायः ॥ ३०६ ॥

वैशम्पायन उवाच। ततो गर्भः समभवत् पृथायाः पृथिवीपते। शुक्ले दशोत्तरे पक्षे तारापतिरिवाम्बरे॥ १॥ सा बान्धवभयाद्बाला गर्भं तं विनिगूहती। धारयामास सुश्रोणी न चैनां बुबुधे जनः॥ २॥ न हि तां वेद नाप्यन्या काचिद्धात्रेयिकामृते। कन्यापुरगतां बालां निपुणां परिरक्षणे॥ ३॥ ततः कालेन सा गर्भं सुषुवे वरवर्णिनी। कन्यैव तस्य देवस्य प्रसादादमरप्रभम्॥ ४॥ तथैवाबद्धकवचं कनकोज्ज्वलकुण्डलम्। हर्य्यक्षं वृषभस्कन्धं यथास्य पितरं तथा॥ ५॥ जातमात्रञ्च तं गर्भं धात्र्या सम्मन्त्र्य भाविनी। मञ्जूषायां समाधाय स्वास्तीर्णायां समन्ततः॥ ६॥ मधूच्छिष्टस्थितायां सा सुखायां रुदती तथा। श्लक्ष्णायां सुपिधानायामश्वनद्यामवासृजत्॥ ७॥ जानती चाप्यकर्त्तव्यं कन्याया गर्भधारणम्। पुत्रस्नेहेन राजेन्द्र करुणं पर्य्यदेवयत्॥ ८॥ समुत्सृजन्ती मञ्जूषामश्वनद्यास्तदा जले। उवाच रुदती कुन्ती यानि वाक्यानि तच्छृणु॥ ९॥ स्वस्ति ते चान्तरीक्षेभ्यः पार्थिवेभ्यश्च पुत्रक। दिव्येभ्यश्चैव भूतेभ्यस्तथा तोयचराश्च ये॥१०॥ शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः। आगताश्च तथा पुत्र भवन्त्वद्रोहचेतसः॥ ११॥ पातु त्वां वरुणो राजा सलिले सलिलेश्वरः। अन्तरीक्षेऽन्तरीक्षस्थः पवनः सर्वगस्तथा॥ १२॥ पिता त्वां पातु सर्वत्र तपनस्तपताम्वरः। येन दत्तोऽसि मे पुत्र दिव्येन विधिना किल॥ १३॥ आदित्या वसवो रुद्राः साध्या विश्वे च देवताः। मरुतश्च महेन्द्रेण दिशश्च सदिगीश्वराः॥१४॥ रक्षन्तु त्वां सुराः सर्वे समेषु विषमेषु च। वेत्स्यामि त्वां विदेशेऽपि कवचेनाभिसूचितम्॥ १५॥ धन्यस्ते पुत्र जनको देवो भानुर्विभावसुः। यस्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतम्॥१६॥ धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति। यस्यास्त्वं तृषितः पुत्र स्तनं पास्यसि देवज॥ १७॥ को नु स्वप्नस्तया दृष्टो या

त्वामादित्यवर्च्चसम् । दिव्यवर्मसमायुक्तं दिव्यकुण्डलभूषितम् ॥१८॥ पद्मायतविशालाक्षं पद्मताम्रदलोज्ज्वलम् । सुललाटं सुकेशान्तं पुत्रत्वे कल्पयिष्यति ॥ १९ ॥ धन्या द्रक्ष्यन्ति पुत्र त्वां भूमौ संसर्पमाणकम् । अव्यक्तकलवाक्यानि वदन्तं रेणुगुण्ठितम् ॥ २० ॥ धन्या द्रक्ष्यन्ति पुत्र त्वां पुनर्यौवनगोचरम् । हिमवद्वनसम्भूतं सिंहं केशरिणं यथा ॥२१॥ एवं बहुविधं राजन् विलप्य करुणं पृथा । अवासृजत मञ्जूषामश्वनद्यास्तदा जले ॥ २२ ॥ रुदती पुत्रशोकार्त्ता निशीथे कमलेक्षणा । धात्र्या सह पृथा राजन् पुत्रदर्शनलालसा ॥ २३ ॥ विसर्जयित्वा मञ्जूषां सम्बोधनभयात् पितुः । विवेश राजभवनं पुनः शोकातुरा ततः ॥ २४ ॥ मञ्जूषा त्वश्वनद्याः सा ययौ चर्म्मण्वतीं नदीम् । चर्म्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह ॥ २५ ॥ गङ्गायाः सूतविषयं चम्पामनु ययौ पुरीम् । स मञ्जूषागतो गर्भस्तरङ्गैरुह्यमानकः ॥ २६ ॥ अमृतादुत्थितं दिव्यं तत्तु वर्म सकुण्डलम् । धारयामास तं गर्भं दैवञ्च विधिनिर्म्मितम् ॥ २७ ॥

इति आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथामञ्जूषाक्षेपणे सप्ताधिकत्रिशततोऽध्यायः ॥ ३०७ ॥

---

वैशम्पायन उवाच । एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा । सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ॥ १ ॥ तस्य भार्य्याभवद्राजन् रूपेणासदृशी भुवि । राधा नाम महाभागा न सा पुत्रमविन्दत ॥ २ ॥ अपत्यार्थे परं यत्नमकरोच्च विशेषतः । सा ददर्शाथ मञ्जूषामुह्यमानां यदृच्छया ॥ ३ ॥ दत्तरक्षाप्रतिसरामन्वालभनशोभिताम् । ऊर्म्मीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरम् ॥ ४ ॥ सा तां कौतूहलात् प्राप्तां ग्राहयामास भाविनी ।

ततो निवेदयामास सूतस्याधिरथस्य वै ॥ ५ ॥ स तामुद्धृत्य
मञ्जूषामुत्सार्य्य जलमन्तिकात्। यन्त्रैरुद्घाटयामास सोऽपश्य-
त्तत्र बालकम् ॥ ६ ॥ तरुणादित्यसङ्काशं हेमवर्मधरं तथा।
मृष्टकुण्डलयुक्तेन वदनेन विराजता ॥ ७ ॥ स सूतो भार्य्यया
सार्द्धं विस्मयोत्फुल्ललोचनः। अङ्कमारोप्य तं बालं भार्य्यां वचन-
मब्रवीत् ॥ ८ ॥ इदमत्यद्भुतं भीरु यतो जातोऽस्मि भाविनि।
दृष्टवान् देवगर्भोऽयं मन्येऽस्माकमुपागतः ॥ ९ ॥ अनपत्यस्य
पुत्रोऽयं देवैर्दत्तो ध्रुवं मम। इत्युक्त्वा तं ददौ पुत्रं राधायै स
महीपते ॥ १० ॥ प्रतिजग्राह तं राधा विधिवद्दिव्यरूपिणम्।
पुत्रं कमलगर्भाभं देवगर्भं श्रियावृतम् ॥ ११ ॥ पुपोष चैनं विधि-
वद्ववृधे स च वीर्य्यवान्। ततः प्रभृति चाप्यन्ये प्राभवन्नौरसाः
सुताः ॥ १२ ॥ वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम्। नामास्य
वसुषेणेति ततश्चक्रुर्द्विजातयः ॥ १३ ॥ एवं स सूतपुत्रत्वं जगा-
मामितविक्रमः। वसुषेण इति ख्यातो वृष इत्येव च प्रभुः ॥१४॥
सूतस्य ववृधेऽङ्गेषु ज्येष्ठः पुत्रः स वीर्य्यवान्। चारेण विदित-
श्चासीत् पृथाया दिव्यवर्मभृत् ॥ १५ ॥ सूतस्त्वधिरथः पुत्रं विवृद्धं
समयेन तम्। दृष्ट्वा प्रस्थापयामास पुरं वारणसाह्वयम ॥ १६ ॥
तत्रोपसदनञ्चक्रे द्रोणस्येष्वस्त्रकर्मणि। सख्यं दुर्य्योधनेनैवमगमत्
स च वीर्य्यवान् ॥ १७ ॥ द्रोणात् कृपाच्च रामाच्च सोऽस्त्रग्राम-
ञ्चतुर्विधम्। लब्ध्वा लोकेऽभवत् ख्यातः परमेष्वासतां गतः ॥१८॥
सन्धाय धार्त्तराष्ट्रेण पार्थानां विप्रिये रतः। योद्धुमाशंसते नित्यं
फाल्गुनेन महात्मना ॥ १९ ॥ सदा हि तस्य स्पर्द्धासीदर्जुनेन
विशाम्पते। अर्जुनस्य च कर्णेन यतो दृष्टो बभूव सः ॥ २० ॥
एतद्गुह्यं महाराज सूर्य्यस्यासीन्न संशयः। यः सूर्य्यसम्भवः कर्णः
कुन्त्यां सूतकुले तदा ॥ २१ ॥ तन्तु कुण्डलिनं दृष्ट्वा वर्मणा च
समन्वितम्। अवध्यं समरे मत्वा पर्य्यतप्यद्युधिष्ठिरः ॥ २२ ॥

यदा च कर्णो राजेन्द्र भानुमन्तं दिवाकरम् । स्तौति मध्यन्दिने प्राप्ते प्राञ्जलिः सलिलोत्थितः ॥ २३ ॥ तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतुना । नादेयं तस्य तत्काले किञ्चिदस्ति द्विजातिषु ॥२४॥ तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः । स्वागतञ्चेति राधेयस्तमथ प्रत्यभाषत ॥ २५ ॥

इति आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि राधाकर्णसम्प्राप्तौ अष्टाधिकत्रिशततोऽध्यायः ॥ ३०८ ॥

---

वैशम्पायन उवाच । देवराजमनुप्राप्तं ब्राह्मणच्छद्मना व्रतम् । दृष्ट्वा स्वागतमित्याह न बुबोधास्य मानसम् ॥ १ ॥ हिरण्यकण्ठीः प्रमदा ग्रामान् वा बहुगोकुलान् । किं ददानीति तं विप्रमुवाचाधिरथिस्ततः ॥ २ ॥

ब्राह्मण उवाच । हिरण्यकण्ठः प्रमदा यच्चान्यत् प्रीतिवर्द्धनम् । नाहं दत्तमिहेच्छामि तदर्थिभ्यः प्रदीयताम् ॥ ३ ॥ यदेतत् सहजं वर्म कुण्डले च तवानघ । एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान् ॥ ४ ॥ एतदिच्छाम्यहं क्षिप्रं त्वया दत्तं परन्तप । एष मे सर्व्वलाभानां लाभः परमको मतः ॥ ५ ॥

कर्ण उवाच । अवनिं प्रमदा गाश्च निवापं बहुवार्षिकम् । तत्ते विप्र प्रदास्यामि न तु वर्म सकुण्डलम् ॥ ६ ॥

वैशम्पायन उवाच । एवं बहुविधैर्वाक्यैर्याच्यमानः स तु द्विजः । कर्णेन भरतश्रेष्ठ नान्यं वरमयाचत ॥ ७ ॥ सान्त्वितश्च यथाशक्ति पूजितश्च यथाविधि । न चान्यं स द्विजश्रेष्ठः कामयामास वै वरम् ॥ ८ ॥ यदा नान्यं प्रवृणुते वरं वै द्विजसत्तमः । तदैनमब्रवीद्भूयो राधेयः प्रहसन्निव ॥ ९ ॥ सहजं वर्म मे विप्र कुण्डले चामृतोद्भवे । तेनावध्योऽस्मि लोकेषु ततो नैतज्जहाम्यहम्

॥ १० ॥ विशालं पृथिवीराज्यं क्षेमं निहतकण्टकम् । प्रतिगृह्णीष्व मत्तस्त्वं साधु ब्राह्मणपुङ्गव ॥ ११ ॥ कुण्डलाभ्यां विमुक्तोऽहं वर्मणा सहजेन च । गमनीयो भविष्यामि शत्रूणां द्विजसत्तम ॥ १२ ॥

वैशम्पायन उवाच । यदान्यं न वरं वव्रे भगवान् पाकशासनः । ततः प्रहस्य कर्णस्तं पुनरित्यब्रवीद्वचः ॥ १३ ॥ विदितो देवदेवेश प्रागेवासि मम प्रभो । न तु न्याय्यं मया दातुं तव शक्र वृथा वरम् ॥ १४ ॥ त्वं हि देवेश्वरः साक्षात् त्वया देयो वरो मम । अन्येषाञ्चैव भूतानामीश्वरो ह्यसि भूतकृत् ॥ १५ ॥ यदि दास्यामि ते देव कुण्डले कवचन्तथा । वध्यतामुपयास्यामि त्वञ्च शक्रावहास्यताम् ॥ १६ ॥ तस्माद्विनिमयं कृत्वा कुण्डले वर्म चोत्तमम् । हरस्व शक्र कामं मे न दद्यामहमन्यथा ॥ १७ ॥

शक्र उवाच । विदितोऽहं रवेः पूर्व्वमायानेव तवान्तिकम् । तेन ते सर्व्वमाख्यातमेवमेतन्न संशयः ॥ १८ ॥ काममस्तु तथा तात तव कर्ण यथेच्छसि । वर्ज्जयित्वा तु मे वज्रं प्रवृणीष्व यथेच्छसि ॥ १९ ॥

वैशम्पायन उवाच । ततः कर्णः प्रहृष्टस्तु उपसङ्गम्य वासवम् । अमोघां शक्तिमभ्येत्य वव्रे संपूर्णमानसः ॥ २० ॥

कर्ण उवाच । वर्मणा कुण्डलाभ्याञ्च शक्तिं मे देहि वासव । अमोघां शत्रुसङ्घानां घातिनीं पृथनामुखे ॥ २१ ॥ ततः सञ्चिन्त्य मनसा मुहूर्त्तमिव वासवः । शक्त्यर्थं पृथिवीपाल कर्णं वाक्यमथाब्रवीत् ॥ २२ ॥ कुण्डले मे प्रयच्छस्व वर्म चैव शरीरजम् । गृहाण कर्ण शक्तिन्त्वमनेन समयेन च ॥ २३ ॥ अमोघा हन्ति शतशः शत्रून् मम करच्युता । पुनश्च पाणिमभ्येति मम दैत्यान् विनिघ्नतः ॥ २४ ॥ सेयं तव करप्राप्ता हत्वैकं रिपुमूर्ज्जितम् । गर्ज्जन्तं प्रतपन्तञ्च मामेवैष्यति सूतज ॥ २५ ॥

कर्ण उवाच । एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे ।
गर्ज्जन्तं प्रतपन्तञ्च यतो मम भयं भवेत् ॥ २६ ॥

इन्द्र उवाच । एवं हनिष्यसि रिपुं गर्ज्जन्तं बलिनं रणे ।
त्वन्तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ २७ ॥ यमाहुर्वेद-
विद्वांसो वाराहमपराजितम् । नारायणमचिन्त्यञ्च तेन कृष्णेन
रक्ष्यते ॥ २८ ॥

कर्ण उवाच । एवमप्यस्तु भगवन्नेकवीरवधे मम । अमोघां
देहि मे शक्तिं यथा हन्यां प्रतापिनम् ॥ २९ ॥ उत्कृत्य तु प्रदा-
स्यामि कुण्डले कवचञ्च ते । निकृत्तेषु तु गात्रेषु न मे वीभत्सता
भवेत् ॥ ३० ॥

इन्द्र उवाच । न ते वीभत्सता कर्ण भविष्यति कथञ्चन । व्रण-
श्चैव न गात्रेषु यस्त्वं नानृतमिच्छसि ॥ ३१ ॥ यादृशस्ते पितु-
र्वर्णस्तेजश्च वदताम्वर । तादृशेनैव वर्णेन त्वं कर्ण भविता पुनः
॥ ३२ ॥ विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये । प्रमत्तो मोक्ष्यसे
चापि त्वय्येवैषा पतिष्यति ॥ ३३ ॥

कर्ण उवाच । संशयं परमं प्राप्य विमोक्ष्ये वासवीमिमाम् ।
यथा मामात्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते ॥ ३४ ॥

वैशम्पायन उवाच । ततः शक्तिं प्रज्वलितां प्रतिगृह्य विशा-
म्पते । शस्त्रं गृहीत्वा निशितं सर्व्वगात्राण्यकृन्तत ॥ ३५ ॥ ततो
देवा मानवा दानवाश्च निकृन्तन्तं कर्णमात्मानमेवम् । दृष्ट्वा सर्व्वे
सिंहनादान् प्रणेदुर्न ह्यस्यासीन्मुखजो वै विकारः ॥ ३६ ॥ ततो
दिव्या दुन्दुभयः प्रणेदुः पपातोच्चैः पुष्पवर्षञ्च दिव्यम् । दृष्ट्वा कर्णं
शस्त्रसङ्कृत्तगात्रं मुहुश्चापि स्मयमानं नृवीरम् ॥ ३७ ॥ ततश्छित्त्वा
कवचं दिव्यमङ्गात्तथैवार्द्रं प्रददौ वासवाय । तथोत्कृत्य प्रददौ
कुण्डले ते कर्णात्तस्मात् कर्म्मणा तेन कर्णः ॥ ३८ ॥ ततः शक्रः
प्रहसन् वञ्चयित्वा कर्णं लोके यशसा योजयित्वा । कृतं कार्य्यं

पाण्डवानां हि मेने ततः पश्चाद्दिवमेवोत्पपात ॥ ३९ ॥ श्रुत्वा कर्णं मुषितं धार्त्तराष्ट्रा दीनाः सर्वे भग्नदर्पा इवासन्। तांश्चावस्थां गमितं सूतपुत्रं श्रुत्वा पार्था जहृषुः काननेषु ॥ ४० ॥

जनमेजय उवाच। क्वस्था वीराः पाण्डवास्ते बभूवुः कुतश्चैते श्रुतवन्तः प्रियं तत्। किं वाकार्षुर्द्वादशाब्दे व्यतीते तन्मे सर्वं भगवान् व्याकरोतु ॥ ४१ ॥

वैशम्पायन उवाच। लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा विप्रैः सार्द्धं काम्यकादाश्रमात्ते। मार्कण्डेयात् श्रुतवन्तः पुराणं देवर्षीणाञ्चरितं विस्तरेण ॥ ४२ ॥ प्रत्याजग्मुः सरथाः सानुयात्राः सर्वैः सार्द्धं सूतपौरोगवैश्च। ततः पुण्यं द्वैतवनं नृवीरा निस्तीर्य्योग्रं वनवासं समग्रम् ॥ ४३ ॥

इति आरण्यपर्वणि कुण्डलाहरणपर्वणि कर्णस्य वर्मकुण्डलदाने नवाधिकत्रिशतोऽध्यायः ॥ ३०९ ॥

समाप्तञ्च कुण्डलाहरणपर्व।

---

## अथ आरणेयपर्व।

जनमेजय उवाच। एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम्। प्रतिपद्य ततः कृष्णां किमकुर्वत पाण्डवाः ॥ १ ॥

वैशम्पायन उवाच। एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम्। विहाय काम्यकं राजा सह भ्रातृभिरच्युत ॥ २ ॥ पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः। स्वादुमूलफलं रम्यं विचित्रबहुपादपम् ॥ ३ ॥ अनुभुक्तफलाहाराः सर्व एव मिताशनाः। न्यवसन् पाण्डवास्तत्र कृष्णया सह भार्य्यया ॥ ४ ॥ वसन् द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः। भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ५ ॥ ब्राह्मणार्थे पराक्रान्ता धर्मात्मानो यतव्रताः।

क्षमाच्छन्ति विपुलं सुखोदकं परन्तपाः ॥ ६ ॥ तस्मिन् प्रति-
वसन्तस्ते यत् प्रापुः कुरुसत्तमाः । वने क्षेमं सुखोदकं तत् प्रव-
क्ष्यामि ते शृणु ॥ ७ ॥ अरणीसहितं मन्थं ब्राह्मणस्य तपस्विनः ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ ८ ॥ तदादाय गतो
राजंस्त्वरमाणो महामृगः । आश्रमान्तरितः शीघ्रं प्लवमानो
महाजवः ॥ ९ ॥ ह्रियमाणन्तु तं दृष्ट्वा स विप्रः कुरुसत्तम ।
त्वरितोऽभ्यागमत्तत्र अग्निहोत्रपरीप्सया ॥ १० ॥ अजातशत्रु-
मासीनं भ्रातृभिः सहितं वने । आगम्य ब्राह्मणस्तूर्णं सन्तप्तश्चेद-
मब्रवीत् ॥ ११ ॥ अरणीसहितं मन्थं समासक्तं वनस्पतौ । मृगस्य
घर्षमाणस्य विषाणे समसज्जत ॥ १२ ॥ तमादाय गतो राजं-
स्त्वरमाणो महामृगः । आश्रमान्तरितः शीघ्रं प्लवमानो महा-
जवः ॥ १३ ॥ तस्य गत्वा पदं राजन्नासाद्य च महामृगम् ।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥ १४ ॥ ब्राह्मणस्य वचः
श्रुत्वा सन्तप्तोऽथ युधिष्ठिरः । धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः
सह ॥ १५ ॥ सन्नद्धा धन्विनः सर्व्वे प्राद्रवन्नरपुङ्गवाः । ब्राह्मणार्थे
यतन्तस्ते शीघ्रमन्वगमन्मृगम् ॥ १६ ॥ कर्णिनालीकनाराचानुत्-
सृजन्तो महारथाः । नाविध्यन् पाण्डवास्तत्र पश्यन्तो मृगमन्ति-
कात् ॥ १७ ॥ तेषां प्रयतमानानां नादृश्यत महामृगः । अपश्यन्तो
मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः ॥ १८ ॥ शीतलच्छायमागम्य
न्यग्रोधं गहने वने । क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन्
॥ १९ ॥ तेषां समुपविष्टानां नकुलो दुःखितस्तदा । अब्रवीत्
भ्रातरं ज्येष्ठममर्षात् कुरुनन्दनम् ॥ २० ॥ नास्मिन् कुले जातु
ममज्ज धर्म्मो न चालस्यादर्थलोपो बभूव । अनुत्तराः सर्व्वभूतेषु
भूयः सम्प्राप्ताः स्मः संशयं किन्नु राजन् ॥ २१ ॥

इति आरण्यपर्व्वणि आरणेयपर्व्वणि पाण्डवमृगान्वेषणे
द्वाधिकत्रिशतोऽध्यायः ॥ ३१० ॥

युधिष्ठिर उवाच। नापदामस्ति मर्य्यादा न निमित्तं न कारणम्। धर्मस्तु विभजत्यर्थमुभयोः पुण्यपापयोः ॥ १ ॥

भीम उवाच। प्रातिकाम्यनयत् कृष्णां सभायां प्रेष्यवत्तदा। न मया निहतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ २ ॥

अर्जुन उवाच। वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्रेण भाषिताः। अतितीव्रा मया क्षान्तास्तेन प्राप्ताः स्म संशयम् ॥ ३ ॥

सहदेव उवाच। शकुनिस्त्वां यदाजैषीदक्षद्यूतेन भारत। न मया न हतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ ४ ॥

वैशम्पायन उवाच। ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत्। आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश ॥ ५ ॥ पानीयमन्तिके पश्य वृक्षांश्चाप्युदकाश्रितान्। एते हि भ्रातरः श्रान्तास्तव तात पिपासिताः ॥ ६ ॥ नकुलस्तं तथेत्युक्त्वा शीघ्रमारुह्य पादपम्। अब्रवीद्भ्रातरं ज्येष्ठमभिवीक्ष्य समन्ततः ॥ ७ ॥ पश्यामि बहुलान् राजन् वृक्षानुदकसंश्रयान्। सारसानाञ्च निर्ह्रादमत्रोदकसंशयम ॥८॥ ततोऽब्रवीत् सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः। गच्छ सौम्य ततः शीघ्रं तूर्णं पानीयमानय ॥ ९ ॥ नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात्। प्राद्रवद्यत्र पानीयं शीघ्रञ्चैवान्वपद्यत ॥ १० ॥ स दृष्ट्वा विमलं तोयं सारसैः परिवारितम्। पातुकामस्ततो वाचमन्तरीक्षात् स शुश्रुवे ॥ ११ ॥

यक्ष उवाच। मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः। प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ॥ १२ ॥ अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः। अपिबत् शीतलं तोयं पीत्वा च निपपात ह ॥ १३ ॥ चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः। अब्रवीत् भ्रातरं वीरं सहदेवमरिन्दम ॥ १४ ॥ भ्राता हि चिरयातो नः सहदेव तवाग्रजः। तथैवानय सोदर्य्यं पानीयञ्च त्वमानय ॥ १५ ॥ सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत। ददर्श च

हतं भूमौ भ्रातरं नकुलं तदा ॥ १६ ॥ भ्रातृशोकाभिसन्तप्तस्तृषया च प्रपीड़ितः । अभिदुद्राव पानीयं तदा वागभ्यभाषत ॥ १७ ॥ मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः । प्रश्नानुक्त्वा यथाकामं पिवस्व च हरस्व च ॥ १८ ॥ अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः । अपिवत् शीतलं तोयं पीत्वा च निपपात ह ॥ १९ ॥ अथाब्रवीत् स विजयं कुन्तीपुत्रो युधिष्ठिरः । भ्रातरौ ते चिरगतौ बीभत्सो शत्रुकर्षण ॥ २० ॥ तौ चैवानय भद्रन्ते पानीयञ्च त्वमानय । त्वं हि नस्तात सर्वेषां दुःखितानामुपाश्रयः ॥ २१ ॥ एवमुक्तो गुड़ाकेशः प्रगृह्य सशरं धनुः । आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत ॥ २२ ॥ ततः पुरुषशार्दूलौ पानीयहरणे गतौ । तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहनः ॥ २३ ॥ प्रसुप्ताविव तौ दृष्ट्वा नरसिंहः सुदुःखितः । धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् ॥ २४ ॥ नापश्यत्तत्र किञ्चित् स भूतमस्मिन्महावने । सव्यसाची ततः श्रान्तः पानीयं सोऽभ्यधावत ॥ २५ ॥ अभिधावंस्ततो वाक्यमन्तरीक्षात् स शुश्रुवे । किमासीदसि पानीयं नैतच्छक्यं बलात्त्वया ॥ २६ ॥ कौन्तेय यदि प्रश्नांस्तान्मयोक्तान् प्रतिपत्स्यते । ततः पास्यसि पानीयं हरिष्यसि च भारत ॥२७॥ वारितस्त्वब्रवीत् पार्थो दृश्यमानो निवारय । यावद्बाणैर्विनिर्भिन्नः पुनर्नैवं वदिष्यसि ॥ २८ ॥ एवमुक्त्वा ततः पार्थः शरैरस्त्रानुमन्त्रितैः । प्रववर्ष दिशः कृत्स्नाः शब्दविदञ्च दर्शयन् ॥ २९ ॥ कर्णिनालीकनाराचानुत्सृजन् भरतर्षभ । स त्वमोघानिषून्मुक्त्वा तृष्णयाभिप्रपीड़ितः । अनेकैरिषुसङ्घातैरन्तरीक्षे ववर्ष ह ॥३०॥

यक्ष उवाच । किं विघातेन ते पार्थ प्रश्नानुक्त्वा ततः पिव । अनुक्त्वा च पिवन् प्रश्नान् पीत्वैव न भविष्यसि ॥ ३१ ॥ एवमुक्तस्ततः पार्थः सव्यसाची धनञ्जयः । अवज्ञायैव तां वाचं पीत्वैव निपपात ह ॥ ३२ ॥ अथाब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः । नकुलः

सहदेवश्च बीभत्सुश्च परन्तप ॥ ३३ ॥ चिरङ्गतास्तोयहेतोर्न चाग-
च्छन्ति भारत । तांश्चैवानय भद्रन्ते पानीयञ्च समानय ॥ ३४ ॥
भीमसेनस्तथेत्युक्त्वा तं देशं प्रत्यपद्यत । यत्र ते पुरुषव्याघ्रा भ्रात-
रोऽस्य निपातिताः ॥ ३५ ॥ तान् दृष्ट्वा दुःखितो भीमस्तृषया च
प्रपीड़ितः । अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम् ॥ ३६ ॥
स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य वै । पास्यामि तावत्
पानीयमिति पार्थो वृकोदरः । ततोऽभ्यधावत् पानीयं पिपासु-
र्भरतर्षभः ॥ ३७ ॥

यक्ष उवाच । मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ ३८ ॥

वैशम्पायन उवाच । एवमुक्तस्तदा भीमो यक्षेणामिततेजसा ।
अनुक्त्वैव तु तान् प्रश्नान् पीत्वैव निपपात ह ॥ ३९ ॥ ततश्चिर-
गतान् भ्रातॄनथ ज्ञात्वा युधिष्ठिरः । चिरायमाणो वह्निभः पुनः
पुनरुवाच ह ॥ ४० ॥ माद्रेयौ किं चिरायेते गाण्डीवी किं चिरा-
यते । महाबलधरस्तत्र किं नु भीमश्चिरायते ॥ ४१ ॥ गच्छा-
म्येषां पदं द्रष्टुमिति ज्ञात्वा युधिष्ठिरः । समुत्तस्थौ महाबाहु-
र्दह्यमानेन चेतसा ॥ ४२ ॥ ततः कुन्तीसुतो राजा प्रचिन्त्य पुरुष-
र्षभः । आत्मनात्मानमेतच्च चिन्तयन्निदमब्रवीत् ॥ ४३ ॥ किं
स्विद्वनमिदं दुष्टं किंस्विद्दुष्टो मृगो भवेत् । प्राहसन् वा महाभूतं
प्रमत्तास्तेनाथ वापतन् ॥ ४४ ॥ न पश्यन्त्यथ वा वीराः पानीयं यत्र
ते गताः । अन्विच्छद्भिर्वने तोयं कालोऽयमभिपातितः । किं नु
तत् कारणं येन नायान्ति पुरुषर्षभाः ॥ ४५ ॥ एवमादीनि
वाक्यानि विमृष्य नृपसत्तमः । व्यपेतजननिर्घोषं प्रविवेश महा-
वनम् ॥ ४६ ॥ रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् । नील-
भास्वरवर्णैश्च पादपैरुपशोभितम् । भ्रमरैरुपगीतञ्च पक्षिभिश्च
महायशाः ॥४७॥ स गच्छन् कानने तस्मिन् हेमजालपरिष्कृतम् ।

ददर्श तत् सरः श्रीमान् विश्वकर्मकृतं यथा ॥ ४८ ॥ उपेतं
नलिनीजालैः सिन्धुवारैः सुवेतसैः । केतकैः करवीरैश्च पिप्पलै-
श्चैव संवृतम् । श्रमार्त्तस्तदुपागम्य सरो दृष्ट्वाथ विस्मितः ॥ ४९ ॥

इति आरण्यपर्व्वणि आरणेयपर्व्वणि युधिष्ठिरसरोदर्शने
एकादशाधिकत्रिशततोऽध्यायः ॥ ३११ ॥

---

वैशम्पायन उवाच । स ददर्श हतान् भ्रातॄन् लोकपालानिव
च्युतान् । युगान्ते समनुप्राप्ते शक्रप्रतिमगौरवान् ॥ १ ॥ विनि-
कीर्णधनुर्वाणं दृष्ट्वा निहतमर्जुनम् । भीमसेनं यमौ चैव निर्वि-
चेष्टान् गतायुषः ॥ २ ॥ स दीर्घमुष्णं निश्वस्य शोकवाष्पपरि-
प्लुतः । तान् दृष्ट्वा पतितान् भ्रातॄन् सर्व्वांश्चिन्तासमन्वितः ॥ ३ ॥
धर्म्मपुत्रो महाबाहुर्विललाप सुविस्तरम् । ननु त्वया महाबाहो
प्रतिज्ञातं वृकोदर ॥ ४ ॥ सुयोधनस्य भेत्स्यामि गदया सक्थिनी
रणे । व्यर्थं तदद्य मे सर्व्वं त्वयि वीरे निपातिते ॥ ५ ॥ महा-
त्मनि महाबाहो कुरूणां कीर्त्तिवर्द्धन । मनुष्यसम्भवा वाचो विध-
र्म्मिण्यः प्रतिश्रुताः ॥ ६ ॥ भवता दिव्यवाचस्तु ता भवन्ति कथं
मृषा । देवाश्चापि यदावोचन् सूतके त्वां धनञ्जय ॥ ७ ॥ सह-
स्राक्षादनवरः कुन्ति पुत्रस्तवेति वै । उत्तरे पारिपात्रे च जगु-
र्भूतानि सर्व्वशः ॥ ८ ॥ विप्रनष्टां श्रियञ्चैषामाहर्त्ता पुनरञ्जसा ।
नास्य जेता रणे कश्चिदजेता नैष कस्यचित् ॥ ९ ॥ सोऽयं
मृत्युवशं यातः कथं जिष्णुर्महाबलः । अयं ममाशां संहृत्य शेते
भूमौ धनञ्जयः ॥ १० ॥ आश्रित्य यं वयं नाथं दुःखान्येतानि
सेहिम । रणे प्रमत्तौ वीरौ च सदा शत्रुनिवर्हणौ ॥ ११ ॥
कथं रिपुवशं यातौ कुन्तीपुत्रौ महाबलौ । यौ सर्व्वास्त्राप्रतिहतौ
भीमसेनधनञ्जयौ ॥ १२ ॥ अश्मसारमयं नूनं हृदयं मम दुर्हृदः ।

यमौ यद्येतौ दृष्ट्वाद्य पतितौ नावदीर्य्यते ॥ १३ ॥ शास्त्रज्ञा देश-
कालज्ञास्तपोयुक्ताः क्रियान्विताः । अकृत्वा सदृशं कर्म किं शेध्वं
पुरुषर्षभाः ॥ १४ ॥ अविक्षतशरीराश्चाप्यप्रमृष्टशरासनाः । असंज्ञा
भुवि सङ्गम्य किं शेध्वमपराजिताः ॥ १५ ॥ सानूनिवाद्रेः संसुप्तान्
दृष्ट्वा भ्रातॄन्महामतिः । सुखं प्रसुप्तान् प्रस्विन्नः खिन्नः कष्टां दशा-
ङ्गतः ॥ १६ ॥ एवमेवेदमित्युक्त्वा धर्मात्मा स नरेश्वरः । शोक-
सागरमध्यस्थो दध्यौ कारणमाकुलः ॥ १७ ॥ इति कर्त्तव्यताञ्चेति
देशकालविभागवित् । नाभिपेदे महाबाहुश्चिन्तयानो महामतिः
॥ १८ ॥ अथ संस्तभ्य धर्मात्मा तदात्मानं तपःसुतः । एवं विलप्य
बहुधा धर्मपुत्रो युधिष्ठिरः ॥ १९ ॥ बुद्ध्या विचिन्तयामास वीराः
केन निपातिताः । नैषां शस्त्रप्रहारोऽस्ति पदं नेहास्ति कस्यचित्
॥ २० ॥ भूतं महदिदं मन्ये भ्रातरो येन मे हताः । एकाग्रं
चिन्तयिष्यामि पीत्वा वेत्स्यामि वा जलम् ॥ २१ ॥ स्यात्तु दुर्य्यो-
धनेनेदमुपांशुविहितं कृतम् । गान्धारराजरचितं सततं जिह्मबुद्धिना
॥ २२ ॥ यस्य कार्य्यमकार्य्यं वा सममेव भवत्युत । कस्तस्य विश्वसे-
द्वीरो दुष्कृतेरकृतात्मनः ॥ २३ ॥ अथ वा पुरुषैर्गूढैः प्रयोगोऽय-
न्दुरात्मनः । भवेदिति महाबुद्धिर्बहुधा तदचिन्तयत् ॥ २४ ॥
तस्यासीन्न विषेणेदमुदकं दूषितं यथा । मृतानामपि चैतेषां विकृतं
नैव जायते ॥ २५ ॥ मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्त-
यत् । एकैकशश्चौघबलानिमान् पुरुषसत्तमान् ॥ २६ ॥ कोऽन्यः
प्रतिसमासीत कालान्तकयमादृते । एतेन व्यवसायेन तत्तोयं व्यव-
गाढवान् । गाहमानश्च तत्तोयमन्तरिक्षात् स शुश्रुवे ॥ २७ ॥

यक्ष उवाच । अहं बकः शैवलमत्स्यभक्षो नीता मया प्रेत-
वशं तवानुजाः । त्वं पञ्चमो भविता राजपुत्र न चेत् प्रश्नान्
पृच्छते व्याकरोषि ॥ २८ ॥ मा तात साहसं कार्षीर्मम पूर्वपरि-
ग्रहः । प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ २९ ॥

युधिष्ठिर उवाच। रुद्राणां वा वसूनां वा मरुतां वा प्रधान-
भाक्। पृच्छामि को भवान् देवो नैतच्छकुनिना कृतम् ॥ ३० ॥
हिमवान् पारिपात्रश्च विन्ध्यो मलय एव च। चत्वारः पर्वताः
केन पातिता भूरितेजसः। अतीव ते महत् कर्म कृतञ्च बलिना-
म्वरः ॥ ३१ ॥ यान्न देवा न गन्धर्वा नासुराश्च न राक्षसाः।
विषहेरन् महायुद्धे कृतं ते तन्महाद्भुतम् ॥ ३२ ॥ न ते जानामि
यत् कार्य्यं नाभिजानामि काङ्क्षितम्। कौतूहलं महज्जातं
साध्वसञ्चागतं मम ॥ ३३ ॥ येनास्म्युद्विग्नहृदयः समुत्पन्नशिरो-
ज्वरः। पृच्छामि भगवंस्तस्मात् को भवानिह तिष्ठति ॥ ३४ ॥
यक्ष उवाच। यक्षोऽहमस्मि भद्रन्ते नास्मि पक्षी जलेचरः।
मयैते निहताः सर्व्वे भ्रातरस्ते महौजसः ॥ ३५ ॥
वैशम्पायन उवाच। ततस्तामशिवां श्रुत्वा वाचं स परुषा-
क्षराम्। यक्षस्य ब्रुवतो राजन्नुपक्रम्य तदा स्थितः ॥ ३६ ॥
विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयम्। ज्वलनार्कप्रतीकाश-
मधृष्यं पर्व्वतोपमम् ॥३७॥ वृक्षमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः।
मेघगम्भीरनादेन तर्ज्जयन्तं महास्वनम् ॥ ३८ ॥
यक्ष उवाच। इमे ते भ्रातरो राजन् वार्य्यमाणा मयासकृत्।
बलात्तोयं जिहीर्षन्तस्ततो वै सूदिता मया ॥ ३९ ॥ न पेय-
मुदकं राजन् प्राणानिह परीप्सता। पार्थ मा साहसं कार्षी-
र्मम पूर्व्वपरिग्रहः। प्रश्नानुक्त्वा तु कौन्तेय ततः पिव हरस्व च ॥४०
युधिष्ठिर उवाच। न चाहं कामये यक्ष तव पूर्व्वपरिग्रहम्।
कामं नैतत् प्रशंसन्ति सन्तो हि पुरुषाः सदा ॥ ४१ ॥ यदात्मना
स्वमात्मानं प्रशंसेत् पुरुषर्षभ। यथाप्रज्ञन्तु ते प्रश्नान् प्रतिवक्ष्यामि
पृच्छ माम् ॥ ४२ ॥
यक्ष उवाच। किंस्विदादित्यमुन्नयति के च तस्याभितश्चराः।
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति ॥ ४३ ॥

युधिष्ठिर उवाच । ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः ।
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति ॥ ४४ ॥

यक्ष उवाच । केन स्वित् श्रोत्रियो भवति केन स्विद्विन्दते
महत् । केन स्विद्वितीयवान् भवति राजन् केन च बुद्धिमान् ॥४५॥

युधिष्ठिर उवाच । श्रुतेन श्रोत्रियो भवति तपसा विन्दते
महत् । धृत्या द्वितीयवान् भवति बुद्धिमान् वृद्धसेवया ॥ ४६ ॥

यक्ष उवाच । किं ब्राह्मणानां देवत्वं कश्च धर्म सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ४७ ॥

युधिष्ठिर उवाच । स्वाध्याय एषां देवत्वं तप एषां सतामिव ।
मरणं मानुषो भावः परीवादोऽसतामिव ॥ ४८ ॥

यक्ष उवाच । किं क्षत्रियाणां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ४९ ॥

युधिष्ठिर उवाच । इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव ।
भयं वै मानुषो भावः परित्यागोऽसतामिव ॥ ५० ॥

यक्ष उवाच । किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः ।
का चैका वृणुते यज्ञं कां यज्ञो नातिवर्त्तते ॥ ५५१ ॥

युधिष्ठिर उवाच । प्राणो वै यज्ञियं साम मनो वै यज्ञियं
यजुः । ऋगेका वृणुते यज्ञं तां यज्ञो नातिवर्त्तते ॥ ५२ ॥

यक्ष उवाच । किं स्विदापततां श्रेष्ठं किं स्विन्निवपतां वरम् ।
किं स्वित् प्रतिष्ठमानानां किं स्वित् प्रसवतां वरम् ॥ ५३ ॥

युधिष्ठिर उवाच । वर्षमापततां श्रेष्ठं बीजन्निवपतां वरम् ।
गावः प्रतिष्ठमानानां पुत्रः प्रसवतां वरम् ॥ ५४ ॥

यक्ष उवाच । इन्द्रियार्थाननुभवन् बुद्धिमान् लोकपूजितः ।
सम्मतः सर्वभूतानामुच्छ्वसन् को न जीवति ॥ ५५ ॥

युधिष्ठिर उवाच । देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ५६ ॥

यक्ष उवाच । किं स्विद्गुरुतरं भूमेः किं स्विदुच्चतरञ्च खात् । किं स्विच्छीघ्रतरं वायोः किं स्विद्बहुतरं तृणात् ॥ ५७ ॥

युधिष्ठिर उवाच । माता गुरुतरा भूमेः खात् पितोच्चतरस्तथा । मनः शीघ्रतरं वाताच्चिन्ता बहुतरा तृणात् ॥ ५८ ॥

यक्ष उवाच । किं स्वित् सुप्तं न निमिषति किं स्विज्जातं न चोपति । कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्द्धते ॥ ५९ ॥

युधिष्ठिर उवाच । मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति । अश्मनो हृदयं नास्ति नदी वेगेन वर्द्धते ॥ ६० ॥

यक्ष उवाच । किं स्वित् प्रवसतो मित्रं किं स्विन्मित्रं गृहे सतः । आतुरस्य च किं मित्रं किं स्विन्मित्रं मरिष्यतः ॥ ६१

युधिष्ठिर उवाच । सार्थः प्रवसतो मित्रं भार्य्या मित्रं गृहे सतः । आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ६२ ॥

यक्ष उवाच । कोऽतिथिः सर्व्वभूतानां किं स्विद्धर्मः सनातनः । अमृतं किं स्विद्राजेन्द्र किं स्वित् सर्व्वमिदं जगत् ॥ ६३ ॥

युधिष्ठिर उवाच । अतिथिः सर्व्वभूतानामग्निः सोमो गवामृतम् । सनातनोऽमृतो धर्म्मो वायुः सर्व्वमिदं जगत् ॥ ६४ ॥

यक्ष उवाच । किं स्विदेको विचरते जातः को जायते पुनः । किंस्विद्धिमस्य भैषज्यं किं स्विदावपनं महत् ॥ ६५ ॥

युधिष्ठिर उवाच । सूर्य्य एको विचरते चन्द्रमा जायते पुनः । अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ॥ ६६ ॥

यक्ष उवाच । किं स्विदेकपदं धर्म्यं किं स्विदेकपदं यशः । किं स्विदेकपदं स्वर्ग्यं किं स्विदेकपदं सुखम् ॥ ६७ ॥

युधिष्ठिर उवाच । दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः । सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ ६८ ॥

यक्ष उवाच । किं स्विदात्मा मनुष्यस्य किं स्विद्दैवकृतः सखा । उपजीवनं किं स्विदस्य किंस्विदस्य परायणम् ॥ ६९ ॥

युधिष्ठिर उवाच। पुत्र आत्मा मनुष्यस्य भार्य्या दैवकृतः सखा। उपजीवनञ्च पर्ज्जन्यो दानमस्य परायणम्॥ ७०॥

यक्ष उवाच। धान्यानामुत्तमं किं स्विद्धनानां स्यात् किमुत्तमम्। लाभानामुत्तमं किं स्यात् सुखानां स्यात् किमुत्तमम्॥७१॥

युधिष्ठिर उवाच। धान्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम्। लाभानां श्रेष्ठमारोग्यं सुखानां तुष्टिरुत्तमा॥ ७२॥

यक्ष उवाच। कश्च धर्मः परो लोके कश्च धर्मः सदाफलः। किं नियम्य न शोचन्ति कैश्च सन्धिर्न जीर्य्यते॥ ७३॥

युधिष्ठिर उवाच। आनृशंस्यं परो धर्मस्त्रयीधर्म्मः सदाफलः। मनो यम्य न शोचन्ति सन्धिः सद्भिर्न जीर्य्यते॥ ७४॥

यक्ष उवाच। किन्नु हित्वा प्रियो भवति किन्नु हित्वा न शोचति। किन्नु हित्वार्थवान् भवति किन्नु हित्वा सुखी भवेत्॥७५

युधिष्ठिर उवाच। मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति। कामं हित्वार्थवान् भवति लोभं हित्वा सुखी भवेत्॥७६

यक्ष उवाच। किमर्थं ब्राह्मणे दानं किमर्थं नटनर्त्तके। किमर्थं चैव भृत्येषु किमर्थं चैव राजसु॥ ७७॥

युधिष्ठिर उवाच। धर्मार्थं ब्राह्मणे दानं यशोऽर्थं नटनर्त्तके। भृत्येषु भरणार्थं वै भयार्थञ्चैव राजसु॥ ७८॥

यक्ष उवाच। केन स्विदावृतो लोकः केन स्विन्न प्रकाशते। केन त्यजति मित्राणि केन स्वर्गं न गच्छति॥ ७९॥

युधिष्ठिर उवाच। अज्ञानेनावृतो लोकस्तमसा न प्रकाशते। लोभात्त्यजति मित्राणि सङ्गात् स्वर्गं न गच्छति॥ ८०॥

यक्ष उवाच। मृतः कथं स्यात् पुरुषः कथं राष्ट्रं मृतं भवेत्। श्राद्धं मृतं कथं वा स्यात् कथं यज्ञो मृतो भवेत्॥ ८१॥

युधिष्ठिर उवाच। मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम्। मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः॥ ८२॥

यक्ष उवाच । का दिक् किमुदकं प्रोक्तं किमन्नं किञ्च वै विषम् । श्राद्धस्य कालमाख्याहि ततः पिव हरस्व च ॥ ८३ ॥

युधिष्ठिर उवाच । सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना विषम् । श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ॥ ८४ ॥

यक्ष उवाच । तपः किं लक्षणं प्रोक्तं को दमश्च प्रकीर्त्तितः । क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्त्तिता ॥ ८५ ॥

युधिष्ठिर उवाच । तपः स्वधर्मवर्त्तित्वं मनसो दमनं दमः । क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्य्यनिवर्त्तनम् ॥ ८६ ॥

यक्ष उवाच । किं ज्ञानं प्रोच्यते राजन् कः शमश्च प्रकीर्त्तितः । दया च का परा प्रोक्ता किञ्चार्ज्जवमुदाहृतम् ॥ ८७ ॥

युधिष्ठिर उवाच । ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्तप्रशान्तता । दया सर्व्वसुखैषित्वमार्ज्जवं समचित्तता ॥ ८८ ॥

यक्ष उवाच । कः शत्रुर्दुर्ज्जयः पुंसां कश्च व्याधिरनन्तकः । कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ॥ ८९ ॥

युधिष्ठिर उवाच । क्रोधः सुदुर्ज्जयः शत्रुर्लोभो व्याधिरनन्तकः । सर्व्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥ ९० ॥

यक्ष उवाच । को मोहः प्रोच्यते राजन् कश्च मानः प्रकीर्त्तितः । किमालस्यञ्च विज्ञेयं कश्च शोकः प्रकीर्त्तितः ॥ ९१ ॥

युधिष्ठिर उवाच । मोहो हि धर्म्मसूढ़त्वं मानस्त्वात्माभिमानिता । धर्म्मनिष्क्रियतालस्यं शोकस्त्वज्ञानमुच्यते ॥ ९२ ॥

यक्ष उवाच । किं स्थैर्य्यमृषिभिः प्रोक्तं किं च धैर्य्यमुदाहृतम् । स्नानञ्च किं परं प्रोक्तं दानञ्च किमिहोच्यते ॥ ९३ ॥

युधिष्ठिर उवाच । स्वधर्म्मे स्थिरता स्थैर्य्यं धैर्य्यमिन्द्रियनिग्रहः । स्नानं मनोमलत्यागो दानं वै भूतरक्षणम् ॥ ९४ ॥

यक्ष उवाच । कः पण्डितः पुमान् ज्ञेयो नास्तिकः कश्च उच्यते । को मूर्खः कश्च कामः स्यात् को मत्सर इति स्मृतः ॥ ९५ ॥

